धाराय धाराधरच्छायाधारककन्धराय गिरिजासङ्गैकभृङ्गा-रिणे । नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे नागैः कङ्कणिने नगेन गृहिणे नाथाय नित्यं नतिः ॥ ८१ ॥ केयूरीकृतकङ्कणीकृतजटाजूटावतंसीकृतज्यावल्लीकृतकुण्डलीकृतकटीसूत्रीकृताहीश्वरः । पायाद्वस्तिलकीकृतप्रियतमादर्शीकृताक्षीकृतचूतारम्भपणीकृतेन्दुशकलः कात्यायनीकामुकः ॥ ८२ ॥ कान्तां कामपि कामयत्यनुदिनं ध्यानापदेशादयं येनामुं मुनयोऽप्यनादिनिधनं ध्यायन्ति धौतस्पृहाः । इत्यङ्कात्स्वकरे हृते गिरिजया पादे च पद्मासनाद्विश्वं पातु पुरंध्रिनद्धवपुषः शंभोः समाधिव्ययः ॥ ८३ ॥ स्नातः स्वर्गतरङ्गिणीजलभरैर्नेत्रोत्पलेनाञ्चितः पार्वत्याः सितभूतिचन्दनचयैरालिप्तगात्रोज्ज्वलः । देवश्चन्द्रकलासितभ्रतिलको गौरीविवाहोत्सवारम्भे शैलकृतार्हणस्त्रिजगतामर्च्यो हरः पातु वः ॥ ८४ ॥ उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः । त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवैर्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥ ८५ ॥ क्रीडन्मन्दरकन्दरोदरवलन्मन्दारवृन्दावने क्रोधान्धान्धकटातटासुहरणे जृम्भत्त्रिशूलोद्गमः । त्रैलोक्याखिलसंकटोत्कटभयोद्वेलान्धकारांशुमान् पायाद्वस्त्रिपुरप्रमाथनपटुर्देवो हि पञ्चाननः ॥ ८६ ॥ गर्जद्भीमभुजंगभीषणफणाफूत्कारभीतिप्रदः क्रीडत्प्रेतपिशाचराक्षसगणः प्रत्यक्षतः प्रान्ततः । भालस्थप्रलयानलोद्भटशिखः संक्रान्तसर्वास्पदः शार्दूलाजिनभृद्भयानकभयो भूयाद्भवो भूतये ॥ ८७ ॥ गौरीचुम्बनचञ्चलं परिचलद्दण्डप्रभामण्डलं व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम् । प्रौढप्रेमपरम्परापरिचयप्रोत्फुल्लनेत्राञ्चलं शंभोरस्तु विभूतये हि भवतामुन्मत्तगङ्गं शिरः ॥ ८८ ॥ पाणौ कङ्कणमुत्फणं फणिपतिर्नेत्रं लसत्पावकं कण्ठः कुण्ठितकालकूटविषमो वस्त्रं गजेन्द्राजिनम् । गौरीलोचनलोभनाय सुभगो वेषो वरस्यास्ति मे गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ८९ ॥ दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं स चाङ्गे तव । तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यतामित्थं शैलभुवा विहस्य लपितः शंभुः शिवायास्तु वः ॥ ९० ॥ श्रीकण्ठस्य सकृत्तिकार्तभरणी मूर्तिः सदारोहिणी ज्येष्ठा भद्रपदा पुनर्वसुयुता चित्रा विशाखान्विता । दिश्यादक्षतहस्तमूलघटिताषाढा मघालंकृता श्रेयो वैश्रवणान्विता भगवतो नक्षत्रपालीव वः ॥ ९१ ॥ त्राता भीतिभृतां पतिश्चिदचितां क्लेशं सतां शंसतां हन्ता भक्तिमतां सतां स्वसमतां कर्तापकर्ताऽसताम् । देवः सेवकभुक्तिमुक्तिरचनाभूर्भूर्भुवःस्वस्त्रयीनिर्माणस्थितिसंहृतिप्रकटितक्रीडो मृडः पातु वः ॥ ९२ ॥ एषा ते हर का सुगात्रि कतमा मूर्ध्नि स्थिता किं जटा हंसः किं भजते जटां नहि शशी चन्द्रो जलं सेवते । मुग्धे भूतिरियं कुतोऽत्र सलिलं भूतिस्तरंगायते यश्चैवं विनिगूहते त्रिपथगां पायात्स वः शंकरः ॥ ९३ ॥ मातर्जीव किमेतदङ्गुलिपुटे तातेन गोपाय्यते वत्स स्वादु फलं प्रयच्छति न मे गत्वा गृहाण स्वयम् । मात्रैवं प्रहिते गुहे विघटयत्याकृष्य संध्याञ्जलिं शंभोर्भिन्नसमाधिरुद्धरभसो हासोद्गमः पातु वः ॥ ९४ ॥ संध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे धत्से यच्च नदीं विलज्ज शिरसा तन्नाम सोढं मया । श्रीर्यातामृतमन्थने यदि हरिं कस्माद्विषं भक्षितं मा स्त्रीलंपट मां स्पृशेति गदितो गौर्या हरः पातु वः ॥ ९५ ॥ तावत्सप्तसमुद्रमुद्रितमही भूभृद्भिरत्र्यंकषैस्तावद्भिः परिवारिता पृथुतरैर्द्वीपैः समन्तादियम् । यस्य स्फारफणामणौ निलयिनी तिर्यक्फणालंकृतिः शेषः सोऽप्यगमद्यदङ्गदपदं रुद्राय तस्मै नमः ॥ ९६ ॥ चिन्ताचक्रिणि हन्त चक्रिणि भिया कुब्जासनेऽब्जासने नश्यद्धामनि तिग्मधामनि धृताशङ्के शशाङ्के भृशम् । अश्रयचेतसि च प्रचेतसि शुचा तान्ते कृतान्ते च यो व्यग्रोऽभूत्कटुकालकूटकवलीकाराय पायात्स वः ॥ ९७ ॥ तातं तत्ताततातं कथय हरकुलेऽलंकृते संप्रदाने तच्छ्रुत्वा चन्द्रमौलिर्नतमुखकमलो जातलज्जो बभूव । ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठौ श्रीकण्ठान्नीलकण्ठः प्रहसितवदनः पातु वश्चन्द्रचूडः ॥९८॥ या सृष्टिः स्रष्टुराद्या[१] वहति विधिहुतं या हविर्या च होत्री[२] ये द्वे[३] कालं विधत्तः[४] श्रुतिविषयगुणा या[५] स्थिता व्याप्य विश्वम्[६] । यामाहुः सर्वबीजप्रकृतिरिति यया[७] प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ९९ ॥ एकैश्वर्यस्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः ॥ १०० ॥ कैलासाद्रावुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु क्रोडं[८] मातुः कुमारे विशति विषमुचि[९] प्रेक्षमाणे सरोषम् । पादाबष्टम्भसीदद्वपुषि दशमुखे

१ शपथविशेषः.

१ उदकरूपा. २ अग्निरूपा. ३ यजमानरूपा. ४ सूर्यचन्द्ररूपे. ५ आकाशरूपा. ६ पृथ्वीरूपा. ७ वायुरूपा. ८ उत्सिङ्गे. ९ भुजान्तरे. १० सर्पे.

याति पातालमूलं क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनमुमया पातु हृष्टः शिवो नः ॥ १०१ ॥ क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति । दक्षः स्तौत्यस्य पत्नी विलपति कृपणं विद्रुतं चापि देवैः शंसन्निर्त्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ १०२ ॥ आसीने पूष्णि तूष्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्लान्तकान्तौ कृतान्ते । अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रिये शान्त्युपाये पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः ॥ १०३ ॥ केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रुकान्तेन्दुयुक्ते कान्ताप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव । नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानीमित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ १०४ ॥ धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः । नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ १०५ ॥ हर्षाद्दम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या श्वश्र्वा मौलौ पुरारेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने । तद्वक्त्रे मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखः पातु वः पञ्चवक्त्रः॥ १०६ ॥ कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः । कङ्कालक्रीडनोत्कः कलितकलकलः कालकालीकलत्रः कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः ॥१०७॥ दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन । आदायास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥१०८॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥१०९॥ कल्याणं वः क्रियासुर्मिलदँटनियुगस्थार्लुगीर्वाणभोगिस्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि । नालीकाश्लिष्टलक्ष्मीककरतलकमलोद्भ्रान्तमाध्वीकधारातिम्यत्कौलेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥ ११० ॥ कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः कृत्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः । दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिप्रेक्षितात्मीयमूर्तिग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥ १११ ॥ पर्यङ्कग्रन्थिबन्धत्रिगुणितभुजगाश्लेषसंवीतजानोरन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य । आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या शंभोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ ११२ ॥ वृत्ताभिख्यां हृतार्यां श्रितविविधगणां छन्दसां वर्णनीयां यातां सर्वादिमत्त्वं सुरगणकलितां भासमत्त्वं दधानाम् । युक्तं स्थानं नयन्तीं लघुमपि सकलं बिभ्रतीं मालयायान्वन्दे वार्धीभवर्णां धृतमुनियतिकां स्रग्धरां शंभुमूर्तिम् ॥ ११३ ॥ देहार्धानद्धकान्ताकचकुसुमचयो भालनेत्रानलार्चिः पीनोष्मामौलिखेलन्मुखरसुरनदीनीररम्यो जगन्ति । स्फीतोत्तंसेन्दुकान्तिर्द्विरदद्दतिदृढाच्छादनव्यक्तशीतः शंभुर्भूषास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्तुमूर्तिः ॥ ११४ ॥ हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः सेतुः संसारवारांनिधिसुखतरणे श्रीमहेशानसंज्ञम् । प्रालेयं ज्योतिरन्तःपरिणततिमिरव्यूहविच्छेददक्षं किंचिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि ॥ ११५ ॥ शुद्धान्ते सीधुपानोन्मदमदनमदोन्मादमत्तालिकालीतालीसंताड्यमानोद्भटमुरजरवाडम्बरोल्लासिताङ्गः । नृत्यन्नग्नो विलज्जश्चलविकटतटैः संभ्रवैर्लोचनार्धैर्दृष्टः स्त्रीभिः सहासं प्रहसनमुदितः पातु वो वामदेवः ॥ ११६ ॥ बिभ्रत्पाथः कपर्दे सुरनगरनरीमिन्दुलेखां ललाटे नेत्रान्तः कालवह्निं गरलमपि गले व्याघ्रचर्माङ्गभागे । पश्चास्यो वै त्रिनेत्रो वृषभगतिरतिर्वामभागार्धवामः संदिश्यात्संपदं वः सह सकलगुणैरद्भुताकार ईशः ॥ ११७ ॥ राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वं नागा नागात्मजार्धं न भसितधवलं यद्वपुर्भूषयन्ति । मा रामारागिणी भून्मतिरिति यमिनां येन वोऽदाहि मारः ससाः ससाश्चनुन्नारुणकिरणनिभाः पातु बिभ्रत्त्रिनेत्रः ॥ ११८ ॥ एकं दन्तच्छदस्य स्फुरति जयवशादर्धमन्यत्प्रकोपादेकः पाणिः प्रणन्तुः शिरसि कृतपदः क्षेप्तुमन्यस्तमेव । एकं ध्यानान्निमीलत्यपरमविषहं वीक्षितुं चक्षुरित्थं तुल्यानिच्छापि वामा तनुरवतु स वो यस्य संध्यावसाने ॥ ११९ ॥

१ दक्षिणगार्हपत्याहवनीयाख्याः. २ दीनस्वरेण. ३ सूर्ये. ४ ब्रह्मणि. ५ अन्धकरिपौ; पक्षे,–तमसि. ६ ब्रह्मा. ७ धनुष्कोटिः. ८ स्थिरतरम्. ९ विष्णुरूपः शरः. १० पुष्परसः. ११ वह्न्यात्मकं तृतीयलोचनम्.

१ योगशास्त्रप्रसिद्धासनविशेषः. २ संधिः. ३ आवृत. ४ निवृत्त. ५. चक्षुरादीन्येकादशेन्द्रियाणि बुद्धिरहंकारश्चेति त्रयोदश विषयम्. ६ प्रपञ्चाभावः. ७ चित्तैकाग्रता.

## जटाजूटः

स धूर्जटिजटाजूटो जायतां विजयाय वः। यत्रैकपलित-भ्रान्तिं करोत्यद्यापि जाह्नवी ॥ १२० ॥ चूडापीडकपाल-संकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुट-ज्योतिर्विमिश्रत्विषः। पान्तु त्वामकठोरकेतकशिखासंदिग्ध-मुग्धेन्दवो भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ १२१ ॥ गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखा-रत्नैः कोरकिताः सितांशुकलया स्मेरैकपुष्पश्रियः। आन-न्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहदा नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥ १२२ ॥

## गङ्गा

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्। हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥ १२३ ॥ इयं चिद्रूपापि प्रकटजडरूपा भगवती यदीयाम्भोबिन्दुर्वितरति-च शंभोरपि पदम्। पुनाना धुन्वाना निखिलमपि नाना-विधमघं जगत्कृत्स्नं पायादनुदिनमपायात् सुरधुनी ॥१२४॥ चूडाशीतकरस्तनंधयसुधानीरन्ध्रगन्धस्पृशः क्रीडाकङ्कण-पन्नगेश्वरफणापीतावशिष्टा मुहुः। अङ्कासीनगिरीन्द्रजास्तनत-टीहारावलीलोलनाः संतापं शमयन्तु वो हरजटागङ्गातरङ्गा-निलाः ॥ १२५ ॥ वाते वाति यदङ्गसंगमवशाच्छ्रीशंभुरूप-प्रदे गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचति। चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा परं कम्पते सा गङ्गा निखिलं कलङ्कनिचयं भङ्गं तरङ्गैर्नयेत् ॥ १२६ ॥ शार्ङ्गी ब्रह्मकम-ण्डलोरधिगतैर्यैः प्रापि तीर्थाङ्कितां यैर्मृत्युंजयतामनायि गरलग्रस्तो जटाजूटगैः। येभ्योऽशिक्षत माधुरीं मृदुजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छ-न्तु नः ॥ १२७ ॥ यन्नाम्नः प्रथमाक्षरं विजयते भानौ द्वि-तीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने भूत्वान्त्यवर्णद्वयम्। रामो रावणमाजघान समरे शंभोः शिरःशालिनी सा सर्वा-क्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ १२८ ॥ मु-क्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा वह्नौ लाज-निभा दृशोर्मणिनिभा भोगोत्करे भोगिनाम्। नृत्यावर्तवि-वर्तनैरितपयःसंमूर्च्छनोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ १२९ ॥ एषा धर्मपताकिनी तटसुधासेवावसन्नाकिनी शुष्यत्पातकिनी भगीरथतपःसाफ-ल्यहेवाकिनी। प्रेमारूढपिनाकिनी गिरिसुतास्याकेकेरालो-किनी पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥१३०॥ स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाहाय वः। भिन्द्या-दुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ १३१ ॥ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्यास्तद्वासोल्लासवेल्लद्वर-शफरतुलां यत्र धत्ते कलावान्। उन्मीलद्भोगि-भोगावनिसुभगसिताम्भोजसंभाविताम्भा गङ्गानङ्गारिसङ्गा महति तव विधौ मङ्गलान्यातनोतु ॥ १३२ ॥ दृष्टाः संकष्टदाहाः श्रवणपथगताः पुण्यपुञ्जावगाहाः स्पृष्टाः संसार-पाथोनिधिपतितधरोद्धारधुर्या वराहाः। पीतास्तापोपशान्ति-प्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्तां कलि-कलुषहरा विष्णुपद्याः प्रवाहाः ॥ १३३ ॥ तावत्कर्णाध्ययाता जनघनकलुषाधूनने गन्धवाहा दृष्टाः किं हव्यवाहाः सकृ-द्घदहने स्वर्गतौ पुण्यवाहाः। स्पृष्टाः संसारहाहारवकटुक-महाम्भोधिमग्ने वराहाः पीताः पीयूषधाराधिकतरमधुराः पान्तु गोदोदवाहाः ॥ १३४ ॥

## शशिलेखा

पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति। हर-शशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ १३५ ॥ जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन। इह केसरिकर-जाङ्कुरकुटिला हरमौलिविधुलेखा ॥१३६॥ श्रीकण्ठस्य कपर्द-बन्धनपरिश्रान्तोरगग्रामणीसंदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम्। या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदं-शिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥१३७॥

## लोचनम्

जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ। धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ १३८ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रण-यिनि समुन्मीलदानन्दसान्द्रम्। प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ १३९ ॥ सानन्दा गणनायके सपुलका गौरीमुखाम्भो-रुहे सक्रोधाः कुसुमायुधे सकरुणाः पादानते वज्रिणि। सस्मेरा गिरिजासखीषु सनयाः शैलाधिनाथे वहन्भूमीन्द्र प्रदिशन्तु शर्म विपुलं शंभोः कटाक्षच्छटाः ॥ १४० ॥ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम्। अन्यद्दूरविकृष्टचाप-मदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्र-त्रयं पातु वः ॥ १४१ ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीष-द्विघटितमुकुले कालयज्वा जुहाव। अर्चिर्निष्टप्तचूडा-

१ केशादौ जरसा यच्छौक्ल्यं तत्. २ तिर्यङ्नद्धमाला. ३ निबिड. ४ तिर्यग्दृष्ट्या. ५ अनूपसदृशः कश्चिन्नद्यादेरुपान्तदेशः. ६ बलवान्. ७ पङ्किः. ८ नश्यत्. ९ झटिति.

१ व्यक्तीभवत्. २ अक्षीणानाम्; महतामित्यर्थः. ३ सान्द्रस्निग्धः. ४ मान्द्यम्. ५ जटाजूटः. ६ कर्तरिका. ७ शान्तिमति. ८ व्याप्तम्. ९ अधोगामि.

शशिगलितसुधाघोरझांकारिकोणं तार्तीयं यत्पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ १४२ ॥

### कण्ठः

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ १४३ ॥ पातु वः शितिकण्ठस्य तमालश्यामलो गलः । संसक्तपार्वतीबाहुसुवर्णनिकषोपलः ॥ १४४ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति । याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरुस्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ १४५ ॥ कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालंकृतीयन्ति देव्याः । रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः ॥ १४६ ॥

### शिरोमालिका

पित्रोः पादाब्जसेवागतगिरितनयापुत्रपत्रोतिभीतक्षुभ्यद्भूषाभुजंगश्वसनगुरुमरुद्दीप्तनेत्राग्नितापात् । स्विद्यन्मौलीन्दुखण्डस्रुतबहुलसुधासेकसंजातजीवा पूर्वाधीतं पठन्ती द्रवतु विधिशिरोमालिका शूलिनो वः ॥ १४७ ॥

### गणाः

संध्याताण्डवडम्बरप्रणयिनो देवस्य चण्डीपतेश्चेष्टापीडविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः । यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्राहौ गृहीते हठात्सूर्याचन्द्रमसोर्मिथः स्मितबतोर्जातं करास्फालनम् ॥ १४८ ॥

### नन्दी

कण्ठालंकारघण्टाघणघणरणितापूरिताध्मातरोदःकटाहः कण्ठेकालाधिरोहोचितघनसुभगंभावुकस्निग्धपृष्ठः । साक्षाद्धर्मो वपुष्मान् धवलककुदनिर्धूतकैलासकूटः कूटस्थो वः ककुद्मान्निबिडतरतमःस्तोमतृण्यां वितृण्यात् ॥ १४९ ॥

### ताण्डवम्

देवा दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुचः पातालं व्रज मेदिनि प्रविशत क्षोणीतलं भूधराः । ब्रह्मन्नुन्नय दूरमात्मभुवनं नाथस्य नो नृत्यतः शंभोः संकटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः ॥ १५० ॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरवध्वानोद्गीतजगद्भमत्पदभरालोलत्फणाग्र्योरगम् । भृङ्गापिङ्गजटाटवीपरिसरोद्भ्रोर्मिमालाचलच्चन्द्र चारु महेश्वरस्य भवतां निःश्रेयसे ताण्डवम् ॥ १५१ ॥ संध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमिव्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः । येषामुच्छलतां जवेन झगिति व्यूहेषु भूमीभृतामुड्डीनेषु बिडौजसा पुनरसौ दंभोलिरालोकितः ॥ १५२ ॥ यस्यां मौलिमिलत्सुधांशुकलया संपूर्णबिम्बायितं भालावस्थितलोचनेन सहसैवालातचक्रायितम् । आवर्तायितमाकपर्दममरस्रोतस्वतीधारया पातु त्रीणि जगन्ति खण्डपरशोः सा ताण्डवाङ्गभ्रमिः ॥ १५३ ॥ पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः संकोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम् । दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीतेरित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ १५४ ॥ मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भःक्षोददम्भात्प्रसभमभिनभःक्षिप्तनक्षत्रलक्षम् । ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेशभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शांभवं ताण्डवं वः ॥ १५५ ॥ शर्वाणीपाणिताललयवलयझणत्कारिभिः श्लाघ्यमानं स्थाने संभाव्यमानं पुलकितवपुषा शंभुना प्रेक्षकेण । खेलत्पिञ्छालि केकाकलकलकलितं क्रौञ्चभिद्बर्हियूना हेरम्बाकाण्डबृंहातरलितमनसस्ताण्डवं त्वां धिनोतु ॥ १५६ ॥ पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्ननिर्यच्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् । अभ्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनालच्छेदामोदानुधावद्बुधिरमिव खगे धूर्जटेस्ताण्डवं नः ॥ १५७ ॥ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसंगमानि । जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टभूरिभ्रश्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शंभोः ॥ १५८ ॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव । वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः शंभोर्नृत्यावतारे वलयमणिफणाफूत्कृतैर्विप्रकीर्णः ॥ १५९ ॥ चञ्चद्देवेन्द्रकुड्यश्रलितदशदिशाकीर्णकोटीरकोट्यः संगायत्स्वर्वधूट्यः सरभसविनमत्सिद्धगन्धर्वधाट्यः । विश्लिष्यच्चर्मपट्यो विगलितशतपत्रासनोद्यत्करोट्यस्त्रुट्यत्कैलासतट्यस्त्रिपुरविजयिनः पान्तु मामारभट्यः ॥ १६० ॥

### अर्धनारीश्वरः

मन्दारमालालुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ १६१ ॥ एकः स्तनस्तुङ्गतरः परस्य वार्तामिव

१ षडाननः. २ वाहनम्; मयूर इत्यर्थः. ३ पूरित. ४ द्यावापृथिव्यौ. ५ शंकरः. ६ सुभगं भवतीति तत्. ७ परिभूत. ८ निश्चलः; निर्विकारतया चिरजीवीत्यर्थः. ९ अज्ञाननिवहः. १० तृणसमूहः. ११ खादतु. १२ मेघाः. १३ सानुनासिनिर्देशः.

१ इन्द्रेण. २ वज्रम्. ३ पृथिव्याः. ४ यथेष्टं क्षेपणैः. ५ अतिक्रान्तचतुर्दशभुवनानाम्. ६ आधारस्य पृथिव्यादेरनुरोधादनुसारात्. ७ कणाः. ८ पार्वती. ९ उचितम्. १० बर्हपङ्क्तयः. ११ षडाननः. १२ अकाले भवम्. १३ गर्जितम्. १४ क्षुब्धचेतसः; मेघनिर्घोषभ्रान्त्येति भावः. १५ अनायासम्. १६ सुरसरित्. १७ बाणः. १८ ताण्डवप्राचण्ड्यम्.

प्रष्टुमगान्मुखाग्रम् । यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री ॥ १६२ ॥ यस्योपवीतगुण एव फणावृतैकवक्षोरुहः कुचपटीयति वामभागे । तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे महसे नमस्या ॥ १६३ ॥ स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः । स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥ १६४ ॥ संभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्यं मिथुनं परस्परपरिस्यूतं नमस्कुर्महे । एकस्याः प्रतिबिम्बसंभूतविपर्यासे मुहुर्दर्पणे सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः ॥ १६५ ॥ आश्लेषाधरबिम्बचुम्बनसुखालापस्मितान्यासतां दूरे तावदिदं मिथो न सुलभं जातं मुखालोकनम् । इत्थं व्यर्थकृतैकदेहघटनोपन्यासयोरावयोः केयं प्रेमविडम्बनेत्यवतु वः स्मेरोऽर्धनारीश्वरः ॥ १६६ ॥ स्वच्छन्दैकस्तनश्रीरुभयदलमिलन्मौलिचन्द्रः फणीन्द्रप्राचीनावीतवाही सुखयतु भगवानर्धनारीश्वरो वः । यस्यार्धे विश्वदाहव्यसनविसृमरज्योतिरर्धे कृपोद्यद्बाष्पं चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ १६७ ॥

---

## पार्वती

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् । कालकूटविषस्पर्शजातमूर्च्छागमामिव ॥ १ ॥ पार्वतीमोषधीमेकामपर्णां मृगयामहे । शूली हालाहलं पीत्वा यया मृत्युंजयोऽभवत् ॥ २ ॥ अपर्णैव लता सेव्या विद्वद्भिरिति मे मतिः । यया वृतः पुराणोऽपि स्थाणुः सूतेऽमृतं फलम् ॥ ३ ॥ मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ४ ॥ जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका । सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥ ५ ॥ तपस्वी कां गतोऽवस्थामिति स्मेराननाविव । गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥ ६ ॥ चिरमाविष्कृतप्रीतिभीतयः पान्तु वो द्विषाम् । वलयज्यारवोन्मिश्राश्चण्ड्याः कोदण्डकृष्टयः ॥ ७ ॥ चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति । शर्करपर्यन्तजितो वीरस्तम्भः स्मरस्येव ॥ ८ ॥ उन्नालनाभिपङ्करुह इव येनावभाति शंभुरपि । जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ ९ ॥ अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ । सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ १० ॥ कण्ठोचितोऽपि हुंकृतिमात्रनिरस्तः पदान्तिके पतितः । यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ ११ ॥ विरञ्चिनारायणवन्दनीयो मानं विनेतुं गिरिशोऽपि यस्याः । कृपाकटाक्षेण निरीक्षणानि व्यपेक्षते सावतु वो भवानी ॥ १२ ॥ शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री । अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥ १३ ॥ तद्वः प्रमार्ष्टु विपदः प्रणतार्तिहन्त्र्या न्यस्तं पदं महिषमूर्धनि चण्डिकायाः । वैरी यदीयनखरांशुपरीतशृङ्गः शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ १४ ॥ श्रुत्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतुराननाय । शार्दूलचर्म भुजगाभरणं समस्त दत्तं निशम्य गिरिजाहसितं पुनातु ॥ १५ ॥ पञ्चास्यपञ्चदशनेत्रपिधानदक्षा दाक्षायणीमृदुकराः कृतिनः पुनन्तु । द्वौ वल्लकीं कथमकेति च वादयन्तावष्टादशोऽपि घटयन्स्तुतिमौनमुद्राम् ॥ १६ ॥ आनन्दमन्थरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १७ ॥ ब्रह्मादयोऽपि यदपाङ्गतरङ्गभङ्ग्या सृष्टिस्थितिप्रलयकारणतां व्रजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं हरवल्लभायै ॥ १८ ॥ ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १९ ॥ पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ २० ॥ दिश्यान्महासुरशिरःसरसीप्सितानि प्रेङ्खन्नखावलिमयूखमृणालनालम् । चण्ड्याश्चलच्चटुलनूपुरचञ्चरीकझांकारहारि चरणाम्बुरुहद्वयं वः ॥ २१ ॥ रचयति सहसा यच्चित्रमेतत्प्रपञ्चं प्रशमयति च तद्वत्केनचित्कौतुकेन । अविदितमपरैस्तच्चण्डमुण्डादिनानादनुजदलनदक्षं शर्वसर्वस्वमव्यात् ॥ २२ ॥ प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी ह्यनेकरुण्डमुण्डयुग्रणे बलैकदायिनी । क्वचित्त्वशक्तिकारिणी रमाविलासदायिनी मुदेऽस्तु कालिका सदा समस्तपापहारिणी ॥२३॥

---

१ कञ्चुकीभवति. २ यज्ञोपवीतम्. ३ प्रसारी. ४ पर्वतसंबन्धिनीम्; पक्षे,–पर्वतपुत्रीम्. ५ पर्णरहिताम्; पक्षे,–एतन्नाम्नीं पार्वतीम्. ६ शूलरोगवान्; पक्षे,–त्रिशूलधारी. ७ मृत्युनाशकः; पक्षे,–एतन्नाम्ना प्रसिद्धः शिवः. ८ स्वतः सुखविशेषजनकतया तुच्छविषयपराङ्मुखस्याप्येतादृश्यवस्थासंपादनादिति भावः.

१ स्तनयोः कुम्भिकुम्भसाम्यादिति भावः. २ कथं मां विहायैनमेव संगोप्य बहुकालं स्तन्यं प्रयच्छतीति धियेति भावः. ३ कार्तिकेयः. ४ गजाननानिर्णयार्थमिति भावः. ५ आलिङ्गनार्होऽपि; पक्षे,–अर्धचन्द्राकारतया कण्ठलक्ष्ययोग्योऽपि. ६ न तु करतर्जनादिना; पक्षे,–बाणादिना. ७ प्रणामार्थमिति भावः; पक्षे,–वेगवशादिति भावः. ८ हस्तविन्यासविशेषः. ९ इन्दुमौलेः प्रियायाः पार्वत्याः. १० शर्वस्य शिवस्य सर्वस्वं पार्वतीरूपम्.

पुरारितनुहारिणी दुरितसङ्घसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवोन्मर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः ॥ २४ ॥ सत्त्वादिस्थैरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरीं या कुमारीति संज्ञाम् । मोहध्वान्तप्रसरविरतिर्विश्वमूर्तिः समन्तादाद्या शक्तिः स्फुरतु मम सा दीपवद्देहगेहे ॥ २५ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसताश्लिष्टा शिवायास्तु वः ॥ २६ ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः । पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥ २७ ॥ प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाऽग्रे परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् । उन्मादस्मितरोषलज्जितधिया गौर्या कथंचिच्चिराद्बद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ २८ ॥ रामाद्याचय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलं प्रेतेशान्महिषं तवास्ति वृषभः फालं त्रिशूलं तव । शक्ताऽहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे खिन्नाऽहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २९ ॥ हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥ ३० ॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥ ३१ ॥ धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्यन्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥३२॥ गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती । भर्तुर्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥ ३३ ॥ स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमादूर्ध्वश्वासपरिस्खलत्स्वरकथं संदष्टदन्तच्छदम् । सीत्काराञ्चितलोचनं सपुलकं श्रान्तभ्रु नृत्यत्करं पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥ ३४ ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेस्तव । रोमाञ्चः कथमेष देवि भगवन्गङ्गाम्भसां सीकरैरित्थं भर्तरि भावगोपनपरा गौरी चिरं पातु वः ॥ ३५ ॥ शम्पाकस्य रजः प्रमृज्य चरणे दत्तो मया यावको निर्मृज्य स्तनकुड्मले च भसितं पत्राङ्कुरो निर्मितः । स्वच्छन्दं विहरेति जल्पितगिरं साकूतमालीजनं दृष्ट्वा केवलमाव्रती कुटिलया दाक्षायणी पातु वः ॥ ३६ ॥ वक्त्रं शीतकरोऽधरो घनरसः कामप्रदो विग्रहः श्वासो गन्धवहः सरोरुहसुहृत्पाणिः स्मिताभा शुचिः । वक्षः पीनपयोधराधिकरणं पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः ॥ ३७ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने । ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ ३८ ॥ कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥ ३९ ॥ लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् । पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ ४० ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ४१ ॥ भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि । आर्ये मुञ्च विषादमाशु कमले नाहं प्रकृत्या चला चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ४२ ॥ हे गङ्गाधरपत्नि चक्रिवधु किं कुत्रास्त्यसौ नर्तको वृन्दारण्यभुवि क्व सर्पकुतुकी स्यात्कालियस्य ह्रदे । भिक्षुः कुत्र गतोऽस्ति

१ समीपवर्ती. २ भर्तुः. ३ चित्तविभ्रमः. ४ परशुरामात्. ५ कुबेरात्. ६ बलभद्रात्. ७ यमात्. ८ कृषकः. ९ स्कन्दः. १० गोनासादिसर्पभयनिवृत्तय इत्यर्थः. गोनासः सर्पजातिविशेषः. ११ वृद्धा. १२ यावज्जीवं कृततपसः फलोन्मुखत्वं समीक्ष्येत्यर्थः. १३ भूतगणादिसाहित्याद्यालोक्येत्यर्थः.

१ चुम्बितावित्यर्थः. २ निमीलित. ३ रोमहर्षणम्. ४ स्वाभिप्राय. ५ लाक्षारसः. ६ भस्म. ७ उदकम्; पक्षे,–अधिकरसः. ८ शरीरम्. यजमानरूपम्. ९ कमलानां मित्रम्, सूर्य इत्यर्थः; पाणिपक्षे,–सरोरुहानां सदृशी कान्तिर्यस्य. १० अग्निः. ११ स्तनौ; पक्षे,–मेघाः. १२ स्थानम्. आकाशं मेघानां स्थानमिति प्रसिद्धम्. १३ इष्टः. १४ रक्तोत्पलम्. १५ खेदम्; पक्षे,–विषमत्तीति विषादस्तं शिवम्. १६ चञ्चला; पक्षे,–लक्ष्मीः.

यज्ञसदने क्कासौ विषादी बकीक्रोडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गयः पान्तु वः ॥ ४३ ॥ वेणीबन्धकपर्दिनी सिततनुः श्रीखण्डपांसूत्करैः केतक्येकदलेन्दुभृद्बिसलता व्यालोपवीतिन्यपि । प्राक्पाणिग्रहणाद्विनोदरभसा सख्याः पुरो लीलया कुर्वाणानुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥ ४४ ॥ यस्याङ्घ्रिद्वितयं नमन्ति विबुधाः स त्वेककः सर्वविन्तं मृत्युंजयमामनन्ति मुनयः सोऽद्यापि यातिव्रताः(?) । इत्याकर्ण्य कथां रहस्यपि यया पत्युर्विवाहात्पुरा भङ्क्त्वाङ्गानि विजृम्भितं गिरिभुवो मोट्टायितं पातु वः ॥ ४५ ॥ संध्यारागवती स्वभावकुटिला गङ्गा द्विजिह्वः फणी वक्राङ्गैर्मलिनः शशी कपिमुखो नन्दी च मूर्खो वृषः । इत्थं दुर्जनसंकटे पतिगृहे वस्तव्यमेतत्कथं गौरीत्थं नृकपालपाणिकमला चिन्तान्विता पातु वः ॥ ४६ ॥ भिक्षार्थी स क्क यातः सुतनु बलिमखे ताण्डवं क्काद्य भद्रे मन्ये वृन्दावनान्ते क्क नु स मृगशिशुर्नैव जाने वराहम् । बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां वः ॥ ४७ ॥ दीप्तक्षुद्वेगयोगाद्धदनलहलहल्लम्बजिह्वाग्रलीढब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभवज्वाठराग्निस्फुलिङ्गाम् । कालीं कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालीगुञ्जासंवादिनेत्रामजिननिवसनां नौमि पाशासिहस्ताम् ॥ ४८ ॥ उद्वाहारोपितार्द्राक्षतनिजपदयोः संगतामिन्दुमौलावानम्रे यां सुधांशोर्व्यधित किल कलां तूर्णमेवान्नपूर्णाम् । सक्तानामक्षतानाममृतदृगनलोपाधितः पक्कभावान्नानार्थैरन्नपूर्णा प्रणतजनततेः पूर्णतामातनोतु ॥ ४९ ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनभो दण्डपादो भवान्याः ॥ ५० ॥ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥ ५१ ॥ वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डलस्वच्छभासि स्वां छायां साभ्यसूया त्वमियमिति मुहुः सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याः श्रवसि कुवलयं नाहमित्यालपन्ती दत्ताश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ ५२ ॥ रामार्चिताङ्घ्रिरभिरामाकृतिः कृतविरामा सुपर्वविपदां कामार्तिहृत्सफलकामा निदेशरतकामादिनिर्जरवधूः । भामा हरस्य नुतभामा जपासदृशभा माननीयचरिता सा मामवत्वखिलसामादृतस्तुतिरसामान्यमुक्तिसुखदा ॥ ५३ ॥ बालीयुतश्रवणपालीयुगा ललितचूलीविराजिबकुला केलीगतानुगमरालीकुला मधुरमालीभिरादृतकथा । नालीकदृक्कुसुमनालीकपाणिरिह कालीयशासिसहजा तालीदलाभतनुमाली सदा भवतु काली शुभाय मम सा ॥ ५४ ॥

---

## षण्मुखः

शैलराजतनयास्तनयुग्मव्यापृतास्ययुगलस्य गुहस्य । शेषवक्त्रकमलानि मलं वो दुग्धपानविधुराणि हरन्तु ॥ १ ॥ विकसदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा यः संयमाधःकृतानि । न तु रुचिरकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥ २ ॥ अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कितो वासुकेरङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् । एकं त्रीणि च सप्त पञ्च षडिति प्रध्वस्तसंख्याक्रमा वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥ ३ ॥

---

## हरिहरौ

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ । कामारिं कामतातं वा कंचिद्देवं भजामहे ॥ १ ॥ गाङ्गयामुनयोगेन तुल्यं हारिहरं वपुः । पातु नाभिगतं पद्मं यस्य तन्मध्यगं यथा ॥ २ ॥ अंबलाढ्यविग्रहश्रीरमर्त्यनतिरक्षमालयोपेतः । पञ्चक्रमोदितमुखः पायात्परमेश्वरो मुहुरनादिः ॥ ३ ॥ पन्नगधारिकराग्रो गङ्गोमालक्षितोऽङ्गदोऽग्रभुजः । शशिखण्डशेखर उमापरिग्रहो मुहुरनादिरवतु त्वाम् ॥ ४ ॥ गवीशपत्रो नगजार्तिहारी कुमारतातः शशिखण्डमौलिः । लङ्केश-

---

१ जीर्णे. २ पलायिते. ३ पौरुषोपघ्नानां पराक्रमिणां निघ्नं आयत्तम्. ४ प्रभूतप्रभावा. ५ प्रतिबिम्बम्. ६ सेर्ष्या. ७ कर्णे. ८ दैत्यकृतदेवविपत्तीनाम्.

१ स्त्री. २ क्रोधः असुरवधकालोत्पन्न इत्यर्थः. ३ अरुणेत्यर्थः. ४ कर्णभूषणविशेषः. ५ केशपाशः. ६ सखीभिः. ७ कमलनयना. ८ पुष्पशरहस्ता. ९ कालीयः सर्पस्तं शास्तीति स कृष्णस्तत्सहजा भगिनी. यशोदोदरे दुर्गाप्रादुर्भावस्य भागवते प्रसिद्धत्वात्. १० पार्वत्यर्धाङ्गीकरणात्; पक्षे,–बलाढ्यो बलिष्ठः. ११ देवसंपूजितः; पक्षे,–मृत्युलोकसंपूजितः. तस्य रक्षणात्. १२ अक्षमाला जपमाला; पक्षे,–क्षमालयं पृथ्वी. १३ पञ्चाननः; पक्षे,–चक्रेण मोदितं मुखं यस्य सः. १४ परमेश्वरः शिवः, रमेश्वरो; विष्णुः. १५ न विद्यते आदिर्यस्य सः; पक्षे,–आद्यवर्णरहितः. १६ गवीशो वृषो वाहनं यस्य; पक्षे,–आद्याक्षरस्य लोपात् वीशो गरुडो वाहनं यस्य. १७ पार्वतीदुःखनाशकः पक्षे,–गजेन्द्रपीडाहारकः. १८ कार्तिकेयपिता; पक्षे,–मदनपिता. १९ चन्द्रः शिरसि यस्य; पक्षे,–मयूरपिच्छानि शिरसि यस्य. २० रावणपूजितचरणकमलः; पक्षे,–को ब्रह्मा, ईशः शिवः, एताभ्यां पूजितपादपद्मः.

संपूजितपादपद्मः पायादना[1]दिः प[2]रमेश्वरो वः ॥ ५ ॥ स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्तदवतु वपुरेकं कामकंसद्विषोर्वः । भवति गिरिसुतायाः सार्धमम्भोधिपुत्र्या सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ६ ॥ संप्राप्तं [3]मकरध्वजेन मैथनं[4] त्वत्तो मदर्थे पुरा तद्युक्तं ब[5]हुमार्गगां मम पुरो निर्लज्ज वोढुस्तव । तामेवानुनयस्व-भावकुटिलां हे [6]कृष्ण कण्ठग्रहं मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात्स वः ॥ ७ ॥ यौ तौ शङ्खकपालभूषितकरौ मालास्थिमालाधरौ देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ । द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥ ८ ॥ लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिः पाथसां कः प्रत्येति जलादपत्यजननं प्रत्येति यः प्र[7]स्तरात् । इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरीं संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥ ९ ॥ यस्मादासीत्कुमारः कुवलयदलवल्लीलयोवाह गङ्गां [8]वामा यस्याङ्गसङ्गा पिहितजनचयो यो गवीशध्वजोऽपि । लक्ष्मेशाद्येकनाथो हि[9]मकररुचिभृद्भूविशेषाशयोऽसौ वर्णस्याद्यस्य लोपादपहरतु हरिः पातकं वः स्मरारिः ॥ १० ॥

---

## त्रिमूर्तयः

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने । गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ १ ॥ नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते । अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ २ ॥ रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ ३ ॥ श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरुहस्था मोमासांविश्र्युपेता र[11]थचरणपिनाकोग्रहुंकारशस्त्राः । देवा द्वित्र्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदक्षाः प्रीता वः पान्तु नित्यं हरिहरविधयस्ता[12]र्क्ष्यगोहंसपत्राः ॥४॥

## विष्णुः

नमस्त्रिभुवनोत्पत्तिस्थितिसंहारहेतवे । विष्णवेऽपारसंसारपारोत्तरणसेतवे ॥ १ ॥ आदिमध्यान्तरहितं द[13]शा-

हीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥ २ ॥ लक्ष्मीकपोलसंक्रान्तकान्तपत्त्रलतोज्ज्वलाः । दोर्द्रुमाः पान्तु वः शौरेर्घनच्छाया महाफलाः ॥ ३ ॥ जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् । मध्येपयः पयोधेरपर इवाम्भोनिधिः कृष्णः ॥ ४ ॥ अतिविपुलं कुचयुगलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः । तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ॥ ५ ॥ जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्वीजः । दामोदरो निजोदरगह्वरनिर्विष्टजगदण्डः ॥ ६ ॥ श्री[1]कर[2]पिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य । जघनमिवेक्षितु[3]मागतमब्जनिभं नाभि[4]सुषिरेण ॥ ७ ॥ श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो मुरद्विषो जयति । दि[6]नमुखनभ इव कौ[7]स्तुभविभाकरो यद्विभूषयति ॥ ८ ॥ प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः । पु[8]रुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य [9]मुकुरमिव ॥ ९ ॥ केलिचलाङ्गुलिलम्भितलक्ष्मीनाभिर्मुरद्विषश्चरणः । स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ॥ १० ॥ रोमावली मुरारेः श्रीवत्सनिवेशिताग्रभागा वः । उन्नाल[12]नीभिनलिनच्छायेवो[13]त्तापमपहरतु ॥ ११ ॥ कमलाकुचकनकाचलजलधरमाभीरसुन्दरीमदनम् । अधिततशेषफणावलि(सु) कमलवनभृङ्गमच्युतं वन्दे ॥१२॥ जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयम् । अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च ॥ १३ ॥ श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्च[14]ञ्चरीकद्युतिमातनोति । नीलोत्पलश्यामलदेहकान्तिः सवोऽस्तु भूत्यै भगवान्मुकुन्दः ॥ १४ ॥ वक्षस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य । श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः क[15]षपट्टिकेव ॥ १५ ॥ वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः । तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥ १६ ॥ जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया । दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ १७ ॥ पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य । व्यक्तानुरागमिव खेल[16]दनङ्गखेद-

---

१ न विद्यते आदिर्यस्य सः; पक्षे,–आद्याक्षरशून्यः. २ शिवः; पक्षे,तविष्णुः. ३ शिवपक्षे मदनेन; विष्णुपक्षे समुद्रेण, ४ विनाशः; पक्षे,–विलोडनम्. ५ नदीम्. गङ्गामित्यर्थः; पक्षे,–वेश्याम्. कंसस्य कुब्जां दासीमित्यर्थः. ६ कृष्णकण्ठ नीलकण्ठ ग्रहं निर्बन्धं मुञ्च; पक्षे,–कृष्णकण्ठग्रहं मत्कण्ठग्रहं मुञ्च. ७ पाषाणात्. पार्वत्याः पर्वतगर्भसंजननत्वात्. ८ स्त्री; पक्षे,–मा लक्ष्मीः. ९ चन्द्रः; पक्षे,–मीनः. १० मा लक्ष्मीः; उमा पार्वती. ११ चक्रम्. १२ गरुडः. १३ वस्त्रस्य प्रान्तभागस्थाः सूत्रवर्तिकाः.

१ लक्ष्मीः. २ रतरीतिवसनविहीनतया लज्जावशादिति भावः. ३ पिहितेऽपि चक्षुर्गोलकेऽन्यमार्गेण पुण्डरीकनयनमुत्पादयित्वा जघनविलोकनं कृतमित्यर्थः. ४ रन्ध्रम्. ५ रक्तीकृतम्. दृढालिङ्गनादिति भावः. ६ प्रातःकालीननभसः स्वतो नीलिमत्वात्. ७ कौस्तुभमणिरेव सूर्यो यस्मिन्. ८ विपरीतरतम्. ९ दर्पणम्. १० स्पष्टः. ११ चरणरूपपद्मनाभित्वेनेति भावः. १२ रोमावल्यां नालच्छायोत्प्रेक्षा श्रीवत्से च नलिनच्छायोत्प्रेक्षा. १३ महासंतापम्. १४ भृङ्गः. १५ निकषग्रावा. १६ सुरतायासः.

स्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ १८ ॥ श्रेयः सदा दिशतु सालसपक्ष्मपाते निद्रायिते अपि दृशौ भृशमुन्नमय्य । संवाह्यमानचरणाम्बुजजातहर्षो लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥ १९ ॥ सकलभुवनबन्धोर्वैरमिन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दम् । घटयितुमिव मायी योजयत्याननेन्दौ वटदलपुटशायी मङ्गलं वः कृषीष्ट ॥ २० ॥ कचकुचचुबुकाग्रे पाणिषु व्यापृतेषु प्रथमजलधिपुत्रीसंगमेऽनङ्गधाम्नि । ग्रथितनिबिडनीवीबन्धनिर्मोचनार्थं चतुरधिककराशः पातु वश्चक्रपाणिः ॥ २१ ॥ विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः । किमधिकरणं कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ २२ ॥ लक्ष्मीपाणिद्वयविरचितं मूलमूर्धश्रुतीनां व्यक्तं वन्दे चरणकमलद्वन्द्वमाद्यस्य पुंसः । यत्रैकस्य व्यधित बलिना पाद्यतोयैर्वितीर्णैरार्द्रस्यैव प्रणतितरलः क्षालनं पद्मयोनिः ॥ २३ ॥ अनादृतचमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति विस्मितान्तःपुरम् । अवाहनपरिष्क्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥ २४ ॥ दृक्पातः [1]कमलासनेऽस्तु भवतो ज्ञानं मनाग्[2]मारुते [3]श्रीकंठोऽयमितः सुरानिति नतांस्ताक्ष्र्येण विज्ञापितः । प्रेयस्याः क्व तदासनं क्व च रुतं कण्ठः क्व चेत्युल्लसल्लक्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ॥ २५ ॥ निर्मग्नेन मयाम्भसि स्मरभरादालिः समालिङ्गिता केनालीकमिदं तवाद्य कथितं राधे मुधा [6]ताम्यसि । इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिणः सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥ २६ ॥ यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः । अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ २७ ॥ येनोत्थाप्य समूलमन्दरगिरिश्छत्रीकृतो गोकुले राहुर्येन महाबलः सुररिपुः कार्यादशेषीकृतः । कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ २८ ॥ मुग्धे मुञ्च विषादमत्र [8]बलभित्कम्पो [9]गुरुस्त्यज्यतां [10]सद्भावं भज [11]पुण्डरीकनयने मान्यानिमान्मानय । इत्थं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छलादन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ॥ २९ ॥ नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णनप्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः । सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः सोल्लासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः ॥ ३० ॥ निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने । याम्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो नाभीपल्वलपुण्डरीकमुकुलः [1]कम्बोः सपत्नीकृता ॥ ३१ ॥ [2]भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये[3] । लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३२ ॥ चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः । भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ ३३ ॥ आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरीधीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः । लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथादायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ ३४ ॥ भ्राम्यन्मन्दरकंदरोदरदरीव्याघर्तिभिर्वारिधेः कल्लोलैरलमाकुलं [4]कलयतो लक्ष्म्या मुखाम्भोरुहम् । औत्सुक्यात्तरलाः स्मरादिकसिता भीत्या समाकुञ्चिताः क्रोधेन ज्वलिता मुदा मुकुलिताः शौरेर्दृशः पान्तु वः ॥ ३५ ॥ पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे [6]संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम् । पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः [7]कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ॥ ३६ ॥ मन्थक्ष्माधरघूर्णितार्णवपयःपूरान्तरालोल्लसल्लक्ष्मीकन्दलकोमलाङ्गदलनप्रादुर्भवत्संभ्रमाः । हर्षोत्कण्टकितत्वचो मधुरिपोर्देवासुराकर्षणव्यापारोपरमाय पान्तु जगतीमाबद्धवीप्सा गिरः ॥ ३७ ॥ चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय भो भो नन्दक जीव पन्नगरिपो किं नाथ भिन्नो मया । को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवद्भ्यः शपे केनास्त्रेण नखैरिति प्रवदतो विष्णोर्मुखं पातु वः ॥ ३८ ॥ प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी [11]रत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजललवा

१ ब्रह्मणि; पक्षे,–लक्ष्म्या आसने. २ वायौ; पक्षे,–लक्ष्म्याः शब्दे. ३ शिवः; पक्षे,–लक्ष्म्याः कण्ठः. ४ सखी. ५ असत्यम्. ६ कुप्यसि. ७ खेदम्; पक्षे,–शिवम्. ८ बलं भिनत्तीति तम्; पक्षे,–इन्द्रम्. ९ बद्धः; पक्षे,–बृहस्पतिः. १० सुष्ठुभावम्; पक्षे,–सद्भावेन. ११ कमललोचने; पक्षे,–विष्णौ.

१ शङ्खस्य. २ भक्तिप्रह्वादिविशेषणानि नेत्रपक्षे तनुपक्षे च क्रमेण द्विवचनैकवचनान्तानि. ३ 'नीता ईहितप्राप्तये' इति तनुपक्षे छेदः. ४ पश्यतः. ५ अदत्तपरपुत्रिकाप्रानर्थत्वेन. ६ संबद्ध. ७ बहुशरीरताम्. ८ समृद्धकामभावः. ९ उन्मीलनम्. १० कुटिला. ११ शेषशिरःस्थानामित्यर्थः.

जृम्भितैः साङ्गभङ्गैः । नागाङ्कं[1] मोक्तुमिच्छोः शयनमुरु[2]-फणाचक्र[3]वालोपधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टि[4]राकेकरा वः ॥ ३९ ॥ श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोलल्लीलाब्जान्निःसरन्ती मधुरमधुझरी नाभिपद्मे मुरारेः । अस्तोकं[5] लोकमात्रा द्वियुग[6]मुखशिशोराननेष्वर्प्यमाणं शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥ ४० ॥ किंचिन्निर्मुच्यमाने गगन इव मुखे शाठ्यनिद्रापयोदैर्न्यक्कुर्वाणे स्वभासा फणिपतिशिरसां रत्नदीपांशुजालम् । पायास्तां वो मुरारेः शशितपनमये लोचने यद्विभासा लक्ष्म्या हस्तस्थमर्घं विकसति कमलस्वार्धमभ्येति निद्राम् ॥ ४१ ॥ एकस्थं जीवितेशे त्वयि सकलजगत्सारमालोकयामः श्यामे चक्षुस्तवास्मिन्वपुषि निविशते नाल्पपुण्यस्य पुंसः । कस्मान्यत्रामृतेऽस्मिन्नतिरतिविपुला दृष्टिरेवामृतं ते दैत्यैरित्युच्यमानो मुनिभिरपि हरिः स्त्रैणरूपोऽवताद्वः ॥४२॥ यस्योद्यद्बाणबाहुद्रुमगहनवनच्छेदगोष्ठीकुठारं चक्रं निष्क्रान्ततीव्रानलबहलकणाकीर्णधारं विचिन्त्य । जातग्रासावसायो दिवसकृतिलसन्मांसलांशुप्रवाहे मुक्त्वत्यद्यापि राहुः स दहतु दुरितान्याशु दैत्यान्तको वः ॥ ४३ ॥

## शङ्खः

भिन्दन्नरातिहृदयानि हरेः पुनातु निःश्वासवातमुखरीकृतकोटरो वः । संक्रान्तकुक्षिकुहरास्पदसप्तसिन्धुसंघट्टघोरतरघोष इवाशु शङ्खः ॥ ४४ ॥ पायात्स वः कुमुदकुन्दमृणालगौरः शङ्खो हरेः करतनाम्बरपूर्णचन्द्रः । नादेन यस्य सुरशत्रुविलासिनीनां काञ्च्यो भवन्ति शिथिला जघनस्थलीषु ॥ ४५ ॥

## चक्रम्

दृष्टस्य यस्य हरिणा रणमूर्ध्नि मूर्तिरुद्धूतदुःसहमहःप्रसरा समन्तात् । तल्लोचनस्थितरविप्रतिबिम्बगर्भेवाभाति चक्रमरिचक्रनुदेऽस्तु तद्वः ॥ ४६ ॥ उद्वृत्तदैत्यपृतनापतिकण्ठपीठच्छेदोच्छलद्बहलशोणितशोणधारम् । चक्रं क्रियादभिमतानि हरेरुदारदिग्दाहदारुणनभःश्रियमुद्वहद्वः ॥ ४७ ॥

## गरुडः

सौवर्णाङ्कितपत्रमारुतहताहिव्रातकान्ताकुचस्फूर्जन्मौक्तिकभूषणः खगपतिः पूर्णेन्दुबिम्बाननः । पद्माधीश्वरपादपद्मयुगलस्पर्शामलाङ्गानतः पायाद्वो विनतासुतो हरिकृपालोकैकपात्रीकृतः ॥ ४८ ॥

## शेषः

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि । स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥ ४९ ॥

१ शेषनागक्रोडरूपम्. २ बृहत्. ३ मण्डलम्. ४ ईषत्संकुञ्चिता. ५ बहु. ६ ब्रह्मणः.

## लक्ष्मीः

जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः । मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः । यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम्[1] ॥ २ ॥ देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम् । जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ३ ॥ तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति । फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ ४ ॥ स्मेराननेन हरिणा सस्पृहमाकारवेदिनाकलितम् । जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ ५ ॥ कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः । नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥ ६ ॥ किञ्जल्कराजिरिव नीलसरोजलग्ना लेखेव काञ्चनमयी निकषोपलस्था । सौदामिनी जलदमण्डलगामिनीव पायादुरःस्थलगता कमला मुरारेः ॥ ७ ॥ दन्तैः कोरकिता स्मितैर्विकसिता भ्रूविभ्रमैः पत्रिता दोर्भ्यां पल्लविता नखैः कुसुमिता लीलाभिरुद्वेलिता । उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः सुता ॥ ८ ॥ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारिद्युति । लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ९ ॥ आख्याते हसितं पितामह इति त्रस्तं कपालीति च व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता । पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रश्रिया पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ १० ॥ क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थितान्हारं हारसुदारकुङ्कुमरसानव्याजभव्यान्नखैः । वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावलीस्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु वः ॥ ११ ॥ पद्मायाः स्तनहेमसद्मनि मणिश्रेणीसमाकर्षके किंचित्कञ्चुकसंधिसंनिधिगते शौरेः करे तस्करे । सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं गर्जता कामेन प्रतिबोधिताः प्रहरिका रोमाङ्कुराः पान्तु वः ॥ १२ ॥ यादृग्जानासि जाम्बूनदगिरिशिखरे कान्तिरिन्दोः कलानामित्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भाषमाणे । लीलादोलायमानश्रुतिकमलमिलद्भृङ्गसंगीतसाक्षी पायादम्भोधिजायाः कुसुमशरकलानाट्यनान्दीनकारः ॥ १३ ॥ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभार-

१ हरिण इवाचरितम्.

मंसे वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १४ ॥

## समुद्रः

वत्से मा गा विषादं[1] श्वसनमु[2]रुजवं[3] संत्यजोर्ध्वप्रवृत्तं कम्पः[4] को वा गुरु[5]स्ते किमिह बलभिदा[6] जृम्भितेनात्र[7] याहि । प्रत्याख्यानं[8] सुराणामिति भयशमन[9]च्छद्मना कारयित्वा यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः ॥ १५ ॥

---

## ब्रह्मा

तं वन्दे पद्मसद्मानमुपवीतच्छटाच्छलात् । गङ्गा स्रोतस्त्रयेणैव यं सदैव निषेवते ॥ १ ॥ कुलशैलदलं पूर्णसुवर्णगिरिकर्णिकम् । नमोऽधितिष्ठतेऽनन्तनालं कमलविष्टरम् ॥२॥ कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः । घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ ३ ॥ अविरताम्बुजसंगतिसंगलद्बहलकेसरसंवलितेव वः । ललितवस्तुविधानसुखोल्लसत्तनुरुहा तनुरात्मभुवोऽवतात् ॥ ४ ॥

---

## दशावताराः

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते । पौलस्त्यं जयते[10] हलं[11] कलयते[12] कारुण्यमातन्वते म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ १ ॥ यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी । क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो ध्याने विश्वम[13]सावधार्मिककुलं कस्मैचिदस्मै नमः ॥ २ ॥ पाठीनः[14] कमठः[15] किटिर्नरहरिः खर्वाकृतिर्भार्गवो रामः कंसनिषूदनो दशबलः[16] कल्की च नारायणः । युष्माकं स विभूतयेऽस्तु भगवान्सेतुर्भवाम्भोनिधावुत्ताराय युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ ३ ॥ वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता दैत्येशो नखरैर्हतः फणिपतेर्लोकं बलिः प्रापितः । क्ष्माऽक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी हिंसा दोषवती धराप्ययवना पायात्स नारायणः ॥ ४ ॥

१ खेदम्; पक्षे,–हरम्. २ श्वासम्; पक्षे,–पवनम्. ३ महावेगम्. ४ कं जलं पातीति तथा वरुणः; पक्षे,–कम्पः. ५ महान्; पक्षे,–बृहस्पतिः. ६ बलं प्रसिद्धं, तद्भिदा नाशकेन; पक्षे,–बलाख्यदैत्यनाशकेनेन्द्रेण. ७ श्रीकृष्णसंनिधौ. ८ वर्जनम्. ९ भयनिवारणव्याजेन. १० लाङ्गलम्. ११ धारयते. १२ त्वक्. १३ खड्गे. १४ मत्स्यः. १५ वराहः. १६ बुद्धः.

### मत्स्यः

मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्दावन्तर्लीने जलधिसलिले व्याकुले देवलोके । मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्धि श्रीकान्तस्य स्थलजलगतं वेत्यलक्ष्यं पुनातु ॥ ५ ॥ वियत्पुच्छोत्तुच्छोच्छलितजलगर्भे निधिरपामपांनाथः पाथः[1] पृथुलल[2]वर्दुस्थो[3] वियदभूत् । निधिर्भासा[4]मौर्वो[5] दिनपतिरभूदौर्वदहन[6]श्चलत्काये यस्मिन्स जयति हरिर्मीनवपुषा ॥ ६ ॥ जीयासुः शकुलाकृते[8]र्भगवतः पुच्छच्छटाच्छोटना[9]दुद्यन्तः[10] शतचन्द्रिताम्बरतलं ते बिन्दवः सैन्धवाः । यैर्व्यावृत्य पतद्भिरौर्वशिखिन[11]स्तेजोजटालं वपुः पानो[12]ध्मानवशादरोचकरुजां[13] चक्रे चिरायास्पदम्[14] ॥ ७ ॥ दिश्याद्वः शकुलाकृतिः स भगवान्निःश्रेयसीं संपदं यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलने[15]क्रीडनैः । विष्वग्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसंगतैर्गङ्गासागरसंगमप्रणयिनी जाता विहायःस्थली[16] ॥ ८ ॥ मायामीनतनोस्तनोतु भवतां पुण्यानि पङ्कस्थितिः पुच्छाच्छोटसमु[17]च्छलज्जलगुरुप्राग्भाररिक्तोदधेः । पातालावर्तमध्यसंकटतया[18] पर्यस्तकष्टस्थितेर्वेदो[19]द्धारपरायणस्य सततं नारायणस्य प्रभोः ॥ ९ ॥ जृम्भाविस्तृतवक्रपङ्कजविधेर्हृत्वा श्रुतीः[20] सागरे लीनं त्रस्तसमस्तनक्रनिकरं शङ्खं जघानाजिरे[21] । पुच्छोत्क्षिप्तजलोत्करैः प्रतिदिशं[22] संतर्प्य[23] यो वै धरां पायाद्वः स मृणालकोमलतनुर्मीनाभिधानो हरिः ॥ १० ॥ हंहो मीनतनो हरे किमुदधे किं वेपसे शैत्यतः खिन्नः किं वडवानलात्पुलकितः कस्मात्स्वभावादहम् । इत्थं सागरकन्यकामुखशशिव्यालोकनेनाधिकप्रोचत्कामजचिह्नन्हुतिपरः शौरिः शिवायास्तु वः ॥ ११ ॥ पुच्छं चेदहमुन्नयाम्यनवधिस्तुच्छो भवेदम्बुधिः क्रीडां चेत्कलये मनागपि जले पीडा परं यादसाम् । निस्पन्दो भृशमामृशन्निति भरब्रह्माण्डभाण्डक्षयक्षोभाकुञ्चितवेष एष भगवान्प्रीणातु मीनाकृतिः ॥ १२ ॥ चन्द्रादित्यो-

१ बहुः. २ उदकम्. ३ विपुलः. ४ दरिद्रः. ५ सूर्यः. ६ वडवानलः, यदा पानीयं मीनाकृत्या भगवता स्वपुच्छेनोच्छलितम्, तदा सर्वमपि सामुद्रं जलं वियति गतम्. तत्र च रविर्वर्तत एव, स वडवानलाकृत्या दृश्यत इत्यर्थः. ७ समुद्रे पानीयाभावात्समुद्रस्याकाशकल्पना. तत्र च वाडवाग्नेः सूर्योपमेति भावः. ८ मत्स्याकृतेः. ९ इतस्ततः आलोडनम्. १० ऊर्ध्वं गच्छन्तः. ११ तेजोव्याप्तम्. १२ अग्निसंयोगाभावः. १३ अरुचिरोगाणाम्. १४ यो निदाघज्वरादिरुगाक्रान्तो बहुपानीयं पिबति, तस्य पश्चात्पानीयस्यारुचिर्जायते तथैतस्य वाडवाग्नेरपीति भावः. १५ दोला. १६ आकाशस्थली. यतः सागरजलं मत्स्यपुच्छेनोच्छलितं सुरनद्याः सङ्गमवाप ततो गङ्गासागरसंगमतीर्थं नभस्यपि जज्ञ इति भावः. १७ उल्लोलनम्. १८ भूरन्ध्रम्. १९ संकीर्णतया. २० वेदान्. २१ रणाङ्गणे. २२ दत्वा. २३ आप्लवनम्.

रुनेत्रः कमलभवभवस्फारपृष्ठप्रतिष्ठो भास्वत्कालाग्निजिह्वः पृथुलगलगुहाद्दृष्टनिःशेषविश्वः। अद्भिः पुच्छोत्थिताभिश्च कितसुरवधूनेत्रसंसूचिताभिर्मत्स्यश्छिन्नाब्धिवेलं गगनतलमलं क्षालयन्वः पुनातु ॥ १३ ॥ यं दृष्ट्वा मीनरूपं स्फुरदनलशिखायुक्तसंरक्तनेत्रं लोलद्विस्तीर्णकर्णक्षुभितजलनिधिं नीलजीमूतवर्णम्। श्वासोच्छ्वासानिलौघैः प्रचलितगगनं पीतवारिं मुरारिं दिग्व्यूढोऽभूत्स शङ्खः स भवतु भवतां भूतये मीनरूपः ॥ १४ ॥ दिग्व्यूढं तं सुरारिं किल शितदशनैः पीड्यमानं रटन्तं हत्वा तीरे पयोधेः करतलकलितं पूरयामास शङ्खम्। नादेनाक्षोभ्य विश्वं प्रमुदितविबुधं त्रस्तदैत्यं स देवैर्दत्तार्घः पद्मयोनेः प्रहसितवदनः पातु वो दत्तवेदः ॥१५॥

### कूर्मः

निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम्। प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ १६ ॥ भ्राम्यन्महागिरिनिघर्षणलब्धपृष्ठकण्डूयनक्षणसुखायितगाढनिद्रः। सुष्वाप दीर्घतरघर्घरघोरघोषः श्वासाभिभूतजलधिः कमठः स वोऽव्यात् ॥ १७ ॥ नमस्कुर्मः कूर्मं नमदमरकोटीरनिकरप्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठवपुषम्। जंरीजृम्भज्झिम्भंद्युमणिरमणीयांशुलहरीपरीरम्भस्फूर्जद्दलमिदुंपलाद्रिप्रतिभटम् ॥ १८ ॥ निष्प्रत्यूहमनल्पकल्पचरितस्त्रैलोक्यरक्षागुरुः क्रीडाकूर्मकलेवरः स भगवान्दिश्यादमन्दां मुदम्। कल्पान्तोदधिमध्यमज्जनवशाद्यास्पर्पतः संलुठत्पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ॥ १९ ॥ पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनैर्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः। यत्संस्कारकलानुवर्तनवशाद्वेलाछलेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २० ॥ दृग्भ्यां यस्य विलोकनाय जगतो द्रागीषदुत्तोलितग्रीवाग्रोपरि विस्फुरद्ग्रहगणे छत्रायितायां भुवि। हा धिग्भूः किमभूदभूत्तदितरत्किं चेति पर्याकुलो हन्यादेष हठादघानि कमठाधीशः कठोराणि वः ॥ २१ ॥ यो धत्ते शेषनागं तदनु वसुमतीं स्वर्गपातालयुक्तां युक्तां सर्वैः समुद्रैर्हिमगिरिकनकप्रस्थमुख्यैर्नगेन्द्रैः। एतद्ब्रह्माण्डमस्यामृतघटसदृशं भाति वंशो मुरारेः पायाद्वः कूर्मदेहः प्रकटितमहिमा माधवः कामरूपी ॥ २२ ॥

### वराहः

नमस्तस्मै वराहाय हेलयोद्धरते महीम्। खुरमध्यगतो यस्य मेरुः खुरखुरायते ॥ २३ ॥ पातु वो मेदिनीदोलाबालेन्दुद्युतितस्करी। दंष्ट्रा महावराहस्य पातालगृहदीपिका ॥ २४ ॥ हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः। हेमाद्रिकलसा यत्र धात्री छत्रश्रियं दधौ ॥ २५ ॥ स जयति महावराहो जलनिधिजठरे चिरं निमग्नोऽपि। येनात्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ २६ ॥ पातु वः कपटकोलकेशवो यस्य निःश्वसितमारुतोद्धता। उच्छ्रितिप्रपतनैरचीकृपत्केलिकन्दुकतुलामिला मुहुः ॥ २७ ॥ मेरुरुकेसरमुदारदिगन्तपत्रमामूललम्बिचलशेषशरीरनालम्। येनोद्धृतं कुवलयं सलिलात्सलीलमुत्तंसकार्थमिव पातु स वो वराहः ॥ २८ ॥ न पङ्के रालेपं कलयति धरित्रीव्ययभयान्न मुस्तामादत्तेऽप्युरगनगरभ्रंशभयतः। न धत्ते ब्रह्माण्डस्फुटनभयतो घर्घररवं महाक्रोडः पायादिति सकलसंकोचितमुखः ॥ २९ ॥ न मृद्वीयान्मृद्वी कथमिव मही पोत्रनिकषैर्मुखाग्निज्वालाभिः कनकगिरिरीयान्न विलयम्। न शुष्येयुः श्वासैः सलिलनिधयः सप्त च कथं वराहो वः पायादिति विपुलचिन्तापरिकरः ॥ ३० ॥ पातु त्रीणि जगन्ति संततमकूपारात्समभ्युद्धरन्धात्रीं कोलकलेवरः स भगवान्यस्यैकदंष्ट्राङ्कुरे। कूर्मः कन्दति नालति द्विरसनः पत्रन्ति दिग्दन्तिनो मेरुः कोशति मेदिनी जलंजति व्योमापि रोलम्बति ॥ ३१ ॥ पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलो देवो वः स जगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः। क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूर्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ ३२ ॥ दृप्यद्दैत्यनितम्बिनीजनमनःसंतोषसंकोचनः कुर्याद्विश्रमनश्वरं स भगवान् क्रोडावतारो हरिः। यद्दंष्ट्राङ्कुरकोटिकोटरकुटीकोणान्तरस्थेयसी पृथ्वी भात्यवदातकेतकदलालीनेव भृङ्गाङ्गना ॥ ३३ ॥ अग्रे यस्य दिशो दलानि विपुलः कोशः सुवर्णाचलः कान्तं केसरजालमर्ककिरणा भृङ्गाः पयोदावली। नालं शेषमहोरगः प्रविततं वारांनिधेर्लीलया तद्वः पातु समुद्धरन्कुवलयं क्रोडाकृतिः केशवः ॥३४॥ बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया क्रोडाकारधरो हरिः स भगवान्भूयाद्विभूतिप्रदः। यस्योत्क्षिप्तवतः

१ गरिष्ठ. २ ब्रह्मणो जातम्, ब्रह्माण्डमित्यर्थः. ३ सविस्मयं दृष्टाभिः. ४ व्याकुलः. ५ तीक्ष्णदन्तैः. ६ वादयामास. ७ अवस्थानम्. ८ मुकुटः. ९ लोहितम्. १० अतिशयेन विकसन्. ११ तरुणः. १२ सूर्यः. १३ इन्द्रनीलपर्वतसदृशम्. १४ आकुञ्चनप्रसारणादि. १५ पृष्ठ इति शेषः. १६ वाडवम्. १७ पृष्ठवंशे.

१ वराहः. २ अकरोत्. ३ यथा कन्दुकः क्रीडया शिशुभिरुत्क्षिप्यतेऽपक्षिप्यते च, तथेयं भूरपि श्वासवायुप्रेरितोर्ध्वाधःपतनैः कंदुकतुलां तुलयतीति भावः. ४ यद्यहं धरित्र्यां सामुद्रे पङ्के लुठिष्यामि तदेयं भूर्मृद्पुष्येव विलयं यास्यतीति विचार्य. ५ समुद्रात्. ६ कन्द इवाचरति. ७ नालमिवाचरति. ८ पत्राणीवाचरन्ति. ९ कोरक इवाचरन्ति. १० कमलमिवाचरति. ११ भ्रमर इवाचरति. १२ यथा चन्द्रोदयेऽब्जानि संकोचमाप्नुवन्ति तथा हरेरुदयान्मधुवधूवक्त्राम्भोरुहाणि निःश्रीकाण्यभवन्निति भावः. १३ अग्रम्. १४ निष्कलङ्कम्. १५ उज्ज्वलम्. १६ पृथ्वीमण्डलम्; पक्षे,—नलिनम्.

क्ष्माकमलिनीमालम्बमानः क्षणं लोलद्वालमृणालनालतुलनां मेजे भुजङ्गेश्वरः ॥ ३५ ॥ मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् । इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ ३६ ॥ भूयादेष सतां हिताय भगवान्कोलावतारो हरिः सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः । तारा हारति बारिदस्तिलकति स्वर्वाहिनी माल्यति क्रीडादर्पणति क्षपापतिरहर्देवश्च ताटङ्कति ॥ ३७ ॥ लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि नष्टे श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते । पोत्रप्रान्तैकरोमान्तरविवरगतां मार्गतश्चक्रपाणेः क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं वः पुनातु ॥ ३८ ॥ सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः प्राप्ताः पातालपङ्के न लुठितरुचयः पोत्रमात्रोपयोगात् । दंष्ट्राविष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ ३९ ॥ क्वेदानीं दर्पितास्ते घनमदमदिरामोदिनो दिग्द्विपेन्द्रा हे मेरो मन्दराद्रे मलय हिमगिरे साधु वः क्ष्माधरत्वम् । शेष श्लाघ्योऽसि दीर्घैः पृथुभुवनभरोचण्डशौण्डैः शिरोभिः शंसन्सोत्प्रासमुच्चैरिति धरणिभृतः पातु युष्मान्वराहः ॥ ४० ॥

## नृसिंहः

सुरासुरशिरोरत्नकान्तिविच्छुरिताङ्घ्रये । नमस्त्रिभुवनेशाय हरये सिंहरूपिणे ॥ ४१ ॥ शत्रोः प्राणानिलाः पञ्च वयं दश जयोऽत्र कः । इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥ ४२ ॥ प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः । श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ४३ ॥ व्याधूतकेसरसटाविकरालवक्त्रं हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् । आविष्कृतं सपदि येन नृसिंहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ ४४ ॥ दैत्यास्थिपञ्जरविदारणलब्धरन्ध्ररक्ताम्बुनिर्जरसरिद्घनजातपङ्काः । बालेन्दुकोटिकुटिलाः शुकचञ्चुभासा रक्षन्तु सिंहवपुषो नखरा हरेर्वः ॥ ४५ ॥ दिश्यात्सुखं नरहरिर्भुवनैकवीरो यस्याहवे दितिसुतोद्दलनोद्यतस्य । क्रोधोद्धतं मुखमवेक्षितुमक्षमत्वं जानेऽभवन्निजनखेष्वपि यन्नतास्ते ॥ ४६ ॥ वपुर्दलनसंभ्रमात्स्वनखरं प्रविष्टे रिपौ क्व यात इति विस्मयात्प्रहितलोचनः सर्वतः । वृथेति करताडनान्निपतितं पुरो दानवं निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥ ४७ ॥ चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते धगद्धगिति मेदसि स्फुटरवोऽस्थिनि छागिति । पुनातु भवतो हरेरमरवैरिवक्षःस्थलक्वणत्कर[1]जपञ्जरक्रकच[2]काषजन्मानलः ॥ ४८ ॥ ससत्वरमितस्ततस्तत[3]विहस्त[4]हस्ताटवीनिकृत्तसुरशत्रुहृत्क्षतज[5]सिक्तवक्षःस्थलः । स्फुरद्धरगभस्तिभिः स्थगित[6]सप्त[7]सप्तिद्युति समस्तनिर्गमस्तुतो नृहरिरस्तु नः स्वस्तये ॥ ४९ ॥ चञ्चच्चण्डनखाग्रभेद[9]विगलद्दैत्येन्द्रवक्षःक्षरद्रक्ताभ्यक्त[10]सुपाटलोद्भटसटासंभ्रान्तभीमाननः । तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्दिङ्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥ ५० ॥ दंष्ट्रासंकट[11]वक्रकन्दरलसज्जिह्वस्य हव्याशनज्वालाभासुरभूरिकेसरसटाभारस्य दैत्य ह्रः । व्यावल्गद्बलवद्धिरण्यकशिपुक्रोड[12]स्थलास्फालनस्फारप्रस्फुटदस्थिपञ्जररवक्रूरा नखाः पान्तु वः ॥ ५१ ॥ सोमार्धायितनिष्पिधानदशनः संध्यायितान्तर्मुखो बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः । अन्तर्नादनिरोधपीवरगलरन्ध्र[13]कूपनिर्यत्तडित्तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स वः ॥ ५२ ॥ विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः[14] शोणन्नेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः । विस्फूर्जद्गलगार्जितार्जितककुम्मातङ्गदर्पोदयाः संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥ ५३ ॥ दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि स्फारीभूतकरालकेसरसटासंघातघोराकृतेः । सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तःस्मितं क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ ५४ ॥ किं[15] किं सिंहस्ततः किं[16] नरसदृशवपुर्देव चित्रं गृहीतो नैतादृक्क्वापि जीवोऽद्भुतमुपनय मे देव संप्राप्त एषः । चापं चापं न चापित्यहहहहहहहा कर्कशत्वं नखानामित्थं दैत्येन्द्रवक्षःखरनखमुखरैर्जल्पितवान्यः स वोऽव्यात् ॥ ५५ ॥ भूयः कण्ठावधूतिव्यतिकरतरलोत्तंस[17]नक्षत्रमालाबालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी । अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ ५६ ॥ अन्तःक्रोधोज्जिहान[18]ज्वलनभवशिखाकारजिह्वावलीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः । दृप्यत्[19]पारीन्द्रमूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः कुर्वन्निर्धूम[20]धूमध्वज[21]निचितमिव व्योम रोमच्छटानाम् ॥ ५७ ॥ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदर्चि-

१ वराहमुखाग्रे. २ विदारणम्. ३ भयात्.

१ नखाः. २ करपत्रकम्. ३ विस्तीर्णौ. ४ व्याकुलौ. ५ रुधिरम्. ६ आच्छादिता. ७ सूर्यः. ८ वेदः. ९ विदारणम्. १० सिक्ताः. ११ संकीर्णः. १२ उत्सङ्गस्थलम्. १३ रोमकूपाः. १४ रक्तीभवन्. १५ हिरण्यकशिपोस्तदनुचरस्य चोक्तिप्रत्युक्तयः. १६ किं भयमित्यर्थः. १७ उच्चैःस्थायिनी. १८ उत्पद्यमानः. १९ सिंहः. २० अग्निः. २१ व्याप्तम्.

रर्चिर्ज्वालाजालावलीढं बत भुवि सकलं व्याकुलं किं न भूयात् । न स्याच्चेदाशु तस्याधिकविकटसटाकोटिभिः पात्यमानादिन्दोरानन्दकन्दात्तदुपरि तुहिनासारसंदोहवृष्टिः ॥ ५८ ॥ आदित्याः किं दशैते प्रलयभयकृतः स्वीकृताकाशदेशाः किं वोल्कामण्डलानि त्रिभुवनदहनायोद्यतानीति भीतैः । पायासुर्नारसिंहं वपुरमरगणैर्बिभ्रतः शार्ङ्गपाणेर्दृप्तासुरोरःस्थलदरणगलद्रक्तरक्ता नखा वः ॥ ५९ ॥

### वामनः

अव्याद्वो वामनो यस्य कौस्तुभप्रतिबिम्बिता । कौतुकालोकिनी जाता जाठरीव जगत्रयी ॥ ६० ॥ अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे[1] । विधिविष्टरपद्मस्य[2] नालदण्डो मुदेऽस्तु नः ॥ ६१ ॥ खर्वग्रन्थिविमुक्तसंधि विलसद्वक्षःस्फुरत्कौस्तुभं निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि[3] । पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ६२ ॥ हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो[4] नाभिप्रेङ्खद्दलिर्विलोचनयुगप्रोद्भूतशीतातपः । बाहूर्मिश्रितवह्निरेष तदिति व्याक्षिप्य वाक्यं कवेस्तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥ ६३ ॥ स्वस्ति स्वागतमर्घ्यमिहं वद विभो किं दीयतां मेदिनी का मात्रा मम विक्रमत्रयपदं दत्तं जलं दीयताम् । मा देहीत्युशनाब्रवीद्धरिरयं पात्रं किमस्मात्परं चेत्येवं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥ ६४ ॥ स्वामी सन्भुवनत्रयस्य विकृतिं नीतोऽसि किं याच्ञया यद्वा विश्वसृजा त्वयैव न कृतं तद्दीयतां ते कुतः । दानं श्रेष्ठतमाय तुभ्यमतुलं बन्धाय नो मुक्तये विज्ञप्तो बलिना निरुत्तरतया ह्रीतो हरिः पातु वः ॥ ६५ ॥ ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ ६६ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमानादाश्च्योतन्त्या बभासे सुरसरिदमला वैजयन्तीव कान्ता । भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥ ६७ ॥ कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याऽखिला ब्रह्मसृष्टिः कस्ते नाथो ह्यनाथः क्व च तव जनको नैव तातं स्मरामि । किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो वः स पायात् ॥ ६८ ॥

### परशुरामः

कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्वमापुः । बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनोतु ॥ ६९ ॥ किं दोर्भ्यां किमु कार्मुकोपनिषदा भर्गप्रसादेन किं किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना । किं वानेन ममाद्भुतेन तपसा पीडां कृतान्तोऽपि चेद्विप्राणां कुरुतेऽन्तरित्यनुशयो रामस्य पुष्णातु वः ॥ ७० ॥ नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा । विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतेनाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥ ७१ ॥ पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः । येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजा भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥ ७२ ॥ द्वारे कल्पतरुं गृहे सुरगवीं चिन्तामणीनङ्कदे पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो दश । एवं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ७३ ॥ नो संध्यां समुपासते यदि तदा लोकापवादाद्भयं सा चेत्स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः । इत्थं चिन्तयतश्चिरं भृगुपतेर्निःश्वासकोष्णीकृतो नेत्रान्तःप्रतिबिम्बशोणसलिलः संध्याञ्जलिः पातु वः ॥ ७४ ॥

### रामचन्द्रः

वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ ७५ ॥ नमो रामपदाम्भोजं रेणवो यत्र संततम् । कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥ ७६ ॥ स्वर्णैणाजिनशयनो योजितनयनो

---

१ बन्धने. २ आसनम्. ३ ब्रह्मणः सामवेदध्वनिः. ४ यतो हरेर्भगवतो हृदये कौस्तुभमणिर्लोहितच्छविरस्ति, अतस्तत्प्रभाभिः कर्बुरितत्वं वक्षःस्थलस्यापीति भावः. ५ यतो हरेर्नाभौ कमलं वर्तते, अतस्तत्र तत्सुरभिगन्धलोलुपतया भ्रमरागमनं घटत एवेति भावः. ६ लहरी. ७ शुक्रस्य. ८ ब्रह्मा. ९ गुणवृक्षः. १० नाभिक्षेप्यदारुदण्डः. ११ त्रिषु लोकेषु पादन्यासो यस्य तस्य. १२ मरकतमणिनिर्मितध्वजदण्डायमानात्. १३ क्षरन्ती. १४ पातका. १५ आरक्ततलाविति भावः.

१ यदा ब्राह्मणेभ्यो भूर्दत्ता, तदा तेषां स्वस्वभूमिसीमार्थं कुलपर्वता एवासन्निति भावः. २ यदा याचकेभ्यो दानं दीयते, तदा दानात्प्राग्दातृभिरुत्सर्गजलं दीयते. अतस्तेनैतावद्दानं दत्तं येन समुद्रा उत्सर्गजलतयाभूवन्निति भावः. ३ धनुर्वेदविद्याज्ञानरहस्येन. ४ यतो महतामनुग्रहस्तदा सफलः स्यात्, यद्युपकारः कस्यचित्कर्तुं शक्येत; परं मया तत्पीडापि निवारिता न भवति, अतः शंभुप्रसादेन किमित्यर्थः. ५ यतस्तपसाऽसाध्यमपि साध्यते परं यदि मया तत्कृत्यं नासाधि, तदानेन तपसा किमिति भावः. ६ शत्रवः. ७ ब्राह्मणेभ्यो देयत्वेन विहितेत्यर्थः 'ग्रासप्रमाणे भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥' इत्युक्तत्वात्. ८ सूर्ये.

दशास्यदिग्भागे । मुहुरवलोकितचापः कोऽपि दुरापः स नीलिमा शरणम् ॥ ७७ ॥ अधिपञ्चवटीकुटीरवर्तिस्फुटिते- न्दीवरसुन्दरोरुमूर्तिः । अपि लक्ष्मणलोचनैकसख्यं भजत ब्रह्म सरोरुहायताक्षम् ॥ ७८ ॥ कनकनिकषभासा सीतयालिङ्गिताङ्गो नवकुवलयदामश्यामवर्णाभिरामः । अभिनव इव विद्युन्मण्डितो मेघखण्डः शमयतु मम तापं सर्वतो रामचन्द्रः ॥ ७९ ॥ परिणयविधौ भङ्क्त्वानङ्गद्विषो धनुरग्रतो जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् । कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतोऽवनतवदनो रामः पायात्रपाविनयान्वितः ॥ ८० ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामनःकामाय प्रथमाननिर्मलगुण[1]ग्रामाय रामात्मने । योगारूढमुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ८१ ॥ यो रामो निजघान वक्षसि रणे तं रावणं सायकैर्हृद्यस्य प्रतिवासरं वसति सो[2] तस्या ह्ययं राघवः । यस्यास्ते भुवनावली परिवृता द्वीपैः समं सप्तभिः स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापरः ॥८२॥ राज्यं येन पटान्तलग्नतृणवत्त्यक्तं गुरोराज्ञया पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः । स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां पायाद्वः स बिभीषणा[3]ग्रजनिहा रामाभिधानो हरिः ॥ ८३ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवाग्नीन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामाम्बुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ ८४ ॥ कूर्मो मूलवदालवालवदपांराशिर्लतावद्दिशो मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः । स्वामिन्व्योमतरुः क्रमे मम कियान्छ्लुत्वेति गां[4] मारुतेः सीतान्वेषणमादिशन्दिशतु वो रामः सलज्जः श्रियम् ॥ ८५ ॥ एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ वैदेहीकुचकुम्भकुङ्कुमरजःसान्द्ररुणाङ्काङ्कितौ । लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ ८६ ॥ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रहृता ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि । आज्ञा वारिधिबन्धनावधि यशो लङ्केशनाशावधि श्रीरामस्य पुनातु लोकवशता जानक्यपेक्षावधि ॥ ८७ ॥ कल्याणानां निधानं कलिमलमथनं पावनं पावनानां पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम

१ समूहः २ सीता· ३ बिभीषणस्याग्रजन्मा रावणस्तं हन्तीति सः ४ वाचम्·

॥ ८८ ॥ कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा । सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ ८९ ॥ योऽद्धा[1] योद्धावधीत्तान्सपदि पलभुजः[2] संपराये[3] परा[4] ये येना[5]येनाश्रितानां स्तुतिरवनमितेशानचापेन चापे[6] । लङ्कालंकारहर्ता[7] ककुभि ककुभि यः कान्तया सीतयासीद्दूनो[8] दूनोऽथ हृष्टः स विभुरवतु वः स्वःसभार्यः[9] सभार्यः ॥ ९० ॥ ऋक्षाणां[10] भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं[11] स्फारं नेत्रानलेन[12] प्रसभनियमितोच्चापमीनध्वजेन[13] । रामायत्तं[14] पुरारेः कुमुदशुचि[15] लसन्नीलसुग्रीवमङ्गं[16] प्लावङ्गं वापि सैन्यं दशवदनशिरश्छेदहेतु[17] श्रियेऽस्तु ॥ ९१ ॥ यस्तीर्थानामुपास्त्या[18] गलितमलभरं मन्यते स्म स्वमेवं नाज्ञासीज्जज्ञिरे यन्मम चरणरजःपादपूतान्यमूनि । पादस्पर्शेन कुर्वञ्झटिति विघटितग्रावभावामहल्यां कौसल्यासूनुरूनं व्यपनयतु स वः श्रेयसा च श्रिया च ॥ ९२ ॥

## सीता

उन्मृष्टं कुचसीम्नि पत्रमकरं[19] दृष्ट्वा हठालिङ्गनात्कोपो मास्तु पुनर्लिखाम्यमुमिति[20] स्मेरे रघूणां वरे । कोपेनारुणितोऽश्रुपातदलितः प्रेम्णा च विस्तारितो दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः ॥ ९३ ॥

## हनूमान्

अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता । अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमांस्तव सौख्यकर्ता ॥ ९४ ॥ कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा नवातङ्का लङ्का समजनि वनं वृश्चति सति । सदा सीताकान्तप्रणतिमतिविख्यातमहिमा हनूमानव्याद्वः कपिकुलशिरोमण्डनमणिः ॥ ९५ ॥

## रामकृष्णौ

त्रातः काकोदरो[21] येन द्रोग्धापि करुणात्मना । पूतना[22]मारणख्यातः स मेऽस्तु शरणं प्रभुः ॥ ९६ ॥

१ निश्चितम्. २ राक्षसान्. ३ युद्धे. ४ शत्रवः. ५ भाग्येन. ६ प्राप्ताः. ७ विरहितः. ८ दुःस्थितमनाः. ९ देवसभास्वामी. १० ऋक्षाणां भल्लूकानामधिपतिना जाम्बवता; पक्षे,-नक्षत्राणामधिपतिना चन्द्रेण. ११ भीमस्तारो वानरविशेषः; पक्षे,-भीमा तारा नेत्रकनीनिका. १२ नेत्रा नायकेन नलेन नलनाम्ना वानरेण; पक्षे,-नेत्रानलेन तृतीयनेत्राग्निना. १३ उच्चा आपो यस्मिन्स उच्चापो मीनध्वजः समुद्रः; पक्षे,-उद्गतचापो मीनध्वजः कामः. १४ रामायत्तं रामचन्द्राधीनम्; पक्षे,-रामायाः पार्वत्या अधीनम्. १५ कुमुदनाम्ना वानरेण शुचि; पक्षे,-कुमुदपुष्पवच्छुचि शुभ्रम्. १६ नीलः सुग्रीवश्च वानरा; पक्षे,-नीला नीलवर्णा शोभना ग्रीवा. १७ दशवदनशिरश्छेदहेत्विति सैन्यपक्षे स्फुटम्; अन्यत्र शिवप्रसादनार्थं रावणेनात्मनः शिरांसि च्छिन्नानीति प्रसिद्धिः. १८ सेवनया. १९ पत्रमकरम्. २० नवभया. २१ अदरो भयशून्यः काकः; पक्षे,-कालियसर्पः. २२ पूतनामा पवित्रनामा रणे ख्यातश्च; पक्षे,-पूतनाया राक्षस्या मारणेन ख्यातः.

मर्दितरावणकंसौ सरयूयमुनाविहारिणौ देवौ । अर्पितविप्रकुमारौ हरिपतिहरिकेतनप्रियौ वन्दे ॥ ९७ ॥ यः पूतनामारणलब्धकीर्तिः काकोदरो येन विनीतदर्पः । यशोदयालंकृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ९८ ॥

**कृष्णः**

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ ९९ ॥ देवः पायादपायान्नः स्मेरेन्दीवरलोचनः । संसारध्वान्तविध्वंसहंसकंसनिषूदनः ॥ १०० ॥ पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥ १०१ ॥ दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः । आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ १०२ ॥ हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् । राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ १०३ ॥ देहि मत्कन्दुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥ १०४ ॥ चण्डचाणूरदोर्दण्डमण्डलीखण्डमण्डितम् । अव्याद्वो बालवेषस्य विष्णोर्गोपतनोर्वपुः ॥ १०५ ॥ मीमांसार्णवसोमं लसदर्कं तर्कपद्मस्य । वेदान्तविपिनसिंहं वन्दे गोविन्दसाभिधं ब्रह्म ॥ १०६ ॥ अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागैः । अधिवृन्दावनकुञ्जं मरकतपुञ्जं नमस्यामः ॥ १०७ ॥ मकरीविरचनभङ्ग्या राधाकुचकलशपीडनव्यसनी । ऋजुमपि रेखां लुम्पन्बल्लववेषो हरिर्जयति ॥ १०८ ॥ कठिनतरदामवेष्टनलेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ १०९ ॥ खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः । भरभुग्नविनतबाहुषु गोपेषु हसन्हरिर्जयति ॥ ११० ॥ नीतं नवनीतं कियदिति पृष्टो यशोदया कृष्णः । इयदिति गुरुजनसंसदि करधृतराधापयोधरः पातु ॥ १११ ॥ राधामधुसूदनयोरनुदिनमुपचीयमानस्य । प्रणयतरोरिव कुसुमं मिथोऽवलोकस्मितं पायात् ॥ ११२ ॥ श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः । अहमिह नन्दं वन्दे यस्यालिन्दे परं ब्रह्म ॥ ११३ ॥ तप्तं कैर्न तपोभिः फलितं तद्गोपबालानाम् । लोचनयुगले यासामञ्जनमासीन्निरञ्जनं ब्रह्म ॥ ११४ ॥ मदमयमदमयदुरगं यमुनामवतीर्य वीर्यशाली यः । मम रतिममरतिरस्कृतिशमनपरः स क्रियात्कृष्णः ॥ ११५ ॥ स्तनंधयन्तं जननीमुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् । स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥ ११६ ॥ भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः । यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ ११७ ॥ विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम् । इति स्वपादाम्बुजपानकौतुकी स गोपबालः श्रियमातनोतु वः ॥ ११८ ॥ विलिख्य सत्याकुचकुम्भसीम्नि पत्त्रावलिन्यासमिषेण राधाम् । लीलारविन्देन तया सरोषं पायद्विटः कोऽप्यभिहन्यमानः ॥ ११९ ॥ स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु । लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥ १२० ॥ कुञ्चिताधरपुटेन पूरयन्वंशिकां प्रचलदङ्गुलिक्रमः मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥ १२१ ॥ अतसीकुसुमोपमेयकान्तिर्यमुनातीरकदम्बमध्यवर्ती । नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ॥ १२२ ॥ गायन्तीनां गोपसीमन्तिनीनां स्फीताकाङ्क्षामक्षिरोलम्बमालाम् । निश्चाञ्चल्यामात्मवक्त्रारविन्दे कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १२३ ॥ पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम् ॥ १२४ ॥ आनन्दमादधतमायतलोचनानामानीलमावलितकंधरमात्तवंशम् । आपादमामुकुटमाकलितामृतौघमाकारमाकलयतामुपमान्तरं नः ॥ १२५ ॥ त्वां पातु नीलनलिनीदलदामकान्तेः कृष्णस्य पाणिसरसीरुहकोशबन्धः । राधाकपोलमकरीलिखनेषु योऽयं कर्णावतंसकमलं विपुलीचकार ॥ १२६ ॥ उत्फुल्लमानसरसीरुहचारुमध्यनिर्यन्मधुव्रतभरद्युतिहारिणीभिः । राधाविलोचनकटाक्षपरम्पराभिर्दृष्टो हरिस्तव सुखानि तनोतु कामम् ॥ १२७ ॥ गोवर्धनोद्धरणहृष्टसमस्तगोपनानास्तुतिश्रवणलज्जितमानसस्य । स्मृत्वा वराहवपुरिन्दुकलाप्रकाशदंष्ट्रोद्धृतक्षिति हरेरवतु स्मितं वः ॥ १२८ ॥ अभिनवनवनीतप्रीतमाताम्रनेत्रं विकचनलिनलक्ष्मीस्पर्धि सानन्दवक्त्रम् । हृदयभवनमध्ये योगिभिर्ध्यानगम्यं नवगगनतमालश्यामलं कंचिदीडे ॥ १२९ ॥ अभिनवनवनीतस्निग्धमापीतदुग्धं दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः । दिशतु भुवनकृच्छ्रच्छेदितापिच्छगुच्छच्छवि नवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ १३० ॥ कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ १३१ ॥

१ अर्जुनः. २ पूतनाया मारणेन लब्धा कीर्तिर्येन; पक्षे,–विश्वनामा, रणे लब्धा कीर्तिश्च येन. ३ कालियः सर्पः; पक्षे,–धृष्टः काकः. ४ यशोदया मात्रालंकृतो देहो यस्य; पक्षे,–यशसा दयया चालंकृतो देहो यस्य. ५ पीरियाम्. ६ दुकूलम्.

ललितगमना[1] नार्यो[2] राजन्मनोजनितान्तभाः[3] सुरतिसदृशस्ताः[4] सन्मुख्यो[5] भवानपि तद्भवे। वनभुवमितो गेहादेको न गच्छतु मां विनेत्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः ॥ १३२ ॥ देवः पायात्पयसि विमले[6] यामुने मज्जतीनां[7] याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि। लज्जालोलैरलसवलितैरुन्मिषत्पञ्चबाणैर्गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः ॥१३३॥ वृन्दारण्ये तपनतनयातीरवानीरकुञ्जे गुञ्जन्मञ्जुभ्रमरपटलीकाकलीकेलिभाजि। आभीराणां मधुरमुरलीनादसंमोहितानां मध्ये क्रीडन्नवतु नियतं नन्दगोपालबालः ॥१३४॥ शिरश्छायां कृष्णः क्षणमकृत राधाचरणयोर्भुजावल्लिच्छायामियमपि तदीयप्रतिकृतौ। इति क्रीडाकोपे निभृतमुभयोरप्यनुनयप्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः॥१३५॥ अवेम[8]व्यापाराकलनमतुरी[9]स्पर्शमचिरादनुन्मीलत्तन्तुप्रकरघटनायासमसकृत्। विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः पटानां निर्माणं पतंगपतिकेतो[10]रवतु नः ॥ १३६॥ कपोले पत्रालीं पुलकिनि विधातुं व्यवसितः स्वयं श्रीराधायाः करकलितवर्तिर्मधुरिपुः। अभूद्वक्रेन्दौ यन्निहिततनयनः कम्पितभुजस्तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति ॥१३७॥ जयश्रीविन्यस्तै[11]र्महितै[12] इव मन्दारकुसुमैः स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित[13] इव। भुजापीडक्रीडाहतकुवलयापीडकरिणः प्रकीर्णा[14]सृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ १३८ ॥ सुपर्णः स्वर्णाद्रौ रचितमणिशृङ्गे जलधिजामुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः। त्रिलोकीकस्तूरीतिलककमनीयो व्रजवधूविहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ १३९ ॥ क्व यासि खलु चौरिके प्रमुषितं स्फुटं दृश्यते द्वितीयमिह मामकं वहसि कन्दुकं कञ्चुके। त्यजेति नवगोपिकाकुचयुगं प्रमथ्नन्बलाल्लसत्पुलकपञ्जरो जयति गोकुले केशवः ॥ १४० ॥ मेघैर्मेदु[15]रमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं[16] भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय। इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः[1] ॥ १४१ ॥ कौन्तेयस्य[2] सहायतां करुणया गत्वा विनीतात्मनो येनोल्लङ्घितसत्पथः कुरुपतिश्चक्रे कृतान्तातिथिः[3]। त्रैलोक्यस्थितिसूत्रधारतिलको देवः सदा संपदे साधूनामसुराधिनाथमथनः स्ताद्देवकीनन्दनः ॥ १४२ ॥ आताम्रे नयने स्फुरन्कुचभरः श्वासो न विश्राम्यति स्वेदाम्भःकणदन्तुरं तव मुखं हेतुस्तु नो लक्ष्यते। धिक्को वेद मनः स्त्रिया इति गिरा रुष्टां प्रियां भीषयंस्तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥ १४३ ॥ संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसामुन्मार्ष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव। उन्मीलन्मुरलीनिनादबहुलामोदोपसीदद्गवीजिह्वालीढमलीकबल्लवशिशोः पादाम्बुजं पातु वः ॥ १४४ ॥ कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरापानं न प्रकरोमि राम किमिदं नाहं परस्त्रीरतः। किं गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्गोपीगोपकदम्बकं विहसयन्मुग्धो मुकुन्दोऽवतु ॥ १४५ ॥ मातर्स्तर्णकरक्षणाय यमुनाकच्छं न गच्छाम्यहं कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन गोपीजनः। भ्रूसंज्ञाविनिवारितोऽपि बहुशो जल्पन्यशोदाग्रतो गोपीपाणिसरोजमुद्रितमुखो गोपीपतिः पातु वः ॥ १४६ ॥ कासि त्वं वद चौर्यकारिणि कुतः कस्त्वं पुरो यामिकः[5] किं ब्रूषे मुषितौ सुवर्णकलशौ भूपस्य केन त्वया। कुत्र स्तः प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यतामित्युक्ते धृतबल्लवीकुचयुगस्त्वां पातु पीताम्बरः ॥ १४७ ॥ कृष्ण त्वं पठ किं पठामि ननु रे शास्त्रं किमु ज्ञायते तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम्। ज्ञानं भक्तिरथो विरक्तिरनया किं मुक्तिरेवास्तु ते दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥ १४८ ॥ कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः कंसो भूपतिरब्जनालमृदुलग्रीवा वयं गोदुहः। तद्याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मद्गिना मा यासीरिति नन्दगोपवचसा नम्रो हरिः पातु वः ॥ १४९ ॥ कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया युक्तं तन्नवनीतभाजनपुटे न्यस्तः किमर्थं करः। कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता बाला वत्सगतिं विवेक्तुमिति संजल्पन्हरिः पातु वः ॥ १५० ॥ स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी क्षोणीमावृणुते तमालमलिनच्छाया तमःसंहतिः। तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिरः श्रुत्वा

---

१ गोपीपक्षे,–ललितं गमनं यासां ताः; कृष्णपक्षे ललिते गे गाने मनो यस्य सः. २ स्त्रियः; पक्षे,–नास्त्यार्यः श्रेष्ठो यस्मात्सः. ३ राजता मनोजेन मदनेन नितान्तात्यन्ता भाः कान्तिर्यासां ताः; पक्षे,–राजन्मनोजनिः शोभमानमदनस्तान्तो म्लानो यस्यास्तादृशी भा यस्य सः. ४ शोभायमानया रत्या कामपत्न्या सदृशाः; पक्षे,–सुष्ठु रतौ रमणे योग्यः. ५ सन्ति शोभनानि मुखान्याननानि यासां ताः; पक्षे,–सत्सु प्रशस्तेषु केलिचतुरेषु मुख्यः. ६ स्वच्छे. ७ स्नानं कुर्वतीनाम्. ८ वेमा वस्त्रव्यूतिदण्डस्तद्व्यापाररहितम्. ९ तुरी तन्तुवायानां यन्त्रविशेषः, तत्स्पर्शं विना. १० पतगाः पक्षिणस्तेषां पतिर्गरुडः स केतुर्यस्य तस्य. कृष्णस्येत्यर्थः. ११ विक्षिप्तैः. १२ पूजितः. १३ चित्रितः. १४ रक्तबिन्दुः. १५ व्याप्तमित्यर्थः. १६ रात्रौ.

१ एकान्तक्रीडाः. २ युधिष्ठिरस्य. ३ मारितः. ४ वृषबालः. ५ नगररक्षकः.

तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ १५१ ॥ मातः किं यदुनाथ देहि चषकं किं तेन पातुं पयस्तन्नास्त्यद्य कदास्ति तन्निशि निशा का वान्धकारोदये । आमील्याक्षियुगं निशाप्युपगता देहीति मातुः पुनर्वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥ १५२ ॥ अर्धोन्मीलितलोचनस्य पिबतः पर्यासमेकं स्तनं सद्यःप्रस्नुतदुग्धदिग्धमपरं हस्तेन संमार्जतः । मात्रा चाङ्गुलिलालितस्य चिबुके स्मेरायमाणे मुखे विष्णोः क्षीरकणाम्बुधामधवला दन्तद्युतिः पातु वः ॥ १५३ ॥ गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथाप्रस्थानखेदालसामाश्लिष्यन्पुलकाङ्कुराञ्चितवपुर्गोपीं हरिः पातु वः ॥ १५४ ॥ रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुर्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः । कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां सौमित्रे क धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥ १५५ ॥ कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् । राधेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्वितामित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ १५६ ॥ पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको यन्त्रान्तःस्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम् । वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन्यः पयः पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ १५७ ॥ पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः । इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥ १५८ ॥ दृष्ट्या केशव गोपरागहृतया किंचिन्न दृष्टं मया तेनात्र स्खलितास्मि नाथ पतितां किं नाम नालम्बसे । एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥१५९॥ केयं भाग्यवती तवोरसि मणी ब्रूषेऽग्रवर्णं विना कृत्वास्याः प्रथमं विना क सहजो वर्णो मणेस्तादृशः । स्त्रीरूपं कथमस्य लिङ्गनियमात्पृच्छामि बध्वाकृतिं मुग्धे त्वत्प्रतिबिम्बमित्यपलपन्राधां हरिः पातु वः ॥ १६० ॥ यां दृष्ट्वा यमुनां पिपासुरनिशं व्यूहो गवां गाहते विद्युत्त्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते । उत्तंसाय तमालपल्लवमिति च्छिन्दन्ति यां गोपिकाः कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः ॥ १६१ ॥ श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तनव्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे वहन्सौरभम् । कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं बिभ्रत्कामपि वेणुनादरसिको जाराग्रणीः पातु वः ॥ १६२ ॥ कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं श्रोणीसंगमसौभगं च सततं मत्प्रेयसीनां पुरः । प्राप्तुं कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः स्वयं गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु नः ॥१६३॥ कृष्णेनाम्ब गतेन रन्तुमसकृन्मृद्भक्षिता स्वेच्छया सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् । व्यादेहीति विकासिते च वदने दृष्ट्वा समस्तं जगन्माता यस्य जगाम विस्मयपदं पायात्स वः श्रीपतिः ॥ १६४ ॥ अम्ब श्राम्यसि तिष्ठ गोरसमहं मथ्नामि मन्थानकं प्रालम्ब्य स्थितमीश्वरं सरभसं दीनाननो वासुकिः । सासूयं कमलालया सुरगणः सानन्दमुद्यद्भयं राहुः प्रैक्षत यं स वोऽस्तु शिवदो गोपालबालो हरिः ॥ १६५ ॥ कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् । तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गतेरक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ १६६ ॥ कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते बाणं क्षीणयते बकं लघयते पौण्ड्रं तथा लुम्पते । भौमं क्षामयते बलाद्वलभिदो दर्पं पराकुर्वते क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः ॥ १६७ ॥ रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवामभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया । साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भट चुम्बितः स्मितमनोहारी हरिः पातु वः ॥ १६८ ॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासितभ्रूवल्लीकमलीकदर्शितभुजामूलार्धदृष्टस्तनम् । गोपीनां निभृतं निरीक्ष्य ललितं कांचिच्चिरं चिन्तयन्नन्तर्मुग्धमनोहरो हरतु वः

१ पानपात्रम्. २ एकान्तगतयोः. ३ रचना. ४ यथा माता स्वपुत्रप्रस्वापनाय पुरातनाः कथाः कथयति, तथा यशोदापि राम इति कश्चिद्राजासीदिति वदति स. तच्छ्रुत्वा कृष्णोऽपि हुंकारं दत्तवान्. ५ वानरः; पक्षे,–कृष्णः. ६ कृष्णवर्णः; पक्षे,–कृष्णनामा ७ भ्रमरः; पक्षे,–मधुसूदननामा. ८ आलम्बमानो रज्जुपञ्जरः, शिक्य इति प्रसिद्धः. ९ हे रमे; पक्षे,–पद्मरूपे. १० पूज्यैः. ११ गोपे त्वयि यो राग आसक्तिस्तद्धृतयापहृतया; पक्षे,–गवां परागैर्धूलिभिर्व्याप्तया. १२ युक्तायुक्तम्; पक्षे,–समविषमम्. १३ पतित्वम्; पक्षे,–पतनं प्राप्ताम्. १४ विषमेषुः पञ्चशरस्तेन खिन्नमनसाम्; पक्षे,–विषमेषु संकटेषु खिन्नमनसाम्. १५ स्त्रीणाम्; पक्षे,–बलरहितानाम्. १६ ससूचनम्. १७ गोस्थानम्. १८ [illegible]

१ बलभद्रः. २ विकासय. ३ समुद्रमथने रज्जूकृतस्य मम पुनरपि स एव भयंकरः प्रसङ्ग आगत इति त्रासेन शेषः. ४ मम सपत्नी काचिदुद्भविष्यतीत्यसूयया. ५ अमृतप्राप्तिर्भविष्यतीति धिया. ६ शिरच्छेदो भविष्यतीति बुध्या. ७ रागम्. ८ सफला. ९ गोपिकानाम्. १० समीपम्. ११ प्रकटम्. १२ उच्चैःकृताः. १३ जृम्भमाणिकस्फोटेनेत्यर्थः. १४ गोप्यभावम्.

क्लेशं नवः[1] केशवः ॥ १६९ ॥ तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीतस्थानकृतावधानललनालक्षैर्न संलक्षिताः । [2]संमुग्धं मधुसूदनस्य मधुरे राधामुखेन्दौ [3]मृदुस्पन्दं पल्लविताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ १७० ॥ वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्धनं बिभ्रद्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः । कंदर्पेण तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ १७१ ॥ राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नमवनीभारावतारक्षमः । स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ १७२ ॥ किं विश्राम्यसि कृष्ण भोगिभवने भाण्डीरभूमीरुहि भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् । राधाया वचनं तदध्वगमुखान्नन्दान्तिके [11]गोपतो गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ १७३ ॥ सान्द्रानन्दपुरंदरादिदिविषद्वृन्दैरमन्दादरादानम्रैर्मुकुटेन्द्रनीलमणिभिः [12]संदर्शितेन्दीवरम् । स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं श्रीगोविन्दपदारविन्दमशुभस्कन्दाय[13] वन्दामहे[14] ॥ १७४ ॥ प्रातर्नीलनिचोलमच्युतमुरःसंवीतपीतांशुकं[15] राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले । व्रीडाचञ्चलमञ्चलं[16] नयनयोराधाय राधानने स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ १७५ ॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत्कुम्भेन संभेदवान् । [17]पत्रे बिभ्यति [18]मीलति क्षणमपि क्षिप्रं तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः ॥ १७६ ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः । इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वासोञ्चलं राधायाः स्तनकोरकोपरिलसन्नेत्रो हरिः पातु वः ॥ १७७ ॥ वामांसस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं वंशीगीतिभवत्रिभङ्गवपुषं भ्रूलास्यलीलापरम् । किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम् ॥ १७८ ॥ अन्तर्मोहनमौलिघूर्णनचलन्मन्दार[19][20][21]-

१ तरुणः. २ अव्यक्तम्. ३ किंचिच्चलनं यथा स्यात्तथा. ४ रक्षणम्. ५ अनुरागः. ६ नीलत्वादधरपानकर्तृत्वाच्च. ७ अलंकारः. ८ रात्रिमुखे हि नार्यस्तुष्यन्तीति भावः. ९ भोगी सर्पः तस्य भवने; पक्षे,–भोगिनः शृङ्गारिणो विलासगृहे. १० भाण्डीरनाम्नि वटवृक्षे. ११ संगोपनं कुर्वतः. १२ संदर्शित इन्दीवरस्य नीलोत्पलस्य भ्रमो यत्र. १३ नाशाय. १४ वस्त्रम्. १५ परिधानीकृतम्. १६ कटाक्षः. १७ वाहने. १८ मृते सति. १९ चञ्चलः. २० साधु साध्विति शिरःकम्पनम्. २१ गुम्फितम्.



विस्रंसनः स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् । दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः ॥ १७९ ॥ मौलौ केकिशिखण्डिनी मधुरिमाधाराधरे वंशिनी पीनांसे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी । श्रोण्यां पीतदुकूलिनी चरणयोर्व्यत्यस्तविन्यासिनी लीला काचन मोहिनी विजयते वृन्दावनावासिनी ॥ १८० ॥ मालाबर्हमनोज्ञकुन्तलभरां वन्यप्रसूनोक्षितां शैलेयागुरुसक्तचित्रतिलकां शश्वन्मनोहारिणीम् । लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं बालां बालतमालनीलवपुषं वन्दे परां देवताम् ॥ १८१ ॥ अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं किंचित्कुञ्चितकोमलाधरपुटं साचिप्रसारीक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं ध्याये जगन्मोहनम् ॥ १८२ ॥ कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् । सर्वाङ्गे हरिचन्दनं सुविमलं कण्ठे च मुक्तावलीं बिभ्रत्स्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥ १८३ ॥ कालिन्दीपुलिनोदरेषु मुसली यावद्गतः क्रीडितुं तावत्कर्बुरिकापयः पिब हरे वर्धिष्यते ते शिखा । इत्थं बालतया प्रतारणपराः श्रुत्वा यशोदागिरः पायाद्वः स्वशिखां स्पृशन्प्रमुदितः क्षीरेऽर्धपीते हरिः ॥ १८४ ॥ आनन्देन यशोदया समदनं गोपाङ्गनाभिश्चिरं साशङ्कं बलविद्विषा सकुसुमं सिद्धैः पृथिव्याकुलम् । सेर्ष्यं गोपकुमारकैः सकरुणं पौरैः सुरैः सस्मितं यो दृष्टः स पुनातु वो मधुरिपुः प्रोत्क्षिप्तगोवर्धनः ॥ १८५ ॥ राधामोहनमन्दिरं जिगमिषोश्चन्द्रावलीसन्दिराद्राधे क्षेममिति प्रियस्य वचनं श्रुत्वाह चन्द्रावली । क्षेमं कंस ततः प्रियः प्रकुपितः कंसः क्व दृष्टस्त्वया राधा क्वेति तयोः प्रसन्नमनसोर्हासोद्गमः पातु वः ॥ १८६ ॥ दृष्टः क्वापि स केशवो व्रजवधूमादाय कांचिद्गतः सर्वा एव हि वञ्चिताः खलु वयं सोऽन्वेषणीयो यदि । द्वे द्वे गच्छत इत्युदीर्य सहसा राधां गृहीत्वा करे गोपीवेषधरो निकुञ्जभवनं प्राप्तो हरिः पातु वः ॥ १८७ ॥ किं युक्तं बत मामनन्यमनसं वक्षःस्थलस्थायिनीं भक्तामप्यवधूय कर्तुमधुना कान्तासहस्रं तव । इत्युक्त्वा फणभृत्फणामणिगतां स्वामेव मत्वा तनुं निद्राच्छेदकरं हरेरवतु वो लक्ष्म्या विलक्षस्मितम् ॥ १८८ ॥ स्वप्नासादितदर्शनामनुनयन्प्राणेश्वरीमादरादंसेऽस्मिन्पतितैरपाङ्गवलितैर्यद्बोधितोऽप्यश्रुभिः । प्रत्याख्यस्त्वमतो मया ननु हरे कोऽयं क्रमव्यत्ययः पातु त्वां व्रजयोषितेत्यभिहितं लज्जाकरं

१ अनिच्छोरित्यर्थः. २ गौरीतीर्थं, चन्द्रजलं वा.

शार्ङ्गिणः ॥ १८९ ॥ अस्मिन्कुञ्जे विनापि प्रचलति पवनाद्वर्तते कोऽपि नूनं पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम् । तस्मिन्राधासखो वः सुखयतु विलसल्लीलया कैटभारिर्व्यातन्वानो मृगारिप्रबलघुरघुरारावरौद्रान्निनादान् ॥ १९० ॥ अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः । नाहं घोराहिमर्दी किमुत खगपतिर्नो हरिः किं कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥ १९१ ॥ वृन्दारण्ये चरन्ती विसुरपि सततं भूर्भुवःस्वः सृजन्ती नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि । विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया माया पायादपायादविहितमहिमा कापि पैताम्बरी वः ॥ १९२ ॥ नामोदस्ताखिलामो दमनियमयुजां थः प्रकामोदवाहश्यामो दर्पाढ्यधामोदयमिलितयशोधारया मोदते यः । वामोदन्यासदामोदरतरलदृशां दत्तकामोदयो यः सामोदः श्रीललामो दलयतु दुरितं सोऽत्र दामोदरो वः ॥ १९३ ॥ मल्लैः शैलेन्द्रकल्पः शिशुरखिलजनैः पुष्पचापोऽङ्गनाभिर्गोपैस्तु प्राकृतात्मा दिवि कुलिशभृता विश्वकायोऽप्रमेयः । क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्तिर्दृष्टो रङ्गावतारे हरिरमरजनानन्दकृत्पातु युष्मान् ॥ १९४ ॥

### बलभद्रः

निष्पात्याशु हिमांशुमण्डलमधः पीत्वा तदन्तःसुधां कृत्वैनं चषकं हसन्निति हलापानाय कौतूहलात् । भो देव द्विजराजि मादृशि सुरासपर्शोऽपि न श्रेयसे मां मुञ्चेति तदर्थितो हलधरः पायादपायाज्जगत् ॥ १९५ ॥ प्रेमोन्नामितरेवतीसुखगतामास्वाद्य कादम्बरीमुन्मत्तं क्वचिदुत्पतत्क्वचिदपि भ्राम्यत्क्वचित्प्रस्खलत् । रक्तापाङ्गमधीरलाङ्गलमलिश्यामाम्बराडम्बरं क्लेशं नः कवलीकरोतु सकलं पाकाभिरामं महः ॥ १९६ ॥ उष्णालु क्वचिदर्कधामनि मनाङ् निद्रालु शीतानिले हालानां गृहयालु चुम्बदसकृल्लज्जालु जायामुखम् । नित्यं निष्पतयालु तिर्यगवनीशय्याशयालु क्षणं गीतेभ्यः स्पृहयालु धाम धवलं दीने दयालु श्रये ॥ १९७ ॥

### रुक्मिणी

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजितत्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः । बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्मचक्षुर्दधत्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥ १९८ ॥

### राधा

राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे । यस्याः स्तनस्तबकचूचुकलोलदृष्टिर्देवोऽपि दोहनधिया वृषभं दुदोह ॥ १९९ ॥ सुधाधाम्नः कान्तिस्तव वदनपङ्केरुहगुणैर्जितेव म्लानत्वं व्रजति सहसा प्राणदयिते । वदत्येवं कान्ते दिवसविरहातङ्कचकिता तदङ्के संलग्ना तव दिशतु राधा प्रियशतम् ॥ २०० ॥

### नन्दकः

सान्द्रां मुदं यच्छतु नन्दको वः सोल्लासलक्ष्मीप्रतिबिम्बगर्भः । कुर्वन्नजस्रं यमुनाप्रवाहसलीलराधास्मरणं मुरारेः ॥ २०१ ॥

### वेणुः

केङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः । तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥ २०२ ॥

### बुद्धः

षट्चक्रे क्रमभावनापरिगतं हृत्पद्ममध्यस्थितं संपश्यञ्छिवरूपिणं लयवशादात्मानमध्याश्रितः । युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे यस्तिष्ठेत्कमलासने कृतरुचिर्बुद्धैकलिङ्गाकृतिः ॥ २०३ ॥ रेतोरक्तमयान्यमूनि भविनां विण्मूत्रपूर्णोदराण्यालोक्येव कलेवराणि विगलत्तोयार्द्ररन्ध्राणि यः । मायाजालनियन्त्रितानि घृणया नोन्मीलयत्यक्षिणी निर्व्याजप्रणिधाननिश्चलमतिर्बुद्धैः स बुद्धोऽस्तु वः ॥ २०४ ॥ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि । मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमाञ्छश्वन्मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ २०५ ॥ आबाहूद्धृतमण्डलाग्ररुचयः संनद्धवक्षःस्थलाः सोष्माणो व्रणिनो विपक्षहृदयप्रोन्माथिनः कर्कशाः । उत्सृष्टाम्बरदृष्टविग्रहभरा यस्य स्मराग्रेसरा योधा वारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्याज्जिनः ॥ २०६ ॥ बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे धृत्वा मूर्तौ च शान्तौ समरसमिलितौ चन्द्रसूर्याख्यवातौ । पश्यन्नन्तर्विशुद्धं

---

१ द्वारम्. २ लक्ष्मीपतिः; पक्षे,–वसन्तः. ३ चक्रधारी; पक्षे,–कुलालः. ४ विष्णुः; पक्षे,–शेषः. ५ कृष्णपक्षे,–अहिः कालियः; गरुडपक्षे,–अहिः सर्पः. ६ गरुडः. ७ विष्णुः; पक्षे,–वानरः. ८ सुरापानपात्रम्. ९ चन्द्रेण प्रार्थितः.

१ शब्दः. २ मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्धि-आज्ञाख्यानि षट् चक्राणि. ३ परिपाटी. ४ वासना. ५ व्याप्तम्. ६ चित्तैकाग्र्यवशात्. ७ स्थितः. ८ 'जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया । पद्मासनमिति प्रोक्तं तदासनविचक्षणैः ॥'. ९ ज्ञानी. १० ज्ञानम्. ११ संसारिणाम्. १२ बद्धानि. १३ चेतःसमाधिना. १४ शरीरे.

किमपि च परमं ज्योतिराकारहीनं सौख्याम्भोधौ निमग्नः स दिशतु भवतां ज्ञानबोधं बुधोऽयम् ॥ २०७ ॥ कामेनाकृष्य चापं हतपटुपटहं वल्गुभिर्मारवीरैर्भ्रूभङ्गोत्क्षेपजृम्भास्मितललितदृशा दिव्यनारीजनेन । सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥ २०८ ॥ किं स्याद्वास्यान्न भानोरमृतघनरसस्यन्दिनः सन्ति पादाः किं वा राकाशशाङ्को नहि तुहिनरुचिः कुत्रचिन्निष्कलङ्कः । साक्षाच्चिन्तामणिः किं विपुलफलमणेः सौकुमार्यं कुतस्त्यं संदेहान्मुग्धधीभिः प्रथममिति मुनेः पातु दृष्टं वपुर्वः ॥ २०९ ॥

### कल्किः

उद्यत्करकरवालः शकतिमिरध्वंसने महानिपुणः । कल्किहरिर्वः पायादपायतः कलिनिशान्तोत्थः ॥ २१० ॥ यवनीनयनाम्बुधोरणीभिर्धरिणीनामपनीय तापवह्निम् । सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम् ॥ २११ ॥ प्रेङ्खद्वाजितरंगमुन्मदगजग्राहप्रगल्भं भटव्यावल्गत्स्फुटपुण्डरीकनिलयं डि[1]ण्डीरपिण्डावलिम् । म्लेच्छानीकमहार्णवं सुविपुलं सङ्ग्रामकल्पावधौ यश्चौर्वाग्निरिवाभवद्व[2]र्धयतु वः [3]कल्पानि कल्की हरिः ॥ २१२ ॥

---

## सूर्यः

[4]खण्डितानेत्रकंजा[5]लिमञ्जुरञ्जनपण्डिताः । मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥ १ ॥ शुकतुण्डच्छवि सवितुश्चण्डरुचेः पुण्डरीकवनबन्धोः । मण्डलमुदितं वन्दे कुण्डल[6]माखण्डलाशायाः ॥ २ ॥ अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः । मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ ३ ॥ प्राचीकुङ्कुमतिलकं पूर्वाचलरोहणैकमाणिक्यम् । त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥ ४ ॥ कटुभिरपि कठोरचक्रवाकोत्करविरहज्वरशान्तिशीतवीर्यैः । तिमिरहतमयं महोभिरञ्जञ्जयति जगन्नयनौघमुष्णभानुः ॥ ५ ॥ यद्बिम्बमम्बरमणिर्यदपां प्रसूतिर्नक्तं निषिञ्चति यदग्निशिखासु भासः । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः पूषा पुराणपुरुषः स नमोऽस्तु तस्मै ॥ ६ ॥ यो रक्ततामतितरामतुलं दधानो दिक्प्रौढदारपरिमोहनवासवासः । योषिद्द्युयीपतिविडम्बनभृत्स शश्वत्पायादपायसमुदायहरो रविर्नः ॥ ७ ॥ ब्रह्माण्डसंपुटकलेवरमध्यवर्ति चैतन्यपिण्डमिव मण्डलमस्ति यस्य । आलोकितोऽपि दुरितानि निहन्ति यस्तं मार्तण्डमादिपुरुषं प्रणमामि नित्यम् ॥ ८ ॥ सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा भिल्ली पल्लवशङ्कया विचिनुते सान्द्रद्रुमां द्रोणिषु । कान्ताः कुङ्कुमशङ्कया करतले मृद्नन्ति लग्नं च यत्तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥ ९ ॥ एकस्मिन्नयने भृशं तपति यः काले स दाहक्रमो येनातन्यत यत्प्रकाशसमयेनैषां पदं दुर्लभम् । सा व्योमावयवस्य यन्न विदिता लोके गतिः शाश्वती श्रीसूर्यः सुरसेवितोऽपि हि महादेवः स नस्त्रायताम् ॥ १० ॥ [1]जंम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्तैः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ ११ ॥ भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये । कालाकारान्धकाराननपतितजगत्साध्वसध्वंसकल्याः कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ १२ ॥ साटोपव्योमहट्टोषितरजनिवणिङ्नायकोन्मुक्ततारा मुक्ताहारापहारात्तरलखगरवप्रोत्थिताकीर्तिशान्त्यै । कर्षन्नम्भोजकुम्भोदरकुहरबहिर्निःसरत्षट्पदालीकालव्यालीं करेणाकलयतु दिनकृत्कल्मषोन्मूलनं वः ॥ १३ ॥ [3]चक्री च[4]क्रारपङ्क्तिं [5]हरिरपि च [6]हरीन्[7]धूर्जटिर्धूर्ध्वजान्तार्नक्षं नक्षत्रनाथोऽरुणमपि वरुणः [9]कूबराग्रं कुबेरः । [10]रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥ १४ ॥ किं छत्रं किं नु [11]रत्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा चक्रं वा [12]वारिजं वेत्यमर[13]युवतिभिर्यद्बलिद्वेषिदेहे । ऊर्ध्वे मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ १५ ॥ शीर्ण[14]घ्राणाङ्घ्रिपाणीन्[15]व्रणिभि[16]रपघनैर्घर्घराव्यक्तघोषान्दीर्घा[17]घ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः । [18]घर्मांशोस्तस्य वोऽन्तर्द्विगुण[19]घनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसंघैर्विदधतु [20]घृणयः शीघ्र[21]मंहोविघातम् ॥ १६ ॥

### किरणाः

करजालमपूर्वचेष्टितं वस्तदभीष्टप्रदमस्तु तिग्मभासः । क्रियते भवबन्धनाद्विमुक्तिः प्रणतानामुपसेवितेन येन ॥ १७ ॥ युष्माकमम्बरमणेः प्रथमे मयूखास्ते मङ्गलं विदधतूदयराग-

---

१ फेनपिण्डः. २ खण्डयतु. ३ पापानि. ४ नायिकाविशेषा. ५ कमलम्. ६ पूर्वदिशः.

१ इन्द्रः. २ क्रयविक्रयस्थानम्. ३ विष्णुः. ४ कीलकः. ५ इन्द्रः. ६ अश्वान्. ७ यानमुखम्. ८ चक्रं. ९ युगंधरं. १० वेगः. ११ चूडारत्नम्. १२ यतो विष्णोर्नाभिदेशे कमलं वर्तते. १३ वामनाकृत्या. १४ कुष्ठरोगविशीर्णनासिकापादपाणीन्. १५ क्षतविशिष्टैः. १६ शरीरैः. १७ चिरकालं ग्रस्तान्. १८ सूर्यस्य. १९ सततकृपा. २० रश्मयः. २१ पापतापम्.

भाजः । कुर्वन्ति ये दिवसजन्ममहोत्सवेषु सिन्दूरपाटलमुखीरिव दिक्पुरंध्रीः ॥ १८ ॥ सिन्दूराणीत्र सीदत्कृपणकुलवधूमूर्ध्नि ये संचरन्तः प्रेक्ष्यन्ते दिक्षु शैलाः शिखरभुवि लसत्पद्मरागाङ्कुरा यैः । धुन्वन्ते ध्वान्तधाराः सह दुरितचयैर्दूरदृश्याः सुदृश्याः पान्तु त्वां पद्मबन्धोरकरणकिरणाः पूरणाः पद्मबन्धोः ॥ १९ ॥

### तुरगाः

अवतु नः सवितुस्तुरगावली समतिलङ्घिततुङ्गपयोधरा[1] ।
स्फुरितमध्यगतारुणनायका[2] मरकतैकलतेव[3] नभश्रियः ॥ २० ॥

### चन्द्रः

लालयन्तमरविन्दवनानि क्षालयन्तमभितो भुवनानि ।
पालयन्तमथ कोककुलानि ज्योतिषां पतिमहं महयामि ॥ १ ॥

१ मेघाः; पक्षे,-स्तनौ. २ अरुणरूपो नायकः सारथिर्यस्याः; पक्षे,-अरुण आरक्तो नायको हारमध्यमणिः. ३ सूर्यतुरंगमाणां हरितवर्णत्वादित्यर्थः.

रविमावसते सतां क्रियायै सुधया तर्पयते सुरान्पितॄंश्च । तमसां निशि मूर्च्छतां विहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ २ ॥ स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भवश्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः । पुष्पेष्वासनतप्रियापरिणयानन्दाभिषेकोत्सवे देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ ३ ॥

### पृथिवी

स्वर्गौकोभिरदोनिवासिपुरुषारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थममृतं स्वादीय आदीयते । आम्नायप्रवणैरलंकृतिजुषेऽमुष्यै मनुष्यैः शुभैर्दिव्यक्षेत्रसरित्पवित्रवपुषे देव्यै पृथिव्यै नमः ॥ १ ॥

१ गिलनम्. २ छिद्रकरणसाधनम्. ३ दन्तदशनकृतविवरपरम्परा. ४ पतनशीला. ५ मदनः. ६ विवाहः. ७ देवैः.

## इति श्रीसुभाषितरत्नभाण्डागारे प्रथमं मङ्गलाचरणप्रकरणं समाप्तम्



# द्वितीयं सामान्यप्रकरणम्

## सुभाषितप्रशंसा

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती । तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ १ ॥ सुभाषितेन गीतेन युवतीनां च लीलया । मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ २ ॥ सुभाषितमयैर्द्रव्यैः संग्रहं न करोति यः । सोऽपि [1]प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥ ३ ॥ संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे । सुभाषितरसास्वादः संगतिः सुजने जने ॥ ४ सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकाः । विनापि कामिनीसङ्गं कवयः सुखमासते ॥ ५ ॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ६ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् । इत्यादिगुणरत्नानां संग्रही [2]नावसीदति ॥ ७ ॥ संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् । एकमापातमधुरमन्यदालोचनामृतम् ॥ ८ ॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी । साहित्यरसमाधुर्यं शंकरो वेत्ति वा न वा ॥ ९ ॥ द्राक्षा म्लानमुखी जाता शर्करा [3]चाश्मतां गता । सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ १० ॥ संसदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम् । सूक्तं दधति [4]सुवर्णं कल्याणमनर्घमिह धन्याः ॥ ११ ॥ कथमिह मनुष्यजन्मा संप्रविशति सदसि [5]विबुधगमितायाम् । येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥ १२ ॥ [6]अकलितशब्दालंकृति[7]रनुकूला [8]स्खलितपदनिवेशापि । अभिसारिकेव रमयति [9]सूक्तिः [10]सोत्कर्षशृङ्गारा ॥ १३ ॥ आस्वादितदयिताधरसुधारसस्येव सूक्तयो मधुराः । अकलितरसालमुकुलो न कोकिलः [11]कलमुदञ्चयति[12] ॥ १४ ॥ अवसरपठितं सर्वं सुभाषितत्वं प्रयात्यसूक्तमपि । क्षुधि कदशनमपि नितरां भोक्तुः संपद्यते स्वादु ॥ १५ ॥ यस्य वक्त्र[1]कुहरे सुभाषितं नास्ति नाप्यवसरे प्रजल्पति । आगतः सदसि धीमतामसौ लेप्य[2]निर्मित इवावभासते ॥ १६ ॥ सुभाषितं हारि विशत्यधो गलान्न दुर्जन[3]स्यार्करिपोरिवामृतम् । तदेव धत्ते हृदयेन सज्जनो हरिर्महा[4]रत्नमिवातिनिर्मलम् ॥ १७ ॥ नायं प्रयाति [5]विकृतिं विरसो न यः स्यान्न क्षीयते बहुजनैर्नितरां निपीतः । [6]जाड्यं निहन्ति रुचिमेति करोति तृप्तिं नूनं सुभाषितरसो[7]ऽन्यरसातिशायी ॥ १८ ॥ धन्याः शुचीनि सुरभीणि गुणोम्भितानि वाग्वीरुधः स्ववदनोपवनोद्गतायाः । उच्चित्य सूक्तिकुसुमानि सतां विविक्तवर्णानि कर्णपुलिनेष्ववतंसयन्ति ॥ १९ ॥ किं हारैः किमु कङ्कणैः किमसमैः [8]कर्णावतंसैरलं केयूरैर्मणिकुण्डलैरलमलं साडम्बरै[9]रम्बरैः । पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं यन्निष्पीडित[10]पार्वणामृतकर[11]स्यन्दोपमाः सूक्तयः ॥ २० ॥ खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ २१ ॥ सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः । अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ २२ ॥ सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः । संचिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥ २३ ॥

## विद्याप्रशंसा

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २ ॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहु[12]रनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ३ ॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ४ ॥ ज्ञातिभिर्वण्ट्यते[13] नैव चोरेणापि न नीयते । दाने नैव क्षयं याति विद्यारत्नं

---

१ प्रसङ्गः. २ न नश्यति. ३ पाषाणताम्. ४ काञ्चनम्; पक्षे,–सुष्ठुपदैर्युक्तम्. ५ पण्डितपूर्णायां देवयुक्तायां च. ६ न कलिता शब्दस्यालंकृतिर्यया. अनुप्रासादिशब्दालंकृतिशून्येत्यर्थः; पक्षे,–अकलितः शब्दो यथैतादृश्यलंकृतिर्भूषणं यस्याः. सशब्दभूषणवत्त्वेऽन्यस्य ज्ञानं भविष्यतीति धियेति भावः. ७ द्रुतं रसप्रत्यायिका; पक्षे,–नायकचित्तानुकूल्यवती. ८ कूटपदानां ग्रथनं यत्र; पक्षे,–स्थानादन्यत्र पतनं यथा स्यात्तथा चरणविन्यासो यस्याः. ९ सुभाषितम्; पक्षे,–शोभनोक्तिमती. १० उत्कृष्टशालिशृङ्गाररसवती; पक्षे,–अहमस्यायं ममेति रतिपरिपोषवती. ११ मधुरम्. १२ वदति.

---

१ बिले. २ पङ्करचित. ३ राहोः. ४ कौस्तुभमणिः. ५ विकारम्. ६ मान्द्यम्. ७ अन्यरसानतिक्रम्य वर्तत इत्यर्थः. ८ कर्णभूषणैः. ९ वस्त्रादिभिः. १० पूर्णः. ११ किरणाः. १२ नास्त्युत्तमं यस्मात्. १३ विभज्यते.

महाधनम् ॥ ५ ॥ संयोजयति विद्यैव नीचगापि नरं सरित् । समुद्रमिव दुर्धर्षं नृपं भाग्यमतः परम् ॥ ६ ॥ विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये । आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना । न गुह्यगोपने शक्तं न च दंशनिवारणे ॥ ८ ॥ सद्विद्या यदि का चिन्ता वराकोदरपूरणे । शुकोऽप्यशनमाप्नोति राम रामेति च ब्रुवन् ॥ ९ ॥ अनपेक्षितगुरुवचना सर्वान्ग्रन्थीन्विभेदयति सम्यक् । प्रकटयति पररहस्यं विमर्शशक्तिर्निजा जयति ॥१०॥ वसुमतीपतिना नु सरस्वती बलवता रिपुणापि न नीयते । समविभागहरैर्न विभज्यते विबुधबोधबुधैरपि सेव्यते ॥ ११ ॥ श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि । संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ १२ ॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि । व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ १३ ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चाभिरमयत्यपनीय खेदम् । लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥ १४ ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १५ ॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा । सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु ॥ १६ ॥

---

## काव्यप्रशंसा

कान्पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि । किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ १ ॥ निरवद्यानि पद्यानि यद्यनाढ्यस्य का क्षतिः । भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ २ ॥ याता यान्ति च यातारो लोकाः शोकाधिका भुवि । काव्यसंबन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ ३ ॥ नवोक्तिर्जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः । विकटाक्षरसंबन्धः कृत्स्नमेकत्र दुष्करम् ॥ ४ ॥ सद्भिर्भाव्ये हिते काव्ये वृथा दुर्जनगर्जनम् । चण्डीशाङ्गीकृते चन्द्रेऽरुंतुदः किं विधुंतुदः ॥ ५ ॥ त एव पदविन्यासास्त एवार्थविभूतयः । तथापि नव्यं भवति काव्यं ग्रथनकौशलात् ॥ ६ ॥ सरसापि कवेर्वाणी हरिनामाङ्किता यदि । सादरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ ७ ॥ काव्यस्याम्रफलस्यापि कोमलस्येतरस्य च । बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ ८ ॥ शब्दशक्त्यैव कुर्वाणा सर्वदानवनिर्वृतिम् । काव्यविद्या श्रुतिगता स्यान्मृतस्यापि जीवनी ॥ ९ ॥ श्लिष्टा सभङ्गा सद्वर्ण्या निर्दोषा सद्गुणा मृदुः । नानाभङ्गीविलासा चेत्कृतिर्विकृतिरन्यथा ॥ १० ॥ धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥ ११ ॥ उमामिमां समुद्वीक्ष्य शीतदीधितिशेखर । एषापि भारती भानुसुतं सीत्कृत्य नर्तति ॥ १२ ॥ अध्वनि पदग्रहपरं मदयति हृदयं न वा न वा श्रवणम् । काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥ १३ ॥ अविदितगुणापि सुकवेर्भणितिः कर्णेषु वमति मधुधाराम् । अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ १४ ॥ ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् । पुष्णाति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति ॥ १५ ॥ कृतमन्दपदन्यासा विकचश्रीश्चारुशब्दभङ्गवती । कस्य न कम्पयते कं जरेव जीर्णस्य सत्कवेर्वाणी ॥ १६ ॥ सरसा सालंकारा सुपदन्यासा सुवर्णमयमूर्तिः । आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ १७ ॥ सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि । कविहृदयं विटहृदयं सरलं तरलं च सत्वरं भवति ॥ १८ ॥ भ्रमरहिता सा कचवत्स्त्रीणां कुचवच्च सरसहिता । लसदक्षरपीयूषाधरवत्कविता महात्मनां जीयात् ॥ १९ ॥ सत्पात्रोपनयोचितसंप्रतिबिम्बाभिनववस्तु । कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च ॥ २० ॥ सत्सूत्रसंविधानं सदलंकारं सुवृत्तमच्छिद्रम् । को धारयति न कण्ठे सत्काव्यं माल्यमर्घ्यं च ॥ २१ ॥

---

१ ज्ञानाय. २ मक्षिकाः ३ क्षुल्लकम्. ४ नियोजयति. ५ अन्तर्हितम्. ६ उत्कृष्टानि. ७ मर्मस्पृक्.

१ कठिनस्येत्यर्थः. २ सर्वकालं नवसौख्यम्; पक्षे,–सर्वेषां रक्षसामानन्दम्. ३ कविता; पक्षे,–काव्यस्य शुक्रस्य विद्या. संजीविनीत्यर्थः. ४ नानार्थशब्दयुक्ता. ५ पदच्छेदवैचित्र्यादनेकार्थपदवती. ६ कविता. ७ रोगः. दुःखदत्वात्. ८ व्यङ्ग्यार्थशून्यम्. यत्तु ध्वनिरुत्तमं काव्यं तद्भिन्नमित्यर्थः; पक्षे,–शिञ्जितशून्यम्. ९ अनुप्रासमात्रार्थं पदग्रहः परमुत्कृष्टो यत्र; पक्षे,–अत्यन्तचरणसंलग्नम्. १० उक्तिः. ११ वर्षति. १२ सुप्तिङन्तादि; पक्षे,–चरणः. १३ प्रफुल्लशोभा; पक्षे,–विगता कचश्रीः केशशोभा यस्याः. १४ चारवो ये शब्दभङ्गा रचनाविशेषास्तद्वती; पक्षे,–स्खलितशब्दवती. १५ शिरः. १६ भ्रमरेभ्यो भृङ्गेभ्यो हिता; पक्षे,–भ्रमेण भ्रान्त्या रहिता. १७ सरैर्मालाभिः सहिता; पक्षे,–सरसेभ्यो हिता. १८ लसच्छोभायमानमक्षरमविनाशि पीयूषं तद्वन्माधुर्यं यस्मिन्; पक्षे,–लसन्त्यक्षराणि वर्णा एव पीयूषं यस्याम्. १९ स्थापनम्. २० सम्यग्बोधः. २१ दोषरहितम्.

यदसेवनीयमसताम्[1] अमृतप्रायं[2] सुवर्णविन्यासम्[3] । सुरसार्थमयं[4] काव्यं त्रिविष्टपं वा समं विद्मः ॥ २२ ॥ सत्कविरसनाशूर्पी[5]-निस्तुष[6]तरशब्दशालिपाकेन[7] । तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥ २३ ॥ काव्यस्याक्षरमैत्रीभाजो[8] न च कर्कशा[9] न च ग्राम्याः[10] । शब्दा अपि पुरुषा अपि सांधव[11] एवार्थबोधाय ॥ २४ ॥ अन्तर्गूढान्[12] अनर्थान्[13] अव्यञ्जयतः[14] प्रसाद[15]-रहितस्य । संदर्भस्य[16] नदस्य च न रसैः[17] प्रीत्यै रसज्ञानाम् ॥ २५ ॥ आन्तरमिव बहिरिव हि व्यञ्जयितुं रसमशेषतः सततम् । असती सत्कविसूक्तिः काचघटीति त्रयं वेद ॥ २६ ॥ न ब्रह्मविद्या न च राज्यलक्ष्मीस्तथा यथेयं कविता कवीनाम् । लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति ॥ २७ ॥ अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रम-जन्मभूमिः । वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रति-भूः पदानाम् ॥ २८ ॥ सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः । न शारदादेशम्[18] अपास्य दृष्टस्तेषां यद-न्यत्र मया प्ररोहः ॥ २९ ॥ नमो नमः काव्यरसाय तस्मै निषिक्तमन्तः पृषतापि यस्य । सुवर्णतां वक्रमुपैति साधोर्दु-र्वर्णतां याति च दुर्जनस्य ॥३०॥ अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः । नान्ध्रीपयोधर इवा-तितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ॥ ३१ ॥ रे रे खलाः शृणुत मद्वचनं समस्ताः स्वर्गे सुधास्ति सुलभा न तु सा भवद्भिः । कुर्मस्तदत्र भवतामुपकारकारि काव्या-मृतं पिबत तत्परमादरेण ॥ ३२ ॥ वाणी ममैव सरसा यदि रञ्जयित्री न प्रार्थये रसविदामवधानदानम् । सायंत-नीषु मकरन्दवतीषु भृङ्गाः किं मल्लिकासु परमन्त्रणम्[19] आरभन्ते ॥ ३३ ॥ आख्यातनामरचनाचतुरस्रसंधिसद्धात्वलंकृतिगुणं सरसं सुवृत्तम् । आसेदुषामपि दिवं कविपुंगवानां तिष्ठत्य-खण्डमिह काव्यमयं शरीरम् ॥ ३४ ॥ सरसपरिषत्कर्णश्राव्यं कवित्वरसायनं विरसमनसां नेतुं नेहामहे श्रवणान्तिकम् । मृगमदरसं बिम्बौष्ठीनां कठोरकुचोचितं जघननिकटे क्लिन्ने लिम्पेज्जरन्महिषस्य कः॥ ३५॥ अमृतजलधेः पायं पायं पयांसि पयोधरः किरति करकास्ताराकारा यदि स्फटिकावनौ । तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम्[1] ॥३६॥ प्रयच्छति चमत्कृतिं विरचनाविधौ चेतसः सभासु पठितो भवत्यसमसाधुवादास्पदे । प्रथामुप-गतस्तनोत्यतितरामुदारं यशो न पुष्यति मनोरथं कमिव काव्यचिन्तामणिः ॥ ३७ ॥ समुल्लासो वाचां सरसमधु-निष्यन्दलहरी समुन्मेषद्वेषी सकलरसपोषोपजनकः । न केषा-माधत्ते मनसि परितोषं नवनवैर्विलासैरुन्मीलद्विकचितमधूली[2]-परिमलः ॥ ३८ ॥ यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते । मदुक्तिश्चेदन्तर्मद-यति सुधीभूय सुधियां किमस्या नाम स्यादरसपुरुषा-नादरभरैः ॥ ३९ ॥ परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां कदाचिच्चाभ्यासाद्व्रजति ननु वैरस्यमधिकम् । प्रियाबिम्बौष्ठे वा रुचिरकविवाक्येऽप्यनवधिर्नवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥ ४० ॥ प्रसत्तेर्यः[3] पात्रं तिलकयति यं सूक्तिरचना य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना । यदात्मानो विद्याः परिणमति यश्चार्थवपुषा स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥ ४१ ॥ सदा मध्ये यासामियदमृतनिष्यन्दसरसा सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् । प्रसादं ता एता घनपरिचिताः केन महतां महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ ४२ ॥ नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं दूरात्संकुचि-तेव गच्छति पुनश्चाण्डालवच्छान्दसात् । मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा काव्यालंकरणज्ञमेत्य कविता-कान्ता वृणीते स्वयम् ॥ ४३ ॥ रम्यार्थोक्तितनूज्ज्वला रसमयप्राणा गुणोल्लासिनी चेतोरञ्जकरीतिवृत्तिकवितापाकं वयो बिभ्रती । भावालंकरणोचितागमवती सर्वत्र निर्दोष-ताशय्यामृच्छति[4] कामिनीव कविता कस्यापि पुण्यात्मनः ॥ ४४ ॥ निर्ह्रादं क्रकचक्षतैः किरति किं कर्णामृतं वल्लकी किं वा मुञ्चति मालती परिमलं पाषाणनिष्पेषणैः । इत्थं तारसकर्कशां धियमसौ जल्पैर्विकल्पाकुलैराकूटं कमनीय-कान्तिदमितं कार्यं कथं स्यन्दते ॥ ४५ ॥ यत्राकृष्टसुवर्ण-सूत्रमिव यत्पद्यं सुमेरोस्तटादुन्मीलत्कुरुविन्दकन्दल इव स्वच्छः पदार्थस्तु यः । यत्राप्युल्लसदंशुकान्तरलसत्कान्ता-कुचान्तोपमं व्यङ्ग्यं यत्तदहो कवित्वमपरं वाग्देवतोपप्लवः ॥ ४६ ॥ गुम्फः पङ्कजकुड्मलद्युतिररस्तत्केसरोल्लासवानर्थो-ऽप्यन्तरसौरभप्रतिनिभं व्यङ्ग्यं चमत्कारि यत् । द्वित्रैर्यद्रसिकै-

---

१ सहृदयभिन्नानाम्; पक्षे,–पापवताम्. २ अमृततुल्यम्; पक्षे,–अमृतबहुलम्. ३ शोभनाक्षराणां विन्यासो ग्रथनं यत्र; पक्षे–सुवर्णमयम्. ४ शोभनरसार्थप्रचुरम्; पक्षे,–देवसमूहबहुलम्. ५ प्रस्फोटनम्. ६ निर्दोषः. ७ निर्दोषकाव्यास्वादेनेत्यर्थः. ८ एक-वर्गघटितत्वादिरूपाः. ९ श्रुतिकटकः; पक्षे,–क्रूरमतयः. १० अविद-ग्धप्रयुक्ताः; पक्षे,–ग्राममात्रवासिनः. ११ व्याकरणसिद्धाः; पक्षे,–निर्मलमतयः. १२ अभ्यन्तरे गूढस्थितान्; पक्षे,–अभ्यन्तरे निली-नान्. १३ प्रतिपाद्यविषयान्; पक्षे,–पदार्थान्. १४ व्यञ्जनाविष-यानकुर्वतः; पक्षे,–अप्रकटयतः. १५ प्रसादेन काव्यगुणेन रहि-तस्य; पक्षे,–निर्मलतया रहितस्य. १६ काव्यस्य. १७ शृङ्गारादिः; पक्षे,–जलम्. १८ काश्मीरदेशम्. १९ अन्येषामभिमतम्; अन्यैः सह विचारविनिमयो वा.

१ विदुषाम्. २ मुरवल्ली. ३ आनन्दस्य. ४ गच्छति.

श्चिरं सहृदयैर्भृङ्गैरिवास्वाद्यते तत्काव्यं न पुनः प्रमत्तकुकवेर्यत्किंचिदुज्जल्पितम् ॥ ४७ ॥ निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः । तद्वैदग्ध्यविदां सतामपि मनः किं नेहते वक्रतां धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ ४८ ॥ सानन्दप्रमदाकटाक्षविशिखैर्येषां न भिन्नं मनो यैः संसारसमुद्रपातविधुरेष्वन्येषु पोतायितम् । यैर्दुर्वारसरस्वतीविलसितं द्वित्रैः पदैर्गुम्फितं तेषामप्युपरि स्फुरन्ति मतयः कस्यापि पुण्यात्मनः ॥ ४९ ॥ वाणि त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां संप्राप्ता कवितालता परिणता सैवेयमुज्जृम्भते । त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरःकम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥ ५० ॥

## नाट्यप्रशंसा

प्रत्यङ्कमङ्कुरितसर्वरसावतारनव्योल्लसत्कुसुमराजिविराजिबन्धम् । घर्मेतरांशुरिव वक्रतयातिरम्यं नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥ १ ॥ देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा । त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥ २ ॥

## कुकाव्यनिन्दा

किं तेन किल काव्येन मृग्यमानस्य यस्य ताः । उदधेरिव नायान्ति रसामृतपरम्पराः ॥ १ ॥ किं तेन काव्यमधुनाप्लाविता रसनिर्झरैः । जडात्मानोऽपि नो यस्य भवन्त्यङ्कुरितान्तराः ॥ २ ॥ यदा प्रकृत्यैव जनस्य रागिणो भृशं प्रदीप्तो हृदि मन्मथानलः । तदात्र भूयः किमनर्थपण्डितैः कुकाव्यहव्याहुतयो निवेशिताः ॥ ३ ॥ तत्किं काव्यमनल्पपीतमधुवत्कुर्यान्न यद्धूद्गतं मात्सर्यावृतचेतसां रसवशादप्युद्गतिं लोमसु । कम्पं मूर्ध्नि कपोलयुग्ममरुणं बाष्पाविले लोचने अध्यारोपितवस्तुकीर्तनपरं वाचः करालम्बनम् ॥ ४ ॥ या साधूनिव साधुवादमुखरान्मात्सर्यमूकानपि प्रोच्चैर्नो कुरुते सतां मतिमतां दृष्टिर्न सा वास्तवी । या याताः श्रुतिगोचरं च सहसा हर्षोल्लसत्कंधरास्तिर्यञ्चोऽपि न मुक्तशष्पकवलास्ताः किं कवीनां गिरः ॥ ५ ॥

## सामान्यकविप्रशंसा

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः । नास्ति येषां यशःकाये जरामरणजं भयम् ॥ १ ॥ प्रस्तावे हेतुयुक्तानि

१ लोमसंहर्षम्. २ कीर्तिशरीरे.

यः पठत्यविशङ्कितः । स कविस्तानि काव्यानि काव्ये तस्य परिश्रमः ॥ २ ॥ सुकवेः शब्दसौभाग्यं सुकविर्वेत्ति नापरः । कलादवन्न जानाति परः कङ्कणचित्रताम् ॥ ३ ॥ सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे । उत्पादका न बहवः कवयः शरभा इव ॥ ४ ॥ कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः । न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥ ५ ॥ कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि । यत्र हंसवयांसीव भुवनानि चतुर्दश ॥ ६ ॥ अपूर्वो भाति भारत्याः काव्यामृतफले रसः । चर्वणे सर्वसामान्ये स्वादुवित्केवलं कविः ॥ ७ ॥ उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् । जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ ८ ॥ ते धन्यास्ते महात्मानस्तेषां लोके स्थितं यशः । यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्तिताः ॥ ९ ॥ अमृतोत्प्रेक्षणे रागं कुर्वन्त्युरगवज्जनाः । कविर्गरुडवन्मान्यमिन्द्रवज्रादिवृत्तकृत् ॥ १० ॥ काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि । तावत्सारस्वतं स्थानं कविरासाद्य तिष्ठति ॥ ११ ॥ अनन्तपदविन्यासरचना सरसा कवेः । बुधो यदि समीपस्थो न कुंजन्मा पुरो यदि ॥ १२ ॥ कविः करोति पद्यानि लालयत्युत्तमो जनः । तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम् ॥ १३ ॥ कविः करोति काव्यानि स्वादं जानन्ति पण्डिताः । सुन्दर्या अपि लावण्यं पतिर्जानाति नो पिता ॥ १४ ॥ कविः पिता पोषयति पालको रसिकः पतिः । कवितायुवतेर्नूनं सोदरास्तु विवेकिनः ॥ १५ ॥ तत्त्वं किमपि काव्यानां जानाति विरलो भुवि । मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १६ ॥ साध्वीव भारती भाति सूक्तिसद्व्रतचारिणी । ग्राम्यार्थवस्तुसंस्पर्शबहिरङ्गा महाकवेः ॥ १७ ॥ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति । कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ १८ ॥ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः । येषां त एव भूपा जीवन्ति मृता वृथैवान्ये ॥ १९ ॥ काव्यप्रपञ्चंचुञ्चू रचयति काव्यं न सारविद्भवति । तरवः फलानि सुवते विन्दति सारं पतङ्गसमुदायः ॥ २० ॥ विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते । फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ २१ ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः । कुलजा या सा जाया केवलजाया तु केवलं माया

१ स्वर्णकारः. २ समुद्रः. ३ अनेकपदानि; पक्षे,-विष्णुपदम्. आकाशमित्यर्थः. ४ शृङ्गारादिरससहिता; पक्षे,-वृष्टिप्रदा. ५ कवयितुः; पक्षे,-शुक्रस्य. ६ पण्डितः; पक्षे बुधग्रहः. ७ नीचः; पक्षे,-कुः पृथ्वी तस्या जन्म यस्य मङ्गल इत्यर्थः. ८ सौगन्ध्यम्. ९ कीर्तिप्रकाशः. १० वित्तः; निपुणः. ११ सुवेणुभिः.

॥ २२ ॥ अवयः केवलकवयः कीरा स्युः केवलं धीराः । वीराः पण्डितकवयस्तानवमन्ता तु केवलं गवयः ॥ २३ ॥ अहमपि परेऽपि कवयस्तथापि परमन्तरं परिज्ञेयम् । ऐक्यं रलयोरपि यदि तत्किं करभायते कलभः ॥ २४ ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २५ ॥ यास्यति सज्जनहस्तं रमयिष्यति तं भवेच्च निर्दोषा । उत्पादितयापि कविस्ताम्यति कथया दुहित्रेव ॥ २६ ॥ शीलाविज्जामारुलामोरिकाद्याः काव्यं कर्तुं सन्तु विज्ञाः स्त्रियोऽपि । विद्यां वेत्तुं वादिनो निर्विजेतुं दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥ २७ ॥ सहृदयाः कविगुम्फनिकासु ये कतिपया त इमे न विशृङ्खलाः । रसमयीषु लतास्विव षट्पदा हृदयसारजुषो न मुखस्पृशः ॥ २८ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः । स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ २९ ॥ जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसंदर्भविभूषणेषु । सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥ ३० ॥ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु । कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ ३१ ॥ महीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि । भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि तेषाम् ॥ ३२ ॥ किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण । किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥३३॥ प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनायाः ॥ ३४ ॥ कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम् । वदद्भिरङ्गैः कृतरोमविक्रियैर्जनस्य तूष्णींभवतोऽयमञ्जलिः ॥ ३५ ॥ स्वप्रज्ञया कुञ्चिकयेव कंचित्सारस्वतं बक्रिमभङ्गिभाजम् । कवीश्वरः कोऽपि पदार्थकोशमुद्घाट्य विश्वाभरणं करोति ॥ ३६ ॥ तर्केषु कर्कशतराः स्युरथापि पुंसां काले भवन्ति मृदवः कवितासु वाचः । दैत्येन्द्रशैलकुलिशं दयिताकपोले नाथस्य कोमलमुदाहरणं नखं नः ॥ ३७ ॥ ख्याता नराधिपतयः कविसंश्रयेण राजाश्रयेण च गताः कवयः प्रसिद्धिम् । राज्ञा समोऽस्ति न कवेः परमोपकारी राज्ञो न चास्ति कविना सदृशः सहायः ॥ ३८ ॥ तेऽनन्तवाङ्मयमहार्णवदृष्टपाराः सांयात्रिका इव महाकवयो जयन्ति । यत्सूक्तिपेलवलवङ्गलवैरवैमि सन्तः सदःसु वदनान्यधिवासयन्ति ॥ ३९ ॥ त्रैलोक्यभूषणमणिर्गुणवर्गबन्धुरेकश्चकास्ति कविता सविता द्वितीयः । शंसन्ति यस्य महिमातिशयं शिरोभिः पादग्रहं विदधतः पृथिवीभृतोऽपि ॥ ४० ॥ शब्दार्थमात्रमपि ये न विदन्ति तेऽपि यां मूर्च्छनामिव मृगाः श्रवणैः पिबन्तः । संरुद्धसर्वकरणप्रसरा भवन्ति चित्रस्थिता इव कवीन्द्रगिरं नुमस्ताम् ॥ ४१ ॥ स्फारेण सौरभभरेण किमेणनाभेस्तद्धानसारमपि सारमसारमेव । स्रक्सौमनस्यपि न पुष्यति सौमनस्यं प्रस्यन्दते यदि मधुद्रवमुक्तिदेवी ॥ ४२ ॥ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः । निजघनमकरन्दस्यन्दपूर्णालवालः कलशसलिलमेकं नेहते किं रसालः ॥ ४३ ॥ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ कवीनां काव्ये न स्फुरति बुधमात्रस्य धिषणा । नवक्रीडावेशव्यसनपिशुनो यः कुलवधूकटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥ ४४ ॥ अयं मे वाग्गुम्फो विपदपदवैदग्ध्यमधुरः स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि । कटाक्षो वामाक्ष्या दरदलितनेत्रान्तगलितः किशोरे निःसारः स तु किमपि यूनः स्थगयति ॥४५॥ मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः किमस्या नाम स्यादरसपुरुषानादरभरैः । यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते ॥ ४६ ॥ भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरशना मेदिन्यासीदसावकुतोभया । स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥ ४७ ॥ यदि प्रभुरुदारधीः सुरसकाव्यकौतूहलस्तथैव च सभासदः सदसि तद्गुणग्राहिणः । सुवर्णसदलंकृतिर्भवति तत्र नृत्योद्यता मदीयरसनानटी रसघटीयमानन्दभूः ॥ ४८ ॥ वदन्तु कतिचिद्बठात्खफछठेति वर्णाञ्छठा घटः पट इतीतरे पटु रटन्तु वाक्पाटवात् । वयं बकुलमञ्जरीगलदमन्दमाध्वीझरीधुरीणपदरीतिभिर्भणितिभिः प्रमोदामहे ॥ ४९ ॥ हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात् । तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं क्रुद्धैर्नीतस्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ ५० ॥ अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् । अर्थालंकृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ ५१ ॥ मन्दं निक्षिपते पदानि[११] परितः शब्दं[१२] समुद्वीक्षते

१ वाल्मीकेः. २ 'चावी' इति लोके.

१ कविता. २ तोषयति. ३ नीरस. ४ शोभनान्यक्षराणि; पक्षे,–हेम. ५ काव्यरसः; पक्षे,–उदकम्. ६ वैयाकरणाः. ७ नैयायिकाः. ८ द्रव्यम्; पक्षे,–काव्यार्थान्. ९ भूषणानि; पक्षे,–काव्यालंकरणानि. १० पारदः; पक्षे,–काव्यरसः. ११ सुप्तिङन्तादीनि; पक्षे,–पादविक्षेपे चरणान्. १२ शब्दः शुद्धो वापशब्दो वेति सम्यग्विचारयति; पक्षे,–ध्वनिमाकर्णयति.

 

[1]नानार्थाहरणं च [2]काङ्क्षति [3]मुद्रालंकारमाकर्षति । आदत्ते सकलं [4]सुवर्णनिचयं धत्ते [5]रसान्तर्गतं [6]दोषान्वेषणतत्परो विजयते चोरोपमः सत्कविः ॥ ५२ ॥ स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति । त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैस्तानाराध्य गुरून्विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥ ५३ ॥ कल्याणं भगवत्कथाकथनतः काव्यं विधातुः कवेस्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गारवीरादिकम् । को दोषो भविता यदत्र कविताशीलैः समाश्रीयते पन्था व्यास[7]वसुंधराश्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ५४ ॥ ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां ते वन्द्या यतयो विशन्ति मतयो येषां परे ब्रह्मणि । ते श्लाघ्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गनादृक्पाता इव तोषयन्ति हृदयं येषां गिरां संचयाः ॥ ५५ ॥ भूतावेशनिवेशिताशय इव श्लोकं करोत्याशु यः श्लाघन्ते कविरद्भुतोऽयमिति तं मिथ्या जना विस्मिताः । द्वित्राण्येव पुरः पदानि रचयन्पश्चात्समालोचयन्दूरं यः कवितां निनीषति कविः कामीव स स्तूयताम् ॥ ५६ ॥ सत्यं सन्ति गृहे गृहेऽपि कवयो येषां वचश्चातुरी स्वे हर्म्ये कुलकन्यकेव लभते स्वल्पैर्गुणैर्गौरवम् । दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणां पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥ ५७ ॥ धन्यास्ते कवयो यदीयरसनारूक्षाध्वसंचारिणी धावन्तीव सरस्वती द्रुतपदन्यासेन निष्क्रामति । अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदयत्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते ॥ ५८ ॥ साहित्ये सुकुमारवस्तुनि दृढन्यासग्रहग्रन्थिले तर्के वा मयि संविधातरि समं लीलायते भारती । शय्या वास्तु मृदूत्तरच्छदपटा दर्भाङ्कुरैरास्तृता भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ॥ ५९ ॥ येषां कोमलकाव्यकौशलकलालीलावती भारती तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते । यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपितास्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ ६० ॥ तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती सा काव्ये मृदुलोक्तिसारसुरभौ स्यादेव मे कोमला । या प्रायः प्रियविप्रयुक्तवनिताहृत्कर्तने कर्तरी प्रेयोलालितयौवते न मृदुला सा किं प्रसूनावली ॥ ६१ ॥ मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमां व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी । कस्तूरी[1]घनसारसौरभसुहृद्व्युत्पत्तिमाधुर्ययोर्योगः कर्णरसायनं सुकृतिनः कस्यापि संजायते ॥ ६२ ॥ यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् । कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं कुर्वाणः कमलाकरस्य लभते किं सौरभं [2]सैरिभैः ॥ ६३ ॥ अस्थाने गमिता लयं हतधियां वाग्देवता कल्पते धिक्काराय पराभवाय महते तापाय पापाय वा । स्थाने तु व्ययिता सतां प्रभवति प्रख्यातये भूतये चेतोनिर्वृतये परोपकृतये [3]प्रान्ते शिवावाप्तये ॥ ६४ ॥ वल्मीकप्रभवेण रामनृपतिर्व्यासेन धर्मात्मजो व्याख्यातः किल कालिदासकविना श्रीविक्रमाङ्को नृपः । भोजश्चित्तपबिह्लणप्रभृतिभिः कर्णोऽपि विद्यापतेः ख्यातिं यान्ति नरेश्वराः कविवरैः स्फारैर्न भेरीरवैः ॥ ६५ ॥ येऽप्यासन्निभकुम्भशायितपदा येऽपि श्रियं लेभिरे येषामप्यवसन्पुरा युवतयो गेहेष्वहश्चन्द्रिकाः । तांल्लोकोऽयमवैति लोकतिलकान्स्वप्नेऽप्यजातानिव भ्रातः सत्कविकृत्य किं स्तुतिशतैरन्धं जगत्त्वां विना ॥ ६६ ॥ मौलौ मन्दारदामभ्रमदलिपटलीकाकलीं श्रोणिबिम्बे कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरशिञ्जाम् । उत्सङ्गे कीरगीतिं स्तनभुवि मसृणं वल्लकीपञ्चमं वा यत्काव्ये दत्तकर्णा शिव शिव मनुते भारतीं भारमेव ॥ ६७ ॥ कस्यांचिद्वाचि कैश्चिन्ननु यदि विहितं दूषणं दुर्दुरूढैश्छिन्नं किं नस्तदा स्यात्प्रथितगुणवतां काव्यकोटीश्वराणाम् । वाहाश्चेद्वन्धवाहाधिकविहितजवाः पञ्चषाश्चान्धखञ्जाः का हानिः शेरशाहक्षितिपकुलमणेरश्वकोटीश्वरस्य ॥ ६८ ॥

## विशिष्टकविप्रशंसा

### अमरसिंहः

प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने प्रसक्तौ गाम्भीर्ये रसवति च काव्यार्थरचने । अगम्यायामन्यैर्दिशि परिणतावर्थवचसोर्मतं चेदस्माकं कविरमरसिंहो विजयते ॥ १ ॥

### कालिदासः

कवयः कालिदासाद्याः कवयो वयमप्यमी । पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥ २ ॥ निर्गतामलवाक्यस्य कालिदासस्य सूक्तिषु । प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ ३ ॥ कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च । अन्ये कवयः कपयश्चापलमात्रं परं दधति ॥ ४ ॥ वयमपि कवयः कवयः कवयोऽपि च कालि-

१ श्लेषेण ध्वनिना वानेकार्थानां संपादनम्; पक्षे,-सुवर्णरूप्यादीनां हरणम्. २ इच्छति. ३ उपमाद्यलंकारम्; पक्षे,-कङ्कणादिभूषणम्. ४ सुरुचिरवर्णानां संचयम्; पक्षे,-हेमसंचयम्. ५ शृङ्गारादिरसमिश्रम्; पक्षे,-रसा पृथ्वी तदन्तर्गतम्. ६ काव्यदोषाणां गवेषणे तत्परः; पक्षे,-दोषा रात्रिस्तस्यामन्वेषण आसक्तः. ७ वसुंधरा पृथ्वी तस्याः श्रुतिर्लक्षणया वल्मीकं तत्र भवो वाल्मीकिः. ८ विरहित. ९ युवतिसमूहे.

१ कर्पूरः. २ महिषः. ३ मृते.

दासाद्याः । दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषदः ॥ ५ ॥ सा[1]कूतमधु[2]रकोम[3]लविलासिनीकण्ठकूजितप्राये । शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ ६ ॥ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासाः । अद्यापि तत्तुल्यकवेरभावादनामिका सा[4]र्थवती बभूव ॥ ७ ॥

### गणेश्वरः

गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः । तथा जयति भारती भगवती यथा सा सुधा मुधीभवति सुभ्रुवामधरमाधुरी म्लायति ॥८॥

### गुणाढ्यः

शश्वद्बाणद्वितीयेन नमदाकारधारिणा । धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ ९ ॥ स[5]मुद्दीपितकंदर्पा कृ[6]तगौरीप्रसाधना । हरलीलेव लोकस्य विस्मयाय बृ[7]हत्कथा ॥ १० ॥ अ[8]तिदीर्घजीविदोषाद्व्यासेन यशोऽपहारितं हन्त । कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ ११ ॥

### गोविन्दराजः

इन्दुप्रभारसविदं विहगं विहाय कीराननने स्फुरसि भारति का रतिस्ते । आद्यं यदि श्रयसि जल्पतु कौमुदीनां गोविन्दराजवचसां च विशेषमेषः ॥ १२ ॥

### जगन्नाथपण्डितः

कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः । नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः ॥ १३ ॥ माधुर्यैरपि धुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम् । वन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥ १४ ॥ गिरां देवी वीणागुणरणनहीनादरकरा यदीयानां वाचाममृतमयमाचामति रसम् । वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपतेरधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः ॥ १५ ॥ मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा कदाचित्केषांचित्खलु हि विदधीरन्नपि मुदम् । ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो न येषामानन्दं जनयति जगन्नाथभणितिः ॥ १६ ॥

### जयदेवः

साध्वी मा[10]ध्वीक चिन्ता न भवति भवतः शर्करे कर्कशासि द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते । माकन्द क्र[11]न्द कान्ताधर धरणितलं गच्छ यच्छन्ति भावं यावच्छृङ्गाररसारस्वतमिह जयदेवस्य वि[12]ष्वग्वचांसि ॥ १७ ॥

### ज्योतिरीशः

यश्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः । ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्टेः कलानां निधिः संगीतागमनागरो विजयते श्रीज्योतिरीशः कृती ॥ १८ ॥

### दण्डी

जाते जगति वाल्मीकौ कविरित्यभिधाभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ १९ ॥ त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः । त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥ २० ॥

### द्रोणः

सरस्वतीपवित्राणां जातिस्तत्र न देहिनाम् । व्यासस्पर्धी कुलालोऽभूद्यद्द्रोणो भारते कविः ॥ २१ ॥

### धनदः

यथेयं वाग्देवी सुकविमुखवासव्यसनिनी कुहूकण्ठीकण्ठे विलसति तथा चेदनवधिः । तदा भूमीभागे निरुपमतमः किंचिदिव वा समाधत्ते साम्यं धनदभणितीनां मधुरिमा ॥ २२ ॥

### नरहरिः

यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते तदा गतमदा मदालसमरालबालारवाः । न विभ्रमचरीकरीभवति चाधरी माधुरी सुधाकरसुधाझरीमधुकथा वृथा जायते ॥ २३ ॥

### प्रवरसेनः

कीर्तिः प्रवरसेनस्य प्रयाता कु[1]मुदोज्ज्वला । सागरस्य परं पा[2]रं कपिसेनेव सेतु[3]ना ॥ २४ ॥

### बाणः

हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः । भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥ २५ ॥ शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते । शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ २६ ॥ जाता शि[4]खण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि । प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ २७ ॥ श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलंकारे कतिचित्सदर्थविषये चान्ये कथावर्णके । आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरीसंचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥ २८ ॥

### बिह्लणः

बि[5]न्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं कर्मेति

---

१ साभिप्रायम्. २ रसोत्कर्षाधायकरसनिष्ठगुणवत्. ३ शब्दगुणशालि. ४ अन्वर्था. ५ कामोद्दीपिका; पक्षे,–भस्मीकृतमदना. ६ वर्णितगौरीमाहात्म्या; पक्षे,–अलंकृता पार्वती यया. ७ गुणाढ्यकृतो ग्रन्थः. ८ जीवित्वम्. ९ शवाः. १० हे मधो. ११ आक्रोशं कुरु. १२ सर्वतः.

१ कुमुदवच्छुभ्रा; पक्षे,–कुमुदो नाम कपिः शोभते यत्र. २ दिगन्तरे: पक्षे,–समुद्रमुल्लङ्घ्य लङ्कादेशे, ३ काव्यविशेषः; पक्षे,–सेतुबन्धः. ४ द्रुपदपुत्री. ५ यथा 'रावणः सीतां जहार' इति वाक्ये 'रावणः' इति पदं बिन्दुद्वन्द्व (विसर्ग) युक्तं कर्तृ, 'सीता' इति शिरोबिन्दु (अनुस्वार) युक्तं कर्म. एवमेव कर्तृकर्मपदे सर्वत्र भगवत इति निश्चयवन्तो जनाः.

प्रतिबोधितान्वयविदो ये येऽपि तेभ्यो नमः । ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरामुल्लेखैः कवयन्ति बिह्लणकविस्तेष्वेव संनह्यति ॥ २९ ॥

### भट्टारहरिचन्द्रः

[1]पदबन्धोज्ज्वलो [2]हारी कृत[3]वर्णक्रमस्थितिः । भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ ३० ॥

### भवभूतिः

सुकविद्वितयं मन्ये निखिलेऽपि महीतले । भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥ ३१ ॥ [4]भवभूतेः संबन्धाद्[5]भूधरभूरेव [6]भारती भाति । [7]एतत्कृतकारुण्ये किमन्यथा रोदिति [8]ग्रावा ॥ ३२ ॥ रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य । पयोधरस्येव हिमाद्रिजायाः परं विभूषा भवभूतिरेव ॥ ३३ ॥

### भासः

[9]सूत्रधारकृतारम्भैर्नाटकैर्[10]बहुभूमिकैः । स[11]पताकैर्यशो लेभे भासो देवकुलैरिव ॥ ३४ ॥

### मयूरः

तावत्कविविहंगानां ध्वनिर्लोकेषु शस्यते । यावन्नो विशति श्रोत्रे मयूरमधुरध्वनिः ॥ ३५ ॥ दर्पं कविभुजंगानां गता श्रवणगोचरम् । विषविद्येव मायूरी मायूरी वाङ्निकृन्तति ॥३६॥

### मातङ्गदिवाकरः

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः । श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥ ३७ ॥

### मुरारिः

[12]भवभूतिमनादृत्य निर्वाणमतिना मया । [13]मुरारिपदचिन्तायामिदमाधीयते मनः ॥ ३८ ॥ मुरारिपदभक्तिश्चेत्तदा [14]माघे रतिं कुरु । मुरारिपदभक्तिश्चेत्तदा [15]माऽघे रतिं कुरु ॥ ३९ ॥ देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति [16]मन्थाचलः ॥ ४० ॥

### रत्नखेटदीक्षितः

विपश्चिताम[17]पश्चिमे विवादकेलिनिश्चले सपत्नजित्ययत्नतस्तु रत्नखेटदीक्षिते । बृहस्पतिः क्व जल्पति प्रसर्पति क्व सर्पराड[1]संमुखस्तु षण्मुखः सुदुर्मुखश्चतुर्मुखः ॥ ४१ ॥

### राजशेखरः

बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् । स्थितः पुनर्यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ ४२ ॥ पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः । भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ४३ ॥

### वाल्मीकिः

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् । चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥ ४४ ॥ स[2]दूषणापि निर्दोषा स[3]खरापि सुकोमला । नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ ४५ ॥ योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः । वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥ ४६ ॥ लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां [4]पुनराद्यानां वाचमर्थोऽनुधावति ॥ ४७ ॥ आदिकवी चतुरास्यौ कमलजवल्मीकजौ वन्दे । लोकश्लोकविधात्रोर्ययोर्भिदा [5]लेशमात्रेण ॥ ४८ ॥ तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् । सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥ ४९ ॥ [6]विहितघनालंकारं वि[7]चित्रवर्णावलीमयस्फुरणम् । शक्रायुधमिव [8]वक्रं वल्मीकभुवं मुनिं नौमि ॥ ५० ॥ सति काकुत्स्थकुलोन्नतिकारिणि रामायणेऽपि किं काव्यम् । रोहति कुल्या गङ्गापूरे किं बहुरसे वहति ॥ ५१ ॥ भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्वादित्रप्रथमध्वनिर्विजयते [9]वल्मीकजन्मा मुनिः । पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किमप्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ ५२ ॥

### विजया

सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ । या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥ ५३ ॥

### विज्जका

नीलोत्पलदलश्यामां विज्जकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ ५४ ॥

---

१ सुप्तिङन्ताद्यक्षरसमूहः; पक्षे,-चरणः. २ मनोहरः; पक्षे,-मुक्ताहारैर्युक्तः. ३ अक्षराणि; पक्षे,-ब्राह्मणक्षत्रियादिः. ४ शिवैश्वर्यस्य. ५ नगेन्द्रकन्या. ६ सरस्वती. ७ भवभूतिकृते करुणारसप्रधाने नाटके. उत्तररामचरित इत्यर्थः. ८ 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' इति पद्ये. ९ नाटकाचार्यः; पक्षे,-वास्तुविद्याज्ञाता. १० प्रस्तावना; पक्षे,-अट्टालादिगृहावयवविशेषः. ११ नाटकावयवविशेषः; पक्षे,-ध्वजः. १२ शिवैश्वर्यम्; पक्षे,-एतन्नामानं कविम्. १३ विष्णुः; पक्षे,-कविविशेषः. १४ माघकाव्ये. १५ अघे पातके मा प्रीतिं कुर्वित्यर्थः. १६ मन्दराद्रिः. १७ पूर्व इत्यर्थः.

१ वासुकिः २ दूषणो राक्षसविशेषः; पक्षे,-काव्यदोषाः. ३ खरो राक्षसविशेषः; पक्षे,-कर्कशत्वम्. ४ वाल्मीक्यादीनाम्. ५ ले लकारे शकारमात्रयोगेण लोकश्लोकयोर्भेदः; पक्षे,-किंचिन्मात्रम्. ६ विहिता घना बहवोऽलंकारा उपमादयो येन तम्; पक्षे,-विहितं घनानां मेघानामलंकरणं येन तम्. ७ विचित्रा वर्णानामक्षराणां यावली पङ्क्तिस्तत्प्रचुरं स्फुरणं स्फूर्तिर्यस्य तम्; पक्षे,-वर्णा नीलपीतादयस्तत्पाङ्क्तिविकारः स्फुरणमुत्पत्तिर्यस्य तम्. ८ वक्रोक्तिकुशलम्; पक्षे,-यथाश्रुतम्. ९ वाल्मीकिम्; पक्षे,-वल्मीकाज्जातम्. इन्द्रधनुषोऽपि तत एवोत्पत्तिरिति लौकिकम्. 'वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य' इति कालिदासः.

### व्यासः

नमः सर्वविदे तस्मै व्यासाय कविवेधसे । चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ५५ ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान्बाद-रायणः ॥ ५६ ॥ श्रवणाञ्जलिपुटपेयं विरचितवान् भारता-ख्यममृतं यः । तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे ॥ ५७ ॥ व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे । भूषणतयैव संज्ञां यदङ्कितां भारती वहति ॥ ५८ ॥

### शाकल्लमल्लः

एकोऽभूत्पुलिनात्ततस्तु नलिनाच्चान्योऽपि नोकोर-भूत्राच्यास्ते त्रय एव दिव्यकवयो दीव्यन्तु देव्या गिरा । अर्वाचो यदि गद्यपद्यरचनाचातुर्यवागुद्धतास्तान्सर्वानतिशय्य खेलतितरां शाकल्लमल्लः कविः ॥ ५९ ॥

### सातवाहनः

अविनाशिनमग्राम्यमकरोत्सातवाहनः । विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥ ६० ॥

### सुदर्शनः

न मुग्धदयिताधरे न विषभाजि रत्नाकरे न राहुमुख-कोटरे न किल तार्क्ष्यपक्षान्तरे । सुदर्शनकवीश्वरे रसिकचक्र-चूडामणौ गुणौकसि सुधां बुधास्त्यजत सान्द्र-चन्द्रप्रभम् ॥ ६१ ॥

### सुबन्धुः

कवीनामगलद्दर्पो नूनं वासवदत्तया । शक्त्येव पाण्डु-पुत्राणां गतया कर्णगोचरम् ॥ ६२ ॥

### कविवृन्दम्

उपमा कालिदासस्य भारवेरर्थगौरवम् । दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ ६३ ॥ माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे । स्मरन्तो भारवेरेव कवयः कपयो यथा ॥ ६४ ॥ श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः । त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ ६५ ॥ प्राचेतसव्यासपराशराद्याः प्राच्यः कवीन्द्रा जगदश्चितास्ते । गोष्ठी नवीनापि महाकवीनां पूज्या गुणैर्भुवनोपकर्त्री ॥ ६६ ॥ धन्वन्तरिक्षपणकामर-सिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः । ख्यातो वराहमि-हिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ ६७ ॥ यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः । हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः केषां नैषा कथय कविता-कामिनी कौतुकाय ॥ ६८ ॥ भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेण्ठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः । दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती भगवती के कस्य सर्वेऽपि ते ॥ ६९ ॥ वाचः पल्लवयत्युमापतिधरः संदर्भ-शुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूह-द्रुतेः । शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयीकविक्ष्मापतिः ॥ ७० ॥ माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः । श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥ ७१ ॥

---

## कुकविनिन्दा

अप्रगल्भाः पदन्यासे जननीरागहेतवः । सन्त्येके बहुलालापाः कवयो बालका इव ॥ १ ॥ कविभिर्नृपसेवासु वित्तालंकारकारिणी । वाणी वेश्येव लोभेन परोपकरणीकृता ॥ २ ॥ अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः । अना-ख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥ ३ ॥ प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः । कोकिला इव जायन्ते वाचालाः कामकारिणः ॥ ४ ॥ किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी । कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ॥ ५ ॥ किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः । परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ६ ॥ मुखमात्रेण काव्यस्य करोत्यहृदयो जनः । छायामच्छामपि श्यामां राहुस्तारापतेरिव ॥ ७ ॥ श्लोकार्थस्वादकाले तु शब्दोत्पत्तिविचिन्तकाः । नीवीविमोक्षवेलायां वस्त्रमौल्यवि-चिन्तकाः ॥ ८ ॥ अधिभिल्लपल्लिगल्लं स्याद्वल्लवपल्लवोऽपि वा-चालः । नागरनरवरपरिषदि कस्य मुखादक्षरं क्षरति ॥ ९ ॥ गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं न चार्थस्य । रसिक-त्वेनाकुलिता वेश्यापतयः कुकवयश्च ॥ १० ॥ दुर्जनहुताश-तप्तं काव्यसुवर्णं विशुद्धिमायाति । दर्शयितव्यं तस्मान्मत्सरि-मनसः प्रयत्नेन ॥ ११ ॥ कविरनुहरति च्छायां पदमेकं पादमेकमर्धं वा । सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तस्मै ॥ १२ ॥ विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न

---

१ व्यासः. २ भारतचिह्निताम्. ३ व्यासः. ४ ब्रह्मदेवः. ५ वाल्मीकिः. ६ चिरस्थायिनम्; पक्षे,-नाशं न गच्छन्तम्. ७ मात्रा-छन्दादि; पक्षे,-मूल्यवन्तम्. ८ ग्रन्थविशेषः; पक्षे,-भाण्डागारम्. ९ एतन्नाम्ना प्रबन्धेन; पक्षे-इंद्रदत्तया. १० इन्द्रियविशेषम्; पक्षे;-कुरुसेनानायकः.

१ कविविशेषः. २ सुप्तिङन्तादि; पक्षे,-अङ्घ्रिः. ३ जनानां नीरागो विरसता तस्य हेतवः; पक्षे,-जनन्या मातू रागहेतवः प्रीतिहेतुभूताः. ४ बहुला आलापा येषाम्; पक्षे,-बह्वी या लाला तां पिबन्ति ते. ५ वर्णान्तरपरिवर्तनेन. ६ गोपनैः. ७ रक्ततया; पक्षे,-कोपेन. ८ चालयति. ९ दुःशब्दम्. १० इन्द्रवज्रादि; पक्षे,-शीलम्. ११ वाच्यस्य; पक्षे,-द्रव्यस्य. १२ जाराः.

मौर्ख्ये स्वे । निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ॥ १३ ॥ अतिरमणीये काव्ये पिशुनोऽन्वेषयति दूषणान्येव । अतिरमणीये वपुषि व्रणमेव हि मक्षिकानिकरः ॥ १४ ॥ बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम् । कविमाणवका दूतीव्याख्यातमधीयते भावम् ॥ १५ ॥ द्राघीयसा[1] धार्ष्ट्यगुणेन युक्ताः कैः कैरपूर्वैः परकाव्यखण्डैः । आडम्बरं[2] ये वचसां वहन्ति ते केऽपि कन्थाकवयो जयन्ति ॥ १६ ॥ कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान्खलस्य । अवेक्षते केलिवनं प्रविष्टः क्रमेलकः[3] कण्टकजालमेव ॥ १७ ॥ साहित्य[4]पाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्राः । यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥ १८ ॥ गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः क्वापि कवीश्वराणाम् । रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ १९ ॥ दैवीर्गिरः केऽपि कृतार्थयन्ति ताः कुण्ठयन्त्येव पुनर्विमूढाः । या विप्रुषः शुक्तिमुखेषु दैव्यस्ता एव मुक्ता न तु चातकेषु ॥ २० ॥ परिश्रमज्ञं जनमन्तरेण मौनिव्रतं बिभ्रति वाग्मिनोऽपि । वाचंयमाः सन्ति विना वसन्तं पुंस्कोकिलाः पञ्चमचञ्चवोऽपि ॥ २१ ॥ काव्यं किरोषि किमु ते सुहृदो न सन्ति ये त्वामुदीर्णपवनं न निवारयन्ति । गव्यं घृतं पिब निवातगृहं प्रविश्य वाताधिका हि पुरुषाः कवयो भवन्ति ॥ २२ ॥ यः सत्पदस्थमिह काव्यमधु प्रसन्नं मुष्णन्परस्य तनुते निजपद्यमध्ये । अस्थानदोषजनितेव पिपीलिकाली काली विभाति लिखिताक्षरपङ्क्तिरस्य ॥ २३ ॥ हठादाकृष्टानां कतिपयपदानां रचयिता जनः स्पर्धालुश्चेदहह कविना वश्यवचसा । भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ २४ ॥ स्तुवद्ध्वनिवर्तके सति हरौ कविः सूक्तिभिः करोति वरवर्णिनीचरितवर्णनं गर्हितम् । अनीतिरवनीपतिर्बत शुनीतनुं मौक्तिकैर्विभूषयति देवतामुकुटभागयोग्यैर्यथा ॥ २५ ॥ श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीं कष्टं हा कवयः कदर्यकुटिलक्ष्मा[5]पालसात्कुर्वते । दूरोपाहृतसौरसैन्धव[6]पयो देवाभिषेकोचितं संसेके विनियुञ्जते सुमतयः शाखालवालस्य किम् ॥ २६ ॥ लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्यामराः । अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां वृकाः सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति सालावृकाः ॥ २७ ॥ स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत् । तद्यूयं कवयो वयं वयमिति प्रस्तावनाहुंकृतिस्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः ॥ २८ ॥ स्वर्गानर्गलनिर्गलत्सुरसरित्पाथःप्रपातप्रथाप्रत्याख्यानपटीयसापि वचसा जिह्रेति जिह्वेह नः । एकद्व्यक्षरकष्टपिष्टरचनादुर्वारगर्वग्रहाः कन्थामात्रकुविन्दकाः कवयितुं सज्जन्ति लज्जामुचः ॥ २९ ॥ यः स्यात्केवललक्ष्यलक्षणरतो नो तर्कसंपर्कभृन्नालंकारविचारचारुधिषणः काव्यज्ञशिक्षोज्झितः । तस्माच्चेद्रसशालि काव्यमुदयेदेकान्ततः सुन्दरं प्रासादो धवलस्तदा क्षितिपते काकस्य कार्ष्ण्याद्भवेत् ॥ ३० ॥

## पण्डितप्रशंसा

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि । निरस्तपादपे देशे एरण्डोऽपि द्रुमायते[1] ॥ २ ॥ किं कुलेन विशालेन[2] विद्याहीनस्य देहिनः । अकुलीनोऽपि विद्यावान्देवैरपि स पूज्यते[3] ॥ ३ ॥ रोहणं सूक्तिरत्नानां वन्दे वृन्दं विपश्चिताम् । यन्मध्यपतितो नीचः काचोऽप्युच्चैर्महीयते ॥ ४ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । नहि वन्ध्या विजानाति गुर्वीं[4] प्रसववेदनाम्[5] ॥ ५ ॥ प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ६ ॥ विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ७ ॥ अलंकरोति यः श्लोकं शुक एव न मध्यमः । अलं[6] करोति यः श्लोकं शुक[7] एव नमध्यमः ॥ ८ ॥ सदोष[8]मपि निर्दोषं भवत्यग्रे विपश्चितः । रामस्ये[9]वार्जुन[10]वपुः कवेश्च सरसं वचः ॥ ९ ॥ गुणदोषौ बुधो गृह्णन्[11]निन्दुक्ष्वेडा[12]विवेश्वरः । शिरसा श्लाघते[13] पूर्वं परं कण्ठे नियच्छति[14] ॥ १० ॥ स्थिरा शैली[15] गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥ ११ ॥ वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् । हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा ॥ १२ ॥ विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः । याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ १३ ॥ अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् ।

१ अतिदीर्घेण. २ प्रागल्भ्यम्. ३ उष्ट्रः. ४ अलंकारादिप्रतिपादकशास्त्रसागरमन्थनोद्भवम्. ५ राजवर्णनपराम्. ६ गङ्गाजलम्.

१ वृक्षवदाचरति. २ विस्तीर्णेन. ३ पूज्यते. ४ महतीम्. ५ प्रसवकाले या वेदना ताम्. ६ निषेधति. तिरस्करोतीत्यर्थः. ७ नमध्यमः शुको नकारो मध्ये यस्यैवंविधः शुनकः श्वा इति भावः. ८ दोषसहितम; पक्षे,-दोषो हस्तस्तत्सहितम्. ९ परशुरामस्य. १० सहस्रार्जुनशरीरम्. ११ जानन्; पक्षे,-उपाददानः. १२ गरलम्. १३ अभिनन्दयति; पक्षे,-धारयति. १४ निरुणद्धि वाचा कण्ठाद्बहिर्नोद्घाटयतीत्यर्थः; पक्षे,-स्थापयति. १५ रीतिः.

अव्ययेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥ १४ ॥ स एव रसिको लोके श्रुत्वा काव्यं परैः कृतम् । उत्पद्यते च युगपद्वदनेऽक्ष्णोश्च यस्य वाः ॥ १५ ॥ श्रुते महाकवेः काव्ये नयने वदने च वाः । युगपद्यस्य नोदेति स वृषो महिषोऽथवा ॥ १६ ॥ विद्या विनयोपेता हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥ १७ ॥ व्याख्यातुमेव केचित्कुशलाः शास्त्रं प्रयोक्तुमलमन्ये । उपनामयति करोऽन्नं रसांस्तु जिह्वैव जानाति ॥ १८ ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामं च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ १९ ॥ कवीश्वराणां वचसां विनोदैर्नन्दन्ति विद्यानिधयो न चान्ये । चन्द्रोपला एव करैर्हिमांशोर्मध्ये शिलानां सरसा भवन्ति ॥ २० ॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ २१ ॥ न पण्डिताः साहसिका भवन्ति श्रुत्वापि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ २२ ॥ इह तुरगशतैः प्रयान्तु मूढा धनरहितास्तु बुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्न समत्वमेति हंसैः ॥ २३ ॥ सन्तश्चेदिह गुणबिन्दवो बुधस्तान्संतुष्टः कवलयति स्फुटेऽपि दोषे । संयुक्तानपि पयसः कणान्विचिन्वन्नम्भस्तो ग्रसति हि मञ्जु मल्लिकाक्षः ॥ २४ ॥ अन्या जगद्धितमयी मनसः प्रवृत्तिरन्यैव कापि रचना वचनावलीनाम् । लोकोत्तरा च कृतिराकृतिरङ्गहृद्या विद्यावतां सकलमेव गिरां दवीयः ॥ २५ ॥ अधिगतपरमार्थान्पण्डितान्माऽवमंस्थास्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि । मदमिलितमिलिन्दश्यामगण्डस्थलानां न भवति बिसतन्तुर्वारणं वारणानाम् ॥ २६ ॥ शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः । तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः पातिताः ॥ २७ ॥ हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् । कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ २८ ॥

---

## कुपण्डितनिन्दा

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १ ॥ मूर्खचिह्नानि षडिति गर्वो दुर्वचनं मुखे । विरोधी विषवादी च कृत्याकृत्यं न मन्यते ॥ २ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥ ३ ॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ ४ ॥ वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह । न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि ॥ ५ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ६ ॥ अन्तःसारविहीनस्य सहायः किं करिष्यति । मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ ७ ॥ यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः । न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ ८ ॥ रूपयौवनसंपन्ना विशालकुलसंभवाः । विद्याहीना न शोभन्ते निर्गन्धाः किंशुका इव ॥ ९ ॥ विद्याविधिविहीनेन किं कुलीनेन देहिनाम् । अकुलीनोऽपि यो विद्वान्दैवतैरपि पूज्यते ॥ १० ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ ११ ॥ ज्ञानविद्याविहीनस्य विद्याजालं निरर्थकम् । कण्ठसूत्रं विना नारी ह्यनेकाभरणैर्युता ॥ १२ ॥ मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति हि । कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ॥ १३ ॥ माता शत्रुः पिता वैरी येन बालो न पाठितः । न शोभते सभामध्ये हंसमध्ये बको यथा ॥ १४ ॥ पुस्तकेषु च नाधीतं नाधीतं गुरुसंनिधौ । न शोभते सभामध्ये हंसमध्ये बको यथा ॥ १५ ॥ विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा । विद्याहीनो नरः प्राज्ञः सभायां नैव शोभते ॥ १६ ॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः । अन्तरे तमसां दीपः शोभते नार्कतेजसाम् ॥ १७ ॥ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ १८ ॥ पदद्वयस्य संधानं कर्तुमप्रतिभाः खलाः । तथापि परकाव्येषु दुष्करेष्वप्यसंभ्रमाः ॥ १९ ॥ क्व दोषोऽत्र मया लभ्य इति संचिन्त्य चेतसा । खलः काव्येषु साधूनां श्रवणाय प्रवर्तते ॥ २० ॥ उपपत्तिभिरम्लाना नोपदेशैः कदर्थिताः । स्वसंवेदनसंवेद्यसाराः सहृदयोक्तयः

---

१ अव्ययेभ्यः. अव्ययानामनेकार्थत्वात्; पक्षे,–व्ययरहितेभ्यः. कृपणेभ्य इति यावत्. २ उदकम्; पक्षे,–'वाः वाः' इति लौकिकशब्दः. ३ नयने वाः सलिलम्. आनन्दाश्रुजलमित्यर्थः. वदने च वाः 'वाहवा' इति प्रशंसाबोधको देशी शब्दः. ४ सैकतगतैः. ५ राजहंसः. ६ लोकहितप्रचुरा. ७ अतिदूरम्. ८ अवमानं मा कुरु. ९ रोधं न कुरुते. १० गजानाम्. ११ शास्त्रसंस्कारेण शुद्धा ये शब्दास्तैः सुन्दरा गिरो येषां ते. १२ पण्डिताः. १३ देशे. १४ मौर्ख्यम्. १५ मूल्यतः १६ अचिन्त्यम्. १७ सुखम्. १८ दीयमानम्. १९ निरन्तरम्.

१ त्यजत. २ स्पर्धां करोति. ३ विष्ठा. ४ सुरेन्द्राणां भवनेषु, स्वर्गादिलोकेष्वपीति भावः. ५ नेतव्यानेतव्यवस्तुसंबन्धी राजग्राह्यो भागः.

॥ २१ ॥ केषांचिद्वाचि शुकवत्परेषां हृदि मूकवत् । कस्या-प्या हृदयाद्वक्त्रे वल्गु वल्गन्ति सूक्तयः ॥ २२ ॥ बहूनि नरशीर्षाणि लोमशानि बृहन्ति च । ग्रीवासु प्रतिबद्धानि किं चित्तेषु सकर्णकम् ॥ २३ ॥ कवीनां महतां सूक्तैर्गूढार्थान्तर-सूचिभिः । विध्यमानश्रुतेर्मा भूद्दुर्जनस्य कथं व्यथा ॥ २४ ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलव-दुर्विदग्धं[1] ब्रह्मापि नरं न रञ्जयति[2] ॥ २५ ॥ गुणिगणगण-नारम्भे न पतति कठिनी[3] सुसंभ्रमाद्यस्य ॥ तेनाम्बा यदि सुतिनी[4] वद वन्ध्या कीदृशी भवति ॥ २६ ॥ निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि । पश्य धनुर्गुण-शून्यं निर्जीवं यदिह शंसन्ति ॥ २७ ॥ अन्तर्भूतो निवसति जडे[5] जडः[6] शिशिरमहसि हरिण इव । अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ २८ ॥ जीवित इव कण्ठगते सूक्ते दुःखासिका कवेस्तावत् । नयनविकासविधायी सचेत-नाभ्यागमो यावत् ॥ २९ ॥ साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाण[7]हीनः । तृणं न खादन्नपि जीवमान-स्तद्भागधेयं[8] परमं पशूनाम् ॥ ३० ॥ जडेषु जातप्रतिभाभि-मानाः खलाः कवीन्द्रोक्तिषु के वराकाः । प्रासाग्निनिर्वापण-गर्वमम्बु रत्नाङ्कुरज्योतिषि किं करोति ॥ ३१ ॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ ३२ ॥ मुक्ताफलैः किं मृगपक्षिणां च मृष्टान्नपानं किमु गर्दभानाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ ३३ ॥ अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् । ते गारुडीयाननधीत्य मन्त्रा-न्हालाहलास्वादनमारभन्ते ॥ ३४ ॥ अवद्यजम्बाल[9]गवेष-णाय कृतोद्यमानां खलसैरिभाणाम् । कवीन्द्रवाङ्निर्जरनिर्झ-रिण्यां संजायते व्यर्थमनोरथत्वम् ॥ ३५ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटापि शोभते न नेत्रहीना कनकैरलंकृता ॥ ३६ ॥ व्यालाश्च राहुश्च सुधाप्रसादाज्जिह्वाशिरोनिग्रहमुग्रमापुः । इतीव भीताः पिशुना भवन्ति पराङ्मुखाः काव्यरसामृतेषु ॥ ३७ ॥ सरस्वतीमातुरभूच्चिरं न यः कवित्वपाण्डित्यघन-स्तनंधयः । कथं स सर्वाङ्गमनाससौष्ठवो दिनाद्दिनं प्रौढि-विशेषमश्नुते ॥ ३८ ॥ वितीर्णशिक्षा इव हृत्पदस्थसरस्वती-वाहनराजहंसैः ये क्षीरनीरप्रविभागदक्षा विवेकिनस्ते कव-यो जयन्ति ॥ ३९ ॥ काव्यामृतं दुर्जनराहुनीतं प्राप्यं भवेन्नो सुमनोजनस्य । सच्चक्रमव्याजविराजमानतैक्ष्ण्यप्रकर्षं यदि नाम न स्यात् ॥ ४० ॥ विना न साहित्यविदापरत्र गुणः कथंचित्प्रथते कवीनाम् । आलम्बते तत्क्षणमम्भसीव विस्ता-रमन्यत्र न तैलबिन्दुः ॥ ४१ ॥ अत्यर्थवक्रत्वमनर्थकं या शून्या तु सर्वान्यगुणैर्व्यनक्ति । अस्पृश्यतादूषितया तया किं तुच्छश्वपुच्छच्छटयेव वाचा ॥ ४२ ॥ नीचस्तनोत्वश्रु निता-न्तकार्ष्ण्यं पुष्णातु साधर्म्यभृदञ्जनेन । विना तु जायेत कथं तदीयक्षोदेन सारस्वतदृक्प्रसादः ॥ ४३ ॥ विविनक्ति न बुद्धिदुर्विधः[1] स्वयमेव स्वहितं पृथग्जनः[2] । यदुदीरितम-प्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ४४ ॥ विदुरे-ष्यदपाय[3]मात्मना परतः श्रद्दधतेऽथ वा बुधाः । न परो-पहितं न च स्वतः प्रमिमीते[4]ऽनुभवादृतेऽल्पधीः ॥ ४५ ॥ अथ वाभिनिविष्टबुद्धिषु[5] व्रजति व्यर्थकतां सुभाषितम् । रविरागिषु शीतरोचिषः[6] करजालं कमलाकरेष्विव ॥ ४६ ॥ इतरकर्मफलानि यदृच्छया[7] विलिख तानि सहे चतुरानन । अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥ ४७॥ कतिचिदुद्धतनिर्भरमत्सराः । कतिचिदात्मवचः-स्तुतिशालिनः । अहह केऽपि निरक्षरकुक्षयस्तदिह संप्रति कं प्रति मे श्रमः ॥ ४८ ॥ ये के विचित्ररसशालिषु सत्कवीनां सूक्तेषु कर्णपथगामिषु नाद्रियन्ते । ते मालतीपरिमलेष्वपि कन्दलत्सु नासापुटं करतलेन पिदध्युरेव ॥ ४९ ॥ मद्याणि मा कुरु विषादमनादरेण मात्सर्यमग्नमनसां सहसा खलानाम् । काव्यारविन्दमकरन्दमधुव्रतानामास्येषु धास्यसितमां कियतो विलासान् ॥ ५० ॥ चेतःप्रसादजननं विबुधोत्तमानामा-नन्दि सर्वरससंयुक्तमतिप्रसन्नम् । काव्यं खलस्य न करोति हृदि प्रतिष्ठां पीयूषदानमिव वक्रविवर्ति राहोः ॥ ५१ ॥ बद्ध्वा यदर्पणरसेन विमर्दपूर्वमर्थान्कथं झटिति तान्प्रकृतान्न दद्युः । चौरा इवातिमृदवो महतां कवीनामर्थान्तराण्यपि हठाद्धि-तरन्ति शब्दाः ॥ ५२ ॥ अर्थोऽस्ति चेन्न पदशुद्धिरथास्ति सापि नो रीतिरस्ति यदि सा घटना कुतस्त्या । साप्यस्ति चेन्न नववक्रगतिस्तदेतद्व्यर्थं विना रसमहो गहनं कवित्वम् ॥ ५३ ॥ श्लाघ्यैव वक्रिमगतिर्घनदार्ढ्यबन्धोत्तस्याः कवि-प्रवरसूक्तिधनुर्लतायाः । कर्णान्तिकप्रणयभाजि गुणे यदीये चेतांसि मत्सरवतां झटिति त्रुटन्ति ॥ ५४ ॥ अरण्य-रुदितं कृतं शवशरीर[8]मुद्वर्तितं[9] स्थले[10]ऽब्जमवरोपितं सुचिर-मूषरे[11] वर्षितम् । श्वपुच्छमवनामितं[12] बधिरकर्णजापः[13] कृतो धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ ५५ ॥ प्रसह्य[14]

१ विकृतिभावं गतम्; २ रञ्जयितुमसमर्थो भवति. ३ खटिका 'खडू' इति लोके, न पतति सद्यो यस्य नाम न लिखति. ४ पुत्रिणी. ५ मूर्खे; पक्षे,-जलरूपत्वात्. ६ मूर्खः; पक्षे,-पशुत्वात्. ७ शृङ्गम्. ८ दैवम्. ९ कर्दमः.

१ बुद्धिशून्यः २ पामरजनः. ३ आगामिनम्. ४ जानाति. ५ दुराग्रहग्रस्तचित्तेषु ६ शीतभानोः. ७ स्वेच्छया. ८ प्रेतशरीरम् ९ उद्वर्तनं यवगोधूमादिचूर्णेन मलापकर्षणं तेन सुगन्धितम्. १० निर्जलप्रदेशे ११ क्षारमृद्भूमौ. १२ ऋजुतासंपादनाय. नम्रीकृतम्. १३ कर्णमन्त्रः. १४ बलात्कारं कृत्वा.

मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् । भुजंगमपि कोपितं शिरसि पुष्पवद्धारयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५६ ॥ लभेत सिकतासु तैलमपि यत्नतः पीडयन्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः । कदाचिदपि पर्यटञ्छशविषाणमासादयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५७ ॥ यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः । यदा किंचित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ५८ ॥ शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् । अधोऽधो गङ्गेयं पदमुपगता स्तोकमधुना विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ५९ ॥ परश्लोकान्स्तोकाननुदिवसमभ्यस्य ननु ये चतुष्पादीं कुर्युर्बहव इह ते सन्ति कवयः । अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः सुहृद्या वैशद्यं दधति किल केषांचन गिरः ॥६०॥ वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा । भवति च पुनर्भूयान्भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥ ६१ ॥ अविनयभुवामज्ञानानां शमाय भवन्नपि प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये । फणिभयभृतामस्तूच्छेदक्षमस्तमसामसौ विषधरफणारत्नालोको भयं तु भृशायते ॥ ६२ ॥ व्यासादीन्कविपुंगवान्नुचितैर्वाक्यैः सलीलं सहन्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ । काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैर्येद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ६३ ॥ ये संसत्सु विवादिनः परयशःशूलेन शल्याकुलाः कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद्गुणाच्छादनम् । तेषां रोषकषायितोदरदृशां कोपोष्णनिःश्वासिनां दीप्ता रत्नशिखेव कृष्णफणिनां विद्या जनोद्वेजिनी ॥ ६४ ॥ ग्रीवास्तम्भभृतः परोन्नतिकथामात्रे शिरःशूलिनः सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः । अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः कष्टा नूनमपण्डितस्य विकृतिर्भीमज्वरारम्भभूः ॥ ६५ ॥ मूर्खत्वं

१ ज्ञानलेशशून्यत्वेन विपरीतार्थग्राही. २ वालुकासु. ३ मरीचिकासु. ४ शृङ्गम्. ५ गजः. ६ सगर्वम्. ७ शर्वसंबन्धि. ८ मस्तकात्. ९ ददाति. १० मूर्खे. ११ नाशयति. १२ महान्. १३ बिम्बग्रहणे. १४ मृत्पिण्डः. १५ कविश्रेष्ठान्. १६ अयोग्यैः. १७ रोषेण कषायितं ताम्रमुदरं गर्भो यस्या एवंविधा दृग्येषाम्. १८ कृष्णसर्पाणाम्. १९ त्रासदात्री. २० ग्रीवास्तम्भं धारयतः. २१ परोत्कर्षः. २२ मूर्खस्य. २३ विकारः. २४ दारुणज्वरारम्भकहेतुः.

सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणा निश्चिन्तो बहुभोजनोऽतिमुखरो रात्रिंदिवं स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमाने समः प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ६६ ॥ व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते छेत्तुं वज्रमणीञ्शिरीषकुसुमप्रान्तेन संनह्यते । माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥ ६७ ॥ शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ६८ ॥ तोयं निर्मथितं घृताय मधुने निष्पीडितः प्रस्तरः पानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोकिता । दुग्धा सेयमचेतनेन जरती दुग्धाशया सूकरी कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ६९ ॥ काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुर्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः । कासारेऽपि विकासिपङ्कजचये खेलन्मराले पुनः क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ॥ ७० ॥ विद्ये हृद्यतरासि किं नु कृपणासंभावनैर्लज्जसे सन्त्यन्ये तव तोषणाहितधियो धन्या वदान्या भुवि । कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता षण्ढानां हृदयेऽपि यत्प्रणयते नानङ्गरागोदयः ॥ ७१ ॥ मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः श्रीमच्छङ्करभाष्यतो भगवती गीताप्यधीता न यैः । सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वाऽपि किंचित्ततो भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते ॥ ७२ ॥ पेटीचीवरपट्टवस्त्रपटलश्वेतातपत्रच्छटाशाटीहारकघोटकस्फुटघटाटोपाय तुभ्यं नमः । येनानक्षरकुक्षयोऽपि जगतः कुर्वन्ति सर्वज्ञताभ्रान्तिं येन विना तु हास्यपदवीं सन्तोऽपि कष्टं गताः ॥ ७३ ॥ साकूतं निजसंविदेकविषयं तत्त्वं सचेता ब्रुवन्नग्रे नूनमबोधमोहितधियां हास्यत्वमायास्यति । तद्युक्तं विदुषो जनस्य जडवज्जोषं तु नामासितुं जात्यन्धं प्रतिरूपवर्णनविधौ कोऽयं वृथैवोद्यमः ॥ ७४ ॥ ये तावत्स्वगुणोपबृंहितधियस्तेषामरण्यं जगद्येऽप्येते कृतमत्सराः परगुणं स्वप्नेऽपि नेच्छन्ति ये । अन्येषामनुरागिणां क्वचिदपि स्निग्धं मनो निर्वृतावित्थं यान्तु तपोवनानि महतां सूक्तानि मन्येऽधुना ॥ ७५ ॥ यातास्ते रससारसंग्रहविधिं निष्पीड्य निष्पीड्य ये वाक्तत्त्वेक्षुलतां पुरा कतिपये तत्त्वस्पृशश्चक्रिरे । जायन्तेऽद्य यथायथं तु कवयस्ते

१ रोगवर्जितः. २ सर्पम्. ३ बिसम्. ४ हीरकादीन्. ५ संनद्धो भवति. ६ इच्छति. ७ अमृतस्राविभिः. ८ तीक्ष्ण.

तत्र संतन्वते येऽनुप्रासकठोरचित्रयमकश्लेषादिशल्कोच्चयम् ॥ ७६ ॥ [1]प्रादुःष्यात्पण्डितानां [2]कविवचसि कथं प्रत्नतूत्नत्वचिन्ता विद्येरन्यद्यव[3]द्यान्यभिजहति तथा गृह्णते स्युर्गुणाश्चेत् । अन्यस्त्वन्यप्रमाणः परमवतनुते छिद्यते तावता किं नायं रत्नस्य दोषो दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥ ७७ ॥

---

## छान्दसप्रशंसा

नाध्यापयिष्यन्नि[4]र्गमाञ्श्रमेणोपाध्यायलोका यदि शिष्यवर्गान् । निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त तदाभविष्यत् ॥ १ ॥

---

## छान्दसनिन्दा

आः कष्टमप्रहृष्टाः शिष्या अपि वित्तचापलाविष्टाः । अध्यापयन्ति वेदानादाय चिराय मासि मासि [5]भृतिम् ॥ १ ॥

---

## वैयाकरणप्रशंसा

वैयाकरणकि[6]रातादपशब्दमृगाः क्व यान्ति संत्र[7]स्ताः । [8]ज्योति[9]र्नट[10]विट[11]गायकभिषग्[12]गाननगह्वराणि यदि न स्युः ॥ १ ॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृ[13]च्छकृत् ॥ २ ॥ कृतदुरितनिराकरणं व्याकरणं चतुरधीरधीयानः । बुधगणगणनावसरे कनिष्ठिकायां परं जयति ॥३॥ [14]सूत्रं [15]पाणिनिबद्धं [16]कलयन्पुरुषः [17]समुद्वहति [18]सुदृशम् । [19]वर्णादीनां धर्मा[20]न्बुद्ध्वा [21]विधिवत्[22]प्रयुङ्क्तेऽसौ ॥ ४ ॥ [23]पातं जले [24]विष्णुपदापगाया [25]पातञ्जले चापि [26]नयेऽ[27]वगाहम् । [28]आचक्षते शुद्धिदमा[29] प्रसूतेरा[30] च क्षते रागमधोक्षजे च ॥ ५ ॥ नृणाम[31]नभ्यस्तफणाभृदीशगिरां [1]दुरापा [2]बुधराजगोष्ठी । [3]अबुद्धचापश्रुतिपद्धतीनां युद्धक्षमेवोद्धतयोद्धसार्था ॥ ६ ॥ नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते । कस्मिंश्चिदुक्ते तु पदे कथंचित्स्वैरं वपुः स्विद्यति [4]वेपते च ॥ ७ ॥ [5]शब्दशास्त्र[6]मनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे । बन्धुमिच्छति वने मदोत्कटं हस्तिनं [7]कमलनालतन्तुना ॥ ८ ॥

---

## वैयाकरणनिन्दा

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः — टिड्ढाणञ्द्वयसज्चुटूङसिङसोस्तिप्तस्झिसिप्थस्थमिब्वस्मस्ताहशिचष्टुनाष्टुरतइञ्शश्छोऽत्व्यचोऽन्त्यादिटि । लोपोव्योर्वलिवृद्धिरेचियचिभंदाधाघ्वदाप्छेचटेरित्य[8]ब्दानखिलान्न[9]यन्ति कतिचिच्छब्दान्पठन्तः [10]कटून् ॥ १ ॥ सूत्रैः पाणिनिनिर्मितैर्बहुतरैर्निष्पाद्य शब्दावलिं [11]वैकुण्ठस्तवमक्षमा रचयितुं मिथ्याश्रमाः शाब्दिकाः । पक्वान्नं विविधं [12]श्रमेण विविधापूपाज्यसूपान्वितं मन्दाग्नीन[13]नुरुन्धते मितबलानाघ्रातुमप्यक्षमान् ॥ २ ॥ कुप्वोःकःपौ च शेषोध्यसखि ससजुषोरुर्विरामोऽवसानं शश्छोऽटीत्यादिशब्दैः सदसि यदि [14]शठाः शाब्दिकाः पण्डिताः स्युः । तेषां को वापराधः कथयत सततं ये पठन्तीह थोन्[15]तत्ताथय्याथय्यथय्याधिगधिगधिगधिक्थय्यथय्येति शब्दान् ॥ ३ ॥

---

## नैयायिकप्रशंसा

अद्भुतस्[16]तर्कपाथोधिरगाधो यस्य वर्धकः । [17]अक्षपादोऽ[18]तमःस्पृष्टस्त्वकलङ्कः [19]कलानिधिः ॥ १ ॥ अपरीक्षितलक्षणप्रमाणैर[20]परामृष्टपदार्थसार्थतत्त्वैः । अवशीकृतजैत्र[21]युक्तिजालैरलमेतैरनधीततर्कविद्यैः ॥ २ ॥ [22]मोहं [23]रुणद्धि विमलीकुरुते च बुद्धिं [24]सूते च संस्कृतपदव्यवहारशक्तिम् । शास्त्रान्तराभ्यसनयोग्यतया [25]युनक्ति तर्कश्रमो न तनुते किमिहोपकारम् ॥ ३ ॥ ज्ञानाब्धि[26]रक्षिचरणः [27]कणभक्षकश्च श्रीपक्षिलोऽप्युदयनः स च वर्धमानः । गङ्गेश्वरः शशधरो

---

१ प्रादुर्भवेत्. २ काव्ये. ३ दोषाः. ४ वेदान्. ५ वेतनम्. ६ भिल्लः. ७ भीताः. ८ गणकाः. ९ नाट्यकाराः. १० जाराः. ११ वैद्याः. १२ गुहाः. १३ विष्ठा. १४ व्याकरणसूत्रम्; पक्षे,–कङ्कणम्. १५ पाणिनिना बद्धं रचितम्. पक्षे,–पाणौ हस्ते निबद्धम्. विवाहकाले सूत्रनिर्मिते कङ्कणे वधूवरयोर्हस्तयोर्बध्नन्तीति प्रसिद्धिः. १६ अर्थज्ञानपूर्वकं विचारयन्; पक्षे,–धारयन्. १७ सम्यग्धारयति; पक्षे,–सम्यगुद्वहति; पाणिग्रहणपूर्वकं स्वीकरोतीत्यर्थः. १८ शोभनां दृष्टिम्, शुद्धाशुद्धविवेचनशक्तिमित्यर्थः. पक्षे,–शोभना दृग्यस्या एतादृशीं स्त्रियम्. १९ अकारप्रभृतिवर्णादीनाम्; पक्षे,–ब्राह्मणवर्णादीनाम्. २० ज्ञात्वा. २१ यथाशास्त्रम्. २२ प्रयोगं करोति; पक्षे,–योजयति. २३ पतनम्. २४ गङ्गायाः. २५ पतञ्जलिनिर्मिते. २६ व्याकरणशास्त्रे. २७ मज्जनम्; पक्षे,–अभ्यासम्. २८ वदन्ति. २९ जननादारभ्य. ३० मरणान्तं च. ३१ अनधीतमहाभाष्याणाम्.

१ दुष्प्रापा. २ पण्डितराजसभा. ३ अज्ञातधनुर्वेदमार्गाणाम्. ४ कम्पते. ५ व्याकरणम्. ६ अध्ययनमकृत्वा. ७ बिसतन्तुना. ८ वर्षाणि. ९ यापयन्ति. १० कर्णकठोरान्. ११ विष्णुस्तवम्. १२ कृत्वेति शेषः. १३ अनुकुर्वन्ति. १४ धूर्ताः. १५ गायकानां तालशब्दानुकरणमेतत्. १६ तर्कसमुद्रः. १७ गौतमः; पक्षे,–क्षपां ददातीति क्षपादः, स न भवतीति तथाविधः; चन्द्र इत्यर्थः. १८ अज्ञानेन; पक्षे,–राहुणा. १९ कलानां निधिः; पक्षे,–चन्द्रः. २० अज्ञातपदार्थसमूहतत्त्वैः. २१ जययुक्ति. २२ अज्ञानम्. २३ रोधयति, नाशयतीत्यर्थः. २४ उत्पादयति. २५ योजयति. २६ गौतमः. २७ कणादः.

बहवश्च नव्या ग्रन्थैर्व्यरुन्धत इमे [1]हृदयान्धकारम् ॥ ४ ॥ प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः सारज्ञस्या-[2]प्यपरिकलितन्यायशास्त्रस्य पुंसः । वादारम्भे वदितुमनसो वाक्यमेकं सभायां [3]प्रौढा जिह्वा भवति कियतीं पश्य कष्टा-मवस्थाम् ॥ ५ ॥

## नैयायिकनिन्दा

परामृशन्तो लिङ्गानि व्यभिचारविचारकाः । तार्किका यदि विद्वांसो विटैः किमपराध्यते ॥ १ ॥ गुरोर्गिरः पञ्च-दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च। अमी समाघ्रात-वितर्कवादाः समागताः कुक्कुटपादमिश्राः ॥ २ ॥ कर्कश-तर्कविचारव्यग्रः किं वेत्ति काव्यहृदयानि । ग्राम्य इव कृषिविलग्नश्चञ्चलनयनावचोरहस्यानि ॥ ३ ॥ नैयायिकानां मलिनाम्बराणां जनुर्गतं रासभचिन्तयैव । तथापि वेश्यास्तन-संनिवेशस्तोतुः कवेः कोऽपि विशेष एव ॥ ४ ॥ न जिघ्र-[4]त्याम्नायं स्पृशति न [5]तदङ्गान्यपि सङ्कृत्पुराणं नादत्ते न गणयति किं च स्मृतिगणम् । पठ[6]ञ्छुष्कं तर्कं परपरिभवा-र्थोक्तिभिरसौ नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥ ५ ॥ प्रयत्नै[7]रस्तोकैः परिचितकुतर्कप्रकरणाः परं वाचोवश्यान्क-तिपयपदौघान्विदधतः । सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्न लज्जन्ते [8]मन्दाः स्वयमपि तु [9]जिह्रेति विबुधः ॥ ६ ॥ [10]कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः । प्रत्यक्षं न पुनाति नापहरते पापानि [11]पीलुच्छटाव्याप्तिर्नावति नैव पात्य-नुमितिर्नो पक्षता रक्षति ॥ ७ ॥ हेतुः कोऽपि [12]विशिष्टधी-रनुमितौ न [13]ज्ञानयुग्मं [14]मरुत्त्वाचो नेति च मोघवाद[15]मुखरा नैयायिकाश्चेद्बुधाः । मेषस्याण्डमियत्पलं [16]बलिभुजो दन्ताः कियन्तस्तथेत्येवं संततचिन्तनैः श्रमजुषो न स्युः कथं पण्डिताः ॥ ८ ॥ साधु व्याकरणं हिताय विशदं काव्यं पिकीगीतवन्मीमांसा श्रुतितत्परा तदनुगं सांख्यं सपातञ्जलम्। त्वं तु न्याय विशुद्धवैदिकविधिव्याकोपबौद्धागमव्याघाताय निगूढतर्कगहन क्कामोदमाधास्यसि ॥ ९ ॥ हे हे मित्र जिता मयातिबलिनो विप्रा धनं चार्जितं शेषेभ्यः शरयन्त्र-दानमपि सत्संपादितं भूरिशः । ग्रन्थाश्चापि कृताः सुतर्क-घटकाः शास्त्राणि संदूष्य वै सोऽहं तर्कविभूषणोऽत्र गहने धात्रा शृगालः कृतः ॥ १० ॥

## मीमांसकप्रशंसा

भगवदनभ्युपगमनं दैवतचैतन्यनि[1]ह्नवश्चैषाम् । कर्म-श्रद्धावर्धकतत्प्राधान्यप्रदर्शनायैव ॥ १ ॥ आगमरूपविचारि-ण्यधिकरणसहस्रशिक्षितविपक्षे । स्वामिनि जैमिनियोगिन्यु-परज्यति हृदयमस्मदीयमिदम् ॥ २ ॥ शबरकुमारिलगुरवो मण्डनभवदेव[2]पार्थसारथयः । अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते ॥ ३ ॥ नैयायिका वा ननु शाब्दिका वा [3]त्रयीशिरःसु श्रमशालिनो वा । [4]वादाहवे बिभ्रति जैमिनी-य[5]न्यायोपरोधे सति मौनमुद्राम् ॥ ४ ॥ आदौ धर्मे प्रमाणं विविधविधिमिदाशेषतां च प्रयुक्तिं पौर्वापर्याधिकारौ तदनु [6]बहुविधं चातिदेशं तथोहम् । बाधं तन्त्रं प्रसङ्गं नयमनय-शतैः सम्यगालोचयद्भ्यो भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥ ५ ॥

## मीमांसकनिन्दा

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वर्षीणां सेहिरे नैव सत्ताम् । चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं मन्य-मानाः ॥ १ ॥ मीमांसकाः कतिचिदत्र मिलन्ति वेदप्रामा-ण्यसाधनकृतोऽपि न तेऽभिवन्द्याः । उद्घोषितोऽप्युपनिषद्भि-[7]रशेषशेषी ब्रह्मैव नाभ्युपगतः पुरुषोत्तमो यैः ॥ २ ॥

## वैद्यप्रशंसा

गुरोरधीताखिलवैद्यविद्यः [8]पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ रागादिरोगान्सततानुषक्तानशेषकायप्रसृतान-शेषान् । [9]औत्सुक्य[10]मोहा[11]रतिदाञ्जघान योऽपूर्ववैद्याय नमो-ऽस्तु तस्मै ॥ २ ॥ अन्यानि शास्त्राणि विनोदमात्रं प्राप्तेषु वा तेषु न तैश्च किंचित् । चिकित्सितज्योतिषमन्त्रवादाः पदे पदे प्रत्ययमावहन्तिं ॥ ३ ॥ माबोधि वैद्यकमथापि महाम-येषु प्राप्तेषु यो भिषगिति प्रथितस्तमेव । [12]आकारयत्यखिल एव विशेषदर्शी लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ४ ॥ [13]मस्ते दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां

१ बुद्धेरज्ञानम्. २ अनभ्यस्त. ३ वक्ता. ४ वेदम्. ५ वेदाङ्गानि. ६ नीरसम् ७ बहुभिः. ८ मूर्खाः. ९ लज्जां प्राप्नोति. १० कर्मच्चिन्तनं ब्रह्मच्चिन्तनं च. ११ परमाणुसमुदायः. १२ व्याप्तिविशिष्टपक्षधर्मता-ज्ञानविशिष्टः. १३ पूर्वोक्तगतांशद्वयम्. १४ त्वगिन्द्रियप्रत्यक्षः. १५ जल्पकाः. १६ काकाः.

१ अपलापः. २ शास्त्रदीपिकाकर्ता पार्थसारथिमिश्रपण्डितः. ३ वेदत्रयी. ४ वादयुद्धे. ५ न्यायरूपे प्रतिबन्धके. ६ सामान्य-विशेषभेदेन. ७ प्रतीतपदार्थैः सहाविचाल्यः. ८ अमृतं पाणौ यस्य सः. अमृतवदवश्यमारोग्यद इत्यर्थः. ९ अविचार्यकार्यप्रवृत्तिः. १० विचाराशक्तिः. ११ असंतोषः. १२ आह्वयति. १३ मस्तके.

ज्वरपावकेन च तनौ तान्ते[१] हृषीकव्रजे[२] । दूने[३] बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ ५ ॥ भ्रान्ता वेदान्तिनः किं पठथ शठतयाद्यापि चाद्वैतविद्यां पृथ्वीतत्त्वे लुठन्तो विमृशथ सततं कर्कशास्तार्किकाः किम् । वेदैर्नानागमैः किं ग्लपयथ हृदयं श्रोत्रियाः[४] श्रोत्रशूलै[५]र्वैद्यं सर्वानवद्यं[६] विचिनुत शरणं प्राणसंप्रीणनाय ॥ ६ ॥

## कुवैद्यनिन्दा

वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १ ॥ वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव । त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ २ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ३ ॥ कषायैरुपवासैश्च कृतामुल्लाघतां[७] नृणाम् । निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ४ ॥ अज्ञातशास्त्रसद्भावाञ्शास्त्रमात्रपरायणान् । त्यजेद्दूराद्भिषक्पाशान्पाशान्वैवस्वतानिव[८] ॥ ५ ॥ मिथ्यौषधैर्हन्त मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः । वैद्या[९] इमे वञ्चित[१०]रुग्णवर्गाः[११] पिचण्डभाण्डं[१२] परिपूरयन्ति ॥ ६ ॥ नटोऽपि दद्याद्गणकोऽपि दद्यात्संप्रार्थितः पाशुपतोऽपि दद्यात् । वैद्यः कथं दास्यति याचमानो यो मर्तुकामादपि हर्तुकामः ॥ ७ ॥ न धातो[१३]र्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति तरलयन्तो[१४] जडजनाना[१५]सूनमृ[१६]त्योर्भृत्या इव वसु[१७] हरन्ते गदजुषाम्[१८] ॥ ८ ॥ सत्कोणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पै रण्डानामर्धलज्जाञ्चितमधिपुलकं स्पृश्यते पीनमङ्गम् । क्लीबानां खाद्यतेऽन्तश्चिरनिहितधनं काष्ठमूलाश्रितोयैः पूर्वा सिद्धा कलानां सकलगुणनिधिर्वैद्यविद्याभिवन्द्या ॥ ९ ॥

## गणकप्रशंसा

चतुरङ्गबलो राजा जगतीं वशमानयेत् । अहं पञ्चाङ्गबलवानाकाशं वशमानये ॥ १ ॥ एकासनस्था जलवायुभक्षा मुमुक्षवस्[१९]त्यक्तपरिग्रहा[२०]श्च । पृच्छन्ति तेऽप्यम्बरचारिचारं[२१] दैवज्ञमन्ये किमुतार्थचित्ताः ॥ २ ॥ न दैवं न पित्र्यं च कर्मावसिद्ध्येन्न यत्रास्ति देशे ननु ज्योतिषज्ञः । न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ ३ ॥ दूतो न संचरति खे न चलेच्च वार्ता पूर्वं न जल्पितमिदं न च संगमोऽस्ति । व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तं जानाति यो द्विजवरः स कथं न विद्वान् ॥ ४ ॥ वृद्धिह्रासौ[१] कुमुदसुहृदः पुष्पवन्तो[२]परागः[३] शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः । आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाकन्याया[४]ज्ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ ५ ॥ भानोः शीतकरस्य वापि भुजगग्रासे[५] पुरो निश्चिते तीर्थानामटनं जनस्य घटते तापत्रयोच्चाटनम् । इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवेद्दृष्टे तु व्यसने[६]ऽत्र तत्परिहृतिः[७] कर्तुं जपाद्यैः क्षमा ॥ ६ ॥

## कुगणकनिन्दा

गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः । विविधभुजंगक्रीडासक्तां गृहिणीं न जानाति ॥ १ ॥ गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ । जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ ॥ २ ॥ असुखमथ सुखं वा कर्मणां पक्ति[८]वेलास्वहह नियतमेते भुञ्जते देहभाजः । तदिह पुरत एव प्राह मौहूर्तिकश्चेत्कथय फलममीषामन्ततः किं ततः स्यात् ॥ ३ ॥ विलिखति सदसद्वा जन्मपत्रं जनानां फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम्[९] । न फलति यदि लग्नद्रष्टुरेवाह मोहं हरति धनमिहैवं हन्त दैवज्ञ[१०]पाशः[११] ॥ ४ ॥ प्रमोदे[१२] खेदे वाप्युपनमति पुंसां विधिवशान्मयैवं प्रागेवाभिहितमिति मिथ्या कथयति । जनानिष्टानिष्टाकलनपरिहारैकनिरतानसौ मेषादीनां परिगणनयैव भ्रमयति[१३] ॥ ५ ॥ ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्म[१४]भिः कल्लोलैर्निबिडे कणान्कतिपयाँल्लब्ध्वा कृतार्था इव । दीर्घायुःसुतसंपदादिकथनैर्दैवज्ञ[१५]पाशा इमे गेहं गेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ॥ ६ ॥

## पौराणिकनिन्दा

पौराणिकानां व्यभिचारदोषो नाशङ्कनीयः कृतिभिः कदाचित् । पुराणकर्ता[१६] व्यभिचारजातस्तस्यापि पुत्रो व्यभिचारजातः ॥ १ ॥

---

१ म्लाने. २ इन्द्रियसमूहे. ३ दुःखिते. ४ वेदाध्यायिनः. ५ कर्णकटुभिः ६ सर्वेषां मध्ये निर्दोषम्. ७ नीरोगताम्. ८ वास्तवानर्थान्. ९ कुत्सिता भिषजो भिषक्पाशास्तान्. १० यमसंबन्धिनः. ११ रोगिसमूहः. १२ उदरभाण्डम्. १३ पारदादेः. १४ भ्रामयन्तः. १५ प्राणान्. १६ यमस्य. १७ द्रव्यम्. १८ रोगिणाम्. १९ मोक्षेच्छवः. २० त्यक्तः परिग्रहः कलत्रं यैस्ते. २१ आकाशसंचारिग्रहगतिम्.

१ क्षयवृद्धी. २ चन्द्रस्य. ३ सूर्याचन्द्रमसोः. ४ ग्रहणम्. ५ स्थालीपुलाकन्यायेन. ६ ग्रहणे. ७ दुःखे. ८ परिहारः. ९ परिपाककालेषु. १० स्वचातुर्यम्. ११ कुदैवज्ञः. १२ हर्षे. १३ भ्रमं करोति. १४ सामान्यनियमः, अपवादः प्रसिद्धः. १५ कुज्यौतिषिकाः. १६ व्यासः.

## पुरोहितनिन्दा

पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च । आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥ १ ॥

---

## कायस्थनिन्दा

काकाल्लौल्यं यमात्क्रौर्यं स्थपतेर्दृढघातिताम् । आद्याक्षराणि संगृह्य कायस्थः केन निर्मितः ॥ १ ॥ कायस्थेनोदरस्थेन मातुरामिषशङ्कया । अन्त्राणि यन्न भुक्तानि तत्र हेतुरदन्तता ॥ २ ॥ विना मद्यं विना मांसं परस्वहरणं विना । विना परापवादेन दिविरो[१] दिवि रोदिति ॥ ३ ॥ कलमाग्रनिर्गतमषीबिन्दुव्याजेन साञ्जनाश्रुकणा । कायस्थलुण्ठ्यमाना रोदिति खिन्नेव राजश्रीः ॥ ४ ॥

---

## सज्जनप्रशंसा

अहो किमपि चित्राणि चरित्राणि महात्मनाम् । लक्ष्मीं तृणाय[२] मन्यन्ते तद्भरेण[३] नमन्त्यपि ॥ १ ॥ नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः[४] । येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ २ ॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् । अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥३॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ४ ॥ गवादीनां पयोऽन्येद्युः[५] सद्यो वा जायते दधि । क्षीरोदधेस्तु नाद्यापि महतां विकृतिः[६] कुतः ॥ ५ ॥ गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा । पापं तापं च दैन्यं च घ्नन्ति सन्तो महाशयाः ॥६॥ छायावन्तो गतव्याला स्वारोहाः फलदायिनः । मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ ७ ॥ संपदो महतामेव महतामेव चापदः । वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥ ८ ॥ अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम् । और्वं दहन्तमेवाग्निं संतर्पयति सागरः ॥ ९ ॥ महतां प्रार्थनेनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो[७] गिरिविदारणे[८] ॥ १० ॥ गुणग्रामाविसंवादि नामापि हि महात्मनाम् । यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ ११ ॥ वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् । कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥ १२ ॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १३ ॥ महात्मानोऽनुगृह्णन्ति भजमानान्रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १४ ॥ मुखेन नोद्गिरत्यूर्ध्वं हृदयेन नयत्यधः । जरयत्यन्तरे साधुर्दोषं विषमिवेश्वरः ॥ १५ ॥ विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः । आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥ १६ ॥ मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे । शंभुर्बिभर्ति मूर्ध्नेन्दुं स्वर्भानुस्तं[२] जिघृक्षति[३] ॥ १७ ॥ सुजनं व्यजनं मन्ये चारुवंशसमुद्भवम्[४] । आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १८ ॥ उदये सविता रक्तो रक्तश्चास्तमये तथा । संपत्तौ च विपत्तौ च महतामेकरूपता ॥ १९ ॥ आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २० ॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् । असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ २१ ॥ हरेः[५] पदाहतिः[६] श्लाघ्या न श्लाघ्यं खररोहणम् । स्पर्धापि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ २२ ॥ साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम्[७] । नहि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ २३ ॥ नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः । अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ २४ ॥ स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम् । भङ्गेनापि मृणालानामनुबध्नन्ति तन्तवः ॥ २५ ॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् । धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ २६ ॥ संपत्सु महतां चित्तं भवत्युत्पलकोमलम् । आपत्सु च महाशैलशिलासंघातकर्कशम्[९] ॥ २७ ॥ पतन्ति व्यसने दैवाद्दारुणे दारुणात्मनि । संवर्मयति[१०] वज्रेण धैर्येण महतां मनः ॥ २८ ॥ सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् । आमोदो नहि कस्तूर्याः शपथेन विभाव्यते ॥ २९ ॥ पातितोऽपि करान्घातैरुत्पतत्येव कन्दुकः । प्रायेण हि सुवृत्तानामस्थायिन्यो[११] विपत्तयः ॥ ३० ॥ सकृत्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि । तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ३१ ॥ दन्तिदन्तसमानं हि निःसृतं महतां वचः । कूर्मग्रीवेण नीचानां पुनरायाति याति च ॥ ३२ ॥ श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः । लकारो[१२] लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ३३ ॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः । नहि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ३४ ॥ काकैः सह विवृद्धस्य कोकिलस्य कला[१३] गिरः ।

---

१ कायस्थः २ तृणवन्मन्यन्ते. ३ लक्ष्मीभरेण. ४ उदारचेतसः. ५ अन्यस्मिन्दिवसे. ६ विकारः. ७ स्तुत्यः. ८ पर्वतभेदने.

१ जीर्णं करोति. २ राहुः. ३ ग्रहीतुमिच्छति. ४ वेणुः; पक्षे,—कुलम्. ५ सिंहस्य. ६ पादताडनम्. ७ विकारम्. ८ संबन्धं कु न्ति. ९ कठिनम्. १० संगोपयति. ११ क्षणिकाः. १२ लकारलोपाच्छोक एवावतिष्ठते. १३ अव्यक्तमधुराः.

खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ३५ ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः । चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ ३६ ॥ विवेकः सह संयत्या[1] विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ ३७ ॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्[2] । सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ ३८ ॥ निर्गुणेष्वपि सत्त्वेषु[3] दयां कुर्वन्ति साधवः । नहि संहरते ज्योत्स्नां[4] चन्द्रश्चाण्डालवेश्मसु[5] ॥ ३९ ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४० ॥ हृदयानि सतामेव कठिनानीति मे मतिः । खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्[6]यतः ॥ ४१ ॥ अपेक्षन्ते न च स्नेहं[7] न पात्रं[8] न देशान्तरम्[9] । सदा[10]लोकहिते युक्ता रत्नदीपा इवोत्तमाः ॥ ४२ ॥ ब्रूतेऽन्यस्यासतोऽप्यार्यो गुणान्दोषांस्तु दुर्जनः । तुल्येऽप्यसत्त्वे किं त्वेको गच्छत्यूर्ध्वमधोऽपरः ॥ ४३ ॥ सन्तो मनसि कृत्वैव प्रवृत्ताः कृत्यवस्तुनि । कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ ४४ ॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः । परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ ४५ ॥ सन्त एव सतां नित्यमापदुद्धरणक्षमाः । गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ ४६ ॥ नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ । किं त्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ४७ ॥ गोत्रस्थितिं[11] न मुञ्चन्ति सदा सन्नतिमाश्रिताः[12] । उदन्वन्तश्च[13] सन्तश्च महासत्त्वतयानया[14] ॥ ४८ ॥ विगृहीतः पदाक्रान्तो भूयोभूयश्च खण्डितः । माधुर्यमेवावहति सुश्लोक इव सज्जनः ॥ ४९ ॥ प्रकृतिप्रत्ययोपेतः सद्वृत्तः साधुसंमतः । अर्थार्पणसमर्थश्च सुश्लोक इव सज्जनः ॥ ५० ॥ गुणोऽपि नूनं दोषाय दुषिधातोः खलस्य च । सन्मार्गसिद्धये वृद्धिर्मृजेः साधुजनस्य च ॥ ५१ ॥ मुञ्चन्तश्चापलरसं प्रस्थिताः पावने पथि । घना इवार्द्रहृदयाः सन्तो जीवनहेतवः ॥ ५२ ॥ धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥ ५३ ॥ साधुरेव प्रवीणः स्यात्सद्गुणामृतचर्वणे । नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ ५४ ॥ उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः । मणिरेव महाशाण[1]घर्षणं न तु मृत्कणः ॥ ५५ ॥ सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् । पुष्पाणां सौरभं प्रायस्तनुते[2] दिक्षु मारुतः ॥ ५६ ॥ स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् । न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥ ५७ ॥ संपत्तौ कोमलं चित्तं साधोरापदि कर्कशम् । सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ[3] ॥ ५८ ॥ स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ ५९ ॥ अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् । विधोर्विधुंतुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ ६० ॥ विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः । स्ववर्मबन्धान्नो शुद्धिर्ज्ञायते कर्षणं विना ॥ ६१ ॥ दृष्टदुर्जनदौरात्म्यः सज्जने रज्यते जनः । आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥ ६२ ॥ क्षयक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः । संत्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम् ॥ ६३ ॥ उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम् । राहुग्रसनसंभूतिः क्षणं विच्छाययेद्विधुम् ॥ ६४ ॥ प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम् । चण्डाश्चण्डातपात्पादा हिमांशोरमृतस्रुजः ॥ ६५ ॥ तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः । न दाहे ज्वलतोर्भिन्नं चन्दनेन्धनयोः क्वचित् ॥ ६६ ॥ महतां तादृशं तेजो यत्र शाम्यन्त्यनौजसः । अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ६७ ॥ आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु । व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ६८ ॥ न गुणाः क्वापि पूज्यन्ते सत्स्वीकारो हि गौरवम् । पीतिमा गुणसाम्येऽपि हरिद्रास्वर्णयोरिव ॥ ६९ ॥ आः किमर्थमिदं चेतः सतामम्भोधिदुर्भरम् । इति क्रुधेव दुर्वेधाः परदुःखैरपूरयत् ॥ ७० ॥ काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः । सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥ ७१ ॥ दोषानपि गुणीकर्तुं दोषीकर्तुं गुणानपि । शक्तो वादी न तत्तथ्यं दोषा दोषा गुणा गुणाः ॥ ७२ ॥ गुणराशिमहाभारनिर्भरापूरितान्तराः । सन्तो गौरवमायान्ति यदि तत्र किमद्भुतम् ॥ ७३ ॥ स्वात्मन्येव लयं याति तादृशो गुणिनां गुणः । स्वयं प्रख्याप्यमानोऽपि यस्तृणाय न मन्यते ॥ ७४ ॥ सुवृत्तस्यैकरूपस्य परप्रीत्यै धृतोन्नतेः । साधोः स्तनयुगस्येव पतनं कस्य तुष्टये ॥ ७५ ॥ च्युतोऽप्युद्गच्छति पुनः प्रज्ञावान्न तु मूढधीः । कन्दुकः[4] पतनोत्थायी न तु कान्ताकुचद्वयी ॥ ७६ ॥ नालोकः क्रियते सूर्ये भूः प्रतीपं न धार्यते । नहि प्रत्युपकाराणामपेक्षा सत्सु विद्यते ॥ ७७ ॥ दृष्ट्वापि दृश्यते दृश्यं श्रुत्वापि श्रूयते पुनः ।

---

१ विनयः. २ निष्कपटम्. ३ प्राणिषु. ४ चन्द्रकान्तिम्. ५ चाण्डालगृहे. ६ किंचिदपि. ७ मैत्रीम्; पक्षे,–घृतादिम्. ८ योग्यताम्; पक्षे,–भाण्डम्. ९ अवस्थान्तरम्; पक्षे,–सूत्रवर्तिम्. १० लोकानां हितं तस्मिन्नासक्ताः; पक्षे,–आलोकः प्रकाशस्तदेव हितं तस्मिन्नासक्ताः. ११ कुलमर्यादाम्; पक्षे,– पर्वस्थितिम्. १२ सन्नमनम्. १३ समुद्राः. १४ प्राणिनः; पक्षे,–धैर्यम्.

१ कषपाषाणम्; 'कसोटी' इति लोके. २ प्रसारयति. ३ ज्येष्ठमासे ४ 'चेंडू' इति लोके प्रसिद्धः.

सत्यं न साधुवृत्तस्य दृश्यते पुनरुक्तता ॥ ७८ ॥ सत्पक्षा ऋजवः शुद्धाः सफला गुणसेविनः । तुल्यैरपि गुणैश्चित्रं सन्तः सन्तः शराः शराः ॥ ७९ ॥ लाभप्रणयिनो नीचा मानकामा मनस्विनः । मद्गुः[1] सरसि मत्स्यार्थी हंसस्येष्टा प्रसन्नता ॥ ८० ॥ परदुःखं समाकर्ण्य स्वभावसरलो जनः । उपकारासमर्थत्वात्प्राप्नोति हृदये व्यथाम् ॥ ८१ ॥ वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता । निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥ ८२ ॥ न कदाचित्सतां चेतः प्रसरत्यघकर्मसु । जलेषु द्रुतमप्यन्तः सर्पि[2]राश्यानतां व्रजेत् ॥ ८३ ॥ आगसे[3]ऽपि न कुप्यन्ति कृपया चोपकुर्वते । बोधं स्वस्यैव नेच्छन्ति ते विश्वोद्धरणक्षमाः ॥ ८४ ॥ साभिमानमसंभाव्यमौचित्यच्युतमप्रियम् । दुःखावमानदीनं वा न वदन्ति गुणोन्नताः ॥ ८५ ॥ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु । अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ८६ ॥ शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः । विवराणि मुद्रयन्द्रागूर्णायु[5]रिव सज्जनो जयति ॥ ८७ ॥ तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाग्रेषु । निभृतं[6] यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥ ८८ ॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं[7] जनयति जननी सुतं विरलम् ॥ ८९ ॥ दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं[8] वदत्यार्यः । अगुरुरपि दह्यमानः स्वभावगन्धं परित्यजति किं नु ॥ ९० ॥ अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः । परपरिवाद[9]निवृत्तैः क्वचित्क्वचिन्मण्डिता[10] वसुधा ॥ ९१ ॥ पतितोऽपि राहुवदने तरणि[11]र्बोधयति[12] पद्मखण्डानि । भवति विपद्य[13]पि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ९२ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके । इति विमृशन्तः सन्तः संतप्यन्ते न लोकेऽस्मिन् ॥ ९३ ॥ वासरगम्यमनूरो[14]रम्बरमवनी च वामनैकपदा । जलधिरपि पोत[15]लङ्घ्यः सतां मनः केन तुलयामः ॥ ९४ ॥ गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम् । जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति ॥ ९५ ॥ निजपद[16]गतिगुणरञ्जितजगतां करिणां च सत्कवीनां च । वहतामपि महिमानं[17] शोभायै सज्जना[18] एव ॥ ९६ ॥ बाणं[19] हरिरिव कुरुते सुजनो बहु[1]दोषमप्य[2]दोषमिव । यावद्दोषं[3] जाग्रति[4] मलिम्लुचा[5] इव पुनः पिशुनाः ॥ ९७ ॥ महतोः[6] सुवृत्तयोः[7] सखि हृदयग्रह[8]योग्ययोः समस्थितयोः । सज्जनयोः स्तनयोरपि निरन्तरं संगतं भवति ॥ ९८ ॥ महतो[9]ऽपि हि विश्वासान्महाशया[10] दधति नाल्पवति लघवः[11] । संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ ९९ ॥ वैगुण्येऽपि हि महतां विनिर्मितं भवति कर्म शोभायै । दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम् ॥ १०० ॥ सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा । न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः ॥ १०१ ॥ भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य । वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ १०२ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ १०३ ॥ उपकारमेव तनुते विपद्गतः सद्गुणो महताम् । मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ १०४ ॥ गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् । तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ १०५ ॥ अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् । आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥ १०६ ॥ न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ १०७ ॥ इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः । तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ १०८ ॥ उपचरितव्याः[12] सन्तो यद्यपि कथयन्ति नैकमुपदेशम् । यास्तेषां स्वैरकथा[13]स्ता एव भवन्ति शास्त्राणि ॥ १०९ ॥ सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति[14] मुखं कुठारस्य[15] ॥ ११० ॥ अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः । हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥ १११ ॥ अनुकुरुतः[16] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः । विदधाति[17] रन्ध्रमेको गुणवा[18]नन्यस्तु पिदधाति[19] ॥ ११२ ॥ आस्तामन्य-

१ जलकाकः. २ घनत्वम्. ३ सापराधेऽपि. ४ व्यक्ता भवति. ५ लूता. ६ एकान्ते. ७ श्रेष्ठम्. ८ अनिष्टम्. ९ दूषणम्. १० शोभिता. ११ सूर्यः. १२ विकासयति. १३ संकटकाले. १४ अरुणस्य. १५ नौका. १६ पादविन्यासाः; पक्षे,–पदप्रयोगज्ञानम्. १७ महत्परिमाणम्; पक्षे,–प्रतिष्ठाम्. १८ सत्पुरुषाः; पक्षे,–गजानां सज्जीकरणम्. १९ बाणासुरम्.

१ गुणभिन्नो दोषः; पक्षे,–बहुतरबहुशालिनम्. २ दोषशून्यम्; पक्षे,–बाहुरहितम्. ३ समग्रदोषम्; पक्षे,–यावद्रात्रिम्. ४ तद्विषयकगवेषणावन्तो भवन्ति; पक्षे,–निद्राभाववन्तो भवन्ति. ५ तस्कराः. ६ श्रेष्ठयोः; पक्षे,–महापरिमाणशालिनोः. ७ सुचरितयोः; पक्षे,–सुवर्तुलयोः. ८ आलिङ्गनयोग्ययोः; पक्षे,–वक्षःस्थले विराजमानयोः. ९ श्रेष्ठानपि; पक्षे,–महापरिमाणानपि. १० श्रेष्ठाः; पक्षे,–गभीराः. ११ नीचाः; पक्षे,–स्वल्पपरिमाणशालिनः. १२ सेव्याः. १३ स्वैरालापाः. १४ सुगन्धयति. १५ परशोः. १६ अनुकरणं कुरुतः. १७ करोति. १८ सूत्रयुक्तः; पक्षे,–विद्याविनयादिगुणयुक्तः. १९ आच्छादयति.

त्सुजनाः परोपकारैककरणदुर्ललिताः। संतापितपिशुनेषु स्वगुणेष्वपि हन्त खिद्यन्ते ॥ ११३ ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो[1] मेघः। नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ११४ ॥ यदमी दशन्ति दशना रसना तत्स्वादमनुभवति। प्रकृतिरियं विमलानां क्लिश्यन्ति यदन्यकार्येषु ॥ ११५ ॥ तदपकृतं विधिनार्थिषु यत्सन्तः स्वल्पसंपदो विहिताः। तुच्छे पयसि घनानां सीदति बत जीवलोकोऽयम् ॥ ११६ ॥ अमृतं किरति[2] हिमांशुर्विषमेव फणी समुद्गिरति। गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ ११७ ॥ गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति। स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ ११८ ॥ उत्कर्षवान्निजगुणो[3] यथा यथा याति कर्ण[4]मन्यस्य। धनुरिव सुवंश[5]जन्मा तथा तथा सज्जनो नमति ॥ ११९ ॥ दुर्जनवदनविनिर्गतवचनभुजंगेन सज्जनो दष्टः। तद्विषनाशनिमित्तं साधुः संतोषमौषधं पिबति ॥ १२० ॥ कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम्। प्रतिपन्नममलमनसां न चलति पुंसां युगान्तेऽपि ॥ १२१ ॥ अन्तःकटुरपि लघुरपि सद्वृत्तं यः पुमान्न संत्यजति। स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ १२२ ॥ अद्यापि दुर्निवारं स्तुतिकन्या[6] भजति कौमारम्[7]। सद्भ्यो न रोचते सा सन्तोऽप्यस्यै न रोचन्ते ॥ १२३ ॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः। पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥ १२४ ॥ पेशलम[8]पि खलवचनं दहतितरां मानसं सुतत्त्वविदाम्। परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ १२५ ॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे। चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ १२६ ॥ उपरि करवाल[9]धाराकाराः क्रूरा भुजंगमसदृक्षाः। अन्तः साक्षाद्द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥ १२७ ॥ स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते। निजपक्षरक्षणमनाः सुजनो मैनाकशैल इव ॥ १२८ ॥ दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति। प्रतिपर्व तपनवासी निःसृतमात्रः शशी शीतः ॥ १२९ ॥ विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः। क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥ १३० ॥ खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते। एकादिमध्यपरिणतिरमणीया[10] साधुजनमैत्री ॥ १३१ ॥ न विमोचयितुं शक्यः क्षमो महान्मोचितो यदि कथंचित्। मन्दरगिरिरिव हि तलं निवर्तते न तु स समवाप्य ॥ १३२ ॥ स्वाधीनैव समृद्धिर्जनोपजीव्यत्वमुच्छ्रयश्छाया। सत्पुंसो मरुभूरिव जीवनमात्रं समाशास्यम् ॥ १३३ ॥ सर्वस्य सर्वदापि स्पर्शनयोगेन तापमपनेतुम्। सुजनस्य व्यजनस्य च शक्तिमसंगृह्णतः पश्य ॥ १३४ ॥ किं मधुना किं विधुना किं सुधया[1] किं च वसुधयाखिलया। यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम्[2] ॥ १३५ ॥ ते वन्द्यास्ते कृतिनः श्लाघ्या तेषां हि जन्मनोत्पत्तिः। यैरुज्झितात्मकार्यैः सुहृदामर्था हि साध्यन्ते ॥ १३६ ॥ स्वल्पापि साधुसंपद्भोग्या महतां न पृथ्व्यपि खलश्रीः। सारसमेव पयस्तृषमपहरति न वारिधेर्जातु ॥ १३७ ॥ दोषो गुणाय गुणिनां महदपि दोषाय दोषिणां सुकृतम्। तृणमिव दुग्धाय गवां दुग्धमिव विषाय सर्पाणाम् ॥ १३८ ॥ विषमगता अपि न बुधाः परिभवमिश्रां श्रियं हि वाञ्छन्ति। न पिबन्ति भौममम्भः सरजसमिति चातका एते ॥ १३९ ॥ योग्यतयैव विनाशं प्रायोऽनार्येषु[3] यान्ति गुणवन्तः। स्फुटवचना एव शुकाः पञ्जरबन्धं निषेवन्ते ॥ १४० ॥ निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः। सह वृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि ॥ १४१ ॥ अन्त्यावस्थोऽपि बुधः स्वगुणं न जहाति जातिशुद्धतया। न श्वेतभावमुज्झति शङ्खः शिखि[4]भुक्तमुक्तोऽपि ॥ १४२ ॥ साप्तपदीनं सख्यं भवेत्प्रकृत्या विशुद्धचित्तानाम्। किमुतान्योन्यगुणकथाविस्रम्भनिबद्धभावानाम् ॥ १४३ ॥ स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः। त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः ॥ १४४ ॥ गुणिनः समीपवर्ती पूज्यो लोकस्य गुणविहीनोऽपि। विमलेक्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥ १४५ ॥ सहसिद्धमिदं महतां धनेष्वनास्था गुणेषु कृपणत्वम्। परदुःखे कातरता महच्च धैर्यं स्वदुःखेषु ॥ १४६ ॥ उपकृतिसाहसिकतया क्षतिमपि गणयन्ति नो गुणिनः। जनयन्ति हि प्रकाशं दीपशिखाः स्वाङ्गदाहेन ॥ १४७ ॥ उपकर्तुमप्रकाशं क्षन्तुं न्यूनेष्वयाचितं दातुम्। अभिसंधातुं च गुणैः शतेषु केचिद्विजानन्ति ॥ १४८ ॥ मा भूत्सज्जनयोगो यदि योगो मा पुनः स्नेहः। स्नेहो यदि विरहो मा यदि विरहो जीविताशा का ॥ १४९ ॥ अम्बरमनूरु[5]लङ्घ्यं वसुंधरा सापि वामनैकपदा। अब्धिरपि पोत[6]लङ्घ्यः सतां मनः केन तुल्यं स्यात् ॥ १५० ॥ किमपेक्ष्य फलं पयोधरान्ध्वनतः[7] प्रार्थयते मृगाधिपः। प्रकृतिः[8] खलु सा महीयसः सहते नान्यसमुन्नतिं[9]

१ शब्दरहितः. २ वर्षति. ३ रज्जुः; पक्षे,-विनयादिः. ४ कर्णप्रदेशे; पक्षे,-श्रुतिगोचरताम्. ५ वेणुः; पक्षे,-कुलम्. ६ स्तुतिरेव कन्या. ७ कुमारिकात्वम्. ८ कोमलम्. ९ खड्गम्. १० सदाऽविकृता.

१ अमृतेन. २ स्थानम्. ३ खलेषु. ४ अग्नि. ५ लघुभिः, पक्ष्यादिकैरित्यर्थः. ६ नौका. ७ शब्दान्कुर्वतः. ८ स्वभावः. ९ उत्कर्षम्.

यया ॥ १५१ ॥ वचनैरसतां महीयसो न खलु व्येति गुरुत्व[1]मुद्धतैः । किमपति [2]रजोभिरौर्वै[3]रैरवकीर्णस्य मणेर्महार्घता ॥ १५२ ॥ प्रकटान्यपि [4]नैपुणं महत्[5]परवाच्यानि चिराय गोपितुम् । विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥ १५३ ॥ किमिवाखिललोककीर्तितं कथयत्यात्मगुणं महामनाः । [6]वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ १५४ ॥ विसृजकन्त्य[7]विकत्थिनः परे [8]विषमाशीविषवन्नराः क्रुधम् । दधतोऽन्त[9]रसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ १५५ ॥ जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः । विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥ १५६ ॥ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता । उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ १५७ ॥ सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि । अर्थितस्तु न महान्समीहते जीवितं किमु धनं धनायितुम् ॥ १५८ ॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने । छेदतापनविघर्षताडनैर्ना[10]न्यभावमुपयाति [11]काञ्चनम् ॥ १५९ ॥ चातकस्त्रिचतुरान्पयःकणान् याचते जलधरं पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ १६० ॥ दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः । क्षारभावमपनीय गृह्णते वारिधेः सलिलमेव वारिदाः ॥ १६१ ॥ सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम् । अन्यदेहविलसत्परितापात्सज्जनो द्रवति नो नवनीतम् ॥ १६२ ॥ उपकारिणि वीतमत्सरे वा सदयत्वं यदि तत्र कोऽतिरेकः । अहिते सहसापराद्धलब्धे सघृणं यस्य मनः सतां स धुर्यः ॥ १६३ ॥ तुङ्गात्मनां तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः । धाराधरा एव धराधराणां निदाघदाहं [12]शमितुं न नद्यः ॥ १६४ ॥ प्रकाममभ्यस्यतु नाम विद्यां सौजन्यमभ्यासवशादलभ्यम् । कर्णौ सपत्न्यः प्रविशालयेयुर्विशालयेदक्षियुगं न कोऽपि ॥ १६५ ॥ सन्तोऽपि सन्तः क्व किरन्तु तेजः क्व न ज्वलन्तु क्व ननु प्रथन्ताम् । विधाय रुद्धा ननु वेधसैव ब्रह्माण्डकोषे घटदीपकल्पाः ॥ १६६ ॥ प्रसादमाधुर्यगुणोपपन्ना यत्नादनौचित्यपराङ्मुखाणाम् । अर्थाः कवीनामिव सज्जनानां सर्वस्य सर्वावसरोपयोगाः ॥ १६७ ॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति । एवं कुलीना [13]व्यसनाभिभूता न नीचकर्माणि समाचरन्ति ॥ १६८ ॥ अहो महत्त्वं महताम[14]पूर्वं विपत्तिकालेऽपि परोपकारः । य[1]थास्यमध्ये पतितोऽपि राहोः कलानिधिः पुण्य[2]चयं ददाति ॥ १६९ ॥ पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः । नादन्ति [3]सस्यं खलु [4]वारिवाहाः परोपकाराय सतां वि[5]भूतयः ॥ १७० ॥ रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ १७१ ॥ श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः । यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गाद्विमुखाः प्रयान्ति ॥ १७२ ॥ सन्तस्तृणोत्सारण[6]मुत्तमाङ्गात्सुवर्णकोट्यर्पणमामनन्ति । प्राणव्यये वापि कृतोपकाराः खलाः परे वैरमिहोद्वहन्ति ॥ १७३ ॥ कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव । मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ १७४ ॥ क्षारं जलं वारिमुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति । सन्तस्तथा दुर्जनदुर्वचांसि पीत्वा च सूक्तानि समुद्गिरन्ति ॥ १७५ ॥ अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् । सुधांशुरेषः स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ १७६ ॥ कर्णेजपानां वचनप्रपञ्चान्महात्मनः क्वापि न दूषयन्ति । भुजङ्गमानां गरलप्रसङ्गान्नापेयतां यान्ति महासरांसि ॥ १७७ ॥ अपांनिधिं वारिभिरर्चयन्ति दीपेन सूर्यं प्रतिबोधयन्ति । ताभ्यां तयोः किं परिपूर्णता स्याद्भक्त्या हि तुष्यन्ति महानुभावाः ॥ १७८ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्य[7]स्त्रिलोकीतिलकः स एकः ॥ १७९ ॥ न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः । द्वेष्यैव केषामपि चन्द्रखण्डविपाण्डुरा पुण्ड्रकशर्करापि ॥ १८० ॥ दीपाः स्थितं वस्तु विभावयन्ति कुलप्रदीपास्तु भवन्ति केचित् । चिरव्यतीतानपि पूर्वजान् ये प्रकाशयन्ति स्वगुणप्रकर्षात् ॥ १८१ ॥ व्रते विवादं विमतिं विवेके सत्येऽतिशङ्कां विनये विकारम् । गुणेऽवमानं कुशले निषेधं धर्मे विरोधं न करोति साधुः ॥ १८२ ॥ वन्द्यः स पुंसां त्रिदशाभिनन्द्यः कारुण्यपुण्योपचयक्रियाभिः । संसारसारत्वमुपैति यस्य परोपकाराभरणं शरीरम् ॥ १८३ ॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति [8]गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥ १८४ ॥ चिराय सत्संगमशुद्धमानसो न यात्यसत्संगतमात्मवान्नरः । मनोहरेन्दीवरखण्डगोचरो न जातु भृङ्गः [9]कुणपे निलीयते ॥ १८५ ॥ इदं हि माहात्म्य-

१ निष्ठुरैः. २ भौमैः. ३ छन्नस्य ४ कौशलम्. ५ परदूषणानि. ६ वक्ता. ७ अनात्मश्लाघिनः. ८ क्रूरसर्पवत्. ९ अभ्यन्तरे. १० विकृतिम्. ११ सुवर्णम्. १२ शमयितुम् १३ संकटव्याप्ताः. १४ अलौकिकम्.

१ मुखमध्ये. २ वृद्धिम्. ३ धान्यम्. ४ मेघाः. ५ ऐश्वर्याणि. ६ शिरसः. ७ त्रिलोक्यां तिलको भूषणभूतः. ८ इन्दुकरैः. ९ मृतदेहे.

विशेषसूचकं वदन्ति चिह्नं महतां मनीषिणः । मनो यदेषां सुखदुःखसंभवे प्रयाति नो हर्षविषादवश्यताम् ॥ १८६ ॥ सुभाषितैः प्रीतिरनुन्नतिः श्रिया परार्थनिष्पत्तिपटीयसी क्रिया । गुणेष्वतृप्तिर्गुणवत्सु चादरो निगूढमेतच्चरितं महात्मनाम् ॥ १८७ ॥ विपदि धैर्यमथा[1]भ्युदये क्षमा सदसि वाक्[2]पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ[3] प्रकृति[4]सिद्धमिदं हि महात्मनाम् ॥ १८८ ॥ अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोमृतम् । अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका ॥ १८९ ॥ यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ १९० ॥ आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ १९१ ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ १९२ ॥ प्रेमैव मास्तु यदि चेत्पथिकेन[5] सार्धं तेनापि चेद्गुणवता न [6]समं कदाचित् । तेनापि चेद्भवतु मास्तु कदापि [7]भङ्गो भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः ॥ १९३ ॥ चन्द्रः क्षयी प्रकृति[8]वक्रतनुर्जडात्मा[9] दोषाकरः[10] स्फुरति मित्र[11]विपत्तिकाले । मूर्ध्ना तथापि विधृतः परमेश्वरेण[12] नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १९४ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रा[13]वसानसमये विहितोदयोऽपि । चन्द्रस्तथापि हर[14]वल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १९५ ॥ लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाम् । तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १९६ ॥ सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव । आराधितः कथय केन करैरुदारैरिन्दुर्विकासयति कैरविणीकुलानि ॥ १९७ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति । दानं च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ १९८ ॥ केनाञ्जितानि नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्[1]मयूरान् । कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति विनयं कुलजेषु पुंसु ॥ १९९ ॥ अद्यापि नोज्झति[2] हरः किल कालकूटं कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे । अम्भोनिधिर्वहति दुर्वहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ २०० ॥ विश्वाभिराम[3]गुणगौरवगुम्फितानां रोषोऽपि निर्मलधियां रमणीय एव । लोकप्रियैः परिमलैः परिपूरितस्य काश्मीरजस्य[4] कटुतापि नितान्तरम्या ॥ २०१ ॥ किं जन्मना च महता पितृपौरुषेण शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् । कुम्भा न कूपमपि शोषयितुं समर्थाः कुम्भोद्भवेन[5] मुनिनाम्बुधिरेव पीतः ॥२०२॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २०३ ॥ सौजन्यधन्यजनुषः पुरुषाः परेषां दोषानपास्य गुणमेव गवेषयन्ति । त्यक्त्वा भुजंगमविषाणि पटीरगर्भात्सौरभ्यमेव पवनाः परिशीलयन्ति ॥ २०४ ॥ आक्रोशितोऽपि सुजनो न वदत्यवाच्यं निष्पीडितो मधुरमुद्वमतीक्षुदण्डः । नीचो जनो गुणशतैरपि सेव्यमानो हास्येन तद्वदति यत्कलहेऽप्यवाच्यम् ॥ २०५ ॥ यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति । तत्साधवो न न विदन्ति विदन्ति किं तु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ २०६ ॥ सद्वंशजस्य परितापनुदः सुवृत्तशुद्धात्मनः सकललोकविभूषणस्य । छिद्रं प्रजातमपि साधुजनस्य दैवान्मुक्तामणेरिव गुणाय भवत्यवश्यम् ॥२०७॥ न्यायः खलैः परिहृतश्चलितश्च धर्मः कालः कलिः कलुष एव परं प्रवृत्तः । प्रायेण दुर्जनजनः प्रभविष्णुरेव निश्चक्रिकः परिभवास्पदमेव साधुः ॥२०८॥ सत्यं गुणा गुणवतां विधिवैपरीत्याद्यत्नार्जिता अपि कलौ विफला भवन्ति । साफल्यमस्ति सुतरामिदमेव तेषां यत्तापयन्ति हृदयानि पुनः खलानाम् ॥ २०९ ॥ पापं समाचरति वीतघृणो जघन्यः प्राप्यापदं सघृण एव तु मध्यबुद्धिः । प्राणात्ययेऽपि न तु साधुजनः सुवृत्तं वेलां समुद्र इव लङ्घयितुं समर्थः ॥ २१० ॥ शुद्धः स एव कुलजश्च स एव धीरः श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् । तप्तं यथा दिनकरस्य मरीचिजालैर्देहं त्यजेदपि हिमं न तु शीतलत्वम् ॥ २११ ॥ याच्ञापदं मरणदुःखमिवानुभाव्य दत्तेन किं खलु भवत्यतिभूयसापि । कल्पद्रुमान्परिहसन्त इवेह सन्तः संकल्पितैरतिददत्यक[6]दर्थितं यत् ॥ २१२ ॥ ते साधवो भुवनमण्डलमौलिभूता ये साधुतां निरुपकारिषु दर्शयन्ति । आत्मप्रयो-

---

१ उदयकाले. २ वक्तृत्वशक्तिः. ३ शास्त्रे. ४ स्वभावसिद्धम्. ५ पान्थेन सार्धं मास्तु. ६ सह. ७ विघातः. ८ प्रकृत्या स्वभावेन वक्रा तनुर्यस्य. ९ जडस्वभावः; पक्षे,–डलयोः सावर्ण्याज्जलात्मा जलरूपः. १० दोषां रात्रिं करोतीति दोषाकरश्चन्द्रः; पक्षे,–दोषाणामाकरः खनिरिति यावत्. ११ मित्रः सूर्यस्तस्य विपत्तिकालोऽस्तकालस्तस्मिन्; पक्षे,–मित्रं सुहृत्तद्विपत्तिकालः. १२ सदाशिवेन; पक्षे,–केनचित्स्वामिना. १३ सूर्यास्तसमये; पक्षे,–मित्रव्यसनकाले. १४ शिवप्रियताम्.

१ मनोहरलोम्नः. २ न त्यजति. ३ सुन्दर. ४ कुङ्कुमस्य. ५ अगस्त्येन. ६ दोषशून्यम्.

जनवशीकृतखिन्नदेहः पूर्वोपकारिषु खलोऽपि हि सानुकम्पः ॥ २१३ ॥ नान्तर्विचिन्तयति किंचिदपि प्रतीपमाकोपितोऽपि सुजनः पिशुनेन पापम् । अर्कद्विषोऽपि हि मुखे पतिताग्रभागास्तारापतेरमृतमेव कराः किरन्ति ॥२१४॥ हेतोः कुतोऽप्यसदृशाः सुजना गरीयः कार्यं निसर्गगुरवः स्फुटमारभन्ते । उत्थाय किं कलशतोऽपि न सिन्धुनाथमुद्वीचिमालमपिबद्भगवानगस्त्यः ॥ २१५ ॥ पात्रं पवित्रयति नैव गुणान्क्षिणोति स्नेहं न संहरति नापि मलं प्रसूते । दोषावसानरुचिरश्चलतां न धत्ते सत्संगमः सुकृतसद्मनि कोऽपि दीपः ॥ २१६ ॥ उदधिरवधिरुर्व्यास्तं हनूमांस्ततार निरवधि गगनं चेत्काण्डकोशे विलीनम् । इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः स तु निरवधिरेकः सज्जनानां विवेकः ॥ २१७ ॥ नहि भवति वियोगः स्नेहविच्छेदहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित् । घनतिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ २१८ ॥ धवलयति समग्रं चन्द्रमा जीवलोकं किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि । भवति विदितमेतत्प्रायशः सज्जनानां परहितनिरतानामादरो नात्मकार्ये ॥ २१९ ॥ प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम् । ददति जलमनल्पास्वादमाजीवितान्तं नहि कृतमुपकारं साधवो विस्मरन्ति ॥ २२० ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ २२१ ॥ उदयति यदि भानुः पश्चिमे दिग्विभागे प्रचलति यदि मेरुः शीततां याति वह्निः । विकसति यदि पद्मं पर्वताग्रे शिलायां न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ २२२ ॥ व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः सुकृतविलसितानां स्थानमूर्जस्वलानाम् । अकलितमहिमानः केतनं मङ्गलानां कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ २२३ ॥ वपुरविहितसिद्धा एव लक्ष्मीविलासाः प्रतिजनकमनीयं कान्तिमत्केतयन्ति । अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा विकसितमिव पद्मं बिन्दवो माकरन्दाः ॥ २२४ ॥ अपि विभवविहीनः प्रच्युतो वा स्वदेशान्नहि खलजनसेवां प्रार्थयत्युन्नतात्मा । तनु तृणमुपभुङ्क्ते न क्षुधार्तोऽपि सिंहः पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥ २२५ ॥ वहति भुवनश्रेणीं शेषः फणाफलकस्थितां कमठपतिना मध्येपृष्ठं सदा स च धार्यते । तमपि कुरुते क्रोडाधीनं पयोनिधिरादरादहह महतां निःसीमानश्चरित्रविभूतयः ॥ २२६ ॥ अणुरपि मणिः प्राणत्राणक्षमो विषभक्षिणां शिशुरपि रुषा सिंहीसूनुः समाह्वयते गजान् । तनुरपि तरुस्कन्धोद्भूतो दहत्यनलो वनं प्रकृतिमहतां जात्यं तेजो न मूर्तिमपेक्षते ॥ २२७ ॥ सुखलवदशा हर्षक्लैब्ये खलः खलु खेलते स्खलति भजते लेशक्लेशे विषादविषूचिकाम् । भवति न सतां दर्पोद्दामा न दैन्यमयी मतिर्दुरभिभवता गम्भीराणां सुखेष्वसुखेषु च ॥ २२८ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ २२९ ॥ केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः । विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥ २३० ॥ कस्मादेशात्क्षपयति तमः सप्तसप्तिः प्रजानां छायाहेतोः पथि विटपिनामञ्जलिः केन बद्धः । अभ्यर्थ्यन्ते जललवमुचः केन वा वृष्टिहेतोर्जात्यैवैते परहितविधौ साधवो बद्धकक्षाः ॥ २३१ ॥ यैर्वातूलो भवति पुरतः कथ्यमानैर्जनानां कामप्यन्तर्विदधति रुजं येऽप्यनुद्गीर्यमाणाः । तेऽभिप्रायाः किमपि हृदये कण्ठलग्नाः स्फुरन्तो यस्याख्येयास्तमिह सुहृदं पुण्यवन्तो लभन्ते ॥ २३२ ॥ उदन्वच्छन्ना भूः स च निधिरपां योजनशतं सदा पान्थः पूषा गगनपरिमाणं कलयति । इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ २३३ ॥ यदेतन्नेत्राम्भः पतदपि समासाद्य तरुणीकपोले व्यासङ्गं कुचकलशमस्याः कलयति । ततः श्रोणीबिम्बं व्यवसितविलासं तदुचितं स्वभावस्वच्छानां विपदपि सुखं नान्तरयति ॥ २३४ ॥ यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता । अयं कः संबन्धो यदनुहरते तस्य कुमुदं विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ २३५ ॥ गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे गुणा दोषायन्ते तदिदमपि नो विस्मयपदम् । महामेघः क्षारं पिबति कुरुते वारि मधुरं फणी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ २३६ ॥ प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः प्रकृत्या कल्याणी मतिरनवगीतः परिचयः । पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २३७ ॥ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो न सङ्गाद्दौर्जन्यं न हि सुजनता

१ मर्यादा. २ तीर्णवान्. ३ ब्रह्माण्डकोशे. ४ गाढान्धकारः. ५ नाशयतीत्यर्थः. ६ अमृततुल्यम्. ७ अमृतम्. ८ पङ्क्तिभिः.

१ सूर्यः. २ आश्चर्यविषयम्. ३ सर्पः. ४ आनन्दात्मिका. ५ कापट्यरहितम्.

कस्यचिदपि । प्ररूढे [1]संसर्गे मणिभुजगयोर्जन्मजनिते मणिर्नाहे[2]र्दोषान्स्पृशति न तु सर्पो मणिगुणान् ॥ २३८ ॥ न साधुः कुत्रापि व्रजति खलु दोषं न गुणतां खलानां संसर्गैरपि कृतनिवासोऽपि निपुणः । यथा पक्षिव्यालैरपिहिततनुश्चन्दनतरुर्न वैकृत्यं याति क्षपयति च तापं सुमनसाम् ॥ २३९ ॥ करे श्लाघ्यस्त्या[3]गः शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयि भुजयोर्वीर्यम[4]तुलम् । हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं विनाप्यैश्वर्येण प्रकृतिमहतां मण्डन[5]मिदम् ॥ २४० ॥ अचिन्त्याः पन्थानः किमपि महतामन्ध[6]करिपोर्यदक्षणोऽभूत्तेजस्तदकृ[7]त कथामप्यमदनाम्[8] । मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ २४१ ॥ इहानेके सन्तः सततमुपकारिण्युपकृतिं कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः । कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो विना स्वार्थे येषां भवति परकृत्यव्यसनिता ॥ २४२ ॥ अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो विपक्षादम्भोजादुपगतवतो वा मधुलिहः । अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचयप्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ २४३ ॥ तृषार्तैः सारंगैः प्रति जलधरं भूरि विरुतं घनैर्मुक्ता धाराः सपदि पयसस्तान्प्रति मुहुः । खगानां के मेघाः क इह विहगा वा जलमुचामयाच्यो नार्तानामनुपकरणीयो न महताम् ॥ २४४ ॥ शिला बाला जाता चरणरजसा यत्कुलशिशोः स एवायं सूर्यः सपदि निजपादैर्गिरिशिलाम् । स्पृशन्भूयो भूयो न खलु कुरुते कामपि वधूं कुले कश्चिद्धन्यः प्रभवति नरः श्लाघ्यमहिमा ॥ २४५ ॥ परार्थव्यासङ्गादुपजहदपि स्वार्थपरतामभेदैकत्वं यो वहति गुरु भूतेषु सततम् । स्वभावादस्यान्तः स्फुरति ललितोदात्तमहिमा समर्थो यो नित्यं स जयतितरः कोऽपि पुरुषः ॥ २४६ ॥ तमांसि ध्वंसन्ते परिणमति भूयानुपशयः सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम् । अथ प्रत्यासङ्गः कमपि महिमानं वितरति प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ २४७ ॥ प्रिया न्याय्या[9] वृ[10]त्तिर्मलिन[11]मसुभ[12]ङ्गेऽप्यसुकरं त्वसन्तो नाभ्यर्थ्याः[13] सुहृदपि न याच्यः कृ[14]शधनः । विपद्युच्चैः स्थेयं पदमनु[15]विधेयं च महतां सतां केनोद्दिष्टं[16] विषमम[17]सिधारा[18]व्रतमिदम् ॥ २४८ ॥

प्रदानं प्र[1]च्छन्नं गृ[2]हमुपगते संभ्रमविधिः प्रियं कृत्वा [3]मौनं सदसि कथनं नाप्यु[4]पकृतेः । [5]अनुत्सेको लक्ष्म्यां निर[6]भिभवसाराः परकथाः सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २४९ ॥ विजेतव्या लङ्का चरणतरणीयो जलनिधिर्विपक्षः पौ[7]लस्त्यो रणभुवि सहायाश्च कपयः । तथाप्येको रामः सकलमवधीद्राक्षसकुलं क्रिया[8]सिद्धिः सत्त्वे वसति महतां नोप[9]करणे ॥ २५० ॥ रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा निरालम्बो मार्गश्च[10]रणरहितः सारथिरपि । रविर्गच्छत्यन्तं प्रतिदिनमपारस्य नभसः क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २५१ ॥ धनुः पौष्पं[11] मौर्वी[12] मधुकरमयी[13] चञ्चलदृशां दृशां कोणो बाणः सुहृदपि ज[14]डात्मा हिमकरः । तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २५२ ॥ विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः । तथापि त्रैलोक्यं जयति मदनो देह[15]रहितः क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २५३ ॥ घटो [16]जन्मस्थानं मृग[17]परिजनो भूर्जवसनो वने वासः कन्दाशनमपि च दुःस्थं वपुरिदम् । तथाप्येकोऽगस्त्यः सकलमपिबद्वारि[18]धिजलं क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २५४ ॥ जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः पराभ्युदयसुस्थिताः परविपत्तिखेदा[19]कुलाः । महापुरुषसत्कथाश्रवणजातकौतूहलाः समस्तदुरितार्णवप्रकटसेतवः साधवः ॥ २५५ ॥ ये जाते व्य[20]सने निरा[21]कुलधियः संपत्सु नाभ्युन्नताः प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणोपयोगैरपि । [22]ह्रीमन्तः स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डितास्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ २५६ ॥ क्षु[23]द्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः स्वार्थो यस्य परार्थ एव स पुमानेकः सताम[24]ग्रणीः । दुष्पूरोदरपूरणाय पिबति [25]स्रोतःपतिं वा[26]डवो जीमू[27]तस्तु नि[28]दाघतापितजगत्संतापविच्छित्तये ॥ २५७ ॥ मज्जन्तोऽपि विप[29]त्पयोधिगहने निःशङ्कधैर्यावृताः कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्ति वै । राहोरुग्रक[30]रालवक्त्रकुहरग्रासाभिभूतोऽप्यलं चन्द्रः किं न

१ संबन्धे. २ सर्पस्य. ३ दानम्. ४ निस्तुलम्. ५ भूषणम्. ६ शंकरस्य. ७ अकरोत्. ८ वार्तावशिष्टो मदनो यस्मिंस्तत्तथाविधम्. ९ न्यायानुसारिणी. १० वर्तनम्. ११ पातकम्. १२ प्राणव्यये. १३ न याचितव्याः. १४ क्षीणधनः. १५ अनुसर्तव्यम्. १६ उपदिष्टम्. अतिकठिनम्. १८ खड्गधारातांडवरूपम्.

१ गुप्तम्. २ अतिथौ. ३ अनुद्घाटनम्. ४ उपकारस्य. ५ गर्वाभावः. ६ निन्दा. ७ रावणः. ८ कार्यसिद्धिः. ९ सामग्र्याम्. १० अनूरुः. ११ पुष्पमयम्. १२ ज्या. १३ भ्रमररूपा. १४ बुद्धिरहितः. पक्षे,-डलयोः सावर्ण्यात् जलात्मा जलरूपः. १५ अनङ्गः. १६ उत्पत्तिस्थानम्. १७ मृगा एव परिजनः. १८ समुद्रम्. १९ व्यग्रचित्ताः. २० संकटे. २१ अव्याकुलचित्ताः. २२ लज्जावन्तः. २३ नीचाः. २४ अग्रेसरः. २५ समुद्रम्. २६ वाडवाग्निः. २७ मेघः. २८ ग्रीष्मः. २९ विपदेव विपदां वा पयोधिः समुद्रः. ३० भयंकरम्.

जनं करोति सुखिनं ग्रासावशेषैः कैरैः[1] ॥ २५८ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं स्वयोषिति[2] रतिर्लोकापवादाद्भयम् । भक्तिः शूलिनि[3] शक्तिरात्मदमने[4] संसर्गमुक्तिः खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ २५९ ॥ दृश्यन्ते भुवि भूरि निम्बतरवः कुत्रापि ते चन्दनाः पाषाणैः परिपूरता वसुमती वज्रो[5] मणिर्दुर्लभः । श्रूयन्ते करटारवाश्च[6] सततं चैत्रे कुहूकूजितं[7] तन्मन्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः ॥ २६० ॥ घर्मार्ते न तथा सुशीतलजलैः स्नानं न मुक्तावलिर्न[8] श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यार्पितम् । प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसः सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ २६१ ॥ धर्मे तत्परता मुखे मधुरता दाने समुत्साहिता मित्रेऽवञ्चकता गुरौ विनयिता चित्तेऽतिगम्भीरता । आचारे शुचिता गुणे रसिकता शास्त्रेऽतिविज्ञानिता रूपे सुन्दरता हरौ भजनिता सत्स्वेव संदृश्यते ॥ २६२ ॥ सौजन्यामृतसिन्धवः[9] परहितप्रारब्धवीरव्रता वाचालाः परवर्णने निजगुणालापे च मौनव्रताः । आपत्स्वप्यविलुप्तधैर्यनिचयाः[10] संपत्स्वनुत्सेकिनो[11] मा भूवन्खलवक्रनिर्गतविषज्वालातताः सज्जनाः ॥ २६३ ॥ ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो व्यग्रा ये च परोपकारकरणे हृष्यन्ति[12] ये याचिताः । स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये तैः स्तम्भैरिव सुस्थितैः कलिभरक्रान्ता धरा[13] धार्यते ॥ २६४ ॥ क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्पर्जन्यश्चपलाश्रयो[14]ऽभ्रपटलादृश्यः सुवर्णाचलः । शून्यं व्योम रसा[15] द्विजिह्वविधृता स्वर्धामधेनुः पशुः काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सताम् ॥ २६५ ॥ कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः कस्माद्वा जलधारयैव धरणिं धाराधरः सिञ्चति । भ्रामं भ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ २६६ ॥ अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः । कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥ २६७ ॥ गर्वं नोद्वहते न निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते । श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥ २६८ ॥ किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः । किं चाङ्गीकृतमुत्सृजन्हि मनसा श्लाघ्यो जनो लज्जते निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ २६९ ॥ सेतूपक्रमकौतुकाहृतगिरिप्रक्षेपवेगोच्छलन्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः । चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भयं मारुतेः पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता ॥ २७० ॥ शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः सन्ति श्रीपतयो निरस्तधनदास्तेऽपि क्षितौ भूरिशः । ये कर्मण्यनिरीक्ष्य वान्यमनुजं दुःखार्दितं यन्मनस्ताद्रूप्यं प्रतिपद्यते जगति ते सत्पूरुषाः पञ्चषाः ॥ २७१ ॥ ख्यातिं यत्र गुणा न यान्ति गुणिनस्तत्रादरः स्यात्कुतः किं कुर्याद्बहुशिक्षितोऽपि पुरुषः पाषाणभूते जने । प्रेमारूढविलासिनीमदवशव्यावृत्तकण्ठस्वनः सीत्कारो हि मनोहरोऽपि बधिरे किं नाम कुर्याद्गुणम् ॥ २७२ ॥ तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान्मानय विद्विषोऽप्यनुनय ह्याच्छादय स्वान्गुणान्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ २७३ ॥ स्वाम्ये पेशलता गुणे प्रणयिता हर्षे निरुत्सेकता पत्रे संवृतता श्रुते सुमतिता वित्तोदये त्यागिता । साधौ सादरता खले विमुखता पापे परं भीरुता दुःखे क्लेशसहिष्णुता च महतां कल्याणमाकाङ्क्षति ॥ २७४ ॥ गेहं दुर्गतबन्धुभिर्गुरुगृहं छात्रैरहंकारिभिर्हट्टं पत्तनवञ्चकैर्मुनिजनैः शापोन्मुखैराश्रमान् । सिंहाद्यैश्च वनं खलैर्नृपसभां चौरैर्दिगन्तानपि संकीर्णान्यवलोक्य सत्यसरलः साधुः क्व विश्राम्यति ॥ २७५ ॥ दीनानां कल्पवृक्षः सुगुणफलनतः सज्जनानां कुटुम्बी ह्यादर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः । सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥ २७६ ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः[1] स्वार्थान्संपादयन्तो विततबहुतरारम्भयत्नाः परार्थे । क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दुःखयन्तः सन्तः साश्चर्यचर्या जगति बहुनताः कस्य नाभ्यर्थनीयाः ॥ २७७ ॥ वक्रे वल्गाप्रकर्षः[2] समरभुवि[3] तव प्राणरक्षापि दैवात्स्वेच्छाचारो न चास्ते नहि भवति तथा भारवाहो नितान्तम् । इत्युक्तोऽश्वः खरेण प्रहसितवदनो मूक एवावतस्थे तस्माज्ज्ञात्वा महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ॥ २७८ ॥

१ किरणैः. २ स्वस्त्रियाम्. ३ शंकरे. ४ मनोजये. ५ हीरकमणिः. ६ काकशब्दाः. ७ कोकिलशब्दाः. ८ मुक्तासरः. ९ सुजनतामृतसमुद्राः. १० विपत्तिकालेषु. ११ गर्वरहिता. १२ हर्षयुक्ता भवन्ति. १३ पृथ्वी. १४ विद्युत्. १५ पृथ्वी.

१ प्रकटयन्तः. २ मुखबन्धन(लगाम)सौष्ठवम्. ३ सङ्ग्रामाङ्गणे.

## दुर्जननिन्दा

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ १ ॥ न विना परवादेन रमते दुर्जनो जनः । काकः सर्वरसान्भुक्त्वा विनामेध्यं[1] न तृप्यति ॥ २ ॥ विशिखव्यालयोरन्त्यवर्णाभ्यां[2][3][4] यो विनिर्मितः । परस्य हरति प्राणान्नैतच्चित्रं कुलोचितम् ॥ ३ ॥ विषमा[5] मलिनात्मानो[6] द्विजिह्वा जिह्मगा[7] इव । जगत्प्राणहरा नित्यं कस्य नोद्वेजकाः खलाः ॥ ४ ॥ दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ५ ॥ खलानां कण्टकानां च द्विविधैव प्रतिक्रिया[8] । उपानन्मुखभङ्गो[9] वा दूरतो वा विसर्जनम् ॥ ६ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः[10] ॥ ७ ॥ ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः । कवलीकुरुते स्वस्थं विधुं दिवि विधुंतुदः ॥ ८ ॥ क्वचित्सर्पोऽपि मित्रत्वमियान्नैव खलः क्वचित् । न शेषशायिनोऽप्यस्य वशे दुर्योधनो हरेः ॥ ९ ॥ उपकारोऽपि नीचानामपकारो हि जायते । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ १० ॥ अलकाश्च खलाश्चैव मूर्धभिः सुजनैर्धृताः । उपर्युपरि संस्कारेऽप्याविष्कुर्वन्ति वक्रताम् ॥ ११ ॥ खलानां धनुषां चापि सद्वंशजनुषामपि[11] । गुणलाभो[12] भवेदाशु परहृद्भेदकारकः ॥ १२ ॥ बहुनिष्कपटद्रोही[13] बहुधान्योपघातकः[14] । रन्ध्रान्वेषी[15] च सर्वत्र दूषको मूषको यथा ॥ १३ ॥ नौश्च दुर्जनजिह्वा च प्रतिकूलविसर्पिणी[16] । परप्रतारणायैव[17] दारुणा[18] केन निर्मिता ॥ १४ ॥ यस्मिन्वंशे[19] समुत्पन्नस्तमेव निजचेष्टितैः[20] । दूषयत्यचिरेणैव घुणकीट इवाधमः[21] ॥ १५ ॥ स्वभावकठिनस्यास्य कृत्रिमां[22] बिभ्रतो नतिम्[23] । गुणोऽपि[24] परहिंसायै चापस्य[25] च खलस्य च ॥ १६ ॥ अयःपिण्ड इवोत्तप्ते खलानां हृदये क्षणात् । पतिता अपि नेक्ष्यन्ते गुणास्तोयकणा इव ॥ १७ ॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १८ ॥ वक्रतां बिभ्रतो यस्य गुह्यमेव प्रकाशते । कथं खलु समो न स्यात्पुच्छेन पिशुनः शुनः ॥ १९ ॥ स्नेहेन[1] भूतिदानेन[2] कृतः स्वच्छोऽपि दुर्जनः । दर्पणश्चान्तिके तिष्ठन्करोत्येकमपि द्विधा ॥ २० ॥ आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य[3] च । सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा[4] ॥ २१ ॥ यथा यथैव स्नेहेन भूयिष्ठमुपचर्यते[5][6] । धत्ते तथा तथा तापं महावैश्वानरः[7] खलः ॥ २२ ॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अहो नु सदृशी वृत्तिस्तुलाकोटेः[8] खलस्य च ॥ २३ ॥ दुर्जनः कृतशिक्षोऽपि सज्जनो नैव जायते । अपि गङ्गाजलस्नानान्नाधःकेशः कुशायते ॥ २४ ॥ दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ २५ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम्[9] ॥ २६ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ २७ ॥ संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः । दोषग्राही गुणत्यागी पल्लोलीव[10] हि दुर्जनः ॥ २८ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन् । सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥ २९ ॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः । सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ ३० ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः । शीलमेतदसाधूनामभ्रं पारिप्लवं[11] यथा ॥ ३१ ॥ अशक्ताः शक्तिमात्मीयां श्लाघयन्ते च दुर्जनाः । ते भवन्त्युपहासाय महतामेव संनिधौ ॥ ३२ ॥ सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः । मन्त्रेण शाम्यते सर्पो न खलः शाम्यते कदा ॥ ३३ ॥ दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ ३४ ॥ दुर्जनः सुजनो न स्यादुपायानां शतैरपि । अपानं मृत्सहस्रेण धौतं चास्यं कथं भवेत् ॥ ३५ ॥ खलास्तु कुशलाः साधोर्हितप्रत्यूहकर्मणि[12] । निपुणाः फणिनः प्राणानपहर्तुं निरागसाम्[13] ॥ ३६ ॥ अहो बत महत्कष्टं विपरीतमिदं जगत् । येनापत्रपते[14] साधुरसाधुस्तेन तुष्यति ॥ ३७ ॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥ ३८ ॥ दुर्जनो नार्जवं[15] याति सेव्यमानोऽपि नित्यशः । स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव ना-

---

१ विष्ठाद्यशुचि. २ बाणः. ३ सर्पः. ४ अन्त्यवर्णौ 'खल' इति. ५ कुटिलाः. ६ मलिनान्तःकरणाः. ७ सर्पाः. ८ प्रतीकारः. ९ उपानहा पादस्थचर्मणा मुखभङ्गः. १० निवारणात्; पक्षे,–जलात्. ११ कुलम्; पक्षे,–वेणुः. १२ विनयादिः; पक्षे,–मौर्वी. १३ बहु-निष्कपट-द्रोही; पक्षे,–बहु-निष्क-पट-द्रोही इति पदच्छेदः. १४ बहुधा-अन्योपघातकः; पक्षे,–बहु-धान्य-उपघातकः. इति पदच्छेदः. १५ दूषणान्वेषी; पक्षे,–छिद्रान्वेषी. १६ प्रतितीरम्; पक्षे,–विरुद्धम्. १७ परेषां प्रकर्षेण तारणाय; पक्षे,–परेषां वञ्चनाय. १८ भयंकरा; पक्षे,–काष्ठेन. १९ वेणौ; पक्षे,–कुले. २० स्वकर्मभिः. २१ काष्ठवेधकः कृमिः. २२ क्रियया निर्वृत्ताम्; पक्षे,–कपटयुक्ताम्. २३ नम्रत्वम्. २४ मौर्वी; पक्षे,–विनयादिः. २५ धनुषः.

१ तैलेन; पक्षे,– ममतया. २ भस्म; पक्षे,–वैभवम्. ३ लाङ्गलम्. ४ पृथ्वी; पक्षे,–शान्तिः. ५ बाहुल्येन. ६ पूज्यते. ७ अग्निः; पक्षे,–वै-श्वा-नरः इति च्छेदः. ८ तुलायष्टेः. ९ राजहंसत्वम्. १० चालनी. ११ चञ्चलम्. १२ हितेऽन्तरायाचरणे. १३ निरपराधानाम्. १४ लज्जां प्राप्नोति. १५ सरलताम्.

मितम् ॥ ३९ ॥ वर्धनं वाथ संमानं खलानां प्रीतये कुतः । फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ ४० ॥ दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि । अकालकुसुमानीव भयं संजनयन्ति हि ॥ ४१ ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥४२॥ अहो खलभुजंगस्य विपरीतो वधक्रमः । अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ४३ ॥ न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत् । किं मर्दितोऽपि कस्तूर्या लशुनो याति सौरभम् ॥ ४४ ॥ पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते । सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥ ४५ ॥ दुर्जनो दोषमादत्ते दुर्गन्धिमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ ४६ ॥ अपूर्वा रसनाव्यालाः[1] खलाननबिलेशयाः । कर्णमूले स्पृशन्त्यन्यं हरन्त्यन्यस्य जीवितम् ॥ ४७ ॥ दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ ४८ ॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥ ४९ ॥ मनस्यन्यद्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ५० ॥ जीवन[2]ग्रहणे नम्रा[3] गृहीत्वा पुनरुन्नताः[4] । किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्र[5]स्य दुर्जनाः ॥ ५१ ॥ बिभ्राणा गरलं कण्ठे भुजंग[6]परिवेष्टिता । शांभवीव तनुः कस्य न वन्द्या दौर्जनी[7] सभा ॥ ५२ ॥ अक्षमालापवृत्तिज्ञा[8] कुशासनपरिग्रहा[9] । ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला[10] ॥ ५३ ॥ खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ५४ ॥ कुर्वते स्वमुखेनैव बहुधान्यस्य[11] खण्डनम् । नमः पतनशीलाय मुसलाय खलाय च ॥ ५५॥ अपवाददभीतस्य समस्य गुणदोषयोः । असद्वृत्तेरहो वृत्तं दुर्विभाव्यं विधेरिव ॥ ५६ ॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ ५७ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । तोहृदयं क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥ ५८ ॥ निष्णाऽपि च वेदान्ते साधुत्वं नैति दुर्जनः । चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ५९ ॥ खलः सज्जनकार्पासधक्षणैक[1]हुताशनः । परदुःखाग्निधमनमारुतः केन वर्ण्यताम् ॥ ६० ॥ यशःसौरभ्यलशुनः[2] शान्तिशैत्यहुताशनः[3] । कारुण्यकुसुमाकाशः[4] खलः सज्जनदुःखदः ॥ ६१ ॥ अन्तर्मलिनदेहेन बहिराह्लादकारिणा । महाकालफलेनेव[5] के खलेन न वञ्चिताः ॥ ६२ ॥ अहो प्रकृतिसादृश्यं[6] श्लेष्मणो[7] दुर्जनस्य च । मधुरैः[8] कोपमायाति कटुकेनैव शाम्यति ॥ ६३ ॥ ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः । कृतक्षोभो नरीनर्ति[9] खलो मन्थानदण्डवत् ॥ ६४ ॥ बिभ्रत्वती पुरस्तैक्ष्ण्यं पृष्ठतः कुर्वती गुणम् । कर्णाविध्यति लोकस्य सूचीवत्सूचकस्य वाक् ॥ ६५ ॥ सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता । यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ६६ ॥ कापूरुषः कुक्कुरश्च भोजनैकपरायणः । लालितः पार्श्वमायाति वारितो नच गच्छति ॥ ६७ ॥ मालिन्यमवलम्बेत यदा दर्पणवत्खलः । तदैव तन्मुखे देयं रजो नान्या प्रतिक्रिया ॥ ६८ ॥ नीचः समुत्थितोऽवश्यमनवाप्य पराश्रयम् । छिद्रं न रतिमाप्नोति दृष्टान्तोऽत्र कटीभवः[10] ॥ ६९ ॥ दुर्जनः परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः । विध्यते वा कुशल्येन अदृष्टः कण्टको यथा ॥ ७० ॥ यथा वृष्टिः समुद्रेषु मुक्तस्योपरि भोजनम् । एवं प्रीतिः खलैः सार्धमुत्पन्नेऽर्थेऽवसीदति ॥ ७१ ॥ क्वचित्कार्यवशान्नीचोऽप्यलं भवति नो महान् । कांस्यस्यैव हि राज्ञोऽपि दर्पणः कनकस्य न ॥ ७२ ॥ दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् । मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥७३॥ यथा दोषो विभात्यस्य जनस्य न तथा गुणः । प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ७४ ॥ संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् । शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः[11] ॥ ७५ ॥ प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः । नयनं स्नेहसंपर्कात्कालुष्यं समुपैत्यलम् ॥ ७६ ॥ प्राप्य वित्तं जडास्तूर्णं निर्वृतिं यान्ति नान्यथा । तोयमासाद्य गर्जन्ति न रिक्ताः स्तनयित्नवः[12] ॥७७॥ सदा खण्डनयोग्याय तुषपूर्णाशयाय च । नमोऽस्तु बहुबीजाय खलायोलूखलाय च ॥७८॥ जिह्वादूषितसत्पात्रः पिण्डार्थी[13] कलहोत्कटः । तुल्यतामशुचिर्नित्यं बिभर्ति पिशुनः शुनः॥७९॥

---

१ जिह्वारूपाः सर्पाः. २ उदकम्; पक्षे,–प्राणाः. ३ अधोमुखाः; पक्षे,–विनीताः. ४ ऊर्ध्वमुखाः. पक्षे,–उद्धताः. ५ एकरज्जुसंबद्धघटमालारूपं 'राहाट' इति प्रसिद्धम्. ६ सर्पाः; पक्षे,– जाराः. ७ दुर्जनसंबन्धिनी. ८ अक्षमा य आलापास्तेषां वृत्तिज्ञा; पक्षे,–अक्षमाला जपमाला तस्या अपवृत्तिर्भ्रमणं जानातीति सा. ९ कुत्सितं यच्छासनं शिक्षा तस्य परिग्रहोऽवलम्बो यस्याः सा; पक्षे,–कुशासनं दर्भासनं तत्परिग्रहः स्वीकारो यस्याः सा. १० समे साधौ खला; पक्षे,–मेखलया सहिताः. ११ बहुधा अन्यस्य परस्य खण्डनम्; पक्षे,–पुष्कलधान्यस्य खण्डनं वितुषीकरणम्.

१ दहनम्. २ कीर्तिरेव सौगन्ध्यं तन्नाशकत्वाल्लशुन इव. लशुनो हि कस्तूर्यादेः सौगन्ध्यं नाशयतीति प्रसिद्धिः. ३ शान्तिरेव शैत्यं तन्नाशकत्वादग्निरिव. ४ कारुण्यमेव कुसुमं तस्याकाशः. आकाशस्य यथा पुष्पं कदापि नोपलभ्यते तद्वत्खले कारुण्यं सर्वथाऽसंभाव्यं इत्यर्थः. ५ धत्तूरफलेन. ६ स्वभावसाम्यम्. ७ कफस्य. ८ साधुद्रव्यैः; पक्षे,–सुवचनैः. ९ पुनः पुनर्नृत्यति. १० पुरुषव्यञ्जनम्. ११ लोहम्. १२ मेघाः. १३ भक्ष्येच्छुः.

अहो बत खलः पुण्यैर्मूर्खोऽप्यश्रुतपण्डितः । स्वगुणोदीरणे शेषः परनिन्दासु वाक्पतिः ॥ ८० ॥ खलः सुजनपैशुन्ये सर्वतोऽक्षिशिरोमुखः । सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति ॥८१॥ सत्साधुवादे मूर्खस्य मात्सर्यगलरोगिणः । जिह्वा कङ्कमुखेनापि कृष्टा नैव प्रवर्तते ॥ ८२ ॥ मायामयः प्रकृत्यैव रागद्वेषमदाकुलः । महतामपि मोहाय संसार इव दुर्जनः ॥ ८३ ॥ खचित्रमपि मायावी रचयत्येव लीलया । लघुश्च महतां मध्ये तस्मात्खल इति स्मृतः ॥ ८४ ॥ खलेन धनमत्तेन नीचेन प्रभविष्णुना । पिशुनेन पदस्थेन हा प्रजे क्व गमिष्यसि ॥ ८५ ॥ ये श्रमं हर्तुमीहन्ते महतां चिरसंभृतम् । वन्ध्यास्तेऽसरलात्मानो दुर्जनाः सज्जना इव ॥ ८६ ॥ अहो कुटिलबुद्धीनां दुर्ग्राह्यमसतां मनः । अन्यद्वचसि कण्ठेऽन्यदन्यदोष्ठपुटे स्थितम् ॥ ८७ ॥ खलेषु सत्सु निर्याता वयमर्जयितुं गुणान् । इयं सा तस्करग्रामे रत्नक्रयविडम्बना ॥८८॥ वर्धेते स्पर्धयेवोभौ संपदा शतशाखया । अङ्कुरोऽवस्करोद्भूतः पुरुषश्चाकुलोद्भवः ॥ ८९ ॥ यत्स्मृत्वैव परां यान्ति सन्तः संतापसंततिम् । तदसन्तो हसन्तोऽपि हेलयैव हि कुर्वते ॥ ९० ॥ गुणदोषावशास्त्रज्ञः कथं विभजते जनः । किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु ॥ ९१ ॥ प्रायः प्रकाशतां याति मलिनः साधुबाधया । नाग्रसिष्यत चेदर्कं कोऽज्ञास्यत्सिंहिकासुतम् ॥ ९२ ॥ प्रायः परोपतापाय दुर्जनः सततोद्यतः । अवश्यकरणीयत्वान्न कारणमपेक्षते ॥ ९३ ॥ यथा गजपतिः श्रान्तश्छायार्थी वृक्षमाश्रितः । विश्रम्य तं द्रुमं हन्ति तथा नीचः स्वमाश्रयम् ॥ ९४ ॥ चारुता परदारार्थं धनं लोकोपतप्तये । प्रभुत्वं साधुनाशाय खले खलतरा गुणाः ॥ ९५ ॥ परोपकारविज्ञानमात्रलाभोपजीविनाम् । दार्शानामिव धूर्तानां जालाय गुणसंग्रहः ॥ ९६ ॥ करोति पूज्यमानोऽपि लोकव्यसनदीक्षितः । दर्शने दर्शने त्रासं गृहाहिरिव दुर्जनः ॥ ९७ ॥ सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव । नास्तिकोऽपि ह्युद्विजते जनः किं पुनरास्तिकः ॥ ९८ ॥ येषां प्राणिवधः क्रीडा नर्म मर्मच्छिदो गिरः । कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥ ९९ ॥ न तथेच्छन्त्यकल्याणाः परेषां वेदितुं गुणान् । यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ १०० ॥ अतो हास्यतरं लोके किंचिदन्यन्न विद्यते । यत्र दुर्जन इत्याह दुर्जनः सज्जनं जनम् ॥ १०१ ॥ अपकारमसंप्राप्य तुष्येत्साधुरसाधुतः । नैष लाभो भुजंगेन वेष्टितो यन्न दृश्यते ॥ १०२ ॥ लुब्धः स्तब्धोऽनृजुर्मूर्खः प्रभुरेकान्तदारुणः । बहूनेष खलः साधून्मारयित्वा मरिष्यति ॥ १०३ ॥ का खलेन सह स्पर्धा सज्जनस्याभिमानिनः । भाषणं भीषणं साधुदूषणं यस्य भूषणम् ॥ १०४ ॥ मुखेनैकेन विध्यन्ति पादमेकस्य कण्टकाः । दूरान्मुखसहस्रेण सर्वप्राणहराः खलाः ॥ १०५ ॥ निर्माय खलजिह्वाग्रं सर्वप्राणहरं नृणाम् । चकार किं वृथा शस्त्रविषवह्नीन्प्रजापतिः ॥१०६ ॥ यथा परोपकारेषु नित्यं जागर्ति सज्जनः । तथा परापकारेषु जागर्ति सततं खलः ॥१०७ ॥ बिभेति पिशुनान्नीचः प्रकाशनपटीयसः । न पुनर्मूढहृदयो निन्दनीयात्स्वकर्मणः ॥ १०८ ॥ वृथाज्वलितकोपाग्नेः परुषाक्षरवादिनः । दुर्जनस्यौषधं नास्ति किंचिदन्यदनुत्तरात् ॥ १०९ ॥ जीवन्नपि न तत्कर्तुं शक्नोति सुजनस्तथा । दुर्जनो यन्मृतः कुर्यात्परेभ्योऽहितमुत्तरम् ॥ ११० ॥ यद्यदिष्टतमं तत्तद्देयं गुणवते किल । अत एव खलो दोषान्साधुभ्यः संप्रयच्छति ॥ १११ ॥ वरमत्यन्तविफलः सुखसेव्यो हि सज्जनः । न तु प्राणहरस्तीक्ष्णः शरवत्सफलः खलः ॥ ११२ ॥ स्वभावेनैव निशितः कृतपक्षग्रहोऽपि सन् । शरवद्गुणनिर्मुक्तः खलः कस्य न भेदकः ॥ ११३ ॥ दुर्जनः सुजनीकर्तुं यत्नेनापि न शक्यते । संस्कारेणापि लशुनं कः सुगन्धीकरिष्यति ॥ ११४ ॥ नैवात्मनो विनाशं गणयति पिशुनः परव्यसनहृष्टः । प्राप्य सहस्रविनाशं समरे नृत्यति मुदा कबन्ध इव ॥ ११५ ॥ रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः । अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ११६ ॥ त्यक्त्वापि निजप्राणान्परहितविघ्नं खलः करोत्येव । कवले पतिता सद्यो वमयति खलु मक्षिकाऽन्नभोक्तारम् ॥ ११७ ॥ कृतमपि महोपकारं पय इव पीत्वा निरातङ्कम् । प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥ ११८ ॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ११९ ॥ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् । सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति ॥ १२० ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते । पुष्पे फले विरागी क्रमेलकः कण्टकौघमिव ॥ १२१ ॥ सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति । पवनः परागवाही रथ्यासु वहन्रजस्वलो भवति ॥ १२२ ॥ परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति । अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥ १२३ ॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वा-

१ संमार्जितपांसुसंचयस्थानम्, 'उकीरडा' इति लोके. २ राहुम्. ३ परोपतापाय. ४ मत्स्यजीवि-धीवराणाम्. ५ कुटिलः.

१ अशिरस्कं कलेवरम्. २ पांसुपुञ्जः. ३ वान्तिं कारयति. ४ निःशङ्कम्. ५ वैपरीत्ये. ६ सर्पबन्धुः. ७ श्वेतसर्षपाणाम्; पक्षे,-सिद्धोऽर्थः कार्यं येषां ते. ८ तैलम्; पक्षे,-स्नेहभावः. ९ वाष्पाणि. १० उष्ट्रः. ११ वीथीषु. १२ रजोयुक्तः. १३ भार्यायाम्.

सः । बालः पयसा दग्धो दध्यपि फूत्कृत्य[1] भक्षयति ॥ १२४ ॥ विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः । यदयं नकुलद्वेषी[2] स कुलद्वेषी पुनः पिशुनः ॥ १२५ ॥ अतिमलिने[3] कर्तव्ये भवति खलानामतीव निपुणा[4] धीः । तिमिरे[5] हि[6] कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ १२६ ॥ लब्धोच्छ्रायो नीचः प्रथमतरं स्वामिनं पराभवति । भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥ १२७ ॥ [7]उपकृतमनेन सुहृदयमित्यसतामस्ति न क्वचिदपेक्षा । होतुः स्वहस्तमाश्रितमुद्धृत्तोऽग्निर्दहत्येव ॥ १२८ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ १२९ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते । पवनाशिनो[8]ऽपि भुजगाः परोपतापं न मुञ्चन्ति ॥ १३० ॥ प्रेरयति परमनार्यः शक्तिविहीनोऽपि जगदभिद्रोहे । तेजयति शस्त्रधारां स्वयमसमर्था शिला छेत्तुम् ॥ १३१ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः[9] । तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥ १३२ ॥ व्योम्नि स वासं कुरुते चित्रं निर्माति सुन्दरं पवने । रचयति रेखाः सलिले चरति खले यस्तु सत्कारम् ॥ १३३ ॥ अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः । परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ १३४ ॥ मृद्घटवत्सुखभेद्यो दुःसंधानश्च[10] दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशुसंधेयः ॥ १३५ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धक[11]धीवरपिशुना निष्कारणवैरिणो[12] जगति ॥ १३६ ॥ रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि । अथवालं पापात्मन् कृतया कथयापि ते हतया ॥ १३७ ॥ विध्वस्त[13]परगुणानां भवति खलानामतीव मलिनत्वम् । अन्तरितशशिरुचामपि सलिलमुचां[14] मलिनिमाभ्यधिकः[15] ॥ १३८ ॥ परगुह्यगुप्तिनिपुणं[16] गुणमयमखिलैः[17] समीहितं नितराम् । ललिताम्बरमिव[18] सज्जनमाखव इव दूषयन्ति खलाः ॥ १३९ ॥ दूरस्थापितहृदयो[19] गूढरहस्यो[20] निकामसाशङ्कः[21] । आश्लेषो बालानां भवति खलानां च संभेदः ॥ १४० ॥ धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका भवति । काकानामभिषेकेऽकारणतां[1] वृष्टिरनुभवति ॥ १४१ ॥ यद्वीक्ष्यते खलानां माहात्म्यं क्वापि दैवयोगेन । काकानामिव शौक्ल्यं तदपि हि न चिरादनर्थाय ॥ १४२ ॥ यत्खलु खलमुखहुतवहविनिहितमपि शुद्धिमेत्र परमेति । तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम ॥ १४३ ॥ [2]वंशावलम्बनं[3] यद्यो विस्तारो[4] गुणस्य[5] या च नतिः । तज्जालस्य खलस्य च निर्जाङ्कसुस[6]प्रणाशाय ॥ १४४ ॥ सुगृहीतमलिनपक्षा[7] लघवः[8] परभेदिन[9]स्तीक्ष्णाः । पुरुषा[10] अपि विशिखा अपि गुणच्युताः[11] कस्य न भयाय ॥ १४५ ॥ स्वकपोलेन[12] प्रकटीकृतं प्रमत्तत्वकारणं किमपि । द्विरदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ १४६ ॥ संतापमोहकम्पान्संपादयितुं निहन्तुमपि जन्तून् । सखि दुर्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥ १४७ ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः । रुधिरादानादधिकं दुनोति कर्णे कुणन्[13]मशकः[14] ॥ १४८ ॥ क्षुद्रोद्भवस्य कटुतां[15] प्रकटयतो विदधतश्च मदमुच्चैः[16] । मधुनोऽधमपुरुषस्य च गरिमा लघिमा च भेदाय ॥ १४९ ॥ त्यजति च गुणान्सुदूरं तनुमपि[17] दोषं निरीक्ष्य गृह्णाति । मुक्त्वालंकृतकेशान् यूकामिव वानरः पिशुनः ॥ १५० ॥ दोषा[18]लोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च । दर्शनमपि भयजननं येषामनिमित्तपिशुनानाम् ॥ १५१ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ १५२ ॥ हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् । दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ १५३ ॥ अन्यस्य लगति कर्णे जीवितमन्यस्य हरति बाण इव । हृदयं दुनोति पिशुनः कण्टक इव पादलग्नोऽपि ॥ १५४ ॥ स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् । पिशुनानां पनसानां कोशा[19]भोगोऽप्यविश्वास्यः ॥ १५५ ॥ वंशे घुण[20] इव

१ फूत्कारं कृत्वा. २ नकुल-द्वेषी; पक्षे,-न कुल-द्वेषी. ३ अत्यन्तमलदूषिते. ४ पूर्णा. ५ तमसि. ६ घूकानाम्. ७ व्यथां करोति. ८ वायुभक्षकाः. ९ बहुप्रकारैः स्नेहैः सुगन्धतैलादिभिः; पक्षे,-बहुया प्रीत्या. १० दुःखेन संधातुं शक्यः. ११ व्याधः. १२ निष्कारणशत्रवः. १३ नाशिताः. १४ मेघानाम्. १५ मालिन्यम्. १६ गुह्यगोपने निपुणम्. १७ तन्तुप्रचुरम्; पक्षे,-दयादाक्षिण्यादिप्रचुरम्. १८ मूल्यवद्वस्त्रमिव. १९ दूरे स्थापितं हृदयं येन; पक्षे,-दूरे स्थापितमन्तःकरणं येन. २० अन्तःकरणविषयीभूतम्; पक्षे,-मन्त्रादि. २१ भीतिः; पक्षे,-विश्वासाभावः.

१ काकैः स्नाने कृते वृष्टिर्न भवतीति वृद्धव्यवहारः. २ कुलस्य; पक्षे,-वेणोः. ३ जन्यत्वम्; पक्षे,-आश्रितत्वम्. ४ आधिक्यम्; पक्षे,-दैर्घ्यम्. ५ पाण्डित्यशौर्यादेः. पक्षे,-रज्जोः. ६ विश्वस्तनाशायेत्यर्थः. ७ सम्यग्गृहीतो दुष्टानां पक्षोऽङ्गीकारो यैः; पक्षे,-झटिति निष्कासनानर्हाः. श्यामपक्षवन्त इत्यर्थः. ८ नीचाः; पक्षे,-अल्पपरिणामवन्तः. ९ परान्भेदयन्ति ते. अन्येषां परस्परभेदजननेन कलहप्रवर्तका इत्यर्थः पक्षे,-इतरच्छेदकारकः. १० क्रूरकर्माणः; पक्षे,-यथाश्रुतम्. ११ साधुत्वादिगुणहीनाः; पक्षे,-ज्यायाश्च्युताः. १२ स्वस्य गण्डस्थलेन प्रकटीकृतम्. दानस्य तत उत्पत्तेरिति भावः; पक्षे,-स्वमुखे नाभिहितम्. एवं मया दानं कृतमिति. १३ गुणगुणेति शब्दं कुर्वन्. १४ मधुमक्षिका; पक्षे,-नीचः. १५ रूक्षताम्; पक्षे,-कटुभाषिताम्. १६ उन्मादम्; पक्षे,-गर्वम्. १७ सूक्ष्मम्, १८ दूषणानि; पक्षे,-रात्रिः. १९ मनोगतप्रयत्नाः; पक्षे,-अन्तःसारः. २० काष्ठकृमिः.

न विशति दोषो रसभाविते सतां मनसि । रसमपि तु न प्रतीच्छति बहुदोषः संनिपातीव ॥ १५६ ॥ परपरितापनकुतुकी गणयति नात्मीयमपि तापम् । परहतिहेतोः पिशुनः संदंशं इव स्वपीडनं सहते ॥ १५७ ॥ सगुणापि हन्त विगुणा भवति खलास्याद्विचित्रवर्णापि । आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥ १५८ ॥ कतिपयदिनपरमायुषि मदकारिणि यौवने दुरात्मानः । विदधति तथापराधं जन्मैव यथा वृथा भवति ॥ १५९ ॥ दुश्चरितैरेव निजैर्भवति दुरात्मा विशङ्कितो नित्यम् । दर्शनपथमापन्नं पन्नगकुलमाकुलीभवति ॥ १६० ॥ स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन् । तितउस्तुषस्य पिशुनो दोषस्य विवेचनेऽधिकृतः ॥ १६१ ॥ पिशुनः खलु सुजनानां खलमेव पुरो निधाय जेतव्यः । कृत्वा ज्वरमात्मीयं जिगाय बाणं रणे विष्णुः ॥ १६२ ॥ वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसजन्तः । कं भेदयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च ॥ १६३ ॥ कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय । यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥ १६४ ॥ आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् । तन्न न जाने जाने स्पृशति मनः किं तु नैव निष्ठुरताम् ॥ १६५ ॥ नष्टमपात्रे दानं नष्टं हितमफलबुद्ध्यवज्ञाने । नष्टो गुणोऽगुणज्ञे नष्टं दाक्षिण्यमकृतज्ञे ॥ १६६ ॥ रोगोऽण्डजोऽङ्कुरोऽग्निर्विषमश्वतरो घुणाः कृमयः । प्रकृतिकृतघ्नश्च नरः स्वाश्रयमविनाश्य नैधन्ते ॥ १६७ ॥ आदौ लज्जयति कृतं मध्ये परिभवति रिक्तमवसाने । खलसंगतस्य कथयत यदि सुस्थितमस्ति किंचिदपि ॥ १६८ ॥ परमर्मदिव्यदर्शिषु जात्यैवोचितनिगूढवैरेषु । कः खलु खलेषु शङ्कां श्लथयिष्यति दम्भनिरतेषु ॥ १६९ ॥ अस्थानाभिनिवेशी प्रायो जड एव भवति नो विद्वान् । बालादन्यः कोऽम्भसि जिघृक्षतीन्दोः स्फुरद्बिम्बम् ॥ १७० ॥ लब्धोदयोऽपि हि खलः प्रथमं स्वजनं तनोति परितापम् । उद्गच्छन्दवदहनो जन्मभुवं दारु निर्दहति ॥ १७१ ॥ अल्पश्रुतलव एव प्रायः प्रकटयति वाग्विभवमुच्चैः । सर्वत्र कुनट एव हि नाटकमधिकं विडम्बयति ॥ १७२ ॥ प्रखला एव गुणवतामाक्रम्य धुरं पुरः प्रकर्षन्ति । तृणकाष्ठमेव जलधेरुपरि प्लवते न रत्नानि ॥ १७३ ॥ महतां यदेव मूर्धसु तदेव नीचास्तृणाय मन्यन्ते । लिङ्गं प्रणमन्ति बुधाः काकः पुनरासनीकुरुते ॥ १७४ ॥ सह वसतामप्यसतां जलरुहजलवद्भवत्यसंश्लेषः । दूरेऽपि सतां वसतां प्रीतिः कुमुदेन्दुवद्भवति ॥ १७५ ॥ साधयति यत्प्रयोजनमज्ञस्तत्तस्य काकतालीयम् । दैवात्कथमप्यक्षरमुत्किरति घुणोऽपि काष्ठेषु ॥ १७६ ॥ प्रायः खलप्रकृतयो नापरिभूता हिताय कल्पन्ते । पुष्प्यत्यधिकमशोको गणिकाचरणप्रहारेण ॥ १७७ ॥ परमर्मघट्टनादिषु खलस्य यत्कौशलं न तत्कृत्ये । यत्सामर्थ्यमुपहतौ विषस्य तन्नोपकाराय ॥ १७८ ॥ अतिसत्कृता अपि शठाः सहसुवमुज्झन्ति जातु न प्रकृतिम् । शिरसा महेश्वरेणापि ननु धृतो वक्र एव शशी ॥ १७९ ॥ वायुरिव खलजनोऽयं प्रायः पररूपमेति संपर्कात् । सन्तस्तु रविकरा इव सदसद्योगेऽप्यसंश्लिष्टाः ॥ १८० ॥ दूरेऽपि परस्यागसि पटुर्जनो नात्मनः समीपेऽपि । स्वं व्रणमक्षि न पश्यति शशिनि कलङ्कं निरूपयति ॥ १८१ ॥ साधुष्वेवातितरामरुंतुदाः स्वां विवृण्वते वृत्तिम् । व्याधा निघ्नन्ति मृगान्मृतमपि न तु सिंहमाददते ॥ १८२ ॥ अविकारिणमपि सज्जनमनिशमनार्यः प्रबाधतेऽत्यर्थम् । कमलिन्या किमिह कृतं हिमस्य यत्तां सदा दहति ॥ १८३ ॥ स्वगुणानिव परदोषान्वक्तुं न सतोऽपि शक्नुवन्ति बुधाः । स्वगुणानिव परदोषानसतोऽपि खलास्तु कथयन्ति ॥ १८४ ॥ कृत्वापि येन लज्जामुपैति साधुः परोदितेनापि । तदकृत्वैव खलजनः स्वयमुद्गिरतीति धिग्लघुताम् ॥ १८५ ॥ प्रकृतिखलत्वादसतां दोष इव गुणोऽपि बाधते लोकान् । विषकुसुमानां गन्धः सुरभिरपि मनांसि मोहयति ॥ १८६ ॥ मृगमदकर्पूरागुरुचन्दनगन्धाधिवासितो लशुनः । न त्यजति गन्धमशुभं प्रकृतिमिव सहोत्थितां नीचः ॥ १८७ ॥ उपकृतिरेव खलानां दोषस्य गरीयसो भवति हेतुः । अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम् ॥ १८८ ॥ न परं फलति हि किंचित्खल एवानर्थमावहति यावत् । मारयति सपदि विषतरुराश्रयमाणं श्रमापनुदे ॥ १८९ ॥ स्वार्थनिरपेक्ष एव हि परोपघातोऽसतां व्यसनमेव । अशनायोदन्या वा विरमति फणिनो न संदशतः ॥ १९० ॥ एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव । व्यतिरेककृतौ शक्तिर्हंसानां दुर्जनानां च ॥ १९१ ॥ शल्यमपि स्खलदन्तः सोढुं शक्येत हालहलदिग्धम् । धीरैर्न पुनरकारणकुपितखलालीकदुर्वचनम् ॥ १९२ ॥ प्रारम्भतोऽतिविपुलं भृशकृशमन्ते विभेदकृन्मलिनम् । महिषविषाणमिवानृजु परुषं भयदं खलप्रेम ॥ १९३ ॥ ह्रेपयति प्रियवचनैरादरमुपदर्शयन्खलीकुरुते । उत्कर्षयंश्च लघयति मूर्खसुहृत्सर्वथा वर्ज्यः ॥ १९४ ॥ अगुणकणो गुणराशिर्द्वयमपि दैवेन खलमुखे पतितम् । प्रसरति तैलमिवैकः सलिले घृतवज्जडत्वमेत्यन्यः ॥ १९५ ॥ तस्मिन्गता-

१ यन्त्रविशेषः, 'चिमटा' 'सांडसी' इति लोके. २ परिधानवस्त्रविशेषः. ३ बहुवाच्यः; पक्षे,-बहुरन्ध्रः. ४ मौखर्यम्; पक्षे,-चापल्यम्. ५ सकलजनसमक्षम्; पक्षे,-सर्वदिग्विषयम्. ६ चालनी ७ निर्णये; पक्षे,-स्वीकारे. ८ 'खेंचर' इति लोके; मातरं विनिहत्यैवास्य जन्म भवति. ९ दावानलः.

१ पिपासा.

र्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे । अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय ॥ १९६ ॥ परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥ १९७ ॥ सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः । स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥ १९८ ॥ सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः । सहसैव समुद्गिरन्त्यमी क्षमयन्त्येव हि तन्मनीषिणः ॥ १९९ ॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ २०० ॥ परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः । परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २०१ ॥ अनिराकृततापसंपदं फलहीनां सुमनोभिरुज्झिताम् । खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥२०२॥ अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति । वसनाशनमात्रमस्ति चेद्धनदादप्यतिरिच्यते खलः ॥ २०३ ॥ अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः । ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ २०४ ॥ वदने विनिवेशिता भुजंगी पिशुनानां रसनामिषेण धात्रा । अनया कथमन्यथावलीढा नहि जीवन्ति जना मनागमन्त्राः ॥ २०५ ॥ अमरैरमृतं न पीतमब्धेर्न च हालाहलमुल्बणं हरेण । विधिना निहितं खलस्य वाचि द्वयमेतद्बहिरेकमन्तरन्यत् ॥ २०६ ॥ वहति विषधरान्पटीरजन्मा शिरसि मषीपटलं दधाति दीपः । विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ २०७ ॥ मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥ २०८ ॥ प्रकटमपि न संवृणोति दोषं गुणलवलम्पट एष साधुवर्गः । अतिपरुषरुषं विनापि दोषैः पिशुनशुनां भषतां प्रयाति कालः ॥ २०९ ॥ अन्तर्वाणिं

१ तुच्छः. २ स्वाभाविकी अन्धा अपश्यन्ती दृग्येषां ते. ३ स्वदोषे. ४ आत्मप्रशंसायां प्रगल्भवाच इत्यर्थः. ५ मौनव्रतिनः. ६ परस्तुतिवचनेषु. ७ शोभना. संवृतिः परितापगोपनं यस्य सः. ८ उत्पादितसंतापः. ९ स्फुटे निर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः. १० अनिराकृता न निवारिता तापसंपत्तापातिशयो यया ताम्; पक्षे संतापजननैकस्वभावादपरत्रासतश्छायाविरहात्. ११ इहामुत्र चोपकारशून्याम्; पक्षे,-सर्वार्थरहिताम्. १२ बुधैरुज्झिताम्; पक्षे,-पुष्पैर्वर्जिताम्. १३ खस्य लताम्. गगनलतिकामित्यर्थः. १४ दुष्टाम्; पक्षे,-निरुपाख्याम्. १५ शिवम्. १६ कुबेरात्. १७ श्रेष्ठः. १८ अतितीव्राणाम्. १९ गर्वोद्धतो मा भव. २० जिह्वाच्छलेन. २१ सर्पान्. २२ चन्दनम्. २३ शास्त्रवित्, सज्जनो वा.

मन्यमानः खलोऽयं पौरोभाग्यं सूक्तिमुक्तासु धत्ते । सर्वानन्दिन्यङ्के कामिनीनामिमे मार्गत्येष वै बम्भरालिः ॥ २१० ॥ बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्क्वचित् ॥ २११ ॥ विद्यया विमलयाप्यलंकृतो दुर्जनः सदसि मास्तु कश्चन । साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥ २१२ ॥ दोषपोषमभियाति परं यो बाधमेति बहुसज्जनयोगात् । संमतौ विमतिमात्रसहायो दुर्जनो भ्रम इवातिचकास्ति ॥ २१३ ॥ उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् । शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः ॥ २१४ ॥ भग्नकुम्भशकलेन वै मलं बालकस्य जननी व्यपोहति । तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाधिको भवेत् ॥ २१५ ॥ एवमेव नहि जीव्यते खलात्तत्र का नृपतिवल्लभे कथा । पूर्वमेव हि सुदुःसहोऽनलः किं पुनः प्रबलवायुनेरितः ॥ २१६ ॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ २१७ ॥ इतरदेव बहिर्मुखमुच्यते हृदि तु यत्स्फुरतीतरदेव तत् । चरितमेतदधीरवितारकं धुरि पयःप्रतिबिम्बमिवासताम् ॥ २१८ क्व पिशुनस्य गतिः प्रतिहन्यते दशति दृष्टमपि श्रुतमप्यसौ । अतिसुदुष्करमव्यतिरिक्तदृक्छ्रुतिभिरप्यथ दृष्टिविषैरिदम् ॥ २१९ ॥ नमः खलेभ्यः क इवाथवा न तानलं नमस्येदिह यो जिजीविषुः । विनैव ये दोषमृषिप्रकाण्डवन्नयन्ति शापेन रसातलं नरान् ॥ २२० ॥ अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते । विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ २२१ ॥ तथारिभिर्न व्यथते शिलीमुखैर्हतो दिगन्ते हृदये न दूरतः । यथा खलानां कुधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ २२२ ॥ गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसं जनम् । द्विधेव कृत्वा हृदयं निगूहतः स्फुरन्नसाधोर्विवृणोति वागसिः ॥ २२३ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ २२४ ॥ न लज्जते सज्जनवर्जनीयया भुजंगवक्रक्रिययापि दुर्जनः ।

१ दोषैकदृक्त्वम्. २ सूक्तय एव मुक्ताफलानि तासु. ३ सर्वेषामाह्लादके. ४ व्रणम्. ५ शोधयति. ६ मक्षिका. ७ सभायाम्. ८ उत्कर्षम्; पक्षे,-उच्चस्थानम्. ९ अल्पबुद्धिः; पक्षे,-अल्पपरिमाणः. १० अम्बुकणसमुदायः. ११ मन्देन. १२ कम्पितः. १३ उत्कर्षाद्धीयते; पक्षे,-अधोदेशे पतति. १४ भिन्नशरावखण्डेन. १५ निरर्थकविरोधः. १६ इच्छा. १७ असहनशीलता. १८ स्वभावसिद्धम्.

धियं कुमायासमयाभिचारिणीं विदग्धतामेव हि मन्यते खलः ॥ २२५ ॥ समर्पिताः कस्य न तेन दोषा हठाद्गुणा वा न हृताः खलेन । तथापि दोषैर्न वियुज्यतेऽसौ स्पृष्टोऽपि नैकेन गुणेन चित्रम् ॥ २२६ ॥ आराध्यमानो बहुभिः प्रकारैर्नाराध्यते नाम किमत्र चित्रम् । अयं त्वपूर्वः प्रतिभाविशेषो यत्सेव्यमानो रिपुतामुपैति ॥ २२७ ॥ विद्वानुपालम्भमवाप्य दोषान्निवर्ततेऽसौ परितप्यते च । ज्ञातस्तु दोषो मम सर्वथेति पापो जनः पापतरं करोति ॥ २२८ ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ २२९ ॥ सद्वंशजातं[1] गुणकोटियुक्तं[2][3] धनुः कथं पार्थिववामहस्ते । शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥ २३० ॥ दृष्टो वा सुकृतशतोपलालितो वा श्लिष्टो वा व्यसनशताभिरक्षितो वा । दौःशील्याज्जनयति नैव जात्वसाधुर्विस्रम्भं भुजग इवाङ्कमध्यसुप्तः ॥ २३१ ॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम् । एकापि पूर्णमुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥ २३२ ॥ हालाहलं खलु पिपासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम् । व्यालाधिपं च यतते परिरब्धुमद्धा यो दुर्जनं वशयितुं कुरुते मनीषाम्[4] ॥ २३३ ॥ ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मसदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामपि न त्यजन्ति ॥ २३४ ॥ प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति[5] शनैर्विचित्रम् । छिद्रं निरूप्य[6] सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥ २३५ ॥ हित्वा मदं सममसज्जनसज्जनौ तौ वन्दे नितान्तकुटिलप्रगुणस्वभावौ । एकं भिया निरभिसंहितवैरिभावं प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ २३६ ॥ पादाहतोऽपि दृढदण्डसमाहतोऽपि यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः । हर्षादिवैष पिशुनोऽत्र मनुष्यधर्मा कर्णे परं स्पृशति हन्ति परं समूलम् ॥ २३७ ॥ उद्भासिताखिलखलस्य[7] विशृङ्खलस्य[8] प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः । दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोचरगतैः सुखमाप्यते कैः ॥ २३८ ॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ २३९ ॥

कस्तूरिकां तृणभुजामटवीमृगाणां[1] निक्षिप्य नाभिषु चकार च तान्वधार्हान् । मूढो विधिः सकलदुर्जनलोलजिह्वामूले स निक्षिपति चेत्सकलोपकारः ॥ २४० ॥ रूक्षं विरौति परिकुप्यति निर्निमित्तं स्पर्शेन दूषयति वारयति प्रवेशम् । लज्जाकरं दशति नैव च तृप्यतीति कौलेयकस्य[2] च खलस्य च को विशेषः ॥ २४१ ॥ युक्तं यया किल निरन्तरलब्धवृत्तेरस्याभिमानतमसः प्रसरं निरोद्धुम् । विद्वत्तया जगति तामवलम्ब्य केचित्तन्वन्त्यहंकृतिमहो शतशाखमान्ध्यम् ॥ २४२ ॥ प्रायः स्वभावमनिलो महतां समीपे तिष्ठन्खलः प्रकुरुतेऽर्थिजनोपघातम् । शीलार्दितैः सकललोकसुखावहोऽपि धूमे स्थिते नहि सुखेन निषेव्यतेऽग्निः ॥ २४३ ॥ धूमः पयोधरपदं कथमप्यवाप्य वर्षाम्बुभिः शमयति ज्वलनस्य तेजः । दैवादवाप्य कलुषप्रकृतिर्महत्त्वं प्रायः स्वबन्धुजनमेव तिरस्करोति ॥ २४४ ॥ नाश्चर्यमेतदधुना हतदैवयोगादुच्चैःस्थितिर्यदधमो न महानुभावः । रथ्याकलङ्कशतसंकरसंकुलोऽपि पृष्ठे भवत्यवकरो न पुनर्निधानम् ॥ २४५ ॥ बिसमलमशनाय स्वादु पानाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च । नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २४६ ॥ मलयभुवि विरूढश्चन्दनेनाभिवृद्धो न भजति किल वेणुः सौरभं चन्दनस्य । तदिह नहि विचित्रं सर्वदोषाकराणां नहि भवति खलानां साधुतागन्धलेशः ॥ २४७ ॥ हसति लसति हर्षात्तीव्रदुःखे परेषां स्खलति गलति मोहादात्मनः क्लेशलेशे । नदति वदति निन्द्यं मानिनां किं च नीचः परुषवचनमल्पं श्रावितो हन्तुमेति ॥ २४८ ॥ दिगन्ते खेलन्ती सरसहृदयानन्दजननी मया नीता दुष्टप्रचुरनगरीं कापि कविता । अकस्मादुन्मीलत्खलवदनवल्मीकरसनाभुजंगीदष्टाङ्गी शिव शिव समाप्तिं गतवती ॥ २४९ ॥ अभूदम्भोराशेः सह वसतिरासीत्कमलया गुणानामाधारो नयनफलमिन्दुः प्रथयति । कथं सिंहीसूनुस्तमपि[3] तुदति प्रौढदशनैर्गुणानामास्वादं पिशुनरसना किं रसयति ॥ २५० ॥ वृथा दुग्धोऽनड्वान् स्तनभरनता गौरिति चिरं परिष्वक्तः षण्ढो युवतिरिति लावण्यसहिता । कृता वैडूर्याशा विकटकिरणे काचशकले मया मूढेन त्वां कृपणमगुणज्ञं प्रणमता ॥ २५१ ॥ स्वपक्षच्छेदं वा समुचितफलभ्रंशमथवा स्वमूर्तेर्भङ्गं वा पतनमशुचौ नाशमथवा । शरः प्राप्नोत्येतान्हृदयपथसंस्थोऽपि धनुष ऋजोर्वक्राश्लेषाद्भवति खलु सुव्यक्तमशुभम् ॥ २५२ ॥ गुणानां सा शक्तिर्विपदमनुबध्नन्ति यदमी प्रसन्नस्तद्वेधा मम

१ वेणुः; पक्षे,-कुलम्. २ मौर्वी; पक्षे,-विद्याविनयादि. ३ अग्रम्; पक्षे,-संख्याविशेषः. ४ मतिम्. ५ शब्दं करोति. ६ पक्षे,-प्राप्य. ७ आविष्कृतसकलदुष्टस्य. ८ अमर्यादस्य.

१ वनम्. २ श्वानस्य. ३ राहुः. ४ ग्रसति, पीडयतीत्यर्थः. ५ प्रसृतकिरणे.

यदि न तैर्योगमकरोत्। विषण्णं दौर्गत्यादिति गुणिनमालोक्य विगुणः करोति स्वे गेहे ध्रुवमतिसमृद्ध्योत्सवमसौ ॥ २५३ ॥ अवेक्ष्य स्वात्मानं विगुणमपरानिच्छति तथा फलत्यतन्नो चेद्विलपति न सन्तीह गुणिनः। निमार्ष्टुं शक्नुं वा परिभवितुमुद्यच्छति ततोऽप्यहो नीचे रम्या सगुणविजिगीषा विधिकृता ॥ २५४ ॥ न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोहृदे । गुणपरिचितामार्यो वाणीं न जल्पति दुर्जनश्चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः ॥ २५५ ॥ यदि परगुणा न क्षम्यन्ते यतस्व तदर्जने न हि परयशो निन्दाव्याजैरलं परिमार्जितुम् । विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्श्रममेष्यसि ॥ २५६ ॥ शमयति यशः क्लेशं सूते दिशत्यशिवां गतिं जनयति जनोद्वेगायासं नयत्युपहास्यताम् । भ्रमयति मतिं मानं हन्ति क्षिणोति च जीवितं क्षिपति सकलं कल्याणानां कुलं खलसंगमः ॥ २५७ ॥ जिह्मो[1] लोकः कथयति पुरा हन्त हित्वा गुणौघानम्भः क्षारं गुणगणनिधेस्तस्य रत्नाकरस्य । विश्वे छिद्रानुसरणसमारूढसर्वेन्द्रियाणां दोषे दृष्टिः पिशुनमनसां नानुरागो गुणेषु ॥ २५८ ॥ सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः[2] सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा । अव्युत्पन्नमतिः[3] कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः[4] ॥ २५९ ॥ या लोभात्संविधे[5] खलस्य सुरसा वाणी बुधैर्नीयते नो जानाति स तामचेतनतया सैव स्वयं लीयते । भर्तुः स्नेहचयात्प्रविश्य दहने भस्मीभवत्यङ्गना गाढालिङ्गनतत्परेण मनसा प्रेतो न वेत्ति प्रियाम् ॥ २६० ॥ नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते । ईर्ष्यावेशकषायिते हृदि घृणालेशोऽपि न स्पृश्यते किं त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ २६१ ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः । अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः[6] को नामायसपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ २६२ ॥ जाड्यं ह्रीमति[7] गण्यते व्रतरुचौ[8] दम्भः शुचौ कैतवं[9] शूरे निर्घृणता[10] मुनौ[11] विमतिता दैन्यं[12] प्रियालापिनि । तेजस्विन्यवलिप्तता[13] मुखरता[14] वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ॥ २६३ ॥ पोतो[1] दुस्तरवारिराशितरणे दीपोऽन्धकारागमे निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः[2] । इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः[3] ॥२६४॥ धातस्तात तदेव दूषणमिदं यन्नाम कस्तूरिका कान्तारान्तरचारिणां[4] तृणभुजां यन्नाभिमूले कृता। यद्येवं पिशुनस्य[5] हन्त रसनामूले[6]ऽकरिष्यस्तदा प्रायासेन[7] विनाभविष्यदतुला कीर्तिश्च निर्दोषता ॥ २६५ ॥ एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ २६६ ॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किंचित्क्वापि न साहसं वितनुते देहे चिरं दूयते नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ २६७ ॥ वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्तादिव । मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव स्वैरिण्यैव सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुंतुदः ॥ २६८ ॥ वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः । तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैर्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ २६९ ॥ कस्त्वं भद्र खलेश्वरो[8]ऽहमिह किं घोरे वने स्थीयते शार्दूलादिभि[9]रेव हिंस्रपशुभिः[10] खाद्यो[11]ऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान् ॥ २७० ॥ भिक्षो मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह । वेश्या द्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा चौर्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः ॥ २७१ ॥ वेश्यावेश्मसु सीधुगन्धललनावक्त्रासवामोदितैर्नीत्वा निर्भरमन्मथोत्सवसुखैरुन्निद्रचन्द्राः क्षपाः । सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताग्निहोत्रा इति ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ २७२ ॥ वृत्तिं स्वां बहु मन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभिर्व्यक्तं निन्दति योग्यतां मितमतिः कुर्वन्स्तुतीरात्मनः । गर्ह्योपायनिषेवणं कथयति स्थाणुं वदन्व्यापदं श्रुत्वा दुःखमरुंतुदां वितनुते पीडां जनः प्राकृतः ॥ २७३ ॥ पाकश्चेन्न शुभस्य मेऽद्य तदसौ प्रागेव नादात्किमु स्वार्थश्चेन्न मयास्य किं न भजते दीनान्स्वबन्धूनयम् । मत्तो

१ कुटिलः. २ स्वेच्छाचरणनिरोधो येषां ते. ३ अनिपुणमतिः. ४ नीचः. ५ अन्तिके. ६ कपटपटुः. ७ लज्जावति. ८ व्रतेषु रुचिः प्रीतिर्यस्य तस्मिन्. ९ शाठ्यम्. १० निर्दयता. ११ मननशीले. १२ दीनत्वम्. १३ सगर्वता. १४ वाचालत्वम्.

१ नौका. २ अङ्कुशः. ३ भग्नप्रयत्नः. ४ दुर्गममार्गसंचारिणाम्. ५ सूचकस्य. ६ जिह्वामूले. ७ प्रकृष्टेन यत्नेन. ८ खलराजः. ९ व्याघ्रादिभिः. १० घातकपशुभिः. ११ भक्षणीयः.

रन्ध्रद्दशोऽस्य भीर्यदि न तल्लब्धः किमेष त्यजेदित्यन्तः पुरुषोऽधमः कलयति प्रायः कृतोपक्रियः ॥ २७४ ॥ साश्चर्यं युधि शौर्यमप्रतिहतं तत्खण्डिताखण्डलं यात्त्वो- त्तानकरः कृतः स भगवान्दानेन लक्ष्मीपतिः । ऐश्वर्यं स्वकरासससप्तभुवनं लब्धाब्धिचारं यशः सर्वं दुर्जनसंगमेन सहसा स्पष्टं विनष्टं कलेः ॥ २७५ ॥ वर्णस्थं गुरुलाघवं न गणयत्याशङ्कते न क्वचिद्रूपं नैव परीक्षते न पुरुषं वृत्तेषु वार्ता कुतः । कष्टं नायशसो बिभेति महतो नैवाप- शब्दान्तरान्मृत्युर्मूर्खकविः खलः कुनृपतिश्चौरस्य तुल्यक्रियाः ॥ २७६ ॥ वन्द्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवा- ञ्छूरान्द्वेष्टि धनच्युतान्परिभवत्याज्ञापयत्याश्रितान् । गुह्यानि प्रकटीकरोति घटयन् यत्नेन वैराशयं व्रते शीघ्रमवाच्यमुज्झ- ति गुणान् गृह्णाति दोषान्खलः ॥ २७७ ॥ कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्घोषितं तन्नम्राङ्गतया वदन्ति करुणं यस्मात्रपावान्भवेत् । श्लाघन्ते तदुदीर्यते यदरिणाप्युग्रं न मर्मान्तकृद्ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभृतां रञ्जकाः ॥ २७८ ॥ [1]भण्डस्ताण्डवमण्डपे चटुकथावीथीषु कन्थाकविर्गोष्ठश्वा स्वगृहाङ्गणे शिखरिभूर्गर्ते खटोखुः[2] स्फु- टम् । पिण्डीशूरतया विटश्च पटुतां भूभृद्गृहे गाहते गच्छन्ति [3]हृदकूष्टकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥ २७९ ॥ भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यांस्ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् । दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तास्मि येषां चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥ २८० ॥ दैवादप्युत्तमानामपहरति यदा दुर्जनो वा कथंचिन्मानं नाप्नोति तेषामनुजनितगुणानेव कुत्राधिकत्वम् । स्वर्भानुर्भानवीयान्हरति यदि पुनः शीतरश्मेर्मरीचीन्ब्रह्माण्ड- स्येह खण्डे तदपि नरपते किं ग्रहेशत्वमेति ॥ २८१ ॥ हे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्वो विशालं किं मद्धा- म्नोऽपि बाढं तदतिशठ महापाप मा ब्रूहि मिथ्या । इत्थं कूपो- दरस्थः शपति तटगतं दर्दुरो राजहंसं नीचः प्रायः शठार्थो भवति हि विषमो नापराधेन दृष्टः ॥ २८२ ॥ आखुः कैलासशैलं तुलयति करटस्तार्क्ष्यमांसाभिलाषी [4]बभ्रुर्लाङ्गूलमूलं चलयति चपलस्तक्षकाहिं जिघांसुः । भेकः पारं यियासुर्भु- जगमपि महाघस्मरस्याम्बुराशेः प्रायेणासन्नपातः स्मरति समुचितं कर्म न क्षुद्रकर्मा ॥२८३॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ २८४ ॥ विसृज्य शूर्पवद्दोषान् गुणान्गृह्णन्ति साधवः । दोषग्राही गुणत्यागी चालनीव हि दुर्जनः ॥२८५॥

१ अश्लीलवाक्यभाषी. अन्धमूषकः. २ जलाशयाद्बहिराकृष्ट- कच्छपतुल्यां दशाम्. ४ राहुः. ५ काकः. ६ नकुलः.

## लक्ष्मीस्वभावः

या स्वसद्मनि पद्मेऽपि [1]संध्यावधि वि[2]जृम्भते । [3]इन्दिरा मन्दिरेऽन्येषां कथं तिष्ठति सा चिरम् ॥ १ ॥ गुणिनं जनमा- लोक्य निजबन्धनशङ्कया । राजलक्ष्मीः कुरङ्गीव दूरं दूरं पलायते ॥ २ ॥ शूरं त्यजामि वैधव्यादुदारं लज्जया पुनः । सापत्न्यात्पण्डितमपि तस्मात्कृपणमाश्रये ॥ ३ ॥ गोभिः क्रीडितवान्कृष्ण इति गोसमबुद्धिभिः । क्रीडत्यद्यापि सा लक्ष्मीरहो देवी पतिव्रता ॥ ४ ॥ अत्यार्यमतिदातारमति- शूरमतिव्रतम् । प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ५ ॥ अनागतविधातारमप्रमत्तमकोपनम् । स्थिरारम्भ- मदीनं च नरं श्रीरुपतिष्ठते ॥ ६ ॥ मन्ये सत्यमहं लक्ष्मीः समुद्राद्धूलिरुत्थिता । पश्यन्तोऽपि न पश्यन्ति सन्तो विह्वल- लोचनाः ॥ ७ ॥ समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत् । विनिर्याति यदा लक्ष्मीर्गजभुक्तकपित्थवत् ॥ ८ ॥ लक्ष्मी- र्यादोनिधेर्यादो नादो वादोचितं वचः । बिभ्यती धीवरेभ्यो या जडेष्वेव निमज्जति ॥ ९ ॥ कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र । प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥ १० ॥ अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् । प्रमदा पतिमिव वृद्धं नेच्छति लक्ष्मी- रुपस्थातुम् ॥ ११ ॥ गुणवद्भिः सह संगममुच्चैःपदमाप्तुमु- त्सुका लक्ष्मीः । वीरकरवालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ १२ ॥ श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरि- तानाम् । उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १३ ॥ वाक्चक्षुःश्रोत्रलयं लक्ष्मीः कुरुते नरस्य को दोषः । गरलसहोदरजाता तच्चित्रं यन्न मारयति ॥ १४ ॥ अनु- भवत ददत वित्तं मान्यान्मानयत सज्जनान्भजत । अति- परुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥ १५ ॥ रत्ना- करतनुजनुषि द्विजराजे राजनि श्रियो मित्रे । अमृतकरे च कलावति पद्मिनि वामा कुतो भवती ॥ १६ ॥ पूरयति पूर्ण- मेषां तरङ्गिणीसंहतिः समुद्रमिव । लक्ष्मीरधनस्य पुनर्लोचन- मार्गेऽपि नायाति ॥ १७ ॥ सुव्यवसायिनि शूरे क्लेशसहि- ष्णावनाकुलारम्भे । मयि पृष्ठतो विलग्ने यास्यसि कमले कियद्दूरम् ॥ १८ ॥ अपि दोर्भ्यां परिबद्धा बद्धापि गुणैरने- कधा निपुणैः । निर्गच्छति क्षणादिव जलधिजलोत्पत्तिपि- च्छिला लक्ष्मीः ॥ १९ ॥ हरिभामिनि सिन्धुसंभवे कमले

१ संध्याकालपर्यन्तम्. २ विराजते. ३ लक्ष्मीः. ४ स्थिरा. ५ मृगीव ६ समुद्रस्य. ७ जलजन्तुः. ८ अदो वचो वादोचितं न. ९ कैवर्तेभ्यः; पक्षे,-बुद्धिश्रेष्ठेभ्यः. १० मूर्खेषु; पक्षे,-डलयोः सावर्ण्यात् उदकेषु. ११ अन्तर्गच्छति; पक्षे,-सुस्थिरं तिष्ठति. १२ अनुद्योगिनम्. १३ नियतिपरम्. १४ तरुणस्त्रीः. १५ खड्ग.

किं कथयामि ते गुणान् । अनुरज्यसि हा जडे जने गुणगौरे पुरुषे विरज्यसि ॥ २० ॥ वीक्षितानि तव वारिधिकन्ये यत्र पालितजगन्ति लगन्ति । चित्रमत्र च परत्र च देही देहिशब्दमपहाय चकास्ति ॥ २१ ॥ यद्वदन्ति चपलेत्यपवादं नैव दूषणमिदं कमलायाः । दूषणं जलनिधेर्हि भवेत्तद्यत्पुराणपुरुषाय ददौ ताम् ॥ २२ ॥ चाञ्चल्यमुच्चैःश्रवसस्तुरंगात्कौटिल्यमिन्दोर्विषतो विमोहः । इति श्रियाशिक्षि सहोदरेभ्यो न वेद्मि कस्माद्गुणवद्विरोधः ॥ २३ ॥ श्वश्रूं विना वृत्तिरिह स्वतन्त्रा प्रायः स्नुषाणामपवादहेतुः । यद्वाणि लोके रमया विहीनां सतीमपि त्वामसतीं वदन्ति ॥ २४ ॥ उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् । शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ २५ ॥ हालाहलो[3] नैव विषं विषं रमा[4] जनाः परं व्यत्यय[5]मत्र मन्वते । निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥ २६ ॥ तापापहे सुहृदये रुचिरे प्रबुद्धे मित्रानुरागनिरते धृतसद्गुणौघे । स्वाङ्गप्रधानपरिपूरितषट्पदौघे युक्तं तवेह कमले कमले स्थितिर्यत् ॥२७॥ रत्नाकरस्तव पिता कमले निवासो भ्राता सुधामयतनुः[6] पतिरादिदेवः[7] । केनापरेण कमले बत शिक्षितानि सारङ्गशृङ्गकुटिलानि[8] विचेष्टितानि ॥ २८ ॥ लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्तमन्धीभवन्ति पुरुषास्त्वदुपासनेन । नो चेत्कथं कमलपत्रविशालनेत्रो नारायणः स्वपिति पन्नगभोगतल्पे[9] ॥ २९ ॥ अंसौभाग्यं[10] धत्ते परमसुखभोगास्पदमयं विचित्रं तद्गेहं[11] भवति पृथुकार्तस्वररमयम्[12] । निविष्टः पल्यङ्के कलयति स कान्तारतरणं[13] प्रसादं कोपं वा जननि भवती यत्र तनुते ॥ ३० ॥ समुद्रस्यापत्यं प्रथितमहिमामुद्रितभुवः स्वसा प्रालेयांशो[14]स्त्रिनयनशिरोधामवसतेः । मुरारा[15]तेर्योषित्सरसिरुहकिञ्जल्कनिलया तथापि श्रीः स्त्रीत्वात्प्रकृतिचपलाऽऽलिङ्गति खलान् ॥ ३१ ॥ तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि । शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि श्रीर्लब्धप्रसरेव वेश[1]वनिता दुःखोपचर्या भृशम् ॥ ३२ ॥ कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे । यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ३३ ॥ पद्मे मूढजने ददासि विभवं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः । मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ ३४ ॥ तिर्यक्त्वं भजतु प्रतारयतु वा धर्मक्रियाकोविदं हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु । वेदान्निन्दतु वा हिनस्तु जनतां किं वाऽनया चिन्तया लक्ष्मीर्यस्य गृहे स एव भजति प्रायो जगद्वन्द्यताम् ॥ ३५ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ३६ ॥ हे लक्ष्मि क्षणिके स्वभावचपले मूढे च पापेऽधमे न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चारिणी । ये देवार्चनसत्यशौचनिरता ये चापि धर्मे रतास्तेभ्यो लज्जसि निर्दये गतमतिनाचो जनो वल्लभः ॥ ३७ ॥ नाहं दुश्चरिणी न चापि चपला मूर्खो न मे रोचते नो शूरो न च पण्डितो न च शठो हीनाक्षरो नैव च । पूर्वस्मिन्कृतपुण्ययोगविभवो भुङ्क्ते स मे सत्फलं लोकानां किमसह्यता सखि पुनर्दृष्ट्वा परां संपदम् ॥ ३८ ॥ हन्तुर्बन्धुजनान्धनार्थमैनघान्गन्तुः परस्त्रीशतं रन्तुर्जन्तुविहिंसकैः सह जनैः संतुष्यतो वञ्चनैः । वक्तुस्तीक्ष्णमयुक्तमेव वचनं पक्तुर्मितं चौदनं नित्यं नृत्यसि मन्दिरेषु कमले कृत्यं तवैतन्मतम् ॥ ३९ ॥ यत्राभ्यागतदानमानचरणप्रक्षालनं भोजनं सत्सेवा पितृदेवतार्चनविधिः सत्यं गवां पालनम् । धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया हृष्टा प्राह हरिं वसामि कमला तस्मिन्गृहे निश्चला ॥ ४० ॥ येषामन्यकलत्रदर्शनकलाव्युत्पत्तिशून्ये दृशौ मूढं हृच्च परार्थचिन्तनविधौ मिथ्यालभिज्ञं मुखम् । अप्रज्ञातपशून्बुभुक्षितशिशून्श्रोदकैस्ताम्यतस्तेषां लक्ष्मि गृहान्दशापि भयभीतेवेह नो वीक्षसे ॥ ४१ ॥ नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं नाचारप्रवणं न कार्यकुशलं न प्रज्ञयालंकृतम् । नीचं क्रूरमपेतसत्त्वमदयं यस्मादियं सेवते तद्वंशानुगुणं पयोधिसुतया[9] लक्ष्म्या प्रमाणीकृतम् ॥ ४२ ॥ पीतोऽंग-

१ लक्ष्म्याः. २ नारायणाय; पक्षे,-वृद्धाय. ३ विषभेदः. ४ लक्ष्मीः. ५ विपरीतभावम्. ६ चन्द्रः. ७ नारायणः. ८ हरिणशृङ्गवद्वक्राणि. ९ सर्पशरीरशय्यायाम्. १० हे जननि; भवति यत्र यस्मिन्पुरुषे प्रसादं तनुते करोत्यसौ पुरुषो भाग्यमैश्वर्यं धत्ते. यत्र कोपं तनुते सोऽसौभाग्यं सौभाग्याऽभावं धत्ते. अयं प्रसादविषयः परमसुखभोगानामास्पदम्. अयं कोपविषयः परमत्यन्तमसुखभोगास्पदम्. भवतीति शेषः. ११ तस्य पूर्वोक्तस्य पुरुषस्य गेहं विविधचित्रयुक्तं तथा पृथु महत्कार्तस्वरं स्वर्णं तन्मयं भवति; पक्षे,-चित्ररहितं तथा पृथुकानां बालानामन्नाद्यभावप्रयुक्तेनार्तस्वरेण प्रचुरम्. १२ सुवर्णमयम्. १३ सपूर्वोक्तः पुरुषः कान्ताया रतं रमणं तदेव रणं युद्धम्; पक्षे,-कान्तारं दुर्गमारण्यं तत्तरणं कलयति. १४ चन्द्रस्य. १५ विष्णोः.

१ वेश्या. २ प्रियः. ३ निष्पापान्. ४ प्राणिविघातकैः. ५ अयोग्यम्. ६ मितंपचम्; कृपणमिति भावः. ७ किंप्रकारकम्. ८ परस्त्री. ९ पयो नीचैरेव गच्छति, समुद्रे क्रूरजलचराः प्रसिद्धाः, अत एव सिद्धमस्य सार्थकत्वम् ।

स्त्येन तात[1]श्वरणतलहतो वल्लभो[2]ऽन्येन रोषादाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी[3] मे । गेहं[4] मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ ४३ ॥

## धनप्रशंसा

अहो कनकमाहात्म्यं वक्तुं केनापि शक्यते । नामसाम्यादहो चित्रं धत्तूरो[5]ऽपि मदप्रदः ॥ १ ॥ न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो । मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ २ ॥ धनमर्जय काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ३ ॥ ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् । शशिना तुल्यवंशोऽपि निर्धनः परि[6]भूयते ॥ ४ ॥ कुत आगत्य घटते विघट्य क्व नु याति च । न लक्ष्यते गतिश्चित्रा घनस्य च धनस्य च ॥ ५ ॥ स्त्रीरूपं मोहकं पुंसो यून एव भवेत्क्षणम् । कनकं स्त्रीबालवृद्धषण्ढानामपि सर्वदा ॥ ६ ॥ न नरस्य नरो दासो दासश्चार्थस्य भूपते । गौरवं लाघवं वापि धनाधननिबन्धनम् ॥ ७ ॥ विभवो हि यथा लोके न शरीराणि देहिनाम् । चाण्डालोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ॥ ८ ॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्[7]गुणज्ञः । स एव वक्ता स च दर्शनीयः[8] सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ९ ॥ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च । तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ १० ॥ बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते । न च्छन्दसा केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फला गुणाः ॥ ११ ॥ धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति । धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ १२ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं[9] धनं धनम् । इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः सचेतनः ॥ १३ ॥ त्यक्त्वा युवा स्वयुवतिं सुविलासयोग्यां दूरं विदेशवसतौ निवसन्धनार्थी । रात्र्यागमे स्मरति तां न समेति तस्मात्कान्ताभ्रमादपि वरः कनकभ्रमोऽयम् ॥ १४ ॥ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ १५ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते सभाषणं वै सुहृत्तस्माद्द्रव्यमुपार्जयस्व सुमते द्रव्येण सर्वे वशाः ॥ १६ ॥

## धननिन्दा

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥ १ ॥ लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् । शेषे धराभरक्रान्ते शेते नारायणः सुखम् ॥ २ ॥ वरं[1] हालाहलं पीतं सद्यः प्राणहरं विषम् । न तु दृष्टं धनान्धस्य भ्रूभङ्ग[2]कुटिलं मुखम् ॥ ३ ॥ भक्ते[3] द्वेषो जडे[4] प्रीतिररुचिर्गुरु[5]लङ्घनम् । मुखे च कटुता[6] नित्यं धनिनां ज्वरिणामिव ॥ ४ ॥ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे[7] पथि । अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ५ ॥ आजन्मानुगतेऽप्यच्छिन्नाले विमुखमम्बुजम् । प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥ ६ ॥ धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते । लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ ७ ॥ जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥ ८ ॥ यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि । आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ९ ॥ राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १० ॥ धनाशया खलीकारः कस्य नाम न जायते । दूरादामिषलोभेन बध्यते खेचरः[8] खगः ॥ ११ ॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति । विकृ[9]तयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥ १२ ॥ लक्ष्म्या परिपूर्णोऽहं न भयं मेऽस्तीति मोहनिद्रैषा । परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः[10] ॥ १३ ॥ अर्जुनीयति[11] यदर्जने जनो वर्जनीयजनतर्जनादिभिः[12] । मङ्क्षु[13] नश्यति चिराय संचिता वञ्चिता जगति के न संपदा ॥ १४ ॥ अर्थार्थी जीवलोकोऽयं ज्वलन्तमुपसर्पति क्षीणक्षीरां निराजीव्यां वत्सस्त्यजति मातरम् ॥ १५ ॥ अर्थार्थी यानि कष्टानि मूढोऽयं कुरुते जनः । शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ १६ ॥ अर्थानामर्जने दुःखमर्जितानां च रक्षणे । आये दुःखं व्यये

---

१ समुद्रः. २ भृगुणा. ३ सरस्वती. ४ कमलम्. ५ 'धत्तूरः कनकाह्वयः' इति कोशः. ६ परिभवं प्राप्नोति. ७ शास्त्रज्ञः. ८ प्रेक्षणीयः. ९ 'धनं धनं धनम्' इत्यनुकरणशब्दः; पक्षे,-वित्तम्.

१ मनाक्प्रियम्. २ भ्रुकुटिमोटनेन वक्रम्. ३ भक्ताः सेवकास्तेषां द्वेषः; पक्षे,-भक्तमन्नं तद्द्वेषः. ४ जडेषु मूर्खेषु प्रीतिः; (पक्षे डलयोः सावर्ण्यात्) जले रुचिः. ५ गुरूणां पित्रादीनामुल्लङ्घने; पक्षे,-गुरु यल्लङ्घनमुपवासस्तस्मिन्. ६ कटुभाषित्वम्; पक्षे,-कटुत्वम्. ७ अविषमे. ८ आकाशे चरन्नपि. ९ विलक्षणः. १० राहोः ११ सहस्रबाहुवदाचरति. १२ भयत्रासादिभिः. १३ झटिति.

दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १७ ॥ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥ १८ ॥ तानीन्द्रियाण्यवि[1]कलानि मनस्तदेव सा बुद्धि[2]रप्रतिहता वचनं तदेव । [3]अर्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ १९ ॥ [4]आपद्गतं हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ २० ॥ धनमपि परदत्तं दुःखमौचित्यभाजां भवति हृदि तदेवानन्दकारीतरेषाम् । मलयजरसबिन्दुर्बाधते नेत्रमन्तर्जनयति च स एवाह्लादमन्यत्र गात्रे ॥ २१ ॥ लभे[5]यदयुतं धनं तदधनं धनं यद्यपि लभेत नि[6]युतं धनं निधनमेव तज्जायते । तथा [7]धनपरार्धकं तदपि भावहीनात्मकं [8]यदक्षरपदद्वयान्तरगतं धनं तद्धनम् ॥ २२ ॥ दायादाः स्पृहयन्ति तस्करगणा [9]मुष्णन्ति भूमीभुजो दूरेण [10]छलमाकलय्य [11]हुतभुग्भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति ध्रुवं [12]दुर्वृत्तास्तनया नयन्ति नि[13]धनं धिग्धिग्धनं तद्बहु ॥ २३ ॥

## धनिप्रशंसा

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १ ॥ वयोवृद्धास्तपोवृद्धा ज्ञानवृद्धाश्च ये परे । ते सर्वे धनवृद्धस्य द्वारे तिष्ठन्ति किंकराः ॥ २ ॥ न सा विद्या न तच्छीलं न तद्दानं न सा कला । अर्थार्थिभिर्न तच्छौर्यं धनिनां यन्न कीर्त्यते ॥ ३ ॥ पतन्ति खड्गधारासु विशन्ति म[14]कॅरालयम् । किं न कुर्वन्ति सुभगे कष्टमर्थार्थिनो जनाः ॥ ४ ॥ एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर । एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ५ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ६ ॥ को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते । वित्तेशभवनभित्तेः समीपमुपसेवते शंभुः ॥ ७ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य । अप्य[1]तिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ ८ ॥ वैभवभाजां दूषणमपि भूषणपक्ष एव निक्षिप्तम् । गुणमात्मनामधर्मे द्वेषं च गृणन्ति [2]काणादाः ॥ ९ ॥ वाणी दरिद्रस्य [3]शुभा हितापि ह्यर्थेन शब्देन च संप्रयुक्ता । न शोभते वित्तवतः समीपे भेरीनि[4]र्नादोपहतेव वीणा ॥ १० ॥ यादृशि तादृशि वित्तसनाथे पञ्च पिशाचशतानि वसन्ति । यानि पुनर्निवसन्ति मही[5]शे तानि न केनचिदाकलितानि ॥ ११ ॥ न विद्यया नैव कुलेन गौरवं जनानुरागो धनिकेषु सर्वदा । कपालिना [6]मौलिधृतापि जाह्नवी प्रयाति रत्नाकरमेव सत्वरम् ॥ १२ ॥ गङ्गां च धारयति मूर्ध्नि सदा कपाली सा तस्य चुम्बति मुखं न कदाचिदेव । रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रैर्गङ्गा यतो युवतयः सधनानुकूलाः ॥ १३ ॥ धिगस्त्वेतां विद्यां धिगपि कवितां धिक् सुजनतां वयो रूपं धिग्धिग्धिगपि च यशो निर्धनवतः । असौ जीयादेकः सकलगुणहीनोऽपि धनवान्बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥ १४ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् । अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १५ ॥

## दरिद्रनिन्दा

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः । बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥ १ ॥ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः । पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ २ ॥ इह लोकेऽपि धनिनां परोऽपि स्वजनायते । स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ ३ ॥ परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् । विधिर्ददाति निपुणः कन्या[7]मिव दरिद्रताम् ॥ ४ ॥ येनैवा[8]म्बरखण्डेन संवीतो निशि चन्द्रमाः । तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ५ ॥ चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह । चाण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥ ६ ॥ अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः । क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥ ७ ॥ द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम् । धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥ ८ ॥ अत्यन्तवि[9]मुखे दैवे व्यर्थे यत्ने च पौरुषे । मनस्विनो दरिद्रस्य वनादन्यत्कुतः

---

१ वैकल्यरहितानि. २ अखण्डिता. ३ द्रव्यरूपोष्णतया. ४ विपद्ग्रस्तम्. ५ दशसहस्रम्; पक्षे,–अकारेण युतं धनम्, अधनमित्यर्थः. ६ लक्षसंख्याकम्; पक्षे,–निशब्देन युतं धनम्, निधनमित्यर्थः. ७ धनस्य परार्धं संख्याविशेषः; पक्षे,–धनशब्दसंबन्धि परमर्धं 'न' इति तच्च भावहीनात्मकम्. अभावबोधकमित्यर्थः. ८ अक्षरः परमात्मा तच्चरणद्वयान्तरे गतं प्राप्तं यद्धनं मोक्षरूपं धनं तदेव धनम्; पक्षे,–अक्षरयोः पकारदकारात्मकयोर्मध्यवर्ति धनं इत्येतदक्षरद्वयरूपम्, धनमित्यर्थः. ९ हरन्ति. १० कपटम्. ११ अग्निः. १२ दुष्टाचरणाः. १३ नाशम्. १४ समुद्रम्.

१ अतिकठोरम्. २ वैशेषिकशास्त्रप्रवर्तकाः. ३ कल्याणी. ४ दुन्दुभिध्वनिलुप्तेव, ५ शंकरेण. ६ मस्तकः. ७ वधूपक्षे,–'कुलमादौ परीक्षेत' इति विधिः; अन्यत्र,–प्रायो हि पण्डिता अकिञ्चना इति दृष्टचरम्. ८ आकाशम्; पक्षे,–वस्त्रम्. ९ पराङ्मुखे.

सुखम् ॥ ९ ॥ दूये[१] कान्ताकरं वीक्ष्य मणिकङ्कणवर्जितम्[२] । अतः परं परं[३] दूये मणिकं[४] कणवर्जितम्[५] ॥ १० ॥ रात्रौ जानुर्दिवा भानुः कृशानुः[६] संध्ययोर्द्वयोः । पश्य शीतं मया नीतं जानुभानुकृशानुभिः ॥ ११ ॥ किं करोमि क्व गच्छामि कमुपैमि दुरात्मना । दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १२ ॥ दुःखं दुःखमिति ब्रूयान्मानवो नरकं प्रति । दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ॥ १३ ॥ किं चान्यैः सुकुलाचारैः सेव्यतामेति पूरुषः । धनहीनः स्वपत्नीभिस्त्यज्यते किं पुनः परैः ॥ १४ ॥ किं वाच्यं सूर्यशशिनोर्दारिद्र्यं महतां पुरः । दिनरात्रिविभागेन परिधत्तो यदम्बरम्[७] ॥ १५ ॥ मौर्ख्ये सर्वापदां निष्ठा का हि नापदजानतः । तस्मिन्नप्यविषण्णो यः क्व सोऽन्यत्र विपत्स्यति ॥ १६ ॥ यदि नाम कुले जन्म तत्किमर्थं दरिद्रता । दरिद्रत्वेऽपि मूर्खत्वमहो दुःखपरम्परा ॥ १७ ॥ कः स्वभावगभीराणां जानीयाद्बहिरापदम् । बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥ १८ ॥ सन्तोऽपि न विराजन्ते हीनार्थस्येतरे गुणाः । आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ १९ ॥ वरं हि नरके वासो न तु दुश्चरिते गृहे । नरकात्क्षीयते पापं कुगृहात्परिवर्धते ॥ २० ॥ नातः पापीयसीं कश्चिदवस्थां शम्बरोऽब्रवीत् । यस्यां नैवाद्य न प्रातर्भोजनं तात विद्यते ॥ २१ ॥ न तथा बाध्यते राजन्प्रकृत्या निर्धनो जनः । यथा भद्राणि संप्राप्य तैर्विहीनः सुखोचितः ॥ २२ ॥ कुब्जस्य कीटखातस्य दावनिष्कुषितत्वचः । तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ २३ ॥ धर्मार्थकामहीनस्य परकीयान्नभोजिनः । काकस्येव दरिद्रस्य दीर्घमायुर्विडम्बना ॥ २४ ॥ शीतमध्वा कदन्नं च वयोतीताश्च योषितः । मनसः प्रातिकूल्यं च जरायाः पञ्च हेतवः ॥ २५ ॥ सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् । प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ २६ ॥ लज्जावतः कुलीनस्य याचितुं धनमिच्छतः । कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ २७ ॥ कण्ठे गद्गदता स्वेदो मुखे वैवर्ण्यवेपथू । म्रियमाणस्य चिह्नानि यानि तान्येव याचतः ॥ २८ ॥ धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् । परचित्तगतान्दारान्पुत्रं च व्यसनातुरम् ॥ २९ ॥ शेषभाष्यं तु काव्येन काव्यं गीतेन हन्यते । गीतं तु स्त्रीविलासेन स्त्रीविलासो बुभुक्षया ॥ ३० ॥ जीवन्त्यर्थक्षये नीचा याच्ञोपद्रववञ्चनैः । कुलाभिमानमूकानां साधूनां नास्ति जीवनम् ॥ ३१ ॥ शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् । मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ ३२ ॥ पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् । सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ ३३ ॥ अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया । अहमपि न तया न तया वद राजन्कस्य[१] दोषोऽयम् ॥ ३४ ॥ पृथु[२]कार्तस्वरपात्रं भूषित[३]निःशेषपरिजनं देव । विलसत्[४]करेणुगहनं संप्रतिसममावयोः सदनम्[५] ॥ ३५ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ३६ ॥ तावत्सन्ति सहाया यावज्जन्तुर्न कृच्छ्रमाप्नोति । अभिपतति शिरसि मृत्यौ कं कः शक्तः परित्रातुम् ॥ ३७ ॥ विकसामि रवावुदिते संकोचमुपैमि चास्तमुपयाते । दारिद्र्यसरसि मग्नः पङ्कजलीलामनुभवामि ॥ ३८ ॥ घृतलवणतैलतण्डुलशाकेन्धनचिन्तयानुदिनम् । विपुलमतेरपि पुंसो नश्यति धीर्मन्दविभवत्वात् ॥ ३९ ॥ वीणा वंशश्चन्दनं चन्द्रभासः शय्या यानं यौवनस्थास्तरुण्यः । नैतद्रम्यं क्षुत्पिपासार्दितानां सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ ४० ॥ दारिद्र्य भोस्त्वं परमं विवेकि[६] गुणाधिके पुंसि सदानुरक्तम् । विद्याविहीने गुणवर्जिते च मुहूर्तमात्रं न रतिं[७] करोषि ॥ ४१ ॥ दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा[८] । विपन्नदेहे[९] मयि मन्दभाग्ये[१०] ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ४२ ॥ एको हि दोषो गुणसन्निपाते[११] निमज्जतीन्दोरिति यो[१२] बभाषे । न तेन दृष्टं कविना समस्तं दारिद्र्यमेकं गुणकोटिहारि[१३] ॥ ४३ ॥ धनैर्विमुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् । यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति ॥ ४४ ॥ अहो नु कष्टं सततं प्रवासस्ततोऽतिकष्टः परगेहवासः[१४] । कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ ४५ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् । तृणानि

१ खेदं प्राप्नोमि. २ मणियुक्तं यत्कंकणं तेन वर्जितम्. ३ अत्यन्तम्. ४ मृण्मयपात्रम्. ५ धान्यकणरहितम्. ६ अग्निः. ७ आकाशम्; पक्षे,–वस्त्रम्.

१ दरिद्रस्य दोष इत्यर्थः. २ पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि यस्मिंस्तत्; पक्षे,–पृथुकानां बालानामार्तस्वरा रुदितशब्दास्तेषां पात्रं भाजनम्. ३ भूषिता अलंकृता निःशेषाः परिजना यस्मिन्; पक्षे,–भुवि उषिता निःशेषाः परिजना यस्मिन्. ४ विलसन्त्यः शोभमानाः करेणवो हस्तिन्यस्ताभिर्गहनं निबिडम्; पक्षे,–बवयोः सावर्ण्यात् बिले सीदन्तीति बिलसदः, बिलसद एव बिलसत्का बिलवर्तिनो ये रेणवो धूलयस्तैर्गहनं व्याप्तम्. ५ गृहम्. ६ विचारशीलम्. ७ प्रीतिम्. ८ स्थित्वा. ९ विनष्टशरीरे. १० हतभाग्ये. ११ गुणसमुदाये. १२ कालिदासः. 'एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति कुमारसंभवस्थे पद्ये. १३ कोटिगुणनाशकमिति भावः. १४ परगृहवासः.

शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ ४६ ॥ यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते । तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥ ४७ ॥ दानं न दत्तं न तपश्च तप्तं नाराधितौ शंकरवासुदेवौ । अग्नौ रणे वा न हुतश्च कायः शरीर किं प्रार्थयसे सुखानि ॥ ४८ ॥ फलाशिनो मूलतृणाम्बुभक्षा विवाससो निस्तरशायिनश्च[1] । गृहे विमूढा मुनिवच्चरन्ति तुल्यं तपः किं तु फलेन हीनम् ॥ ४९ ॥ अर्था न सन्ति न च मुञ्चति मां दुराशा दानान्न संकुचति दुर्ललितं मनो मे । याच्ञा च लाघवकरी[2] स्ववधे च पापं प्राणाः स्वयं व्रजत किं हि विलम्बनेन[3] ॥ ५० ॥ भग्ना वयं परिभवासिभिरुग्रधारैर्दारिद्र्यचण्डदहनेन नितान्तदग्धाः । बन्धूपकारविषमित्थमपीह भुक्त्वा जीवाम एव रविजस्य किमस्ति निद्रा ॥ ५१ ॥ धनं यदि गतं गतं चरणयुग्मरेणूपमं धरा यदि गता गता कथय मे किमेतावता । इदं पुनररुन्तुदं[4] धनिगणैरिदानींतनैर्दरिद्रिगणनाविधौ यदहमङ्कपाते धृतः ॥ ५२ ॥ गते सुहृदि शत्रुतां सततनिर्विवेके प्रभौ गृहे कुगृहिणीवचःक्रकचदारिते वा हृदि । महाजनविवर्जिते सदसि मानिनां श्रेयसे वरं मरणमेव वा शरणमन्यदेशान्तरम् ॥ ५३ ॥ अप्रस्तावस्तुतिभिरनिशं कर्णशूलं करोति स्वं दारिद्र्यं वदति वसनं दर्शयत्येव जीर्णम् । छायाभूतश्चलति न पुरः पार्श्वयोर्नैव पश्चान्निःस्वः खेदं दिशति धनिनां व्याधिवदुश्चिकित्स्यः ॥ ५४ ॥ निवासश्चिन्तायाः परपरिभवो वैरमपरं जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् । वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ ५५ ॥ अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी शिशोः कर्णौ यत्नात्सुपिहितवती[5] दीनवदना । मयि क्षीणोपाये यदकृत दृशावश्रुशबले तदन्तःशल्यं मे त्वमिव पुनरुद्धर्तुमुचितः ॥ ५६ ॥ विधातुर्द्वे कन्ये सुगतिरपरा दुर्गतिरभूत्तयोराद्यां धाता गुणकुलविहीनाय स ददौ । ततः पश्चात्तापादिव सुगुणसज्जातमधुना कुलीनं विद्वांसं वरमिह वरेण्यं मृगयते ॥ ५७ ॥ न भिक्षा दुर्भिक्षे मिलति दुरवस्थाः कथमृणं लभन्ते कर्माणि द्विजपरिवृढान्कारयतु कः । अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क्व यामः किं कुर्मो गृहिणि गहनो जीवनविधिः ॥ ५८ ॥ निरस्यन्नालीकं क्षुदुपहतसीदत्परिजनं विना दीपान्नक्तं सुखगहनसंरुद्धतिमिरम् । अनाक्रान्तद्वारं प्रणयिभिरपूर्णोत्सवमहो गृहं कारातुल्यं भवति खलु दुःखाय गृहिणः ॥ ५९ ॥ सखे खेदं मा गाः कलय किल तास्ता निजकलाः स्वकीर्त्या वर्धस्व क्व नु खलु तवैतद्व्यवसितम् । न तन्मोघत्यत्र स्फुरितमिति चेन्नैतदुचितं विचित्रोत्साहानां किमिदमियदेव त्रिभुवनम् ॥ ६० ॥ दधति न जनास्तन्नैराश्याददृष्टविभूतयो यदुचितसुखभ्रंशाद्दुःखं निजच्युतसंपदः । भवति हि तथा जात्यन्धानां कुतो हृदि वेदना नयनविषयं स्मृत्वा स्मृत्वा यथोद्धृतचक्षुषाम् ॥ ६१ ॥ मारोदीः[1] श्चिरमेहि वस्त्ररुचिरान्दत्त्वाद्य बालानिमानायातस्तव वत्स दास्यति पिता ग्रैवेयकं[2] वाससी[3] । श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य[4] निष्किंचनो[5] निःश्वस्याश्रुजलप्लवप्लुतमुखः पान्थः पुनः प्रस्थितः ॥ ६२ ॥ वासःखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः[6] । दंपत्योरिति जल्पितं निशि यदा चौरः प्रविष्टस्तदा लब्धं कर्पटमन्यतस्तदुपरि[7] क्षिप्त्वा रुदन्निर्गतः ॥ ६३ ॥ वृद्धोऽन्धः पतिरेष मञ्चकगतः[8] स्थूणावशेषं[9] गृहं कालोऽभ्यर्णजलागमः[10] कुशलिनी वत्सस्य वार्तापि नो । यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला[11] दृष्ट्वा गर्भभरालसां निजवधूं[12] श्वश्रूश्चिरं रोदिति ॥ ६४ ॥ नो सेवा विहिता गुरोरपि मनाङ्नो वा कृतं पूजनं देवानां विधिवन्न वा शिव शिव स्निग्धादयः सेविताः । किं तु त्वच्चरणौ सरस्वति रसादाजन्मनः सेवितौ तस्मान्मां विजहाति सा भगवती शङ्के सपत्नी[13] तव ॥ ६५ ॥ क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा लिप्ता जर्जरकर्करी[14] जतुलवैर्नो[15] मां तथा बाधते । गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकु[16] स्मितं कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता ॥ ६६ ॥ दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः । दग्धः पञ्चशरः[17] पिनाकपतिना तेनाप्ययुक्तं कृतं दारिद्र्यं जनतापकारकमिदं केनापि दग्धं नहि ॥ ६७ ॥ उत्तिष्ठ क्षणमेकमुद्वह[18] सखे दारिद्र्यभारं मम श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् । इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवो दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ६८ ॥ भद्रे वाणि कुरुष्व तावदमलां वर्णानुपूर्वीं मुखे चेतः स्वास्थ्यमुपैहि याहि करुणे

१ आस्तरणहीनभूपृष्ठशायिनः. २ लघुत्वकारिणी. ३ कालदैर्घ्येणेति यावत्. ४ मर्मस्पृक्. ५ छादितवती.

१ रोदनं मा कुरु. २ कण्ठभूषणम्. ३ वस्त्रे. ४ भित्तेः. ५ दरिद्रः. ६ धान्यतृणस्रस्तरः. ७ जीर्णवस्त्रखण्डम्. ८ शय्या. ९ गृहस्तम्भः. १० समीपः. ११ व्याकुला. १२ स्नुषाम्. १३ लक्ष्मीरित्यर्थः. १४ चालनीसदृशः सच्छिद्रः कुम्भः. १५ लाक्षाखण्डैः. १६ स्तवसहितम्. १७ मदनः. १८ धारय.

प्रज्ञे स्थिरत्वं भज । लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां पापो यावदहं ब्रवीमि धनिनं देहीति दीनं वचः ॥ ६९ ॥ यो गङ्गामतरत्तथैव यमुनां यो नर्मदां शर्मदां[1] का वार्ता सरिदम्बुलङ्घनविधौ यश्चार्णवांस्तीर्णवान् । सोऽस्माकं चिरमास्थितोऽपि सहसा दारिद्र्यनामा सखा त्वद्दानाम्बुसरित्प्रवाहलहरीमग्नो न[2] संभाव्यते ॥ ७० ॥ दारिद्र्याद्ध्रियमेति[3] ह्रीपरिगतः[4] सत्त्वात्परिभ्रश्यते निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते[5] । निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम्[6] ॥ ७१ ॥ शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे । निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥ ७२ ॥ दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः । सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥ ७३ ॥ सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरात्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते । दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ७४ ॥ पौरेभ्यो न भयं न दण्डपतनं त्रासो न वा भूपतेर्निःसङ्गं शयनं निशासु गमनं दुर्गेषु मार्गेषु च । दारिद्र्यं सुखमेव केवलमहो दोषद्वयं वर्तते जाया निन्दति चाङ्गभोगसमये मुञ्चन्ति वै याचकाः ॥ ७५ ॥ वासश्चर्म विभूषणं शवशिरो भस्माङ्गलेपः सदा ह्येको गौः स च लाङ्गलाद्यकुशलः संपत्तिरेतादृशी । इत्यालोच्य विमुच्य शंकरमगाद्रत्नाकरं जाह्नवी कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ ७६ ॥ मद्गेहे मुषकीव मूषकवधूर्मूषीव मार्जारिका मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः । इत्यापन्नशिशूनसून्विजहतो दृष्ट्वा तु झिल्लीरवैर्लूतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥ ७७ ॥ पीठाः[7] कच्छपवत्तरन्ति सलिले संमार्जनी मीनवद्दर्वी सर्पविचेष्टितानि कुरुते संत्रासयन्ती शिशून् । शूर्पार्धावृतमस्तका च गृहिणी भित्तिः प्रपातोन्मुखी रात्रौ पूर्णतडागसंनिभमभूद्राजन्मदीयं गृहम् ॥ ७८ ॥ शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादरं दैन्यं दीपयति क्षमां क्षपयति व्रीडामपि ह्रासति । तेजो जर्जर-

१ सुखदात्रीम्. २ न दृश्यते. ३ लज्जां प्राप्नोति. ४ लज्जायुक्तः. ५ खेदम्. ६ स्थानम्. ७ आसनानि.

यत्यपास्यति मतिं विस्तारयत्यर्थितां पुंसः क्षीणधनस्य किं न कुरुते वैरं कुटुम्बग्रहः ॥ ७९ ॥ दारिद्र्येण समीरितापि बहुशः कण्ठं समालम्बते कण्ठात्कष्टशतैः कथं कथमपि प्राप्नोति जिह्वातलम् । जिह्वाकीलककीलितेव सुदृढं तस्मान्न निर्यात्यसौ वाणी प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥८०॥ दृष्टं दुर्जनचेष्टितं परिभवो लब्धः समानाज्जनात्पिण्डार्थे धनिनां कृतं श्वलडितं भुक्तं कपालेष्वपि । पद्ध्यामध्वनि संप्रयातमसकृत्सुप्तं तृणप्रस्तरे यच्चान्यत्र कृतं कृतान्त कुरु हे तत्रापि सज्जा वयम् ॥ ८१ ॥ आसे चेत्स्वगृहे कुटुम्बभरणं कर्तुं न शक्तोऽस्म्यहं सेवे चेत्सुखसाधनं मुनिवनं मुष्णन्ति मां तस्कराः । श्वभ्रे[1] चेत्स्वतनुं त्यजामि नरकाद्भीरात्महत्यावशान्नो जाने करवाणि दैव किमहं मर्तुं न वा जीवितुम् ॥ ८२ ॥ मा भूज्जन्म महाकुले तदपि चेन्मा भूद्विपत्सापि चेन्मा भूद्भूरि कलत्रमस्ति यदि तन्मा भूद्दयार्द्रं मनः । तच्चेदस्ति तदस्तु मृत्युरथ चेत्तस्यापि नास्ति क्षणस्तज्जन्मान्तरनिर्विशेषसदसद्देशान्तरेऽस्तु स्थितिः ॥ ८३ ॥ यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति यैश्चात्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना । ये चासन्परदुःखदुःखितधियस्ते साधवोऽस्तं गताश्चक्षुः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ ८४ ॥ सक्तूञ्छोषयति द्रुतान्प्रतिकरोत्याक्रन्दतो बालकान्प्रत्यासिञ्चति कर्परेण सलिलं शय्यातृणं रक्षति । धृत्वा मूर्ध्नि पुराणशूर्पशकलं शून्ये गृहे व्याकुला किं तद्यन्न करोति दुर्गतवधूर्देवे भृशं वर्षति ॥ ८५ ॥ दारिद्र्यक्षितिपः स मे निजपतिस्तस्य प्रसादादभूद्याच्ञा जीवनमम्बरं दश दिशो वासश्च देवालये । अस्मद्वैरिणि लब्धसंगतिरिति त्वय्याश्रये कुप्यता मद्वृत्तिं विनियोजितास्त्वदरयः का नाम वृत्तिर्मम ॥ ८६ ॥ आसीत्ताम्रमयं शरीरमधुना सौवर्णवर्णं गतं मुक्ताहारलताश्रुबिन्दुनिवहैर्निःश्वस्य मे कल्पिता । स्वल्पं स्वल्पमनल्पकल्पमधुना दीर्घं वयः कल्पितं स्वामिन्दुःख भवत्प्रसादवशतः किं किं न लब्धं मया ॥ ८७ ॥

---

## दानप्रशंसा

अनुकूले विधौ[2] देयं यतः पूरयिता[3] हरिः । प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ १ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ २ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥ ३ ॥ त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः । त्यागा-

१ गर्ते. २ दैवे. ३ पूरणकर्ता.

जगति पूज्यन्ते पशुपाषाणपादपाः ॥ ४ ॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ५ ॥ ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न यच्छसि । इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ ६ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् । स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ ७ ॥ दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम् । व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ ८ ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥ ९ ॥ उपार्जितानां वित्तानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १० ॥ दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते । पुंसां यदि हि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥ ११ ॥ किं तया क्रियते लक्ष्म्या या वधूरिव केवला । या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १२ ॥ आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १३ ॥ दानेन श्लाघ्यतां यान्ति पशुपाषाणपादपाः । दानमेव गुणः श्लाघ्यः किमन्यैर्गुणकोटिभिः ॥ १४ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १५ ॥ यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् । तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १६ ॥ दातव्यं भोक्तव्यं सति विभवे संचयो न कर्तव्यः । पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १७ ॥ मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव । तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥ १८ ॥ प्रापितेन चटुधाकुविडम्बं लम्भितेन बहुयाचनलज्जाम् । अर्थिना यदघमर्जति दाता तन्न लुम्पति विलम्ब्य ददानः ॥ १९ ॥ यत्प्रदेयमुपनीय वदान्यैर्दीयते सलिलमर्थिजनाय । याचनोक्तिविफलत्वविशङ्कात्रासमूर्च्छनचिकित्सितमेतत् ॥ २० ॥ अर्थिने न तृणवद्धनमात्रं किंतु जीवनमपि प्रतिपाद्यम् । एवमाह कुशवज्जलदायी द्रव्यदानविधिरुक्तिविदग्धः ॥ २१ ॥ पङ्कसंगरविगर्हितमर्हे न श्रियः कमलमाश्रयणाय । अर्थिपाणिकमलं विमलं तद्वासवेश्म विदधीत सुधीस्तत् ॥ २२ ॥ दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि । साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत् ॥ २३ ॥ अर्थो विनैवार्थनयोपसीदन्नाल्पोऽपि धीरैरवधीरणीयः । मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहुमन्तुमर्हः ॥ २४ ॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥ २५ ॥ तुरगशतसहस्रं गोगजानां च लक्षं कनकरजतपात्रं मेदिनीं सागरान्ताम् । विमलकुलवधूनां कोटिकन्याश्च दद्यान्नहि नहि सममेतैरन्नदानं प्रधानम् ॥ २६ ॥ कामं वाचः कतिचिदफलाः सन्तु लोके कवीनां सन्त्येवान्या मधुरिपुकथाः संस्तवात्कामदोग्ध्र्यः । वित्तं कामं भवतु विफलं दत्तमश्रोत्रियेभ्यः पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः ॥ २७ ॥ देयं भो ह्यधने धनं सुकृतिभिर्नो संचितं सर्वदा श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता । आश्चर्यं मधुदानभोगरहितं नष्टं चिरात्संचितं निर्वेदादिति पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥ २८ ॥

---

## लोभनिन्दा

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च । द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ १ ॥ लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते । लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २ ॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते । द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ ३ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ ४ ॥ लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् । तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ ५ ॥ लोभाविष्टो नरो वित्तं वीक्षते न स चापदम् । दुग्धं पश्यति मार्जारो न तथा लगुडाहतिम् ॥ ६ ॥ प्रायेण धनिनामेव धनलोभो निरन्तरम् । पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ७ ॥ लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम् । कार्याकार्यविचारो लोभविमूढस्य नास्त्येव ॥ ८ ॥ सत्यप्रशमतपोभिः सत्यधनैः शास्त्रवेदिभिर्विजितः । लोभोऽर्वटं प्रविष्टः कुटिलं हृदयं किराटीनाम् ॥ ९ ॥ स्नेहोपपन्न इति पूर्णदशाविशेषशाली स्वमात्मनि वसुप्रकरं निधाय । लब्धोदये तमथ गृह्णति पद्मबन्धौ दीपा भवन्ति कलुषा बलवान्हि लोभः ॥ १० ॥ यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं गाहन्ते गहनं समुद्रमथनक्लेशं कृषिं कुर्वते । सेवन्ते कृपणं पतिं गदघटासंघट्टदुःसंचरं सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ ११ ॥

---

१ अनेकोपभोग्या. २ नाश इत्यर्थः. ३ तृणकृतकपटपुरुषाकारः सस्यरक्षणार्थमुच्चप्रदेशे शृगालादिभयहेतुस्तृणादिघटितः पुरुषः स्थाप्यत इति प्रसिद्धम्. ४ ऐश्वर्ये. ५ भ्रमरीणाम्. ६ हास्यत्वम्.

१ तिष्ठतीति शेषः. २ धनुषः प्रान्तभागद्वयम्, हृदयगुहायामित्यर्थः. ३ लक्षं लक्ष्यम्; पक्षे,–लक्षसंख्या. ४ गर्तम्. ५ किराटो वणिग्जातिविशेषः. ६ गहनाम्. ७ अरण्यम्. ८ युद्धम्. ९ विलासः.

## उदारप्रशंसा

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति । दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ २ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः । तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥ ४ ॥ आकारमात्रविज्ञानसंपादितमनोरथाः । ते धन्या ये न शृण्वन्ति दीनाः प्रणयिनां गिरः ॥ ५ ॥ कर्णलङ्घिगुणोत्कर्षास्त्यागिनो धन्विनस्तथा । निष्फलान्न विमुञ्चन्ति मार्गणान्[2]संमुखे स्थितान् ॥ ६ ॥ देहि देहीति जल्पन्ति त्यागिनोऽप्यर्थिनोऽपि च । आलोकयन्ति रभसादस्ति नास्तीति न क्वचित् ॥ ७ ॥ युध्यन्ते पक्षिपशवः पठन्ति शुकसारिकाः । दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ ८ ॥ अयं निजः[3] परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ९ ॥ लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः । धन्यो बलिः स येनास्य भिक्षापात्रीकृतः करः ॥ १० ॥ कर्णस्त्वचं शिबिर्[4]मांसं जीवं जीमूतवाहनः[6] । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ११ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ १२ ॥ पुंसामुन्नतचित्तानां सुखावहमिदं द्वयम् । सर्वसङ्गनिवृत्तिर्वा विभूतिर्वा सुविस्तरा ॥ १३ ॥ जरामरणदौर्गत्यव्याधयस्तावदासताम् । जन्मैव किं न धीरस्य भूयो भूयस्त्रपाकरम् ॥ १४ ॥ अपि नाम स दृश्येत पुरुषातिशयो भुवि । गर्वोच्छूनमुखा येन धनिनो नावलोकिताः ॥ १५ ॥ पृथ्वी पृथ्वीगुणा मान्याः सन्ति भूपा विवेकिनः । पराभवापदं यान्ति कस्मादुन्नतबुद्धयः ॥ १६ ॥ परिपूर्णगुणाभोगगरिमोद्गार एव सः । त्रिजगत्स्पृहणीयेऽस्मिन्न रुचिर्द्रविणेऽपि यत् ॥ १७ ॥ त्यागो गुणो वित्तवतां वित्तं त्यागवतां गुणः । परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥ १८ ॥ नृणां धुरि स एवैको यः कश्चित्त्यागपाणिना । निर्मार्ष्टि प्रार्थनापांसुधूसरं मुखमर्थिनाम् ॥ १९ ॥ बुद्धिर्या सत्त्वरहिता स्त्रीत्वं तत्केवलं मतम् । सत्त्वं चानयसंपन्नं तत्पशुत्वं न पौरुषम् ॥ २० ॥ अत्यद्भुतमिमं मन्ये स्वभावममनस्विनः । यदुपक्रियमाणोऽपि प्रीयते न विलीयते ॥ २१ ॥ सैव परं न विनश्यति तनुरपि[1] या श्रीर्निवेशिता सत्सु । अवशिष्यते हिमांशोः सैव कला या स्थिता शंभौ ॥ २२ ॥ कियती पञ्चसहस्री कियती लक्षापि कोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ २३ ॥ प्रत्युपकुर्वत्पूर्वं कृतोपकारमपि लज्जयति चेतः । यस्तु विहितोपकाराद्‌पकारः सोऽधिको मृत्योः ॥ २४ ॥ जीवञ्जीवयति हि यो ज्ञातिजनं परिजनं च सुहृदश्च । तस्य सफला गृहश्रीर्धिगनुपजीव्यां धनसमृद्धिम् ॥ २५ ॥ यच्छञ्जलमपि जलदो वल्लभतामेति सर्वलोकस्य । नित्यं प्रसारितकरः सवितापि भवत्यचक्षुष्यः ॥ २६ ॥ नाप्तं यत्केनचिदपि मनोरथा अपि यतो निवर्तन्ते । तद्यदि न लभ्यतेऽन्यन्मनस्विनः किमभिमानफलम् ॥ २७ ॥ घटनं विघटनमथवा कार्याणां भवति विधिनियोगेन । उचितेऽनुचिते कर्मणि वृत्तिनिवृत्ती समादत्ते ॥ २८ ॥ कल्पस्थायि न जीवितमैश्वर्यं नाप्यते च यदभिमतम् । लोकस्तथाप्यकार्यं कुरुते कार्यं किमुद्दिश्य ॥ २९ ॥ धनबाहुल्यमहेतुः कोऽपि निसर्गेण मुक्तकरः । प्रावृषि कस्याम्बुमुचः संपत्तिः किमधिकाम्बुनिधेः ॥ ३० ॥ द्रविणार्जनजः परिश्रमः फलितोऽप्यस्य जनस्य नीरसः । द्रविणार्जनमात्मतुष्टये परमावर्जयितुं गुणार्जनम् ॥ ३१ ॥ नाक्षराणि पठता किमपाठि पाठितोऽपि किमु विस्मृत एव । इत्थमर्थिजनसंशयदोलाखेलनां खलु चकार नकारः ॥ ३२ ॥ यः प्रशंसति नरो नरमन्यं देवतासु वरदासु सतीषु । मुग्धधीर्धनलवस्पृहयालुस्तं नृशंसमहमाद्यमवैमि ॥ ३३ ॥ यथा शरीरं किल जीवितेन विनाकृतं काष्ठमिवावभाति । तथैव तज्जीवितमप्यवैमि लोकोत्तरेण स्फुरितेन शून्यम् ॥ ३४ ॥ जातश्च नाम न विनङ्क्ष्यति चेत्ययुक्तमुत्पाद एव नियमेन विनाशहेतुः । तुल्ये च नाम मरणव्यसनोपतापे मृत्युर्वरं परहितावहिताशयस्य ॥ ३५ ॥ उत्पादिता स्वयमियं यदि तत्तनूजा तातेन वा यदि तदा भगिनी खलु श्रीः । यद्यन्यसंगमवती च तदा परस्त्री तत्त्यागबद्धमनसः सुधियो भवन्ति ॥ ३६ ॥ त्वयि सति शिवदातर्यस्मद[2]भ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम् । चैरम[3]चरणपातैर्दुर्ग्रहं दोग्धुकामाः कैरभ[4]मनुसरामः कामधेनौ स्थितायाम् ॥ ३७ ॥ इयत्यप्येतस्मिन्निरवधिमहत्यध्वनि गुणास्त एवामी द्वित्रा जरठजरठा यान्ति गणनाम् । अहो ग्राम्यो लोकः स न परममीभिः कृतधृतिः स्वयस्तब्धो यावत्कलयति समग्रं तृणमिदम् ॥ ३८ ॥ स्वचित्तपरिचिन्तयैव परितापमात्मन्यमी न बिभ्रति मनस्विनो

१ मांसम्. २ बाणान्, पक्षे,–याचकान्. ३ स्वकीयः. ४ एतन्नामको राजा. ५ नृपश्रेष्ठः. ६ मुनीश्वरः. ७ समुद्रम्. ८ स्फीतवदनाः

१ अल्पा. २ याचितानाम्. ३ पाश्चात्यचरणपातैः. ४ उष्ट्रम्.

यदमुना न तावत्क्षतिः । अहर्निशमिहैव ये परमनोनुवृत्त्या पुनर्वहन्ति विजिगीषुतां किमिव तेऽनुकम्पास्पदम् ॥ ३९ ॥ भुज्यन्ते स्वगृहस्थिता इव सुखं यस्यार्थिभिः संपदः पद्वी यस्य मतिस्तमःप्रहतये द्वावेव तौ प्राणितः । यस्त्वात्मंभरिरुन्नतेऽपि विभवे हीनश्च विद्वत्तया तस्यालेख्यमणेरिवाकृतिधृतः सत्ताप्यसत्ता ननु ॥ ४० ॥ आधाराय धरावकाशविधयेऽप्याकाशमालोकने भास्वानात्ममहत्त्वसाधनविधावन्ये गुणाः केचन । इत्यस्मिन्नुपकारकारिणि सदा वर्गे परं दुस्त्यजे दैन्यव्रीडकलङ्कमुज्झतु कथं चेतो महाचेतसाम् ॥ ४१ ॥ नित्यं या गुरुभृत्यबन्धुसुजनैर्न स्वेच्छया भुज्यते पश्यन्ति स्पृहयालवो न रिपवो यां विक्रमासादिताम् । यस्याः साधुपरिक्षयेण सुहृदा नाशेन वा संभवो नो संपद्विपदेव सा गुणवतां प्रीतिस्तया कीदृशी ॥ ४२ ॥ न्याय्यं मार्गमनुज्झतः सुकृतिनो दैवाद्भवन्त्यापदो यास्ताः सन्तु बलेरिवादिपुरुषायोर्वीं स्वयं यच्छतः । शक्रस्येव जुगुप्सितैः सुबहुभिर्निन्द्यैर्भृशं कर्मभिर्देवानामुपरि प्रभुत्वमपि मे मा भूत्रपाकारणम् ॥ ४३ ॥ रुद्रोऽद्रिं जलधिं हरिर्दिविषदो दूरं विहायःश्रिता भोगीन्द्राः प्रबला अपि प्रथमतः पातालमूले स्थिताः । लीनाः पद्मवने सरोजनिलया मन्येऽर्थिसार्थाद्भिया दीनोद्धारपरायणाः कलियुगे सत्पूरुषाः केवलम् ॥ ४४ ॥

---

## कृपणनिन्दा

कृपणेन समो दाता न भूतो न भविष्यति । अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १ ॥ यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते । विभज्यते यदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ २ ॥ यत्करोत्यरतिं क्लेशं तृष्णां मोहं प्रजागरम् । न तद्धनं कदर्याणां हृदये व्याधिरेव सः ॥ ३ ॥ मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा । दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ४ ॥ त्यागभोगविहीनेन धनेन धनिनो यदि । भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ५ ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ६ ॥ अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् । आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ ७ ॥ कृपणेन शवेनेव मृतेनापि न दीयते । मांसं वर्धयता तेन काकस्योपकृतिः कृता ॥ ८ ॥ बोधयन्ति न याचन्ते भिक्षाद्वारा गृहे गृहे । दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥ ९ ॥ द्वारं द्वारं रटन्तीह भिक्षुकाः पात्रपाणयः । दर्शयन्त्येव लोकानामदातुः फलमीदृशम् ॥ १० ॥ न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम् । किं तु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ ११ ॥ किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः । अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ १२ ॥ वरं विभवहीनेन प्राणैः संतर्पितोऽनलः । नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ १३ ॥ उदारचरितस्त्यागी याचितः कृपणोऽधिकः । एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ १४ ॥ नोपभोक्तुमपि क्लीबो जानात्युपचितां श्रियम् । ग्राम्यो विरागयत्येव रमयन्नपि कामिनीम् ॥ १५ ॥ कृपणः स्ववधूसङ्गं न करोति भयादिह । भविता यदि मे पुत्रः स मे वित्तं हरेदिति ॥ १६ ॥ यदधोऽधः क्षितौ वित्तं निचखान मितंपचः । तदधोनिरयं गन्तुं चक्रे पन्थानमग्रतः ॥ १७ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति । परार्थे भारवाहीव क्लेशस्यैव हि भाजनम् ॥ १८ ॥ असंभोगेन सामान्यं कृपणस्य धनं परैः । अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥ १९ ॥ सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे । अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ २० ॥ अदातुर्मानसं क्वापि न स्पृशन्ति कवेर्गिरः । दोषायैवातिवृद्धस्य विलासास्तरुणीकृताः ॥ २१ ॥ शरणं किं प्रपन्नानि विषवन्मारयन्ति किम् । न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ २२ ॥ धनं यदिह मे दत्से विधे मा देहि कर्हिचित् । औदार्यं धनिनो देहि यन्मदीये हृदि स्थितम् ॥ २३ ॥ वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः । व्यसोः कुसुममालेव श्रीः कदर्यस्य निष्फला ॥ २४ ॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥ २५ ॥ या विपत्तिर्धनापाये नवा भोगिवदान्ययोः । प्रज्ञापकर्षात्प्रागेव प्राप्ता हि कृपणेन सा ॥ २६ ॥ गृहमध्यनिखातेन धनेन रमते यदि । स तु तेनानुसारेण रमते किं न मेरुणा ॥ २७ ॥ अतिसंचयकर्तॄणां वित्तमन्यस्य कारणात् । अन्यैः संचीयते यत्नादन्यैश्च मधु पीयते ॥ २८ ॥ विडम्बनैव पुंसि श्रीः परप्रणयपांसुले । कान्ति कामिह कुर्वीत कुणौ कटककल्पना ॥ २९ ॥ कृत्वोपकारं यस्तस्माद्वाञ्छति प्रत्युपक्रियाम् । दीनस्तृष्णाविधेयत्वाद्वान्तमप्युपलेढि सः ॥ ३० ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा ।

---

१ संपाद्यते. २ अवसाने. ३ अस्वस्थत्वम्. ४ विचाराशक्ति. ५ कृपणानाम्. ६ पीडैव. ७ कस्य का उपकृतिरुपकारः कृता, अपि तु न कस्यापि कापीत्यर्थः; पक्षे,—काकस्य पक्षिणः.

१ भिक्षुका इति शेषः. २ त्यजतीति शेषः. ३ आरोपयामास. ४ नरकम्. ५ चञ्चलाक्षी. मृगनयनेति यावत्. ६ अन्धस्य. ७ प्राणरहितस्य; प्रेतस्येति यावत्. ८ दारिद्र्यशङ्कयैव.

न च परलोकसमीहा[1] स भवति धनपालको मूर्खः ॥ ३१ ॥ उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् । कन्यामणिरिव[2] सदने तिष्ठत्यर्थः परस्यार्थे ॥ ३२ ॥ यदि भवति धनेन धनी [3]क्षितितलनिहितेन भोग[4]रहितेन । तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥३३॥ नन्दनरेन्द्रद्रविणै[5]र्दुष्कृतमिव किमपि विहितमतिघोरम् । वसुधातलोष्मपाको विरमति नाद्यापि यत्तेभ्यः ॥ ३४ ॥ [6]दृढतरनिबद्धमुष्टेः कोशे[7]निषण्णस्य सहज[8]मलिनस्य । कृपणस्य कृपाणस्य च केवलमा[9]कारतो भेदः ॥ ३५ ॥ कृपणसमृद्धीनामपि भोक्तारः सन्ति केचिदतिनिपुणाः । जलसंपदोऽम्बु[10]राशेर्यान्ति वशं सर्वदैव वडवा[11]ग्नेः ॥ ३६ ॥ प्राप्तानपि न लभन्ते भोगान्भोक्तुं स्वकर्मभिः कृपणाः । मुख[12]पाकः किल भवति द्राक्षापाके [13]बलिभुजां हि ॥ ३७ ॥ अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् । योऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ ३८ ॥ केऽपि स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते । न तु संत्यजन्ति वित्तं मात्सर्यमिवाधमाः सततम् ॥ ३९ ॥ और्वा इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः । तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ४० ॥ अर्थि[14]नि कवयति कव[15]यति पठति च पठति स्तवोद्यते स्तौति । पश्चाद्यामीत्युक्ते कृपणः प्र[16]णतोऽञ्जलिं कुरुते ॥ ४१ ॥ दानं भोगं च विना धनसत्तामात्रकेण चेद्धनिनः । वयमपि किमिति न धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ ४२ ॥ धनिनोऽप्यदानभोगा गण्यन्ते धुरि महादरिद्राणाम् । हन्ति न यतः पिपासामतः समुद्रोऽपि मरुरिव ॥ ४३ ॥ अभ्युपयुक्ताः सद्भिर्गतागतैरहरहः सुनिर्विण्णाः । कृपणजनसंनिकर्षं संप्राप्यार्थाः स्वपन्तीव ॥ ४४ ॥ ते मूर्खतरा लोके येषां धनमस्ति नास्ति च त्यागः । केवलमर्जनरक्षणवियोगदुःखान्यनुभवन्ति ॥ ४५ ॥ याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ४६ ॥ मा धनानि कृपणः खलु जीवस्तृष्णयार्पयतु जातु परस्मै । तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि

१ इच्छा. २ उत्तमकन्या. ३ भूम्यन्तर्गतेन. ४ उपभोगहीनेन. ५ नवनवतिकोटिमिताः कनकदीनाराः पाटलिपुत्रमहीपतिना नन्देन भूमौ निहिता अद्यापि तिष्ठन्तीति प्रसिद्धिः. ६ दृढतरमतिनिबिडं निबद्धा मुष्टिर्येन; पक्षे,–दृढतरं निबद्धा मुष्टिः त्सरुर्यस्य. ७ कोशागारे निषण्णस्य स्थितस्य; पक्षे,–कोशे खड्गपिधाने स्थितस्य. ८ स्वभावमलिनस्य. मलिनवेषत्वात्; पक्षे,–कृष्णवर्णत्वात्. ९ आकारत आकृत्या भेदः; पक्षे,–कृपणशब्देऽकारो वर्तते. कृपाणशब्द आकारो वर्तते. एतावतैव भेदो भिन्नत्वम्, कृपाणः खड्गः. १० समुद्रस्य. ११ वाडवाग्नेः. १२ मुखरोगः. १३ काकानाम्. १४ याचके. १५ कवितां करोति. १६ नम्रः.

मृतोऽपि ॥ ४७ ॥ लोक एष परलोकमुपेता हा विधाय निधने धनमेकः । इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुदय[1]द्यचित्तः ॥ ४८ ॥ संचितं क्रतुषु नोपयुज्यते याचितं गुणवते न दीयते । तत्कदर्यपरिरक्षितं धनं चौरपार्थिवगृहेषु गच्छति ॥ ४९ ॥ वरममी तरवो वनगोचराः शकुनिसार्थविलुप्तफलश्रियः । न तु धनाढ्यगृहाः कृपणाः फणानिहितरत्नभुजंगमवृत्तयः ॥ ५० ॥ न निर्यियासन्ति कदर्यहस्ताद्धनानि पांसोरिव तैललेशाः । दैवात्कदाचिद्विनियोक्तुरेव निर्गन्तुमिच्छन्त्यसुभिः सहैव ॥ ५१ ॥ सुसंवृतैर्जीवितवत्सुरक्षितैर्निजेऽपि देहे कृतयत्नणस्य च । तवानुमार्गं व्रजतो भवान्तरे शठैर्धनैः पञ्चनदी न पूरिता ॥ ५२ ॥ अहो धनानां महती विदग्धता सुखोषितानां कृपणस्य वेश्मनि । व्रजन्ति न त्यागदशां न भोग्यतां परां च कांचित्प्रथयन्ति निर्वृतिम् ॥ ५३ ॥ फलं स्वेच्छालभ्यं प्रतिवनमखेदं[2] [3]क्षितिरुहां पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् । मृदुस्पर्शा शय्या सुललितलतापल्लवमयी सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ५४ ॥ यदेते साधूनामुपरि विमुखाः सन्ति धनिनो न चैषावज्ञैषामपि तु निजवित्तव्ययभयम् । अतः खेदो नास्मिन्परममनुकम्प्यैव भवति स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥ ५५ ॥ न शान्तान्तस्तृष्णा धनलवणवारिव्यतिकरैः क्षतच्छायः कायश्चिरविरसरूक्षाशनतया । अनिद्रा मन्दाग्निर्नृपसलिलचौरानलभयात्कदर्याणां कष्टं स्फुटमधनकष्टादपि परम् ॥ ५६ ॥ जहाति सहसाननं झटिति[4] पृच्छति स्वागतं नमस्यति कृताञ्जलिः श्रुति[5]मनोहरं भाषते । ददाति कुसुमं फलं शिथिलयत्यभीष्टां क्रियामहो न परिचीयते कृपणवञ्चनाचातुरी ॥ ५७ ॥ अय[6]श्चणकचर्वणं फणिफणामणेः कर्षणं करेण गिरितोलनं जलनिधेः पदा लङ्घनम् । प्र[7]सुप्तहरिबोधनं निशित[8]खड्गसंस्पर्शनं कदाचिदखिलं भवेन्न च शठाद्धनस्यार्जनम् ॥ ५८ ॥ एकैकातिशयालवः परगुणज्ञानैकवैज्ञानिकाः सन्त्येते धनिकाः कलासु सकलास्वाचार्यचर्याचणाः । अप्येते सुमनोगिरां निशमनाद्भिम्यत्यहो श्लाघया धूते मूर्धनि कुण्डले क[9]षणतः क्षीणे भवेतामिति ॥ ५९ ॥ प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशङ्कया भीतः प्रत्युपकारकारणभयान्नाकृष्यते सेवया । मिथ्या जल्पति वित्तमार्गणभयात्स्तुत्यापि न प्रीयते कीनाशो विभवव्ययव्यतिकरत्रस्तः कथं प्राणिति ॥ ६० ॥ मत्वा सारं गुणानां

१ उद्यत्करुणं चित्तं यस्य. २ क्लेशरहितम्. ३ वृक्षाणाम्. ४ सत्वरम्. ५ कर्णमधुरम्. ६ लोहम्. ७ निद्रितासिंहोत्थापनम्. ८ तीक्ष्णः. ९ घर्षणतः.

शिरसि यदि शशी स्थापितो दैवयोगादीशेन क्षीणबिम्बः सकलमुपचयं किं न नीतः क्षणेन । मिथ्यैवं ख्यापयन्तो गुणिनि सरलतां लोकभक्त्यर्थमुच्चैराढ्याः कुर्वन्ति वित्तव्ययचकितधियो मानमर्थेन शून्यम् ॥ ६१ ॥

## याचकनिन्दा

वेपथुर्[1]मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ १ ॥ विद्यावतः कुलीनस्य धनं याचितुमिच्छतः । कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ २ ॥ द[2]क्षिणाशाप्रवृत्तस्य प्र[3]सारितकरस्य च । तेजस्तेजस्विनोऽर्कस्य हीयतेऽन्यस्य का कथा ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा । शुष्कोऽपि हि नदीमार्गः खन्यते सलिलार्थिभिः ॥ ४ ॥ तृणादपि लघुस्[4]तूलस्तूलादपि च याचकः । वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति ॥ ५ ॥ देहीति वचनं श्रुत्वा देहस्थाः पञ्च देवताः । मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ६ ॥ नवीनदीनभावस्य याचकस्यातिमानिनः । वचोजीवितयोरासीत्पु[5]रोनिःसरणे रणः ॥ ७ ॥ अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् । अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ ८ ॥ गतेर्भङ्गः स्वरो हीनो गात्रे स्वेदो महद्भयम् । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ९ ॥ दारिद्र्यानलसंतापः शान्तः संतोषवारिणा । याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥ १० ॥ दरिद्रस्य परा मूर्तिस्तृष्णा न द्रविणाल्पता । जर[6]द्गवधनः शंभुस्तथापि परमेश्वरः ॥ ११ ॥ वदनाच्च बहिर्यान्ति प्राणा याच्ञाक्षरैः सह । ददामीत्यक्षरैर्दातुः पुनः कर्णाद्विशन्ति हि ॥ १२ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते । दाता चेत्तद्विजानीयाद्दद्यात्स्[7]वंपिशितान्यपि ॥ १३ ॥ काक आह्वयते काकान् याचको न तु याचकान् । काक-याचकयोर्मध्ये वरं काको न याचकः ॥ १४ ॥ तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधाकृता । न तु मानं परित्यज्य देहि देहीति भाषितम् ॥ १५ ॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयोर्मध्ये दोलायत्यर्थिनां मनः ॥ १६ ॥ क[8]रान्प्रसार्य रविणा द[9]क्षिणाशावलम्बिना । न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥ १७ ॥ एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता । दातृ-याचकयोर्भेदः कराभ्यामेव सूचितः ॥ १८ ॥ हृदि लज्जोदरे वह्निः स्वभावादग्निरुच्छिखः । तेन मे दग्धलज्जस्य पुनरागमनं नृप ॥ १९ ॥ सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् । हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥ २० ॥ याचकवीरो धन्यः क[3]रदानग्राहकः सदातृभ्यः । कुरुते पराङ्मुख वा ह्यतिनम्रं वा हरत्यसौ पुण्यम् ॥ २१ ॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥ २२ ॥ कतरत्पु[4]रहर परुषं हालाहलकवलयाचनावचसोः । एकैव तव रसज्ञा तदुभयरसतारतम्यज्ञा ॥ २३ ॥ अग्रे लघिमा पश्चान्महतापि पिधीयते नहि महिम्ना । वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥ २४ ॥ तावन्महतां महती यावत्किमपि हि न याच्यते लोकम् । बलिमनुयाचनसमये [5]श्रीपतिरपि वामनो जातः ॥ २५ ॥ गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाधुना । ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा म[6]नागपि ॥ २६ ॥ याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथा हि । सद्य एव भगवानपि विष्णुर्वामनो भवति याचितुमिच्छन् ॥ २७ ॥ उत्तमर्णधनदानशङ्कया पावकोत्थशिखया हृदिस्थया । देव दग्धवसना सरस्वती नास्यतो बहिरुपैति लज्जया ॥ २८ ॥ नीचतामनवलम्ब्य जनः को याचनादवचिनोति फलानि । हन्त वामनपदं प्रतिपेदे भिक्षुतामुपगतो जगदीशः ॥ २९ ॥ अन्यतो यदि निजोपचिकीर्षा मानहानिरिति भीतिरनीतिः । श्रीधरोऽपि हि बलेः श्रियमिच्छन्मानमातनुत वामनमेव ॥ ३० ॥ संतापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् । आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥ ३१ ॥ स्वार्थे धनानि धनिकात्प्रतिगृह्णतो यदास्यं भजेन्मलिनतां किमिदं विचित्रम् । गृह्णन्परार्थमपि वारिनिधेः पयोऽपि मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ३२ ॥ ज[8]नस्थाने भ्रान्तं क[9]नकमृगतृष्णाकुलतया वचो वै[10]देहीति प्रतिपदमुदश्रुप्रलपितम् । कृताल[11]ंकाभर्तु-

१ कम्पः. २ मृतोऽपि दक्षिणस्यां दिशि गच्छति, तस्य वा; पक्षे,–दक्षिणाया आशा तया प्रवृत्तस्य. ३ प्रसारिता विस्तारिताः कराः किरणा येन; पक्षे,–प्रसारितः करो हस्तो येन. ४ कार्पासः. ५ अहमहमिकया अग्रतो निःसरणे. ६ वृद्धवृषभ एव धनं यस्य स शिवस्तथापि 'परमेश्वर' इति कथ्यते. ७ मांसानि. ८ किरणान्; पक्षे,–हस्तान्. ९ दक्षिणदिक्; पक्षे,–दक्षिणाया आशा स्पृहा.

१ चन्द्रकान्तिः. २ याचकत्वम्. ३ कराद्धस्ताद्दानस्य ग्राहकः; पक्षे,–करो राजग्राह्यो दण्डस्तस्य दानं समर्पणं तद्ग्राहकः. ४ हे शिव. ५ लक्ष्मीपतिरपि. ६ ह्रस्वः; पक्षे,–लघुः. ७ किंचिदपि. ८ जनानां स्थानानि नगरपत्तनादीनि तेषु भ्रमणं कृतम्; पक्षे,–जनस्थाने नासिकाख्यजनपदे परिभ्रमणं कृतम्. ९ कनकं द्रव्यमेव मृगतृष्णा मरीचिका तया; पक्षे,–कनकस्य मृगो मायारूपधारी मारीचो राक्षसस्तस्य तृष्णा तया. १० वै इति पदच्छेदः. देहीति प्रलपितम्; पक्षे,–वैदेही जानकीति प्रलपितम्. ११ काभर्तुः कुत्सितस्वामिनो वदनपरिपाटीषु घटना अलमत्यर्थं कृता; पक्षे,–लंकाभर्तू रावणस्य वदनपरिपाट्यामिषुघटना बाणरचना कृता.

वैदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता नत्वधिगता ॥ ३३ ॥ क्व गन्तासि भ्रातः कृतवसतयो यत्र धनिनः किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि । धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलं निकारोऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ॥ ३४ ॥ पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि । श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि ॥ ३५ ॥ भ्रातर्धातरशेषयाचकजने वैरायसे सर्वदा यस्माद्विक्रमशालिवाहनमहीभृन्मुञ्जभोजादयः । अत्यन्तं चिरजीविनो न विहितास्ते विश्वजीवातवो मार्कण्डध्रुवलोमशप्रभृतयः सृष्टाः प्रभूतायुषः ॥ ३६ ॥ उड्डीना गुणपत्त्रिणः सुखफलान्यार्याद्विकीर्णान्यधः पर्यस्ताः परितो यशःस्तबकिताः संपल्लतापल्लवाः । प्रागेवाप्रसृतप्रमोदहरिणच्छाया कथान्तं गता दैन्यारण्यमतंगजेन महता भग्नेऽभिमानद्रुमे ॥ ३७ ॥ शूराः केऽपि पुरःस्थितां रिपुनरश्रेणिं सहन्ते सुखं धीराः केचन कामबाणसदृशां कान्तादृगन्ताहतिम् । केचित्क्रूरवांश्च पञ्चवदनान्दन्तीचपेटान्भटा नैवार्थिप्रकरं प्रसारितकरं कश्चिद्विसोढुं क्षमः ॥ ३८ ॥ दौर्गत्येन समीरिता हृदयतः कण्ठं समालम्बते कण्ठात्कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम् । लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो वाचा प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥ ३९ ॥ वक्त्रादुद्रस मे हठादधिवस त्वं वाणि वक्त्रं मनागीशानां तदनु क्रुधा भजतु मां लक्ष्मीरिमानुज्झतु । पश्चात्तेषु पठत्सु मां प्रति यशोगाथावलीस्तृष्णया वक्त्रं मय्यथ वक्रयत्यनुभवन्त्वेतेऽपि तद्यातनाम् ॥ ४० ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः । दक्षो धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठान्वितो यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ४१ ॥ आस्वाद्य स्वयमेव वच्मि महतीर्मर्मच्छिदो वेदना मा भूत्कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः । पश्य भ्रातरियं हि यौवनजराधिक्कारकेलिस्थली मानम्लानमयी गुणव्यतिकरप्रागल्भ्यगर्वच्युतिः ॥ ४२ ॥ प्राणानां बत किं ब्रुवे कठिनतां तैरेव साविष्कृता निष्क्रामन्ति कथंचिदेव हि न ये याच्ञावचोभिः समम् । आत्मानं पुनराक्षिपामि विदितस्थैर्योऽपि येषामहो मिथ्याशङ्कितत‌द्वियोगविधुरो यत्प्रार्थये सर्वशः ॥ ४३ ॥ वासो वल्कलमास्तरः किसलयान्योकस्तरूणां तलं मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये । क्रीडा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतम् ॥ ४४ ॥ सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो नैर्झरं वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी । आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह स्वाधीने विभवेऽप्यहो नरपतिं सेवन्त इत्यद्भुतम् ॥ ४५ ॥ निष्कन्दाः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः किं शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः । प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वद्भिरुद्वीविभिर्यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते ॥ ४६ ॥ कामं जीर्णपलाशसंहतिकृतां कन्थां वसानो वने कुर्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिम् । साङ्गग्लानि सवेपितं सचकितं सान्तर्निदाघज्वरं वक्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः ॥ ४७ ॥ द्वारे द्वारेऽवरेषामविरलमटति द्वारपालैः करालैर्दृष्टो योऽप्याहतः सन्रणति गणयति स्वापमानं तु नैव । क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं श्राम्यत्यात्मोदरार्थे कथमहह शुना नो समो याचकः स्यात् ॥ ४८ ॥

---

## परोपकारप्रशंसा

परोपकारः कर्तव्यः प्राणैरपि धनैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ १ ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ २ ॥ रविचन्द्रौ घना वृक्षा नदी गावश्च सज्जनाः । एते परोपकाराय युगे देवेन निर्मिताः ॥ ३ ॥ तृणं चाहं वरं मन्ये नरादनुपकारिणः । घासो भूत्वा पशून्पाति भीरून्पाति रणाङ्गणे ॥ ४ ॥ परोपकृतिकैवल्ये तोलयित्वा जनार्दनः । गुर्वीमुपकृतिं मत्वा ह्यवतारान्दशाग्रहीत् ॥ ५ ॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं परोपकारार्थं यो जीवति स जीवति ॥ ६ ॥ परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् । जीवन्तु पशवो येषां चर्माप्युपकरिष्यति ॥ ७ ॥ रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् । अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ ८ ॥ कृच्छ्रानुवृत्त्योऽपि हि परोपकारं त्यजन्ति न महान्तः । तृणमात्रजीवना अपि करिणो दान-

१ कुशलं च वसु च द्रव्यं तद्भावो न संपादितः; पक्षे-कुशलवौ सुतौ यस्याः सा वैदेही न प्राप्ता. २ तिरस्कारः. ३ गुणा एव पक्षिणः. ४ समीपे. ५ दैन्यमेवारण्यमतंगजः. ६ कान्ताकटाक्षवेधम्. ७ सिंहान्.

१ गृहम्. २ विकरालैः. ३ भीतान्. ४ परोपकारः. ५ मोक्षः. ६ उभयोरतुलनां कृत्वा. ७ श्रेष्ठाम्. ८ मत्स्यादीन्. ९ जग्राह.

द्रवार्द्रकराः ॥ ९ ॥ परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥ १० ॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः । अनुद्धताः सत्पुरुषः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ११ ॥ [1]श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । विभाति कायः खलु सज्जनानां परोपकारेण न चन्दनेन ॥ १२ ॥ [3]पद्माकरं दिनकरो विकचं करोति चन्द्रो विकासयति कैरव[4]चक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहितेषु कृताभियोगाः ॥ १३ ॥ दातुः परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना नहि संश्रितेषु । भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कजसमं भुवनान्तरेषु ॥ १४ ॥

## कृतघ्ननिन्दा

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता लोके कृतघ्ने नास्ति निष्कृतिः ॥ १ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्यसंधं[5] भगवति वसुधे कथं वहसि ॥ २ ॥ व्योमनि[6] शम्बाकुरुते चित्रं[7] निर्माति यत्नतः सलिले । स्नपयति पवनं सलिलैर्यस्तु खले चरति सत्कारम्[8] ॥ ३ ॥ शोकं मा कुरु कुक्कुर[9] सत्त्वेष्वहमधम इति मुधा[10] साधो । कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ४ ॥

## संतोषप्रशंसा

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १ ॥ अकृत्वा परसंतापमगत्वा खलनम्रताम् । अनुत्सृज्य सतां मार्गं यत्स्वल्पमपि तद्बहु ॥२॥ आगमिष्यन्ति ते भावा ये भावा मयि भाविनः । अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ॥ ३ ॥ यो मे गर्भगतस्यापि [11]वृत्तिं कल्पितवान्स्वयम् । शेषवृत्ति[12]विधाने च स किं सुप्तोऽथवा मृतः ॥ ४ ॥ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैन्यमत्रा[13]तिरिच्यते ॥ ५ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स वारिचर मोदते ॥ ६ ॥ आत्माधीनशरीराणां स्वपतां निद्रया स्वया । कदन्नमपि[1] मर्त्यानाममृतत्वाय कल्पते ॥ ७ ॥ सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् । उपानद्गूढपादस्य[2] ननु चर्मावृतैव भूः ॥ ८ ॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः । जगत्संमोहजननी यैराशाशीविषी[3] जिता ॥ ९ ॥ अकिंचनस्य दान्तस्य शान्तस्य समचेतसः । सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १० ॥ न योजनशतं दूरं बाध्यमानस्य तृष्णया । संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ ११ ॥ अर्थी करोति दैन्यं लब्धार्थो गर्वमपरितोषं च । नष्टधनश्च स शोकं सुखमास्ते निःस्पृहः पुरुषः ॥ १२ ॥ तन्मूलं गुरुतायास्तत्सौख्यं[4] तद्यशस्तदौर्जित्यम्[5] । तत्सौभाग्यं पुंसां यदेतदप्रार्थनं[6] नाम ॥ १३ ॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति । कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं संतोष एव पुरुषस्य परं निधानम् ॥ १४ ॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां [7]नैवाङ्घ्रिपाः फलभृतः सरितोऽप्यशुष्यन् । रुद्धा गुहाः किमजितोऽ[8]वति नोपपन्नान्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ १५ ॥ मन्निन्दया यदि जनः परितोषमेति[9] नन्वप्रयत्नसुलभोऽयमनुग्रहो[10][11] मे । श्रेयोर्थिनोऽपि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ १६ ॥ वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ १७ ॥ गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां तां दृष्ट्वाशु गतः स चन्दनवनं पश्चात्सरोजं गतः । बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ १८ ॥ मृत्युर्माचति मूर्ध्नि शश्वदुरगी घोरा जरारूपिणी त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद्ग्रस्यते । धूत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः संतोषामृतसागराम्भसि चिरं मग्नः सुखं स्यास्यसि ॥ १९ ॥

## तृष्णानिन्दा

तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि[1][2][3] । विष्णुस्त्रैलोक्यनाथोऽपि यत्त्वया वामनीकृतः[14] ॥ १ ॥ तृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्येषु का कथा । त्रैलोक्यव्यापि यद्रूपं तद्रूपं वामनीकृतम् ॥ २ ॥ तृष्णां चेह परित्यज्य को दरिद्रः क

१ कर्णः. २ शास्त्रेण. ३ कासारम्. ४ कुमुदमण्डलम्. ५ असत्यप्रतिज्ञम्. ६ व्योमन्याकाशे शम्बाकुरुते हलेन क्षेत्रं वारद्वयं कर्षति. ७ आलेख्यम्. ८ पूजाम्. ९ हे भषक. १० व्यर्थम्. ११ जीवनोपायम्. १२ इहोदरनिर्वाहादिप्रबन्धे. १३ विशिष्यते.

१ कुत्सितमन्नम्. २ उपानद्भ्यां गूढौ पिहितौ पादौ यस्य. ३ सर्पिणी. ४ गौरवस्य. ५ उत्साहशीलत्वम्. ६ अयाचनम्. ७ वृक्षाः. ८ भगवान्. ९ संतोषम्. १० प्रसादः. ११ कल्याणेच्छवः. १२ अन्यसंतोषः. १३ विलयम्. १४ ह्रस्वीकृतः.

ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ ३ ॥ बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ४ ॥ नास्त्यन्या तृष्णया तुल्या कापि स्त्री सुभगा क्वचित् । या प्राणानपि मुष्णन्ती भवत्येवाधिकं प्रिया ॥ ५ ॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ ६ ॥ तृष्णे त्वमपि तृष्णार्ता त्रिषु स्थानेषु रज्यसि । व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥ ७ ॥ तृष्णे देवि नमस्तुभ्यं या त्वं सर्वस्य सर्वदा । उत्पादयस्यत्नेन गोष्पदे सागरभ्रमम् ॥ ८ ॥ अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् । तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ९ ॥ आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ १० ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशां पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ ११ ॥ गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् । नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १२ ॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥ १३ ॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ १४ ॥ यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् । जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ १५ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १६ ॥ दारिद्र्यस्य परा मूर्तिस्तृष्णा न द्रविणाल्पता । जरद्गवधनः शंभुस्तथापि परमेश्वरः ॥ १७ ॥ तृष्णा हि चेत्परित्यक्ता को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ १८ ॥ मनोरथरथारूढं युक्तमिन्द्रियवाजिभिः । भ्राम्यत्येव जगत्कृत्स्नं तृष्णासारथिचोदितम् ॥ १९ ॥ यथा हि शृङ्गं गोः काले वर्धमानस्य वर्धते । एवं तृष्णापि चित्तेन वर्धमानेन वर्धते ॥ २० ॥ अकर्तव्येष्वसाध्वीव तृष्णा प्रेरयते जनम् । तमेव सर्वपापेभ्यो लज्जा मातेव रक्षति ॥ २१ ॥ आशा बलवती कष्टं नैराश्यं परमं सुखम् । आशा निराशाः कृत्वा तु सुखं स्वपिति पिङ्गला ॥ २२ ॥ तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥ २३ ॥ आसन्नान्पुरतो भावान्दर्शयित्वा पुरः पुरः । छागो हरितमुष्टयेव दूरं नीतोऽस्मि तृष्णया ॥ २४ ॥ वर्तते येन न विना नरो वाञ्छतु नाम तत् । ततोऽधिकार्थप्रणयी पृष्टो दद्यात्किमुत्तरम् ॥ २५ ॥

तावद्गुणा गुरुत्वं च यावन्नार्थयते परम् । अर्थित्वे वर्तमानस्य न गुणा न च गौरवम् ॥ २६ ॥ विद्वत्ता चैव शौर्यं च सौजन्यं च कुलीनताम् । खलीकरोति याच्ञैका दुःशीलेवाङ्गना कुलम् ॥ २७ ॥ आशाया ये दासास्ते दासाः सर्वलोकस्य । आशा येषां दासी तेषां दासायते लोकः ॥ २८ ॥ दन्ता विश्लथदन्ताः केशाः काशप्रसूनसंकाशाः । नयनं तमसामयनं तथापि चित्तं धनाङ्गनायत्तम् ॥ २९ ॥ त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् । हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥ ३० ॥ इच्छति शती सहस्रं ससहस्रः कोटिमीहते कर्तुम् । कोटियुतोऽपि नृपत्वं नृपोऽपि बत चक्रवर्तित्वम् ॥ ३१ ॥ चक्रधरोऽपि सुरत्वं सुरोऽपि सुरराज्यमीहते कर्तुम् । सुरराजोऽप्यूर्ध्वगतिं तथापि न निवर्तते तृष्णा ॥ ३२ ॥ अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥ ३३ ॥ दिनयामिन्यौ सायंप्रातः शिशिरवसन्तौ पुरतायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ ३४ ॥ आशावलम्बोपचितां न कस्य तृष्णालतानर्थफलं प्रसूते । दिने दिने लब्धरुचिर्विवस्वान्मीनं च मेषं च वृषं च भुङ्क्ते ॥ ३५ ॥ विभूतिरर्घत्यपि याचकामां न दुर्गतं केचिदिहाद्रियन्ते । पीताम्बरोऽब्धेः समवाप लक्ष्मीं दिगम्बरस्योपनतोऽर्धचन्द्रः ॥ ३६ ॥ भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परिजनो निजदेहमात्रम् । वस्त्रं सुजीर्णशतखण्डमयी च कन्था हा हा तथापि विषयान्न जहाति चेतः ॥ ३७ ॥ या सा जगत्परिभवस्य निमित्तभूता हेतुः स्वयं सुरपतेरपि लाघवस्य । सा मां विडम्बयति नाथ सदैव तृष्णा छिन्धि प्रसह्य भगवन्नपुनर्भवाय ॥ ३८ ॥ दुग्धं च यत्तदनु यत्क्वथितं ततो नु माधुर्यमस्य हृतमुन्मथितं च वेगात् । जातं पुनर्घृतकृते नवनीतवृत्ति स्नेहो निबन्धनमनर्थपरम्पराणाम् ॥ ३९ ॥ गदोदन्ता दन्ताः पलितकलितः कुन्तलभरस्तमःक्षेत्रे नेत्रेऽविषयपटुनी न श्रुतिपुटे । अभूदङ्गं रङ्गद्वलिवलयवल्लीविलुलितं तथाप्येतच्चेतस्तरुण इव धावत्यनुदिनम् ॥ ४० ॥ गतं तत्तारुण्यं तरुणिहृदयानन्दजनकं विशीर्णा दन्तालिर्निजगतिरहो यष्टिशरणा । जडीभूता दृष्टिः श्रवणरहितं कर्णयुगलं मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ४१ ॥ वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा

१ हरन्ती. २ वृद्धेषु. ३ मेरुसदृशम्. ४ तृणवल्लघूकरोति. ५ पर्वतः. ६ कवृद्धवृषभः स एव धनं यस्य सः. ७ तन्नामका वेश्या.

१ शिरः. २ दन्ताः. ३ मुखम्. ४ आश्रयः. ५ सूर्यः. ६ मत्स्यः; पक्षे,–मीनराशिः. ७ एडकः; पक्षे,–मेषराशिः. ८ वृषभः; पक्षे,–वृषभराशिः. ९ दणु एव शरणं रक्षको यस्याः सा.

विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम्। शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ४२ ॥ खलोल्लापाः सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा। कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि त्वमाशे मोघाशे किमु परमितो नर्तयसि माम् ॥ ४३ ॥ निवृत्ता भोगेच्छा बहुपुरुषमानो विगलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः। शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने अहो दुष्टः कायस्तदपि मरणापायचकितः ॥ ४४ ॥ अमीषां प्राणानां तुलितबिसिनीपत्रपयसां कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम्। यदाढ्यानामग्रे द्रविणमदनिः[2]संज्ञमनसां कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ४५ ॥ समारम्भा भग्नाः कति कति न वारांस्तव पशो पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले। तथापि प्रत्याशा विरमति न ते मूढ शतधा न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ ४६ ॥ विवेकव्याकोशे विकसति शमे शाम्यति तृषा परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः। जरा जीर्णैश्वर्यग्रसनगहनाक्षेपकृपणस्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ ४७ ॥ अहो तृष्णावेश्या सकलजनतामोहनकरी विदग्धा मुग्धानां हरति विवशानां शमधनम्। विपद्दीक्षादक्षासहतरलतारैः प्रणयिनीकटाक्षैः कूटाक्षैः कपटकुटिलः कामकितवः ॥ ४८ ॥ उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णः सरितांपतिर्नृपतयो यत्नेन संतोषिताः। मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः क्वाणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ४९ ॥ निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशतां वाञ्छति। चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधिं को गतः ॥ ५० ॥ माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते। तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ५१ ॥ दन्तैरुच्चलितं धिया तरलितं पाण्यङ्घ्रिणा कम्पितं दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम्। प्राप्तायां यमभूपतेरिह महाधाव्यां धरायामिह तृष्णा केवलमेकिकैव सुभटी धीरा पुरो नृत्यति ॥ ५२ ॥ भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत्। साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ ५३ ॥ भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला। भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ५४ ॥ आसिष्ये सुखितो गृहीति विहितो मोहेन दारग्रहस्तत्सङ्गात्सुतदासबान्धवसुहृत्संबन्धिनामुद्भवः। तन्निर्वाहकदर्थनापरिभवानौचित्यचिन्ताजुषः किं सौख्यं कतमा गृहस्थितिरतोऽनर्थो मया स्वीकृतः ॥ ५५ ॥ शान्तेर्मातुर्विवेकात्पितुरपि कृपणं मङ्क्षु कृत्वा पृथग्मामाशा योषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीतलज्जा। संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती पुष्टा चैवात्मबन्धूंस्तदपि पुनरहो हन्त वन्ध्यां श्रयामः ॥ ५६ ॥ लज्जे त्वं मज्ज सिन्धौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे शान्ते प्रान्ते दिशान्ते कुरु वसतिमहो गर्व खर्वो भवाशु। तेजः पातालमूलं भज भुवि भगवन्मान मा नाम तेऽस्तु प्रेम्णैकामाश्रयन्तीं सततमहमिमां तूर्णमाशां श्रयिष्ये ॥ ५७ ॥

---

## धीरप्रशंसा

स एव धन्यो विपदि स्वरूपं यो न मुञ्चति। त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ १ ॥ चलन्ति गिरयः कामं युगान्तपवनाहताः। कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥ २ ॥ कृतं पुरुषशब्देन जातिमात्रावलम्बिना। योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥ ३ ॥ ग्रसमानमिवौजांसि सहसा गौरवेरितम्। नाम यस्याभिनन्दन्ति द्विषोऽपि स मतः पुमान् ॥ ४ ॥ सह परिजनेन विलसति धीरो गहनानि तरति पुनरेकः। विषमेकेन निपीतं त्रिपुरजिता सह सुरैरमृतम् ॥ ५ ॥ श्लाघ्या महतामुन्नतिरुद्धुतमध्यवसितं च धीराणाम्। कनकगिरिरनभिलङ्घ्यो रविरनिशमनुज्झितारम्भः ॥ ६ ॥ अङ्गणवेदी वसुधा कुल्या जलधिः स्थली च पातालम्। वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥ ७ ॥ कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्। अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव ॥ ८ ॥ अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवास्तु तथापि धीराः। निजप्रतिज्ञामनुरुध्यमाना महोद्यमाः कर्म समारभन्ते ॥ ९ ॥ रत्नैर्महार्है-

---

१ धनिकानाम्. २ शून्यमनसान्. ३ वज्रपाषाणघटितम्. ४ इन्द्रः. ५ धननिक्षेपकल्पनया. ६ सच्छिद्रापि कपर्दिका. ७ इच्छति. ८ पृथ्वी. ९ तवानुबन्धं कुर्वतेत्यर्थः. १० मुकुलितम्.

१ शीघ्रम्. २ गतलज्जा. निर्लज्जेत्यर्थः. ३ अहो इत्याश्चर्ये. ४ दुस्तराणि. ५ शंकरेण. ६ व्यापारः. ७ अजिरम्. ८ कृत्रिमसरित्. ९ दरिद्रस्य. १० दूरीकर्तुम्.

स्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् । सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ १० ॥ निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेच्छम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्[1]पथः[2] प्रविचलन्ति पदं न धीराः ॥ ११ ॥ कान्ताकटाक्ष[3]विशिखा न लु[4]नन्ति यस्य चित्तं न निर्दहति कोप[5]कृशानुतापः । कर्षन्ति भूरि विषयांश्च न लोभपाशा लोकत्रयं जयति कृ[6]त्स्नमिदं स धीरः ॥ १२ ॥ आपत्समुद्धरणधीरधियः परेषां जाता महत्यपि कुले न भवन्ति सर्वे । विन्ध्याटवीषु विरलाः खलु पादपास्ते ये दन्तिदन्तमुसलोल्लिखनं सहन्ते ॥ १३ ॥ विरम विरसायासादस्मादुरध्यवसायतो विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे । अयि जड विधे कल्पापायव्यपेतनिजक्रमाः कुलशिखरिणः क्षुद्रा ते न वा जलराशयः ॥ १४ ॥

## वीरप्रशंसा

एकेनापि हि शूरेण पदाक्रान्तं महीतलम् । क्रियते भास्करेणेव स्फारस्फुरिततेजसा ॥ १ ॥ बहवः पङ्गवोऽपीह नराः शास्त्राण्यधीयते । विरला रिपुखड्गाग्रधारापातसहिष्णवः ॥ २ ॥ अनन्तोद्भूतभूतौघसंकुले भूतलेऽखिले । शस्त्रे शास्त्रे त्रिचतुराश्चतुरा यदि मादृशाः ॥ ३ ॥ महिम्नामन्तरं पश्य शेषाहेः साब्धिभूधरा । फणासहस्रस्रग्दाम्नि भ्रमरीव विभाति भूः ॥ ४ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् । विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ५ ॥ भुजे विशाले विमलेऽसिपत्रे कोऽन्यस्य तेजस्विकथां सहेत । गतासुरप्याहवसीम्नि वीरो द्विधा विधत्ते रविमण्डलं यः ॥ ६ ॥ लोकोत्तरं चरितमर्पयति प्रतिष्ठां पुंसां कुलं नहि निमित्तमुदारतायाः । वातापितापनमुनेः कलशात्प्रसूतिर्लीलायितं पुन[7]रसुद्रसमुद्रपानम् ॥ ७ ॥ नायाति वाडवशिखाक्कथनेन तापं शैत्यं हिमाद्रिपयसा विशता च नाब्धिः । कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोऽनुभावः ॥ ८ ॥ संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा । चण्डांशुमण्डलमथाभिमतानि कामं प्रेमार्द्रनिर्जरवधूस्तनमण्डलानि ॥ ९ ॥ विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं समायुक्तोऽप्यर्थैः [8]परिभवपदं याति कृपणः । स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां द्यु[1]तिं [2]सैंहीं किं श्वा धृ[3]तकनकमालोऽपि लभते ॥ १० ॥ को वीरस्य मनस्विनः स्वविषयः को वा विदे[4]शस्तथा यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् । यद्दं[5]ष्ट्रानखलाङ्गलप्रहरणः सिंहो वनं गा[6]हते तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ११ ॥ सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः शूराणां व्यवसाय एव हि परं संसिद्धये कारणम् । विस्फूर्जद्विकटाटवीगजघटापीठैकसंचूर्णनव्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥ १२ ॥ काकुत्स्थस्य दशाननो न कृतवान्दारापहारं यदि क्वाम्भोधिः क्व च सेतुबन्धघटना क्वोत्तीर्य लङ्काजयः । पार्थस्यापि पराभवं यदि रिपुर्नाधात्क्व तादृक्तपो नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥ १३ ॥ वह्निं शीतयितुं हिमं ज्वलयितुं वातं निरोद्धुं पयो मूर्तं व्योम विधातुमुन्नमयितुं नेतुं नतिं वा महीम् । उद्धर्तुं किल भूभृतः स्थलयितुं सिन्धुं च संभाव्यते शक्तिर्यस्य जनैः स एव नृपतिः शेषाः परं पार्थिवाः ॥ १४ ॥ नास्मिन्संततवेष्टनोल्बणतमैस्तल्पैरुदेति व्यथा ग्रन्थिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जायते । क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते न ह्येतन्मरणं सुखस्य सुभगा काप्येव संप्राप्तिभूः ॥ १५ ॥

## तेजस्विप्रशंसा

बालस्यापि रवेः पा[7]दाः पतन्त्युपरि [8]भूभृताम् । तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ १ ॥ एकः स एव तेजस्वी सैंहिके[9]यः सुरद्विषाम् । शिरोमात्रावशेषेण जीयन्ते येन शत्रवः ॥ २ ॥ मानी पादप्रहारेऽपि न क्षमी नीच एव सः । आकृष्टशस्त्रो मित्रेऽपि न तेजस्वी खलो हि सः ॥ ३ ॥ तुल्येऽपराधे स्व[10]र्भानु[11]र्भानुमन्तं चिरेण यत् । हिमांशु[12]माशु ग्रसते तन्म्र[13]दिम्नः स्फुटं फ[14]लम् ॥ ४ ॥ स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि । निदर्शन[15]मसाराणां ल[16]घुर्बहु[17]तृणं नरः ॥ ५ ॥ तेजस्विमध्ये तेजस्वी [18]दवीयानपि गण्यते । पञ्चमः प[19]ञ्चतपसस्तपनो जातवेदसाम् ॥ ६ ॥ अकृत्वा हेलया पादमुच्चैर्मूर्धसु

---

१ न्यायादनपेतात्. २ मार्गात्. ३ कटाक्षा एव विशिखा बाणाः. ४ न छिन्दन्ति. ५ कोपः क्रोधः स एव कृशानुरग्निस्तत्तापः. ६ संपूर्णम्. ७ अगाधसमुद्रपानम्. ८ पराजयस्थानम्.

१ कान्तिम्. २ सिंहसंबन्धिनीम्. ३ सुवर्णमालालंकृतोऽपि. ४ परदेशः. ५ दंष्ट्रानखलाङ्गलाश्च प्रहरणं यस्य. नखा एव लाङ्गलानि विदारकत्वात् हलानि इति रूपकम्. 'पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः' इति कस्यचित्प्रयोगः. ६ प्रविशति. ७ किरणाः; पक्षे,-चरणाः. ८ पर्वतानाम्; पक्षे,-राज्ञाम्. ९ राहुः. १० राहुः. ११ सूर्यम्. १२ चन्द्रम्. १३ मार्दवस्य. १४ दृष्टान्तः. १५ दुर्बलानाम्. १६ निष्पौरुषः. १७ तृणकल्पमित्यर्थः. १८ दूरस्थोऽपि. १९ पञ्चाग्निसाध्यं तपो यस्य.

विद्विषाम् । कथंकारमनालम्बा कीर्तिर्द्यामधिरोहति ॥ ७ ॥ अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ ८ ॥ तेजस्विनि क्षमोपेते नातिकार्कश्यमाचरेत् । अतिनिर्मन्थनादग्निश्चन्दनादपि जायते ॥ ९ ॥ तेजोहीने महीपाले खे परे च विकुर्वते । निःशङ्को हि जनो धत्ते पदं भस्मन्यनूष्मणि ॥ १० ॥ एकचक्रो रथो यन्ता विकलो विषमा हयाः । आक्रमत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ११ ॥ साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते । तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ १२ ॥ येन पाषाणखण्डस्य मूल्यमल्पं वसुंधरा । अनस्तमितसारस्य तेजसस्तद्विजृम्भितम् ॥ १३ ॥ सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु । प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ १४ ॥ यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः । तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ १५ ॥ दर्शिततापोच्छ्रायैस्तेजोवद्भिः सुगोत्रसंजातैः । हीरैरग्विव धीरैरापत्स्वपि गम्यते नाधः ॥ १६ ॥ दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च । तेजः स्वविनाशाय तु भवति तृणानामिव लघूनाम् ॥ १७ ॥ मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयंहतैः । लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १८ ॥ तीव्रोष्णदुर्विषहवीर्यभृतः परेषां तेजस्विनो न गणयन्ति वपुर्महत्त्वम् । यत्पद्मरागशकलाकृतिरद्रितुङ्गं कात्स्न्र्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥ १९ ॥ न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः । मयूखैरश्रान्तं तपति यदि देवो दिनकरः किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ २० ॥ हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रः पविः । दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमस्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ २१ ॥ स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधः शान्तये । सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ २२ ॥ शमयति गजानन्यान् गन्धद्विपः कलभोऽपि सन्भवति सुतरां वेगोदग्रं भुजंगशिशोर्विषम् । भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ २३ ॥

---

## मनस्विप्रशंसा

कामं प्रियानपि प्राणान्विमुञ्चन्ति मनस्विनः । इच्छन्ति न त्वमित्रेभ्यो महतीमपि सत्क्रियाम् ॥ १ ॥ ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी । अङ्गुलीदर्शनाद्येन विलीयन्ते मनस्विनः ॥ २ ॥ ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः । शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ३ ॥ कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः । मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ४ ॥ पादाहतं सदुत्थाय मूर्धानमधिरोहति । स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ ५ ॥ समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः । प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ६ ॥ स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते । नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥ ७ ॥ स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि । तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ८ ॥ शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः । जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ ९ ॥ अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् । प्रियतां ज्यायसीं मा गान्महतां केन तुङ्गता ॥ १० ॥ तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः । पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ११ ॥ दुरासदवनज्यायान्गम्यस्तुङ्गोऽपि भूधरः । न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥ १२ ॥ गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुंधरा । येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ १३ ॥ उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् । शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ १४ ॥ तुङ्गत्वमितरा नाद्रौ नेदं सिन्धाव-

---

१ कथमित्यर्थः. २ निराधारा. ३ हतः. ४ उष्णत्वरहिते. ५ सारथिः. ६ अनूरुः–अरुणः. ७ तुरंगाः. ८ कुटिलिताम्. ९ प्रशस्तकपोलेषु. १० बलवताम्. ११ सूर्यकान्तः. १२ अपमानम्. १३ कान्तिः; पक्षे,–प्रतापः. १४ कान्त्याधिक्यम्; पक्षे,–धनुष औन्नत्यम्. १५ प्रकाशकत्वम्; पक्षे,–सामर्थ्यम्. १६ पर्वतः; पक्षे,–कुलम्. १७ विधातृनिष्पादिताः. १८ विस्तृतम्. १९ स्वभावाधीनत्वात्. २० अकृत्रिमः. २१ किरणैः. २२ संततम्. २३ सूर्यकान्तः. २४ विकृत इव. २५ वज्रम्. २६ विश्वासः.

१ प्रभावानुरूपम्. २ यथेच्छम्. ३ मत्स्यीस्फुरणेन. ४ कदाचित्. ५ गुच्छस्य. ६ अव्यग्रात्. ७ चेतनात्. ८ अनुन्मूलयन्तः. ९ शत्रून्. १० गाढं तमः. ११ सार्थकजन्मा. १२ पुरुषगणनाप्रस्तावे. १३ मर्यादोल्लङ्घनाद्धेतोर्भीरूणि. १४ संक्षोभितानि. १५ उत्साहादिशक्तिवैधुर्येण; पक्षे,–अवष्टम्भसामर्थ्यविरहेण. १६ प्रह्वीभूतस्य; पक्षे,–विधेयभूतस्य. १७ दुर्बलत्वात्; पक्षे,–स्थिरांशरहितत्वात्. १८ गौरवहीनस्य; पक्षे,–नीरसस्य. १९ जन्तोः. २० प्रतापसंपन्नम्. २१ मानोन्नतपुरुषम्. २२ अगाधता. २३ तुङ्गत्वम्.

गाधता । अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ १५ ॥ न क्वचिच्च बहिर्यान्ति मानिनां प्रार्थनागिरः । यदि निर्यातुमिच्छन्ति तदा प्राणपुरःसराः ॥ १६ ॥ असेवितेश्वरद्वारमदृष्टविरहव्यथम् । अनुक्तक्लीबवचनं धन्यं कस्यापि जीवितम् ॥ १७ ॥ मानिनो हृतमानस्य मानोऽपि न सुखप्रदः । जीवनं मानमूलं हि माने म्लाने कुतः सुखम् ॥ १८ ॥ मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति । अपि निर्वाणमायाति नानलो याति शीतताम् ॥ १९ ॥ मनस्विहृदयं धत्ते रोषेणैव प्रसन्नताम् । भस्मना मुकुरः प्रायः प्रसादं लभतेतराम् ॥ २० ॥ मनस्विनो न मन्यन्ते परतः प्राप्य जीवनम् । बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ २१ ॥ दूर्वाङ्कुरतृणाहारा धन्यास्ते वै वने मृगाः । विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ २२ ॥ सुखं जीवन्ति हरिणा वनेष्वपरसेविनः । अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः ॥ २३ ॥ उपकारेण दूयन्ते न सहन्तेऽनुकम्पिताम् । आपत्स्वपि दुराराध्या नित्यदुःखा मनस्विनः ॥ २४ ॥ जलसेकेन वर्धन्ते तरवो नाश्मसंचयाः । भव्यो हि द्रव्यतामेति क्रियां प्राप्य तथाविधाम् ॥ २५ ॥ अवृत्तिभयमन्त्यानां मध्यानां मरणाद्भयम् । उत्तमानां तु सत्त्वानामवमानात्परं भयम् ॥ २६ ॥ न सदश्वाः कशाघातं न सिंहा घनगर्जितम् । परैरङ्गुलिनिर्दिष्टं न सहन्ते मनस्विनः ॥ २७ ॥ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन । धनिषु न दैन्यं विदधति ते खलु पशवो वयं सुधियः ॥ २८ ॥ प्रत्युपकुर्वन्बह्वपि न भवति पूर्वोपकारिणा तुल्यः । एकोऽनुकरोति कृतं निष्कारणमेव कुरुतेऽन्यः ॥ २९ ॥ न नटा न विटा न गायका न परद्रोहनिबद्धबुद्धयः । नृपसद्मनि नाम के वयं स्तनभारानमिता न योषितः ॥ ३० ॥ अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः । अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ ३१ ॥ ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः । अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ ३२ ॥ पुरो वा पश्चाद्वा वयमुपविशामः क्षितिभुजां ततः किं नश्छिन्नं वचनरचनाक्रीतजगताम् । अगारे कान्तारे कुचकलशभारे मृगदृशां मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ॥ ३३ ॥ अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् । तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विषादे कर्तव्ये विदधति जडः प्रत्युत मुदम् ॥ ३४ ॥

क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः । क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ३५ ॥ स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं कपालं यस्योच्चैर्विनिहितमलंकारविधये । नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ३६ ॥ विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा । इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ ३७ ॥ वरमहिमुखे[1] क्रोधाध्माते[2] करो विनिवेशितो विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने[3] । गिरिवरतटान्मुक्तश्चात्मा वरं शतधा कृतो न तु खलजनावाप्तैरर्थैः कृतं हितमात्मनः ॥ ३८ ॥ नानीयन्ते मधुनि मधुपाः पारिजातप्ररोहैर्नाभ्यर्थ्यन्ते तुहिनरुचिना चन्द्रिकायां चकोराः । अस्मद्वाचां धुरि मधुरिमा यद्यपूर्वावतारः सोल्लासाः स्युः स्वयमिह बुधाः किं मुधाभ्यर्थनाभिः ॥ ३९ ॥ मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणूनङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते । तद्द्युर्ददतेऽथवा न किमपि क्षुद्रा दरिद्रा भृशं धिग्धिक्तान्पुरुषाधमान् धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥ ४० ॥ त्वं चेन्नीचजनानुनागरभसादस्मासु मन्दादरः का नो मानद मानहानिरियती भूः किं त्वदेकप्रभुः । गुञ्जापुञ्जपरम्परापरिचयाद्भिल्लीजनैरुज्झितं मुक्तादाम न धारयन्ति किमहो कण्ठे कुरङ्गीदृशः ॥ ४१ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ४२ ॥ ब्रह्माण्डं कियदस्ति तत्र वसुधापिण्डं किमाचक्ष्महे तत्राप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन । तेभ्यो दैन्यशतोपनीतविभवा दृष्टानुकम्पास्तु ते धिङ्मूढाः स्पृहयन्ति हन्त किमपि स्वार्थेन तेभ्योऽपि ये ॥ ४३ ॥ पातालान्न विमोचितो बत बलिर्नीतो न मृत्युः क्षयं नोन्मृष्टं शशलाञ्छनस्य मलिनं नोन्मूलिता व्याधयः । शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं चेतः सत्पुरुषाभिमानमनिशं मिथ्या वहन्खिद्यसे ॥ ४४ ॥ नास्माकं शिबिका न चास्ति कटकाद्यालंक्रियासत्क्रिया नोत्तुङ्गस्तुरगो न कश्चिदनुगो नाप्यम्बरं सुन्दरम् । किं तु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषां चेतस्तोषकरी शिरोनतिकरी विद्याऽनवद्यास्ति

---

१ प्रत्युपकारं कुर्वन्. २ अनुकरणं करोति.

१ सर्पमुखे. २ क्रोधपूर्णे. ३ यमगृहे.

नः ॥ ४५ ॥ लक्ष्मीर्निर्वृतिमेति हीनचरितैर्यैरेव तच्छिक्षया किं नाद्यैव करोमि तामनुचरीं रामां सकामामिव । ब्रह्माण्डे निपतत्यपि स्खलति न प्रायेण येषां मनस्तेषामार्यमनस्विनामनुपदं गन्तास्मि नाहं यदि ॥ ४६ ॥ पुण्ये ग्रामे वने वा महति सितपट[1]च्छन्नपालीं कपाली[2]मादाय न्यायगर्भं द्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् । द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो मानी प्राणी स्वदेशे न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ४७ ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः । सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ४८ ॥ श्रेयस्वी यत्र मानं व्रजति दुरितकृच्चापमानं मनुष्यैरज्ञेयं यत्र दूतैः प्रभुमनु मनुजो नीयते चानपेक्षः । मृत्योर्गेहं वरं तन्न तु कुधनवतां यत्र सर्वापमानो लोकैर्विज्ञायमानः स्वयमतिथितया यत्र चार्थी प्रयाति ॥ ४९ ॥

## अपौरुषत्वनिन्दा

माजीवन्यः[3] परावज्ञा[4]दुःखदग्धो[5]ऽपि जीवति । तस्माज्जननिरेवास्तु जननीक्लेशकारिणः ॥ १ ॥ असंपादयतः कंचिदर्थं जाति[6]क्रियाँ[7]गुणैः[8] । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ २ ॥

## गुणप्रशंसा

गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयमायान्ति षट्पदाः[9] ॥ १ ॥ गुणवज्जनसंपर्काद्याति स्वल्पोऽपि गौरवम् । पुष्पाणामनुषङ्गेण सूत्रं शिरसि धार्यते ॥ २ ॥ कलावतः[10] सैव कला[11] यथाधः[12]क्रियते भवैः[13] । बह्वीभिश्च कलाभिः किं याभिरङ्कैः[14] प्रदर्श्यते ॥ ३ ॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्व्यापारमादत्ते प्रदीपो न पुनः शनिः ॥ ४ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ॥ ५ ॥ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहि कस्तूरिकामोदः शपथेन निवार्यते ॥ ६ ॥ किमाढ्यत्वगुरुत्वाभ्यां चरमोऽपि गुणैर्गुरुः । केतकीकुसुमे पश्य लघुपत्रेऽपि गौरवम् ॥ ७ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते । दोषाः किं नाम कुर्वन्ति गुणापहृत[1]चेतसः ॥ ८ ॥ शरीरस्य गुणानां च दूरमत्यन्तमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ९ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ १० ॥ गुणैः सर्वज्ञकल्पो[2]ऽपि सीदत्ये[3]को निराश्रयः । अनर्घ[4]मपि माणिक्यं हेमाश्रयमपेक्षते ॥ ११ ॥ गुणेषु क्रियतां यत्नः किमाटोपैः[5] प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १२ ॥ गुणैर्गौरवमायाति न महत्यापि संपदा । पूर्णेन्दुर्न तथा वन्द्यो निष्कलङ्को यथा कृशः ॥ १३ ॥ स्वयं स्वमुखविस्ताराद्घूर्णनाभः पतत्यधः । तमेव संहरन्भूयः पदमुच्चैर्विगाहते ॥ १४ ॥ गुणो दूषणतां याति दूषणं गुणतां क्वचित् । तथा हि नम्रता दोषः स्तनयोः स्तब्धता गुणः ॥ १५ ॥ गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः । प्रासाद[6]शिखरस्थोऽपि काकः किं गरुडायते ॥ १६ ॥ अहो गुणानां प्राप्त्यर्थं यतन्ते बहुधा नराः । मुक्ता[7] यदर्थं भग्नास्ता इतरेषां च का कथा ॥ १७ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ १८ ॥ प्रभुभिः पूज्यते लोके कलैव न कुलीनता । कलावान्मान्यते मूर्ध्नि सत्सु देवेषु शंभुना ॥ १९ ॥ गुणयुक्तोऽपि पूर्णोऽपि कुम्भः कूपे निमज्जति । तस्य भारसहो नास्ति गुणकग्राहको यदि ॥ २० ॥ अहो वैचित्र्यमेतस्य संसारस्य किमुच्यते । गुणोऽपि क्लेशहेतुः स्याद्विश्रान्तः कण्ठकन्दले ॥ २१ ॥ जात्युत्कृष्टस्य हि मणेर्नोचितं शाणघर्षणम् । आदर्शे चित्रकारैः किं लिख्यते प्रतिबिम्बितम् ॥ २२ ॥ गुणयुक्तो[8]ऽप्यधो याति रिक्तः[9] कूपे घटो यथा । निर्गुणोऽपि भृतः[10] पश्य जनैः शिरसि धार्यते ॥ २३ ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । सगुणः[11] पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ २४ ॥ गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे । स्वभावरम्यं लावण्यं तारुण्येन मनोहरम् ॥ २५ ॥ गुणैः पूजा भवेत्पुंसां नैकस्माज्जायते कुलात् । चूडारत्नं शशी शंभोर्यानमुच्चैःश्रवा[12] हरेः[13] ॥ २६ ॥ सर्वत्र गुणवानेव चकास्ति प्रथितो नरः । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥ २७ ॥

१ शुभ्रवस्त्रेण पिहिता पाली यस्याः. २ भिक्षापात्रम्. ३ गर्हितं जीवतीति माजीवन्. ४ परैः कृता याऽवज्ञा तदेव दुःख तेन दग्धः खिन्नः. ५ अनुत्पत्तिः. ६ ब्राह्मणत्वादिः. ७ इज्याध्ययनादिः. ८ शौर्यादिः. ९ भ्रमराः. १० चन्द्रस्य; पक्षे,–विदुषः. ११ षोडशो भागः; पक्षे,–चतुःषष्टिकलानामन्यतमा. १२ अधोभागे ध्रियते; पक्षे,–तिरस्क्रियते. १३ शिवः; पक्षे,–संसारः. १४ कलङ्कः; पक्षे,–दोषः.

१ गुणाकृष्टान्तःकरणस्य. २ शिवतुल्यः. ३ दुःखं प्राप्नोति ४ अमूल्यम्. ५ आडम्बरैः. ६ राजभवनम्. ७ मौक्तिकानि; पक्षे,–मोक्षमापन्नाः. ८ रज्जुयुक्तः; पक्षे,–विनयादिगुणसंपन्नः. ९ रिक्तः; पक्षे,–निर्द्रव्यः. १० पूर्णः. ११ रज्जुबद्धः. १२ अश्वः. १३ इन्द्रस्य.

गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् । स्फाटिकं भाजनं भग्नं काकिन्यापि न गृह्यते ॥ २८ ॥ नहि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुण उच्यते । गुणाद्गुरुत्वमायाति दधि दुग्धं घृतं यथा ॥ २९ ॥ गुणवान्सुचिरस्थायी दैवेनापि न सह्यते । तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः ॥ ३० ॥ सर्वत्र गुणवान्देशे चकास्ति प्रथतेतराम् । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥ ३१ ॥ गुण आकर्षणयोग्यो धनुष इवैकोऽपि लक्षलाभाय । लूतातन्तुभिरिव किं गुणैर्विमर्दासहैर्बहुभिः ॥ ३२ ॥ अनवसरे गुणवानपि हृदयादवतार्यते हारः । पश्य शलाकावसरे तृणेऽपि भूपैः प्रसार्यते स्वकरः ॥ ३३ ॥ गुणवन्तः क्लिश्यन्ते प्रायेण भवन्ति निर्गुणाः सुखिनः । बन्धनमायान्ति शुका यथेष्टसंचारिणः काकाः ॥ ३४ ॥ गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः । अलिरेति वनात्कमलं न दर्दुरस्तन्निवासोऽपि ॥ ३५ ॥ अवलम्बितविष्णुपदः कर्षितजनचक्षुरतुलगतिः । पत्रमयोऽपि पदार्थः पतङ्गतामेति गुणयोगात् ॥ ३६ ॥ अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति । निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ३७ ॥ दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते । प्रीत्यैव शशिनि पतितं पश्यति लोकः कलङ्कमपि ॥ ३८ ॥ अन्तर्गतैर्गुणैः किं द्वित्रा अपि यत्र साक्षिणो विरलाः । स गुणो गीतेर्यदसौ वनेचरं हरिणमपि हरति ॥ ३९ ॥ गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः । सुस्वादुतोयाः प्रवहन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ ४० ॥ गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं गुणानाम् । गुणप्रकर्षादुडुपेन शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ ४१ ॥ निष्कलङ्ककलयैकयापि यः संयुतः स खलु पूज्यते जनैः । भद्र पश्य जलजोऽपि धार्यते शंकरेण शिरसा निशाकरः ॥ ४२ ॥ वक्रोऽपि पङ्कजनितोऽपि दुरासदोऽपि व्यालाश्रितोऽपि विफलोऽपि सकण्टकोऽपि । गन्धेन बन्धुरसि केतकपुष्पजेन ह्येको गुणः खलु निहन्ति समस्तदोषान् ॥ ४३ ॥ न खनति खुरैः क्षोणीपृष्ठं न नर्दति सादरं प्रकृतिपुरुषं प्रेक्ष्याप्यग्रे न कुप्यति गोचरम् । वहति च धुरं धुर्यो धैर्यादनुद्धतकंधरो जगति गुणिनः कार्यौदार्यात्परानतिशेरते ॥ ४४ ॥ गुणानामज्ञाता प्रचुरधनदातापि न मुदे मुदे विद्याज्ञाता भवति मितदातापि गुणिनाम् । दृशौ ग्राम्या दत्ते न पुनरवधत्ते च चतुरो दृशः प्रान्तं दत्त्वा वशयति नितान्तं पुरवधूः ॥ ४५ ॥ उपादाता यावन्न भवति गुणानां गुणवतामसत्कल्पास्तावत्त्रिभुवनमहार्घा अपि गुणाः । अपि प्राग्दैत्यारेर्हृदयवसतेः कौस्तुभमणिः स किं नासीदब्धौ श्रुतिरपि न यस्य क्वचिदभूत् ॥ ४६ ॥ विवादप्रारम्भः प्रथयति परं दम्भमतुलं गुणानां गाम्भीर्ये तव भवति साक्षी कलकलः । पयःपूर्णः कुम्भो ध्वनति न तथा वातवलितो यथा रिक्तो भांभांध्वनिमनिभृतं मुञ्चति मुहुः ॥ ४७ ॥ कौशेयं कृमिजं सुवर्णमुपलाद्दूर्वापि गोरोमतः पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् । काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ ४८ ॥

---

## उद्यमप्रशंसा

उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ १ ॥ उद्यमं साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ २ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ३ ॥ न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ ४ ॥ विहाय पौरुषं यो हि दैवमेवावलम्बते । प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना दैवं न सिध्यति ॥ ६ ॥ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ७ ॥ यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति । एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ८ ॥ निर्पानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ ९ ॥ दैवं पुरुषकारेण साध्यसिद्धिनिबन्धनम् । योऽतिक्रमितुमिच्छेत स लोके नावसीदति ॥ १० ॥ योजनानां सहस्रं तु शनैर्गच्छेत्पिपीलिका । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ ११ ॥ कामपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥

१ विचारक्षमः; पक्षे,–यथाश्रुतम्. २ लक्षसंख्याकधनलाभाय; पक्षे,–वेध्यलाभाय. ३ विचारासहैः; पक्षे,–आकर्षणासहैः. ४ क्लेशं प्राप्नुवन्ति. ५ भ्रमरः. ६ भेकः. ७ आकाशाश्रयः. ८ पतङ्गः सूर्यः; पक्षे,–पत्र (कागद) निर्मितः सूत्रनिबद्धः क्रीडार्थं गगने उड्डाय्यते. 'पतंग' इति नाम्नैव देशभाषायां प्रसिद्धः. ९ पूजितः. १० चन्द्रेण. ११ निर्मलविद्यया. १२ दुष्प्रापः. १३ सर्पाश्रितोऽपि. १४ फलहीनोऽपि. १५ संनमितग्रीवः.

१ पाषाणात्. २ धेनुकेशेभ्यः. ३ कर्दमात्. ४ रक्तकमलम्. ५ नीलं कमलम्. ६ आश्रयति. ७ प्रासादे देवालयशिखरे यः पाषाणनिर्मितः सिंहस्तद्वत्. ८ कूपः. ९ उद्यमेन. १० साध्यसिद्ध्यधीनं तदायत्तमित्यर्थः. ११ उल्लङ्घयितुम्. १२ व्यापारं न करोति. १३ उत्तरकालेषु, भविष्यकाले इत्यर्थः. १४ कल्याणम्.

॥ १२ ॥ उद्योगिनः करालम्बं करोति [1]कमलालया । अनुद्योगिकरालम्बं करोति [2]कमलाग्रजा ॥ १३ ॥ [3]काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः । न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ १४ ॥ आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वा यं [4]नावसीदति ॥ १५ ॥ संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १६ ॥ न लभन्ते विनोद्योगं जन्तवः संपदां पदम् । सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ १७ ॥ नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम् । व्यवसायद्वितीयानां नाप्यपारो महोदधिः ॥ १८ ॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ १९ ॥ उद्योगिनं [5]पुरुषसिंहमुपैति लक्ष्मीर्दैवं हि दैवमिति [6]कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ २० ॥

## संहतिप्रशंसा

[7]संहतिः श्रेयसी राजन्विगुणेष्वपि बन्धुषु । [8]तुषैरपि परिभ्रष्टा न [9]प्ररोहन्ति तण्डुलाः ॥ १ ॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ २ ॥ बहूनामल्पसाराणां समवायो दुरत्ययः । तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः ॥ ३ ॥

## क्षमाप्रशंसा

[11]क्षमाशस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ १ ॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ २ ॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किं न सिध्यति ॥ ३ ॥

## विनयप्रशंसा

[12]तिष्ठतां तपसि पुण्यम[13]सृजन्संपदोऽनु[14]गुणयन्सुखैषिणाम् । योगिनां [15]परिणमन्वि[16]मुक्तये केन नास्तु विनयः सतां प्रियः ॥ १ ॥

१ लक्ष्मीः. २ अलक्ष्मीः. ३ काकागमने सति तालपतनमिव काकतालीयं तद्वत्. अवितर्कितम्. अकस्मादिति यावत्. ४ खिन्नो न भवति. ५ पुरुषश्रेष्ठम्. ६ कुत्सितपुरुषाः. ७ संघातः. ८ धान्यत्वक्. ९ अङ्कुरजननक्षमा न भवन्तीति भावः. १० रज्जुत्वम्. ११ शान्तिः. १२ तपोनिष्ठानाम्. १३ संपादयन्. १४ अनुकूलयन्. १५ संपद्यमानः. १६ अपवर्गाय.

## सत्यप्रशंसा

सूनृतं सर्वशास्त्रार्थनिश्चितज्ञानशोभितम् । भूषणं सर्ववचसां लज्जेव कुलयोषिताम् ॥ १ ॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २ ॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥ ३ ॥

## असत्यनिन्दा

नासत्यवादिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं [1]कालकूटमिवा[2]श्नतः ॥ १ ॥ असत्यम[3]प्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् । विपन्नि[4]दानं परवञ्चनोर्जितं कृतापराधं [5]कृतिभिर्विवर्जितम् ॥ २ ॥ यशो यस्माद्भस्मीभवति [6]वनवह्नेरिव वनं नि[7]दानं दुःखानां [8]यदवनिरुहाणामिव जलम् । न यत्र स्याच्छायातप इव तपःसंयमकथा कथंचित्तन्मिथ्यावच[9]नमभिधत्ते न मतिमान् ॥ ३ ॥ जिह्वैकैव सतामुभे [10]फणवतां [11]स्रष्टुश्चतस्रश्च तास्ताः सप्तैव [12]विभावसोर्नियमिताः षट्कार्तिकेयस्य च । [13]पौलस्त्यस्य दशाभवन्[14]फणिपतेर्जिह्वासहस्रद्वयं जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ ४ ॥

## आत्मश्लाघानिन्दा

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् । इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ १ ॥ न सुखं न च सौभाग्यं स्वयं स्वगुणवर्णने । यथैव च पुरंध्रीणां स्वहस्तकुचमर्दने ॥ २ ॥ स्वयं तथा न कर्तव्यं स्वगुणाख्यापनं पुनः । स्वगुणाख्यापनं युक्त्या परद्वारा प्रयोजयेत् ॥ ३ ॥ न सौख्यसौभाग्यकरा गुणा नृणां स्वयं गृहीताः सुदृशां कुचा इव । परैर्गृहीता द्वितयं वितन्वते न तेन गृह्णन्ति निजं गुणं बुधाः ॥ ४ ॥ निजगुणगरिमा सुखाकरः स्यात्स्वयमनुवर्णयतां सतां न तावत् । निजकरकमलेन कामिनीनां कुचकलशाकलनेन को विनोदः ॥ ५ ॥

## स्वभाववर्णनम्

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः । [15]अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १ ॥ किं कुलेनो-

१ विषम्. २ भक्षयतः. ३ अविश्वासः. ४ विपत्तेः कारणम्. ५ कुशलैः. ६ दावाग्नेः. ७ आदिकारणम्. ८ वृक्षाणाम्. ९ वक्तिः. १० सर्पाणाम्. ११ ब्रह्मणः. १२ अग्नेः. १३ रावणस्य. १४ शेषस्य. १५ अतिक्रम्य.

पदिष्टेन शीलमेवात्र कारणम् । भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ २ ॥ यः स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः । श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ ३ ॥ परोपदेशकुशला दृश्यन्ते बहवो जनाः । स्वभावमतिवर्तन्तः सहस्रेष्वपि दुर्लभाः ॥ ४ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ५ ॥ सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा । यौवने सदलंकाराः शोभां विभ्रति सुभ्रुवः ॥ ६ ॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानं च शीलमेतद्विदुर्बुधाः ॥ ७ ॥ वृत्तं यत्नेन संरक्षेद्वित्तमायाति याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ८ ॥ यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते । एवं चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥ ९ ॥ न कुलं वृत्तहीनानां प्रमाणमिति मे मतिः । अन्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ १० ॥ अकुलीनः कुलीनश्च मर्यादां यो न लङ्घयेत् । धर्मापेक्षी मृदुर्दान्तो न कुलीनशतैर्वरः ॥ ११ ॥ शीलं रक्षतु मेधावी प्राप्तुमिच्छुः सुखत्रयम् । प्रशंसां वित्तलाभं च प्रेत्य स्वर्गे च मोदनम् ॥१२॥ विदेशेषु धनं विद्या व्यसनेषु धनं मतिः । परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ १३ ॥ रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ १४ ॥ वचो हि सत्यं परमं विभूषणं यथाङ्गनायाः कृशता कटौ तथा । द्विजस्य विद्यैव पुनस्तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम् ॥ १५ ॥ न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः । स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ १६ ॥ निम्नोन्नतं वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च । माधुर्यमिक्षौ कटुतां[३] च निम्बे स्वभावतः सर्वमिदं हि सिद्धम् ॥ १७ ॥ वरं विन्ध्याटव्यामनशनतृषार्तस्य मरणं वरं सर्पाकीर्णे तृणपिहितकूपे निपतनम् । वरं गर्तावर्ते गहनजलमध्ये विलयनं न शीलाद्विभ्रंशो भवतु कुलजस्य श्रुतवतः ॥ १८ ॥ वह्निस्तस्य जलायते जलनिधिः कुल्यायते[४] तत्क्षणान्मेरुः स्वल्पशिलायते मृगपतेः संघः कुरंगायते । व्यालो[५] माल्यगुणायते[६] विषरसः पीयूषवर्षायते[७] यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति[८] ॥ १९ ॥ ऐश्वर्यस्य विभूषणं सुजनता[९] शौर्यस्य वाक्संयमो[१०] ज्ञानस्योपशमः[११] कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं[२] परं भूषणम् ॥ २० ॥ काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके मूर्खः पण्डितसंगमे न रमते दासो न सिंहासने । कुस्त्री सज्जनसंगमे न रमते नीचं जनं सेवते या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ २१ ॥ व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते हंसः सेवति पद्मिनीं कुसुमितां गृध्रः श्मशानस्थलीम् । साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जनं या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ २२ ॥ पाण्डित्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता सर्वस्यास्य पुनस्तथैव जगतः शीलं परं भूषणम् ॥ २३ ॥

---

## वाग्वर्णनम्

तास्तु वाचः सभायोग्या याश्चित्ताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १ ॥ गानाब्धेस्तु[३] परं पारं नोपैर्याय सरस्वती । अतो निमज्जनभयात्तुम्बीं[५] वहति वक्षसि ॥ २ ॥ प्रसन्नाः[६] कान्तिहारिण्यो[७] नानाश्लेषविचक्षणाः । भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ ३ ॥ वर्णैः कतिपयैरेव[८] ग्रथितस्य स्वरैरिव[१०] । अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥ ४ ॥ बह्वपि स्वेच्छया[११] कामं[१२] प्रकीर्णमभिधीयते[१३] । अनुज्झितार्थसंबन्धः प्रबन्धो दुरुदाहरः[१४] ॥ ५ ॥ म्रदीयसीमपि[१५] घनामनल्पगुणकल्पिताम्[१६][१७][१८] । प्रसारयन्ति कुशलाश्चित्रां[१९] वाचं पटीमिव[२०] ॥ ६ ॥ सर्वालंकारयुक्तापि[२१] न श्लिष्टा[२२] वनितेव सा । वाणी मनोजातसुखं[२३] प्रौढानां[२४] न तनोति हि ॥ ७ ॥ या कर्षति निजयोगादन्तर्गतजीवनानि[२५]

---

१ अतिक्रम्य वर्तते. २ नीचोच्चम्. ३ तीक्ष्णताम्. ४ कृत्रिमसरिदिवाचरति. ५ सर्पः. ६ माला. ७ अमृतम्. ८ विजृम्भते. ९ सौजन्यम्. १० वाङ्नियमनम्. ११ शान्तिः.

१ निष्कपटत्वम्. २ सुस्वभावः. ३ गानसमुद्रस्य. ४ गायनसमुद्रपरपारं न प्राप. ५ इक्ष्वाकुफलम्. जलतरणार्थं तुम्ब्याः संग्रहं लोकाः कुर्वन्तीति प्रसिद्धम्. ६ प्रसन्नवदनाः; पक्षे,–उत्तानार्थाः. ७ कान्त्या शोभया मनोहारिण्यः; पक्षे,–भाषणगुणेन मनोहारिण्यः. ८ आलिङ्गनम्; पक्षे,–श्लेषः. ९ परिमितैः. १० निषादादिभिः. ११ स्वप्रतिभानुसारेण. १२ यथेष्टम्. १३ असंगतम्. १४ दुर्वचः. १५ अतिसुकुमाराक्षराम्; पक्षे,–श्लक्ष्णतराम्. १६ अर्थगुर्वीम्; पक्षे,–सान्द्राम्; कदलीदलकल्पामित्यर्थः. १७ श्लेषादिभिः; पक्षे,–तन्तुभिः. १८ रचिताम्; पक्षे–निर्मिताम्. १९ शब्दादिविचित्राम्; पक्षे,–विचित्ररूपाम्. २० शाटीमिव. २१ उपमादिभिः; पक्षे,–कङ्कणादिभिः. २२ श्लेषरहिता; पक्षे,–आलिङ्गनरहिता. २३ मनः प्रति जातं यत्सुखं तत्; पक्षे,–कामहर्षम्. २४ चतुराणाम्; पक्षे,–प्रकर्षेण विधिपूर्वकं विवाहितानाम्. २५ द्रुतानि जीवनानि; पक्षे,–उदकानि.

सरसानाम्[1]। वाणी सैव गुणवती[2] घटीव यद्वा वधूटीव[3] ॥ ८ ॥ रतरीतिवीतवसना प्रियेव शुद्धापि[4] वाङ्मुदे सरसा[5]। अरसा[6] सालंकृतिरपि[7] न रोचते शालभञ्जीव[8] ॥ ९ ॥ सुखयतितरां न रक्षति परिचयलेशं गणाङ्गनेव[9] श्रीः। कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥ १० ॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नेष्टः। किं तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥ ११ ॥ कामान्[10]दुग्धे[11] विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति। तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां[12] वाचमाहुः ॥ १२ ॥ विविक्त[13]वर्णाभरणा सुखश्रुतिः[14] प्रसादयन्ती हृदयान्यपि द्विषाम्। प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्न[15]गम्भीरपदा सरस्वती ॥ १३ ॥ केयूरा[16] न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला[17] न स्नानं न विलेपनं न कुसुमं नालंकृता[18] मूर्धजाः[19]। वाण्येका समलंकरोति[20] पुरुषं या संस्कृता धार्यते क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १४ ॥ अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः। एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो वाग्देवी[21] वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥ १५ ॥ ये सूक्तीन्दुकलाकलङ्कजनका ये गाढगर्वज्वरा ये वा केवलतर्ककर्कशधियः साक्षाच्च ये श्रोत्रियाः। ये वा द्वेषमषीमलीमसधियस्तान्प्राज्ञगोष्ठीरसप्रौढप्रावृडवग्रहान्परिहरन्वाचां प्रसारं कुरु ॥ १६ ॥ तथ्यं पथ्यं सहेतु प्रियमितमृदुलं सारवद्दैन्यहीनं साभिप्रायं दुरापं सविनयमशठं चित्रमल्पाक्षरं च बह्वर्थं कोपशून्यं स्मितयुतघनदाक्षिण्यसंदेहहीनं वाक्यं ब्रूयाद्रसज्ञः परिषदि समये सप्रमेयाप्रमत्तम् ॥ १७ ॥

## वाग्मिप्रशंसा[22]

विरोधिवचसो मूकान्वागीशानपि कुर्वते। जडानप्य[23]नुलोमार्थान्प्रवाचः[1] कृतिनां[2] गिरः ॥ १ ॥ तीक्ष्णा नारुंतुदा बुद्धिः कर्म शान्तं प्रतापवत्। नोपतापि मनः सोष्म[3] वागेका वाग्मिनः सतः ॥ २ ॥ प्रसाद[4]रम्यमोजस्वि[5] गरीयो[6] लाघवान्वितम्[7]। साकाङ्क्ष[8]मनुपस्कारं[9] विष्वग्गति[10] निराकुलम्[11] ॥ ३ ॥ न्याय[12]निर्णीतसारत्वान्निरपेक्ष[13]मिवागमे[14]। अप्रकम्प्यतया[15]न्येषामाम्नायवचनोपमम्[16] ॥ ४ ॥ अलङ्घ्यत्वा[17]ज्जनैरन्यैः क्षुभितो[18]दन्वदूर्जितम्। औदार्या[19]दर्थसंपत्तेः[20] शान्तं चित्तमृषेरिव ॥ ५ ॥ इदमीदृग्गुणोपेतं लब्धावसरसाधनम्[21]। व्याकुर्यात्[22]कः प्रियं वाक्यं यो वक्ता नेदृगाशयः[23] ॥ ६ ॥ श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः। वल्गितं वावदूकस्य[24] कृतिनः किं न शोभते ॥ ७ ॥ अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी। बहुवचनमल्पसारं यः कथयति विप्रलापी सः ॥ ८ ॥ शुद्धकांस्यरचितापि लालिता जिह्वया[25] यदि न योजिता भवेत्। किं तया करण[26]मस्ति घण्टया जिह्वया जनिमतां हि पूज्यया ॥ ९ भवन्ति ते सभ्यतमा[27] विपश्चितां[28] मनोगतं वाचि निवेशयन्ति[29] ये। नयन्ति तेष्व[30]प्युप[31]पन्ननैपुणा गम्भीरमर्थं[32] कतिचित्प्रकाशताम् ॥ १० ॥ स्तुवन्ति गुर्वीमभिधेयसंपदं[33] विशुद्धि[34]मुक्ते[35]रपरे विपश्चितः। इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ॥ ११ ॥ पिकस्तावत्[36]कृष्णः परमरुणया[37] पश्यति दृशा परापत्यद्वेषी स्वसुतमपि नो पालयति यः। तथाप्येषोऽमीषां सकलजगतां वल्लभतमो न दोषा गण्यन्ते खलु मधुरवाचां क्वचिदपि ॥ १२ ॥ आस्वाद्यैष कषायमङ्कुरगुरुप्रेमानुबद्धाशयो माकन्दस्य यशांसि कोकिलयुवा निर्माति दिग्भित्तिषु। माध्वीकानि निपीय तस्य मधुपास्तत्रैव गुञ्जन्त्यमी को

---

१ रसिकानाम्; पक्षे,–कूपादीनाम्. २ प्रागल्भ्यादिगुणयुक्ता; पक्षे,–रज्जुयुक्ता. ३ स्त्रीव. ४ अनुप्रासोपमाद्यलंकाररहितापि. ५ शृङ्गारादिमती. पक्षे,–शृङ्गाररसवती. ६ रसशून्या. ७ अलंकृतियुतापि; पक्षे,–कटककुण्डलयुतापि. ८ काष्ठपुत्तलीव. ९ वेश्येव. १० मनोरथान्. ११ प्रपूरयति. १२ सत्याम्. १३ विविक्ताः संयोगादिनाश्लिष्टाः; स्फुटोच्चरिता वर्णा अक्षराण्येवाभरणानि यस्याः सा; पक्षे,–विविक्तानि शुद्धानि वर्णो रूपमाभरणानि च यस्याः सा. १४ सुखा श्रुतिः श्रवणं यस्याः सा. श्राव्येत्यर्थः; पक्षे,–श्रूयत इति श्रुतिर्वाक्सा सुखा यस्याः सा; मञ्जुभाषिणीत्यर्थः. १५ प्रसन्नानि वाचकानि गम्भीराण्यर्थगर्भाणि च पदानि सुप्तिङन्तरूपाणि यस्याः सा; पक्षे,–प्रसन्ना विमला गम्भीरपदालसचरणा. १६ बाहुभूषणानि. १७ चन्द्रवदुज्ज्वलाः. १८ सुगन्धतैलादिना संस्कृताः. १९ केशाः २० सम्यगलंकरोति. २१ सरस्वती. २२ वक्ता. २३ अनुकूलवादिनः.

१ प्रगल्भवाचः. २ कुशलानाम्; ३ अभिमानोष्णम्. ४ प्रसादः प्रसिद्धार्थपदत्वं तेन रम्यम्. ५ समासभूयिष्ठम्. ६ अर्थभूयस्त्वपरिगतम्. न तु शब्दाडम्बरमात्रमित्यर्थः. ७ विस्तरदोषरहितम्. ८ आकाङ्क्षावत्पदकदम्बात्मकम्. न तु दशदाडिमादिवाक्यवदनाकाङ्क्षितमित्यर्थः. ९. अध्याहारदोषरहितम्. १० कृत्स्नार्थप्रतिपादकम्. न तु सावशेषार्थमित्यर्थः. ११ असंकीर्णार्थम्. १२ न्यायेन युक्त्या निश्चितार्थत्वात्. १३ स्वतन्त्रमिव. १४ शास्त्रे. १५ अनुमानादिभिरबाध्यत्वादप्रत्याख्याततया. १६ वेदवाक्यतुल्यमित्यर्थः. १७ अनुल्लङ्घनीयत्वात्. १८ उद्वेलाम्भोधिगम्भीरम्. १९ अग्राम्यार्थत्वात्; पक्षे,–त्यागित्वात्. २० प्रयोजनसंपत्तेः; पक्षे,–अणिमादिसमृद्धेः. २१ लब्धे प्राप्ते अवसरसाधने कालोपायौ येन तत्. २२ व्याहरेत्. २३ पञ्चमषष्ठपद्यद्वयं विशेषकं ज्ञेयम्. २४ प्रतिवक्तुः. २५ घण्टाजिह्वा. २६ कर्तव्यम्. न किंचित्कार्यमस्तीति भावः. २७ सभायां साधुतमा निपुणतमाः. २८ विदुषाम्. २९ वाचोद्गिरन्तीत्यर्थः. ३० वक्तृषु. ३१ संभावितकौशलाः. ३२ निगूढम्. ३३ अर्थसंपत्तिम्. ३४ सामर्थ्यम्. ३५ शब्दस्य. ३६ कोकिलः. ३७ आरक्तया.

ब्रूतामसतां सतां च वचसां वर्त्मातिगं चेष्टितम् ॥ १३ ॥ श्रोतॄन्मूकयति[१] ब्रुवन्स्थिरतमं[२] कुर्वन्नमीषां मनो निर्वाष्पः परबाष्पकृत्परदृशामेकाश्रयो नान्यदृक् । यस्त्यक्ताङ्गविकम्पनः प्रचलयन्नित्यं सतां मस्तकं क्षीरं श्रोतृषु मुख्यमात्मनि गुणं धत्ते स वक्तोत्तमः ॥ १४ ॥ तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः प्रोल्लासं[३] रसपूरणं[४] श्रवणयो रक्ष्णोर्विकासश्रियम् । क्षुन्निद्राश्रमदुःखकालगतिहृत्कार्यान्तरप्रस्मृतिं[५] प्रोत्कण्ठामनिशं श्रुतौ वितनुते शोकं विरामादपि ॥ १५ ॥

---

## मौनगुणाः

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः । बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ १ ॥ रूपवांश्चापि मूर्खोऽपि गत्वा च विपुलां सभाम् । संरक्षेच्च स्विकां जिह्वां भार्यां दुश्चारिणीं यथा ॥ २ ॥ स्वायत्तमेकान्तगुणं[६] विधात्रा विनिर्मितं छादनमज्ञतायाः[७] । विशेषतः सर्वविदां समाजे[८] विभूषणं मौनमपण्डितानाम् ॥ ३ ॥ कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम् । परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः ॥ ४ ॥

---

## स्थानमाहात्म्यम्

नक्रः[१०] स्वस्थानमासाद्य गजेन्द्रमपि कर्षति । स एव प्रच्युतः स्थानाच्छुनापि[११] परिभूयते ॥ १ ॥ किंचिदाश्रयसंयोगाद्धत्ते शोभामसाध्वपि । कान्ताविलोचने न्यस्तं मलीमसमिवाञ्जनम् ॥ २ ॥ कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते । वैश्वानरोऽपि लोहस्थः कारुकैरभिहन्यते[१२] ॥ ३ ॥ पद्मस्थितस्य[१३] पद्मस्य मित्रे वरुणभास्करौ । पद्मच्युतस्य[१३] तस्यैव क्लेशदाहकरावुभौ ॥ ४ ॥ राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः । स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नरा नखाः ॥ ५ ॥ स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः । इति विज्ञाय मतिमान्स्वस्थानं न परित्यजेत् ॥ ६ ॥ पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः[१४] । जलमिव समुद्रशुक्तौ मुक्ताफलतां[१५] पयोदस्य[१६] ॥ ७ ॥ अतिमात्रभास्वरत्वं पुष्यति भानोः परिग्रहादनलः । अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ ८ ॥ प्रायो यत्किंचिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः । मत्तेभकुम्भतटगतमेति शृङ्गारतां भस्म ॥ ९ ॥ अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ १० ॥ आश्रयवशेन सततं गुरुता लघुता च जायते जन्तोः । विन्ध्ये[१] विन्ध्यसमानाः करिणो बत दर्पणे लघवः ॥ ११ ॥ जानामि नागेन्द्र तव प्रभावं कण्ठे स्थितो गर्जसि शंकरस्य । स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः ॥ १२ ॥ उभौ श्वेतौ पक्षौ चरति गगनेऽवारितगतिः सदा मीनं[२] भुङ्क्ते वसति सकलः स्थाणुशिरसि[३] । बके चान्द्रः सर्वो गुणसमुदयः किंचिदधिको गुणाः स्थाने मान्या नरवर न तु स्थानरहिताः ॥ १३ ॥ सिंहक्षुण्णकरीन्द्रकुम्भगलितं रक्ताक्तमुक्ताफलं कान्तारे बदरीधिया द्रुतमगाद्भिल्लस्य पत्नी मुदा । पाणिभ्यामवगृह्य शुक्लकठिनं तद्वीक्ष्य दूरे जहावस्थाने पततामतीव महतामेतादृशी स्याद्गतिः ॥ १४ ॥

---

## सत्संगतिप्रशंसा

महानुभावसंसर्गः कस्य नोन्नतिकारकः । रथ्याम्बु जाह्नवीसङ्गात्त्रिदशैरपि[४] वन्द्यते ॥ १ ॥ महाजनस्य संसर्गः कस्य नोन्नतिकारकः । पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ २ ॥ महानुभावसंसर्गः कस्य नोन्नतिकारकः । हरिहस्तगतः शङ्खः पवित्रः प्रथितो भुवि ॥ ३ ॥ मलयाचलगन्धेन त्विन्धनं चन्दनायते । तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ४ ॥ वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियः । पिबत्यनार्यसंयोगाद्रक्तं नक्तंचरी यथा ॥ ५ ॥ चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः । चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ॥ ६ ॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः । कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ७ ॥ करोति निर्मलाधारस्तुच्छस्यापि[५] महार्घताम्[६] । अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ८ ॥ हीयते हि मतिस्तात हीनैः सह समागमात् । समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ९ ॥ मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः । पङ्कच्छिदः फलस्येव[७] निकर्षेणाविलं[८] पयः[९] ॥ १० ॥ कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः । अश्मापि[१०] याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ११ ॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः[११] । तथा सत्संनिधानेन मूर्खो

---

१ मूकान्करोति. २ अचलम्, तटस्थमिति यावत्. ३ प्रकर्षेणोल्लासं विकासम्. ४ रसानां शृङ्गारादीनां पूरणम्. ५ अन्यकार्यविस्मृतिम्. ६ स्वस्याधीनम्. ७ पिधानम्. ८ मूर्खतायाः. ९ सभायाम्. १० मकरः. ११ श्वकेण. १२ लोहकारैः. १३ पद्मं = स्थानम्, जलाशयम्. १४ कौशलम्. १५ मौक्तिकत्वम्. १६ मेघस्य.

१ विन्ध्यपर्वते. २ मत्स्यान्; पक्षे,—मीनराशिम्. ३ तरुशैलादयः; पक्षे,—शिवः. ४ देवैः, ५ आश्रयः. ६ महामूल्यत्वम्. ७ कतकफलस्येव. ८ कलुषम्. ९ उदकम्. १० पाषाणः. ११ मरकतसंबन्धिनी.

याति प्रवीणताम् ॥ १२ ॥ यथोदयगिरौ[1] द्रव्यं संनिकर्षेण[2] दीप्यते । तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते[3] ॥ १३ ॥ भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः । कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥ १४ ॥ यदि सत्संगनिरतो भविष्यसि भविष्यसि । अथ दुर्जनसंसर्गे पतिष्यसि पतिष्यसि ॥ १५ ॥ अलब्ध्वापि धनं राज्ञः संश्रिता यान्ति संपदम् । महाह्रदसमीपस्थं पश्य नीलं वनस्पतिम् ॥ १६ ॥ सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥ १७ ॥ क्षुद्रोऽपि तनुते तात तेजस्तेजस्विसङ्गतः । अर्कसंपर्कतः पश्य दर्पणे दहनद्युतिम् ॥ १८ ॥ बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति । संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥ १९ ॥ सज्जनसङ्गो मा भूद्यदि सङ्गो मास्तु तत्पुनः स्नेहः । स्नेहो यदि मा विरहो यदि विरहो मास्तु जीवितस्याशा ॥ २० ॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ २१ ॥ गुरुरपि लघूपनीतो न निमज्जति नियतमाशये[4] निहितः । वानरकरोपनीतः शैलो मकरालयस्येव ॥ २२ ॥ गवाशनानां[5] स शृणोति वाक्यमहं हि राजन्वचनं मुनीनाम् । न चास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति ॥ २३ ॥ कल्पद्रुमः[6] कल्पितमेव सूते सा कामधुक्[7] कामितमेव दोग्धि । चिन्तामणिश्चिन्तितमेव दत्ते सतां हि सङ्गः सकलं प्रसूते ॥ २४ ॥ असज्जनः सज्जनसङ्गिसङ्गात्करोति दुःसाध्यमपीह साध्यम् । पुष्पाश्रयाच्छंभुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रविम्बम् ॥ २५ ॥ शाखोटकैश्चन्दनसंगतोऽपि वक्षोजयोः क्रीडितमायताक्ष्याः । पयोऽपि मद्यं श्वपचे हि मन्यते संसर्गजा दोषगुणा भवन्ति ॥ २६ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां नहि खलसंगमात्खलत्वम् । आमोदं[8] कुसुमभवं मृदेव धत्ते मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ २७ ॥ किं वापरेण बहुना परिजल्पितेन संसर्ग एव महतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलोच्छलितरत्नकृतालवालाः ॥ २८ ॥ जाड्यं[9] धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति[10] पापमपाकरोति[11] । चेतः प्रसादयति दिक्षु तनोति[12] कीर्तिं सत्संगतिः कथय किं न करोति पुंसाम् ॥ २९ ॥

१ उदयपर्वते. २ सूर्यसंनिधानेन. ३ प्रकाशितो भवति. ४ अन्तःकरणे; पक्षे,–मध्ये. ५ यवनानाम्. यवनगृहस्थितं सहोदरं शुकमुद्दिश्य मुनिगृहस्थितस्य शुकस्योक्तिरियम्. ६ कल्पवृक्षः. ७ कामधेनुः. ८ सुगन्धम्. ९ मान्द्यम्. १० ददाति. ११ निराकरोति. १२ विस्तारयति.

दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरंतनमघं चुलुकीकरोति । भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ ३० ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जनवीक्षणेन । कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावपरिवर्तविधौ निदानम् ॥ ३१ ॥ एके[1] केचिद्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरं वीणया संप्रयुक्ताः । एके तेषां सहजगतिवशाद्दुस्तरं तारयन्ति केचित्तेषां ज्वलितहृदया रक्तमेवापिबन्ति ॥ ३२ ॥ संतप्तायसि[2] संस्थितस्य पयसो नामापि न श्रूयते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ३३ ॥ गङ्गेवाघविनाशिनी जनमनःसंतोषसच्चन्द्रिका तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानान्धकारापहा । छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा ॥ ३४ ॥ कीर्तिर्नृत्यति नर्तकीव भुवने विद्योतते साधुता ज्योत्स्नेव प्रतिभा सभासु सरसा गङ्गेव संमीलति । चित्तं रञ्जयति प्रियेव सततं संपत्प्रसादोचिता संगत्या न भवत्सतां किल भवेत्किं किं न लोकोत्तरम् ॥ ३५ ॥ बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमासुञ्चति श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् । विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं किं किं नारभते हरेरिव कथाऽजर्यं सतां संगतम् ॥ ३६ ॥

## असत्संगतिनिन्दा

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे । पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ १ ॥ अन्तर्मलिनसंसर्गाच्छ्रुतवानपि दुष्यति । यच्चक्षुःसंनिकर्षेण कर्णोऽभूत्कुटिलाश्रयः ॥ २ ॥ दुष्टतां दुष्टसंसर्गाददुष्टमपि गच्छति । सुराबिन्दुनिपातेन पञ्चगव्यघटी यथा ॥ ३ ॥ अणुरप्यसतां सङ्गः सद्गुणं हन्ति विस्तृतम् । गुणरूपान्तरं याति तक्रयोगाद्यथा पयः ॥ ४ ॥ दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये । किं नाम खलसंसर्गः कुरुते नाश्रयाशवत् ॥ ५ ॥ आनन्दमृग[3]दावाग्निः शीलशाखि[4]मदद्विपः । ज्ञानदीप[5]महावायुरयं खलसमागमः ॥ ६ ॥ असत्सङ्गाद्गुणज्ञोऽपि विषयासक्तमानसः । अकस्मात्प्रलयं याति गीतरक्तो यथा मृगः ॥ ७ ॥ आहृत्य

१ तुम्बीत्यर्थः. २ लोहे. ३ आनन्द एव मृगस्तस्य दावाग्निरिव दाहकत्वात्. ४ शीलमेव शाखी वृक्षस्तस्य मदद्विप इव. उन्मूलकत्वात्. ५ ज्ञानमेव दीपस्तस्य महावात इव; निर्वाणकरणत्वात्.

रक्ष्यमाणापि यत्नेनान्तविरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ ८ ॥ पात्रमपात्रीकुरुते दहति गुणं स्नेहमाशु नाशयति । अमले मलं नियच्छति दीपज्वालेव खलमैत्री ॥ ९ ॥ दुर्जनजनसंसर्गात्सज्जनपुरुषोऽत्र दोषमायाति । रावणकृतापराधाज्जलधेरपि बन्धनं प्राप्तम् ॥ १० ॥ संगतिं स्वविपरीतगुणैस्त्वं मा कृथाः खलु सखे समयेऽस्मिन् । पश्य पूर्वमपि कृष्णरूपतामर्जुनोऽपि समवाप निश्चितम् ॥ ११ ॥ दुर्वृत्तसंगतिरनर्थपरम्पराया हेतुः सतां भवति किं वचनीयमत्र । लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ १२ ॥ हंसोऽध्वगः श्रममपोहयितुं दिनान्ते कारण्डकाकबककोककुलं प्रविष्टः । मूकोऽयमित्युपहसन्ति लुनन्ति पक्षान्नीचाश्रयो हि महतामपमानहेतुः ॥ १३ ॥

## स्नेहवचनम्

सखि साहजिकं प्रेम दूरादपि विराजते । चकोरीनयनद्वन्द्वमानन्दयति चन्द्रमाः ॥ १ ॥ क्वेन्दोर्मण्डलमम्बुधिः क्व च रविः पद्माकरः क्व स्थितः क्वाभ्राः सन्ति मयूरपङ्क्तिरमला क्वालिः क्व वा मालती । हंसानां च कुलं क्व दूरविषये क्वास्ते सरो मानसं यो यस्याभिमतः स तस्य निकटे दूरेऽपि सन्वल्लभः ॥ २

## सुमित्रप्रशंसा

कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥ १ ॥ यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो नास्तीह पुण्यवान् ॥ २ ॥ शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः । दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ३ ॥ अन्यथैव हि सौहार्दं भवेत्स्वच्छान्तरात्मनः । प्रवर्ततेऽन्यथा वाणी शाठ्योपहतचेतसः ॥ ४ ॥ उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ५ ॥ स बन्धुर्यो विपन्नानामापदुद्धरणे क्षमः । नतु भीतपरित्राणवस्तूपालम्भपण्डितः ॥ ६ ॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ ७ ॥ याचते कार्यकाले यः स किं भृत्यः स किं सुहृत् । अकार्यकार्यकर्ता यस्त्वनादिष्टोऽप्यसौ सुहृत् ॥ ८ ॥ तदेवास्य परं मित्रं यत्र संक्रामति द्वयम् । दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ ९ ॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च । नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ॥ १० ॥ दर्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ ११ ॥ स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ १२ ॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ १३ ॥ शोकाराति भयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १४ ॥ उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन्समृद्धीनां फलं सुहृदनुग्रहम् ॥ १५ ॥ नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् । कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ १६ ॥ प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम् । आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥ १७ ॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति । आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १८ ॥ मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् । ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥ १९ ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ २० ॥

## कुमित्रनिन्दा

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥ रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता । क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ २ ॥

## संसारः

संसार तव निःसार पदवी न दवीयसी । अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ १ ॥ संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे । काव्यामृतरसास्वाद आलापः सज्जनैः

१ अयोग्यम्. २ सूत्रम्; पक्षे,-विनयादिः. ३ तैलम्; पक्षे,-प्रीतिः. ४ मषीम्; पक्षे,-दोषम्. ५ मध्यमपाण्डवः; पक्षे,-शुक्लवर्णः. ६ मिथो भाषणम्. ७ तस्मात्पुरुषात्. ८ निर्मलचित्तत्वम्. ९ दानशीलत्वम्. १० समानस्य भावः सामान्यम्; समत्वमित्यर्थः. ११ सरलत्वम्. १२ प्रीतिः.

१ अकपटमित्रता. २ शत्रुः. ३ विश्वासः. ४ सुहृत्स्वनुग्रहः प्रसादस्तम्. ५ प्रीते रसायनमिव रसायनम्. प्रीतिवर्धकमित्यर्थः. ६ अग्नौ. ७ मित्रविपत्तिम्. ८ गुप्तप्रकाशनम्. ९ प्रार्थनम्. १० मार्गे. ११ अतिदूरा. १२ मध्ये.

सह ॥ २ ॥ दुःखाङ्गारकतीव्रः संसारोऽयं महानसो[1] गहनः । इह विषयामृतलालस मानसमार्जार मा निपत ॥ ३ ॥ अयमविचारितचारुतया संसारो भाति रमणीयः । अत्र पुनः परमार्थदृशा न किमपि सारमणीयः ॥ ४ ॥ क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितम् । क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुर्न जाने संसारः किममृतमयः किं विषमयः ॥ ५ ॥ कृच्छ्रेणामेध्यमध्ये[2] नियमिततनुभिः[3] स्थीयते गर्भगर्ते[4] कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः । नारीणामप्यवज्ञा[5] विलसति नियतं वृद्धभावोऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्तोकमप्यस्ति[6] किंचित् ॥ ६ ॥

## गृहस्थाश्रमप्रशंसा

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः[7] । शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते[8] ॥ १ ॥ यदि रामा[9] यदि च रमा[10] यदि तनयो विनयधीगुणोपेतः । तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ २ ॥ सविप्रपादोदककर्दमानि[11] सवेदशास्त्रध्वनिगर्जितानि । स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि ॥ ३ ॥ सानन्दं सदनं[12] सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः । आतिथ्यं शिवपूजनं प्रतिदिनं मृष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ ४ ॥ मानुष्यं वरवंशजन्म[13] विभवो[14] दीर्घायुरारोग्यता सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे । विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिस्ते पुण्येन विना त्रयोदश गुणाः संसारिणां दुर्लभाः ॥ ५ ॥ वंशो विश्वावतंसो[15] जनुरनुपहतं स्वान्तमौन्नत्यकान्तं[16] लीला शीलानुकूला क्षपितकलिमला कापि विद्यानवद्या[17] । वाणी वेणी[18] गुणानां समधिकयशसां साधिका[19] साधिका श्रीः श्रीमेद्गौरीमयूरीमुदिर[20] पुरहर[21] त्वत्कृपाया विपाकः[22] ॥ ६ ॥

## गृहस्थाश्रमदूषणम्

यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि[23] । यत्र नास्ति गुरुगौरवपूजा तानि किं बत गृहाणि वनानि ॥ १ ॥ न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि । स्वाहास्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥ २ ॥ क्रोशन्तः शिशवः सवारि[1] सदनं पङ्कावृतं चाङ्गणं शय्या दंशवती[2] च रूक्षमशनं[3] धूमेन पूर्णं गृहम् । भार्या निष्ठुरभाषिणी[4] प्रभुरपि क्रोधेन पूर्णः सदा स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् ॥ ३ ॥ तावद्विद्याऽनवद्या गुणगणमहिमा रूपसंपत्तिशौर्ये स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव । यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्धे बाबा नास्ति तैलं न च लवणमपीत्यादिवाचां प्रचारः ॥ ४ ॥

## पुत्रप्रशंसा

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः । अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ १ ॥ गृहे जानुचरः[6] केल्यां मुग्धस्मितमुखाम्बुजः । पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः ॥ २ ॥ स्वगर्भशुक्तिनिर्भिन्नं सुवृत्तं सुतमौक्तिकम् । वंशश्रीतिलकीभूतं मन्दभाग्यस्य दुर्लभम् ॥ ३ ॥ वर्धते न चिरं लोके वंशलक्ष्मीरसंततिः । स्वल्पावशेषितस्नेहवर्तिमालेव दीपिका ॥ ४ ॥ अन्तःकरणतत्त्वस्य दंपत्योः स्नेहसंश्रयात् । आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ॥ ५ ॥ दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् । पुण्याधिका हि पश्यन्ति गङ्गाधरमिवात्मजम् ॥ ६ ॥ धूलिधूसरसर्वाङ्गो विकसद्दन्तकेसरः । आस्ते कस्यापि धन्यस्य द्वारि दन्ती गृहेऽर्भकः ॥ ७ ॥ निन्द्यते पितृभिस्तैस्तैर्निरपत्यधनः पुमान् । अध्वनीनैरतिश्रान्तैरवकेशीव पादपः ॥ ८ ॥ किं मृष्टं सुतवचनं मृष्टतरं किं तदेव सुतवचनम् । मृष्टान्मृष्टतमं किं श्रुतिपरिपक्वं तदेव सुतवचनम् ॥ ९ ॥ [11]उरोरुहादुद्गमितैः पयोभिरापूर्य केल्या निजमास्यगर्भम् । फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ॥ १० ॥ कृतचङ्क्रमणं गणेषु किंचित्क्वणवत्किंकिणिरिङ्गदङ्घ्रिपद्मम् । यदि सन्महितं सुतं श्रितं स्यात्तदिदं सद्म हितं भवेत्तदानीम् ॥ ११ ॥ अहं किमम्बा[12] किमभीष्टापदे[13] तवेति मातुर्धुरि तातपृच्छया । प्रलोभ्यतुल्यं[14] प्रवदन्तमर्भकं मुदा हसञ्जिघ्रति[15] मूर्ध्नि पुण्यभाक् ॥ १२ ॥ आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्त-

---

१ पाकगृहम्. २ अशुचिमलादि तन्मध्ये. ३ जरायुणा बद्धशरीरैः. ४ गर्भाशये. ५ अवमानः. ६ अल्पम्. ७ न्यायेन संपादितं धनं येन. ८ मुक्तो भवति. ९ स्त्री. १० लक्ष्मीः. ११ ब्राह्मणचरणक्षालनोदकेन पङ्किलानि. १२ गृहम्. १३ उत्तमकुल उत्पत्तिः. १४ ऐश्वर्यम्. १५ विश्वभूषणम्. १६ अन्तःकरणम्. १७ निर्दोषा. १८ प्रवाहः. १९ साधयित्री. २० गौर्यैव मयूरी तस्या मुदिरो मेघ; पक्षे,–कामुकः वल्लभः. २१ हे त्रिपुरनाशक. २२ परिणामः, फलमित्यर्थः. २३ शिशुशब्दस्यात्र नपुंसकत्वं चिन्त्यम्.

१ उदकपूर्णम्. २ मत्कुणपूर्णा. ३ अस्निग्धम्. ४ कठोरभाषिणी. ५ इदं तु पितुर्लौकिकं संबोधनम्. ६ जानुभ्यां चरतीति सः, रिङ्गमाण इत्यर्थः. ७ संततिरहिता. ८ नग्नम्. ९ पान्थैः १० वन्ध्यः. ११ स्तनात्. १२ माता. १३ इष्टस्थाने. १४ प्रलोभ्यस्य प्रलोभनार्थं दर्शितस्य वस्तुनोऽनुरूपम्. १५ अवघ्राणं करोति.

वर्णरमणीयवचःप्रवृत्तीन् । [1]अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १३ ॥ आनन्दसुतिरात्मनो नयनयोरन्तःसुधाभ्यञ्जनं प्रस्तारः प्रणयस्य मन्मथतरोः पुष्पं प्रसादो रतेः । [2]आलानं हृदयद्विपस्य विषयारण्येषु संचारिणो दंपत्योरिह लभ्यते सुकृततः संसारसारः सुतः ॥१४॥

## कन्यापितृनिन्दा

जातेति कन्या महती हि चिन्ता कस्मै प्रदेयेति महान्वितर्कः । दत्ता सुखं यास्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम् ॥ १ ॥

## सत्पुत्रप्रशंसा

एकोऽपि गुणवान्पुत्रो निर्गुणैः किं शतैरपि । एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १ ॥ एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ २ ॥ प्रज्ञया वा [3]विसारिण्या यो बलेन धनेन वा । [4]धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ३ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते । कुलं [5]पुरुषसिंहेन चन्द्रेणेव हि [6]शर्वरी ॥ ४ ॥ को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः । वरमेकः कुलालम्बी यत्र विश्रूयते पिता ॥ ५ ॥ पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम् । तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ ६ ॥ वरमेको गुणी पुत्रो न च मूर्खशतान्यपि । एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ ७ ॥ एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति [7]रासभी ॥ ८ ॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम् । शशिना चैव गगनं सर्वदैवोज्ज्वलीकृतम् ॥ ९ ॥ किं जातैर्बहुभिः पुत्रैः शोकसंतापकारकैः । वरमेकः कुलालम्बी यत्र विश्राम्यते कुलम् ॥ १० ॥ कुम्भः परिमितमम्भः पिबत्यसौ [8]कुम्भसंभवोऽम्भोधिम् । [9]अतिरिच्यते सुजन्मा कश्चिज्जनकं निजेन [10]चरितेन ॥ ११ ॥ विद्याविहीना बहवोऽपि पुत्राः कल्पायुषः सन्तु पितुः किमेतैः । [11]क्षयिष्णुना वापि [12]कलावता वा तस्य प्रमोदः शशिनेव सिन्धोः ॥ १२ ॥ [13]पात्रं न तापयति नैव [14]मलं प्रसूते [15]स्नेहं न संहरति नैव गुणान्क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एष [16]कुलसद्मनि कोऽपि दीपः ॥ १३ ॥

१ लालनार्थमङ्कारूढशिशून्. २ गजबन्धनस्तम्भः. ३ प्रसरणशीलया. ४ कार्यभारम्. ५ पुरुषश्रेष्ठेन. ६ रात्रिः. ७ गर्दभी. ८ अगस्त्यः. ९ अधिको भवति. १० आचरणेन. ११ क्षयशीलेन. १२ कलापूर्णेन. १३ दीपपात्रं; पक्षे,–मातापितरौ. १४ कलङ्कं; पक्षे,–मषीम्. १५ अनुरागं, पक्षे,–तैलम्. १६ कुलमेव सद्म गृहं तस्मिन्.

## कुपुत्रनिन्दा

किं तेन [1]जातु जातेन मातृ[2]यौवनहारिणा । आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ १ ॥ किं तया क्रियते धेन्वा या न [3]दोग्ध्री न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ २ ॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥३॥ कोटरान्तःस्थितो वह्निस्तरुमेकं दहेत्खलु । कुपुत्रस्तु कुले जातः स्वकुलं नाशयत्यहो ॥ ४ ॥ अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः । सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ ५ ॥ अजातमृतमूर्खेभ्यो मृताऽजातौ सुतौ वरम् । यतस्तावल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ६ ॥ यस्य पुत्रो न वै विद्वान्न शूरो न च धार्मिकः । [4]अप्रकाशं कुलं तस्य नष्टचन्द्रेव शर्वरी ॥ ७ ॥ [5]अविनीतः सुतो जातः कथं न [6]दहनात्मकः । विनीत[7]स्तु सुतो जातः कथं न [8]पुरुषोत्तमः ॥ ८ ॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः । विद्यायामर्थलाभे च मातु[9]रुच्चार एव सः ॥ ९ ॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् । मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ १० ॥ वरं गर्भस्रावो वरमृतुषु च नैवाभिगमनं वरं जातप्रेतो वरमपि च कन्यैव जनिता । वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ११ ॥ पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं यान्तीर्मियुवतीभिरध्वनि मुहुः कौतूहलं विन्दति । बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः साधून्निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः ॥ १२ ॥

## दैवाख्यानम्

दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत् । सरोम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति ॥ १ ॥ भाग्यवंतं प्रसूयेथा मा शूरं मा च पण्डितम् । शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः ॥ २ ॥ न केवलं मनुष्येषु दैवं देवेष्वपि प्रभु । सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः ॥ ३ ॥ सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम् । धिग्दैवं निर्मलं चक्षुः पात्रं कज्जलभस्मनः ॥ ४ ॥ भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि । पश्य गच्छत एवास्तं [10]नियतिः केन लङ्घ्यते ॥ ५ ॥ किं करोति नरः प्राज्ञः शूरो वाप्यथ पण्डितः । दैवं

१ कदाचित्. २ यौवनलोपहेतुना. ३ दोहनशीला. ४ प्रकाशरहितम्. ५ विनयरहितः; पक्षे,–अविना मेषेण नीतः. अग्नेर्मेषो वाहनम्. ६ अग्निस्वरूपः. ७ विनययुक्तः; पक्षे,–विना पक्षिणा गरुडेन नीतः. ८ पुरुषश्रेष्ठः; पक्षे,–विष्णुः. ९ मलविसर्जनम्. १० दैवम्.

यस्य फलान्वेषि करोति विफलाः क्रियाः ॥ ६ ॥ दैवे विमुखतां याते न कोऽप्यस्ति सहायवान् । पिता माता तथा भार्या भ्राता वाऽथ सहोदरः ॥ ७ ॥ पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः । हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥ ८ ॥ करोतु नाम नीतिज्ञो व्यवसायमितस्ततः । फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ ९ ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम्[1] । समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ १० ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम् । पाषाणस्य कुतो विद्या येन देवत्वमागतः ॥ ११ ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२ ॥ अचोद्यमानानि[3] यथा पुष्पाणि च फलानि च । स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥ १३ ॥ विपत्तौ किं विषादेन[4] संपत्तौ हर्षणेन किम् । भवितव्यं भवत्येव कर्मणामीदृशी गतिः ॥ १४ ॥ हरिणापि हरेणापि ब्रह्मणा त्रिदशैरपि[5] । ललाटलिखिता रेखा न शक्या परिमार्जितुम् ॥ १५ ॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि । नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम्[6] ॥ १६ ॥ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १७ ॥ अयाचितः सुखं दत्ते याचितश्च न यच्छति । सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥ १८ ॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि । सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम् ॥ १९ ॥ पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी । शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ॥ २० ॥ तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः । सहायास्तादृशाश्चैव यादृशी भवितव्यता ॥ २१ ॥ भवितव्यं भवत्येव नारिकेलफलाम्बुवत् । गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत् ॥ २२ ॥ महतामाश्रयः पुंसां फलं भाग्यानुसारतः । ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभक्षकः ॥ २३ ॥ कर्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म बाध्यते । सुबुद्धिरपि यद्रामो हैमं[7] हरिणमन्वगात् ॥ २४ ॥ गुणोऽपि दोषतां याति वक्रीभूते[8] विधातरि । सानुकूले पुनस्तस्मिन् दोषोऽपि च गुणायते ॥ २५ ॥ अवश्यंभाविनो भावा भवन्ति महतामपि । नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥ २६ ॥ पुरुषः पौरुषं तावद्यावद्दैवं तु सन्मुखम् । विपरीतगते दैवे पुरुषो न च पौरुषम् ॥ २७ ॥ न देशसेवया याति कर्मबन्धः परिक्षयम् । जघास घासमेवासौ बलीवर्दः कपर्दिनः[1] ॥ २८ ॥ अवश्यंभाविभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ २९ ॥ भवितव्यं यथा येन नासौ भवति चान्यथा । नीयते तेन मार्गेण स्वयं वा तत्र गच्छति ॥ ३० ॥ किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मणा । प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥ ३१ ॥ लिखिता चित्रगुप्तेन ललाटेऽक्षरमालिका । तां देवोऽपि न शक्नोति ह्युल्लङ्घ्य लिखितुं पुनः ॥ ३२ ॥ येन यत्रैव भोक्तव्यं सुखं वा दुःखमेव वा । स तत्र बद्ध्वा रज्ज्वेव बलाद्दैवेन नीयते ॥ ३३ ॥ सा सा संपद्यते बुद्धिः सा मतिः सा च भावना । सहायास्तादृशा एव यादृशी भवितव्यता ॥ ३४ ॥ अनुरागवती[2] संध्या दिवसस्तत्पुरःसरः[3] । अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ३५ ॥ अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते । विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ ३६ ॥ विकटाटव्यामटनं शैलारोहणमपां निधेस्तरणम् । निगडं गुहाप्रवेश विधिपरिपाकः कथं न संधार्यः ॥ ३७ ॥ किं त्वं न वेत्सि जगति प्रख्यातं लाभकारणे मूलम् । विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ३८ ॥ द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् । आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ३९ ॥ अनुकूले सति धातरि[4] भवत्यनिष्टादपीष्टमविलम्बम् । पीत्वा विषमपि शंभुर्मृत्युंजयतामवाप तत्कालम् ॥ ४० ॥ अनुचितमेवाचरितं पशुपतिना[5] यद्विधेः शिरश्छिन्नम् । छिन्नो न चास्य हस्तो येनायं दुर्लिपिं[6] लिखति ॥ ४१ ॥ नहि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन । करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ ४२ ॥ सर्वाङ्गमर्पयन्ती लीलासुसं क्रमेण शय्यायाम् । अलसमपि भाग्यवन्तं भजते पुरुषायितेव[7] श्रीः ॥ ४३ ॥ आरोहतु गिरिशिखरं तरतु समुद्रं प्रयातु पातालम् । विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ४४ ॥ सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् । अवसरवशतः शफरो[8] जनार्दनः सोऽपि चित्रमिदम् ॥ ४५ ॥ यन्मनोरथशतैरगोचरं न स्पृशन्ति च गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥ ४६ ॥ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ४७ ॥ दाता बलिः

१ पराक्रमः. २ प्राप्नोति. ३ अप्रेर्यमाणानि. ४ खेदेन. ५ देवैः. ६ वामम्. प्रतिकूलमिति यावत्. ७ सुवर्णमयम्. ८ प्रतिकूलत्वमापन्ने दैवे.

१ शिवस्य. २ रक्तिमा; पक्षे,-रतिः. ३ अग्रवर्ती; पक्षे,-आज्ञाकरः. ४ दैवे. ५ शिवेन. ६ दुर्लेखम्. ७ पुरुषवदाचरन्ती स्त्री कामशास्त्रे प्रसिद्धा, तद्वत्. ८ मत्स्यावतारः.

प्रार्थयिता च विष्णुर्दानं भुवो वाजिमखस्य[1] कालः। नमोऽस्तु तस्यै भवितव्यतायै[2] यस्याः फलं बन्धनमेव जातम् ॥ ४८ ॥ प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः। तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत्परेषाम् ॥ ४९ ॥ मा धाव मा धाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः। चेद्धावनं साधनमस्ति लक्ष्म्याः श्वा धावमानोऽपि लभेत लक्ष्मीम् ॥ ५० ॥ ईशः करस्थीकृतकाञ्चनाद्रिः कुबेरमित्रं रजताचलस्थः। तथापि भिक्षाटनमस्य जातं विधौ[3] शिरःस्थे कुटिले[4] कुतः श्रीः ॥ ५१ ॥ स्वयं महेशः श्वशुरो नगेशः[5] सखा धनेशस्तनयो गणेशः। तथापि भिक्षाटनमेव शंभोर्बलीयसी केवलमीश्वरेच्छा ॥ ५२ ॥ असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय। प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ॥ ५३ ॥ न भूतपूर्वो न च केन दृष्टो हेम्नः कुरंगो न कदापि वार्ता। तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ ५४ ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने। देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ ५५ ॥ वने जने शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ५६ ॥ सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा। अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो[6] हि लोकः ॥ ५७ ॥ यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना। यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि ॥ ५८ ॥ भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो[7] गन्धफलीम[8]जिघ्रत्। सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥ ५९ ॥ विधौ विरुद्धे न पयः पयोनिधौ सुधौघसिन्धौ न सुधा सुधाकरे। न वाञ्छितं सिध्यति कल्पपादपे न हेम हेमप्रभवे गिरावपि ॥ ६० ॥ अवश्यभव्येष्वनवग्रहग्रहा[9] यया दिशा धावति वेधसः स्पृहा। तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना[10] ॥ ६१ ॥ निपतति किल दुर्बलेषु दैवं तदवितथं ननु येन कारणेन। बलवति न तथा यथाबलानां प्रभवति कृष्टशरासनो मनोभूः[11] ॥ ६२ ॥ हरशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठन्ति गृध्रपादे। अयि खलु विषमः[12] पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः[13] ॥ ६३ ॥ क्व च ननु जनकाधिराजपुत्री क्व च दशकंधरमन्दिरे निवासः। अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ६४ ॥ क्व नु कुलमकलङ्कमायताक्ष्याः क्व नु रजनीचरसंगमापवादः। अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ६५ ॥ क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता। नियतं प्रतिकूलवर्तिनो बत धातुश्चरितं सुदुःसहम् ॥ ६६ ॥ सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः। तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता[1] विधेः ॥ ६७ ॥ गजभुजंगमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम्। मतिमतां च समीक्ष्य दरिद्रतां विधिरहो[2] बलवानिति मे मतिः ॥ ६८ ॥ यदपि जन्म बभूव पयोनिधौ निवसनं जगतीपतिमस्तके। तदपि नाथ पुराकृतकर्मणा पतति राहुमुखे खलु चन्द्रमाः ॥ ६९ ॥ प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता। अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ७० ॥ यस्माच्च येन च यथा च यदा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म। तस्माच्च तेन च तथा च तदा च तच्च तावच्च तत्र च विधातृवशादुपैति[3] ॥ ७१ ॥ नैवाकृतिः फलति नैव कुलं न शीलं विद्यापि नैव न च यत्नकृतापि सेवा। भाग्यानि पूर्वतपसा किल संचितानि काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ७२ ॥ आकाशमुत्पततु गच्छतु वा दिगन्तमम्भोनिधिं विशतु तिष्ठतु वा यथेच्छम्। जन्मान्तरार्जितशुभाशुभकृन्नराणां छायेव न त्यजति कर्मफलानुबन्धः ॥ ७३ ॥ भीमं वनं भवति तस्य पुरं प्रधानं सर्वो जनः सुजनतामुपयाति तस्य। कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ७४ ॥ कैवर्त[4]कर्कशकरग्रहणच्युतोऽपि जालान्तरे निपतितः शफरो वराकः। दैवात्ततो विगलितो गिलितो बकेन वक्रे विधौ वद कथं व्यवसायसिद्धिः ॥ ७५ ॥ दैवे समर्प्य चिरसंचितकर्मजालं सुस्थाः सुखं वसत किं परयाचनाभिः। मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ ७६ ॥ येनाञ्चलेन सरसीरुहलोचनायास्त्रातः प्रभूतपवनादुदये प्रदीपः। तेनैव सोऽस्तसमयेऽस्तमयं विनीतः क्रुद्धे विधौ भजति मित्रममित्रभावम्[5] ॥ ७७ ॥ आधोरणाङ्कुशभयात्करिकुम्भयुग्मं जातं पयोधरयुगं हृदयेऽङ्गनानाम्। तत्रापि वल्लभनखक्षतमेदभिन्नं नैवान्यथा भवति यल्लिखितं विधात्रा ॥ ७८ ॥ संजातसान्द्रमकरन्दरसां क्रमेण पातुं गतश्च कलिकां कमलस्य भृङ्गः। दग्ध्वा निपत्य सहसैव हिमेन सैषा वामे विधौ नहि फलन्त्यभिवाञ्छितानि ॥ ७९ ॥ सिंहो बली गिरि-

१ अश्वमेधस्य. २ दैवाय. ३ दैवे; पक्षे,—चन्द्रे. ४ वक्रे; पक्षे,—विपरीते. ५ हिमालयः. ६ पूर्वसंचितकर्मसंबद्धः. ७ भ्रमरः. ८ चम्पककलिकाम्. ९ दुरासदा, दुःप्रतीकारा वा. १० नितान्तचञ्चलस्वभावेन. ११ मदनः. १२ क्लेशदः. १३ [illegible]

१ मूर्खता. २ दैवम्. ३ दैववशात्. ४ कैवर्तो धीवरः, तस्य कठोरकरग्रहणाच्च्युतः. ५ शत्रुस्वभावम्.

गुहागहनप्रवासी वासोदरे वसति भूमिभृतां बिडालः। नो पौरुषं कुलमपि प्रचुरा न वाणी दैवं बलीय इति मुञ्च सखे विषादम् ॥ ८० ॥ सदसि[1] विदुरभीष्मद्रोणशारद्वतानां पतिभिरमरकल्पैः[2] पञ्चभिः पालितापि । अहह परिभवस्य[3] द्रौपदी पात्रमासीद्बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ८१ ॥ गुणवदगुणवद्वा कुर्वता कार्यमादौ परिणतिरवधार्या[4][5] यत्नतः पण्डितेन । अतिरभसकृतानां[6] कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ८२ ॥ स हि गगनविहारी[7] कल्मषध्वंसकारी[8] दशशतकरकारी ज्योतिषां[9] मध्यचारी । विधुरपि विधियोगाद्ग्रस्यते राहुणासौ लिखितमिह ललाटे प्रोज्झितुं कः समर्थः ॥ ८३ ॥ अयममृतनिधानं नायकोऽप्योषधीनां शतभिषगनुयातः[10] शंभुमूर्ध्नोऽवतंसः । विरहयति न चैनं राजयक्ष्मा शशाङ्कं हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ८४ ॥ शशिनि खलु कलङ्कः कण्टकः पद्मनाले युवतिकुचनिपातः पक्वता केशजाले । जलधिजलमपेयं पण्डिते निर्धनत्वं वयसि धनविवेको निर्विवेको विधाता ॥ ८५ ॥ प्रियसखि विपद्दण्डप्रान्तप्रपातपरम्परापरिचयचले चिन्ताचक्रे निधाय विधिः खलः । मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्भ्रमयति मनो नो जानीमः किमत्र करिष्यति ॥ ८६ ॥ क्वचित्पाणिप्रासं घटितमपि कार्यं विघटयत्यशक्यं केनापि क्वचिदघटमानं घटयति । तदेवं सर्वेषामुपरि परितो जाग्रति विधावुपालम्भः कोऽयं जनतनुधनोपार्जनविधौ ॥ ८७ ॥ नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः । फलं कर्मायत्तं यदि किममरैः किं च विधिना नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति[11] ॥ ८८ ॥ त्रिलोकेशः शार्ङ्गी[12] शबरशरलक्ष्यत्वमगमद्[13] विधिर्धाता[14] लोकानामलभत शिरःकृन्तनविधिम्[15] । प्रयातौ तौ राहोर्दिनकरशशाङ्कौ कवलतां[16] प्रभुर्नग्नः शंभुः शिरसि लिखितं लङ्घयति कः ॥ ८९ ॥ सुधांशोर्जातेयं कथमपि कलङ्कस्य कणिका विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि । स किं नात्रेः पुत्रो न किमु हरचूडार्चनमणिर्न वा हन्ति ध्वान्तं[17] जगदुपरि किं वा न वसति ॥ ९० ॥ लुलाये[1] गोमायौ[2] मृगपरिषदि श्वापदकुले करिष्यन्कार्पण्यं किमिह महिमानं गमयसि । निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिपदशामभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥ ९१ ॥ धुनोति ध्वान्तानि[3] व्यपनयति नीहारपटलं[4] कुलं राजीवानां[5] दलयति रथाङ्गं[6] रमयति । जगद्व्यापी देवः[7] सुखयति जनानां च नयनं न याति स्थेमानं[8] यदि तदिह दैवं[9] जयतु कः ॥ ९२ ॥ त एवामी बाणास्तदपि हरलब्धं धनुरिदं स एवाहं पार्थः प्रमथितसुरारातिनिचयः । इमास्तास्ता गोप्यो हरिचरणचित्तैकशरणा ह्रियन्ते गोपालैर्विधिरिह बलीयान्न तु नरः ॥ ९३ ॥ अलंकारः शङ्काकरनरकपालं परिजनो विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः । अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ९४ ॥ पिता रत्नाधारः शुचिसहचरास्ते च मणयः स्वसा स्निग्धा लक्ष्मीरयमवरजः कल्पविटपी । अहो काम्यं धातुस्तदपि खलु शङ्खः प्रतिपदं रुदित्वा यद्दीर्घं दिशि दिशि वराटं[10] मृगयते ॥ ९५ ॥ पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं नोलूकेन[11] विलोक्यते यदि दिवा सूर्यस्य किं दूषणम् । धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं[12] कः क्षमः[13] ॥ ९६ ॥ या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् । तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं हे साधो व्यसनिन्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥ ९७ ॥ ब्रह्मा येन कुलालवन्नियमितो[14] ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ९८ ॥ यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं तत्प्राप्नोति मरुस्थलेऽपि[15] नितरां मेरौ ततो नाधिकम् । तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ९९ ॥ नेता यस्य बृहस्पतिः प्रहरणं[16] वज्रं सुराः सैनिकाः स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः[17] । इत्याश्चर्यबलान्वितोऽपि बलभिद्[18] भग्नः परैः संगरे तद्व्यक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम्[19] ॥ १०० ॥ जातः सूर्यकुले पिता दशरथः क्षोणीभुजामग्रणीः सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः । दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः

१ समायाम्. २ देवतुल्यैः. ३ पराभवस्य. ४ परिणामः. ५ निश्चेतव्या. ६ अतित्वरया. ७ आकाशसंचारी. ८ अन्धकारनाशकर्ता. ९ नक्षत्राणाम्. १० नक्षत्रविशेषेण; पक्षे,-भिषजां वैद्यानां शतेन. ११ समर्थो भवति. १२ कृष्णः. १३ शबरो जरानामा भिल्लः प्रभासे परस्परं कलहेनाखिलयादवोपसंहारानन्तरमश्वत्थस्याधस्ताद्वामोरौ दक्षिणं पादं निधायास्थिते भगवति जरानाम्ना भिल्लेन दूरतो भगवच्चरणं दृष्ट्वा मृगमुखभ्रमाद्भगवत्पादो बाणेन विद्ध इति भागवते. १४ ब्रह्मा. १५ शिरःकर्तनम्. १६ ग्रासताम्. १७ अन्धकारम्.

१ महिषे. २ मृगधूर्तके. ३ तमांसि. ४ हिमपटलम्. ५ हस्तिनाम्. ६ चक्रम्. ७ सूर्यः. ८ दृढत्वम्. ९ चन्द्रे; पक्षे,-दैवे. १० कपर्दकम्. ११ दिवाभीतेन. १२ शोधयितुम्. १३ समर्थः. १४ कुम्भकारः. १५ क्षारभूमौ. १६ आयुधम्. १७ गजः. १८ इन्द्रः. १९ नृपाणाम्.

स्वयं रामो येन विडम्बितोऽपि विधिना चान्ये जने का कथा ॥ १०१ ॥ जामाता[1] पुरुषोत्तमो भगवती लक्ष्मीः स्वयं कन्यका दूतो यस्य बभूव कौशिकमुनिर्यज्वा वसिष्ठः स्वयम् । दाता श्रीजनकः प्रदानसमये चैकादशस्था ग्रहाः किं ब्रूमो भवितव्यतां हतविधे रामोऽपि यातो वनम् ॥१०२॥ आसाद्यापि महोदधिं न वितृषो जातो जलैर्वाडवो मेघं प्राप्य न चातकोऽपि चरणौ भानुं न लेभेऽरुणः । चन्द्रः शंकरशेखरेऽपि निवसन्पक्षक्षये क्षीयते प्रायः सज्जनसंगतोऽपि लभते दैवानुरूपं फलम् ॥ १०३ ॥ आहारे शुचिता ध्वनौ मधुरता वाचालता माधवे[2] बन्धौ निर्ममता जनेषु निरता नीडे[3] पराधीनता । एतैरेव गुणैर्युताः[4] परभृतस्त्यक्त्वा किमेते जना वन्दन्ते खलु खञ्जनं कृमिभुजं चित्रा गतिः कर्मणाम् ॥ १०४ ॥ गीतं कोकिल ते मुदा रसविदः शृण्वन्ति कर्णामृतं नो किंचिद्वितरन्ति ते तरुदलैरेव स्वयं जीवसि । कर्णायुर्हरमुद्गिरन्ति विरुतं काकास्तु तेभ्यो बलिं प्राज्ञा एव दिशन्ति हन्त धिगिदं वक्रं विधेः क्रीडितम् ॥ १०५ ॥ छित्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां पर्यन्ताग्निशिखाकलापजटिलान्निःसृत्य दूरं वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः कूपान्तः पतितः करोति विमुखे किं वा विधौ पौरुषम् ॥ १०६ ॥ लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकरः स्थित्यर्थे परमेश्वराभ्युपगतस्तेनापि मूर्ध्ना धृतः । वृद्धिं शीतकरस्तथापि न गतः क्षीणः परं प्रत्युत प्रायः प्राक्तनमेव कर्म बलवत्कः कस्य कर्तुं क्षमः ॥ १०७ ॥ रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं वृष्णीनां[6] निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् । कारागारनिषेवणं च मरणं संचिन्त्य लङ्केश्वरे सर्वः कालवशेन नश्यति नरः को वा परित्रायते ॥१०८॥ भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः । तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ १०९ ॥ माता यस्य धराधरेन्द्रदुहिता तातो महेशस्तथा भ्राता विघ्नकुलान्तकः पितृसखो देवो धनानां पतिः । ख्यातः क्रौञ्चविदारणे सुरपतेः सेनाग्रगः षण्मुखस्तद्दुर्दैवबलेन कुत्र घटते नाद्यापि पाणिग्रहः[11] ॥ ११० ॥ कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् । अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधयन्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥ १११ ॥ तुल्यं भूभृति[1] जन्म तुल्यमुभयोर्मूल्यं च तुल्यं वपुस्तुल्यं दार्ढ्यमुदग्र[3]टङ्कदलनं तुल्यं च पाषाणयोः । एकस्याखिलवन्दनाय विधिना देवत्वमारोपितं तद्द्वारे विहिता परस्य तु पदाघातास्पदं देहली ॥ ११२ ॥ यद्ब्रह्म धनुरीश्वरस्य समरे यज्जामदग्न्यो जितस्त्यक्त्वा येन गुरोर्गिरा वसुमती सेतुः पयोधौ कृतः । एकैकं दशकंधरक्षयकृतो रामस्य किं वर्ण्यते दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषताम् ॥ ११३ ॥ खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः । तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् ॥ ११४ ॥ भूयिष्ठं द्रविणात्मजं[4] जनयितुं लिप्सावता चेतसा नार्यः पञ्च मया क्रमेण कुलजाः काले समुद्वाहिताः[5] । सद्विद्या कविता विदेशवसतिः सेवा तथाभ्यर्थना दैवेन प्रतिबन्धकेन युगपद्वन्ध्याः[6] समस्ताः कृताः ॥ ११५ ॥ मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे[7] वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु । आकाशं सकलं प्रयातु खगवत्कृत्वा प्रयत्नं परं नोऽभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ ११६ ॥ लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधेर्देवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शंभुना । अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ॥ ११७ ॥ अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् । वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया लीलादुर्ललिताद्भुतव्यसनिने दैवाय तस्मै नमः ॥ ११८ ॥ जन्म ब्रह्मकुलेऽग्रजो धनपतिर्यः कुम्भकर्णाग्रजः सूनुर्वासवजित्स्वयं दशशिरा दोर्दण्डका विंशतिः । अस्त्रं कामगमं विमानमजयं मध्येसमुद्रं पुरी सर्वं निष्फलमेतदेव नियतं दैवं परं दुर्जयम् ॥ ११९ ॥ यत्राखण्डल[11]दन्तिदन्तमुसलान्याखण्डितान्याहवे धारा यत्र पिनाकपाणि[12]परशोराकुण्ठितामागताः । तन्मे[13] तावदुरो नृसिंहकरजैर्यद्दीर्यते सांप्रतं दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥ १२० ॥ दोःसंदेहर्वशंवदत्रिभुवनश्रीगर्वसर्वंकषः कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः । यत्रायं स्वयमस्ति सेयममरावत्यापि वन्द्या पुरी नीता मर्कटकेन कामपि दशां

---

१ यस्मिन्विवाहे इति शेषः. २ वसन्ते. ३ कुलाये. ४ कोकिलाः. ५ मृगबन्धनी. ६ यादववंशीयानाम्. ७ मञ्जूषासंकुचितशरीरस्य. ८ पार्वती ९ गजाननः. १० कुबेरः. ११ विवाहः.

१ पर्वते. २ दृढता. ३ उदग्रा ये टङ्कास्तैर्दलनम्. ४ द्रविणं द्रव्यं तदेवात्मजः पुत्रस्तम्. ५ विवाहिताः. ६ निष्फलाः. ७ युद्धे. ८ चन्द्रः. ९ वज्रताम्. १० इच्छानुकूलगति. ११ इन्द्रस्यैरावतः. १२ शिवः. १३ हिरण्यकशिपोरुक्तिरियम्. १४ समूहः.

धिग्दैवमावश्यकम् ॥ १२१ ॥ येनाकारि मृणालपत्रमशनं क्रीडा करिण्या सह स्वच्छन्दं भ्रमणं च कन्दरगणे पीतं पयो नैर्झरम् । सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैर्यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥ १२२ ॥ दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् । सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ १२३ ॥ कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्रामति । इत्थं सत्यहिना स दष्ट इषुणा श्येनोऽपि तेनाहतस्तूर्णं तौ तु यमालयं प्रति गतौ दैवी विचित्रा गतिः ॥ १२४ ॥ [1]रेवावारिणि वारणेन विपुले राजीवराजीरजःपुञ्जापिञ्जरितोर्मिणि प्रविगलद्दानाम्बुगन्धोत्कटे । धौतं येन मृगारिरक्तमसकृद्दन्तान्तरालस्थितं कोष्णं सोऽपि पयः पपौ हतविधेः को गोचरे नागतः ॥ १२५ ॥ केषांचिन्निजवेश्मनि स्थितवतामालस्यनिद्रावतां दृश्यन्ते फलिता लता इव फलैराचूलमूलं श्रियः । अद्रिं लङ्घयतां गिरिं प्रयततां पृथ्वीतले धावतामुद्योगव्यवसायसाहसधियां तन्नास्ति [2]यत्पच्यते ॥ १२६ ॥ स्थाल्यां [3]वैदूर्यमय्यां पचति तिलकणांश्चान्दनैरिन्धनौघैः सौवर्णैर्लाङ्गलाग्रैर्निखनति वसुधामर्कमूलस्य हेतोः । छित्वा कर्पूरखण्डान्वृतिमिह कुरुते [5]कोद्रवाणां समन्तात्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥ १२७ ॥ पञ्चैते पाण्डुपुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः । ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेखा ॥ १२८ ॥ यत्र श्यामाकबीजान्यपि चटकवधूचञ्चुकोटिच्युतानि प्रोञ्चीयन्ते स्ववेश्मन्यशनविरहिते निर्धनश्रोत्रियाणाम् । दैवे दातर्यकस्माच्चटुलशिशुकराकृष्टहारावलीतो भ्रष्टास्तत्रैव दृष्टा युवतिभिरलसं चूर्णिता मौक्तिकौघाः ॥ १२९ ॥ यन्माता विष्णुनाभिः [6]पतिरपि च सुतो यस्य साक्षात्प्रजानां लक्ष्मीर्यत्संश्रयाभूद्यदपि करतले भारती संबभार । भानुर्यस्यास्ति मित्रं तदपि सरसिजं क्षीणमिन्दोर्मयूखैस्त्रातुं नैवोत्सहन्ते गतसुकृतफलं प्राप्तकालं सहायाः ॥ १३० ॥ कुत्रायोध्या क्व रामो दशरथवचनाद्दण्डकारण्यमागात्क्वासौ मारीचनामा कनकमयमृगः कुत्र सीतापहारः । सुग्रीवे राममैत्री क्व जनकतनयान्वेषणे प्रेषितोऽहं योऽर्थोऽसंभावनीयस्तमपि घटयते क्रूरकर्मा विधाता ॥ १३१ ॥

१ नर्मदोदके. २ भोजनार्थमिति शेषः. ३ रत्नविशेषः. ४ आर्तिक्यम्. ५ 'बाजरी' इति प्रसिद्धधान्यानाम्. ६ महर्षि.

## जरावर्णनम्

अलंकरोति हि जरा राजामात्यभिषग्यतीन् । विडम्बयति पण्यस्त्रीमल्लगायनसेवकान् ॥ १ ॥ क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः । निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ २ ॥ शशिनीव हिमार्तानां धर्मार्तानां रवाविव । मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ ॥ ३ ॥ [2]मलिनैरलकैरेतैः शुक्लत्वं प्रकटीकृतम् । तद्दोषादिव निर्याता [3]वदनाद्दनावलिः ॥ ४ ॥ [4]वृद्धत्वानलदग्धस्य सारयौवनवस्तुनः । दृश्यते देहगेहेषु भस्मैव [5]पलितच्छलात् ॥ ५ ॥ वीक्ष्यते पलित[6]श्रेणिर्नैव वृद्धस्य मूर्धनि । [7]मृषैव नीतं जन्मेति किं तु भस्म विधिर्न्यधात् ॥ ६ ॥ इयत्यामपि सामग्र्यां [9]सुकृतं न कृतं त्वया । इतीव कुपितो दन्तान[10]न्तकः पातयत्यलम् ॥ ७ ॥ यममिव करधृतदण्डं हरिमिव [11]सगदं शशाङ्कमिव वक्रम् । शिवमिव च [12]विरूपाक्षं जरा करोत्यकृतपुण्यमपि ॥ ८ ॥ वदनं [13]दशनविहीनं वाचो न परिस्फुटा गता शक्तिः । अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ ९ ॥ पठ्ठ रटति पलित[14]दूतो मस्तकमासाद्य सर्वलोकस्य । परिभवति जरा मरणं कुरु धर्मं विरम पापेभ्यः ॥ १० ॥ [15]शतमन्युं [16]दण्डधरं [17]कुबेरमपि [18]शूलिनं तथा [19]गदिनम् । कुरुते जरा न सा किं कुर्याच्चीरूपनामकं मनुजम् ॥ ११ ॥ [20]कृष्णवर्त्मनि गुणान्गणयन्ती [21]जीवनेऽपि [22]जरयन्त्यनुरागम् । आगता बत जरेव [23]हिमानी सेव्यतां [24]सुरतरंगवतीयम् ॥ १२ ॥ कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् । परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं भजध्वं रमानाथपादारविन्दम् ॥ १३ ॥ वर्णं सितं समभिवीक्ष्य शिरो[25]रुहाणां स्थाने जरा परिभवस्य यदेव पुंसाम् । [26]आरोपितास्थिशकलं [27]परिहृत्य

१ हनुमत उक्तिरियम्. २ केशैः. ३ दन्तपङ्क्तिः. ४ वार्धक्यं तदेवानलस्तेन दग्धस्य. ५ पलितमिषेण. ६ पङ्क्तिः. ७ व्यर्थमेव. ८ निक्षिप्तवान्. ९ पुण्यम्. १० यमः. ११ गदया आयुधविशेषेण सहितम्; पक्षे,–गदेन रोगेण सहितम्. १२ विकृताक्षम्. १३ दन्तरहितम्. १४ शुक्लकेशत्वमेव दूतः. १५ इन्द्रम्; पक्षे,–कोपनम्. १६ यमम्; पक्षे,–यष्टिधरम्. १७ धनाधिपम्; पक्षे,–कुत्सितशरीरम्. १८ शिवम्; पक्षे,–शूलयुक्तम्. १९ विष्णुम्; पक्षे,–गदयुक्तम्. २० अग्नौ; पक्षे,–कृष्णस्य वर्त्म मार्गस्तस्मिन्. २१ उदके. पक्षे,–प्राणे. २२ दूरीकुर्वाणा. २३ हिमसंहतिः. २४ सुरते रङ्गवती; पक्षे,–सुराणां तरंगवती भागीरथी. २५ केशानाम्. २६ आरोपितमस्थ्नः शकलं खण्डं यस्मिन्. २७ अस्पृश्यत्वादिति भावः.

यान्ति चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १४ ॥ [1]श्रुतिः शिथिलतां गता [2]स्मृतिरपि प्रनष्टाधुना [3]गतिर्विपथमागता विगलिता [4]द्विजानां ततिः । [5]गवामपि च संहतिः समुचितक्रियातश्च्युता कृता न जरया तया कलियुगस्य [6]साधर्म्यता ॥ १५ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्य[7]मित्रायते ॥ १६ ॥ स्थूलप्रावरणोऽति[8]वृत्तकथकः कासाश्रुलालाविलो भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् । शृण्वन्[9]धृष्टवधूवचांसि धनुषा संत्रासयन्वायसानाशापाशनिबद्धजीवविभवो वृद्धो गृहे [10]ग्लायति ॥ १७ ॥ पादौ [11]संस्तम्भयन्ती मुखमपि नमयन्त्यङ्गमाकुब्जयन्ती हस्तावुत्कम्पयन्ती प्रणयिजनवचो न श्रुतीः श्रावयन्ती । रत्या[12]मुद्वेजयन्ती [13]वलिततनुमती [14]नूतनोढा जरा वा तुल्या [15]पूर्वा तु [16]पुंस[17]स्त्रसति बत [18]परा [19]भीतिहेतुर्नरस्य ॥ १८ ॥

## क्षुधावर्णनम्

नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः । नास्त्याहारसमं सौख्यं नास्ति क्रोधसमो रिपुः ॥ १ ॥ शय्या वस्त्रं चन्दनं [20]चारु हास्यं वीणा वाणी सुन्दरी या च नारी । न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ २ ॥

## भिक्षुकः

प्रतिदिनमयत्नसुलभे भिक्षुकजननि साधुसङ्घकल्पलते । नृपनमननरकतारिणि भगवति भिक्षे नमस्तुभ्यम् ॥ १ ॥ अगस्तितुल्याश्च घृताब्धिशोषणे [21]दम्भोलितुल्या वटिकाद्रिभेदने । शाकावलीका[22]ननवह्निरूपास्त एव भट्टा इतरे [23]भटाश्च ॥ २ ॥ [24]अग्र्यो [25]भुक्तिमतां प्रयोगसमये मन्त्रेषु पृष्ठं गतः पाकागारगतस्तु पाचकमनस्तोषाय [26]वाचस्पतिः । [27]उच्चायां निरतो रतोऽर्भकगणे पिण्डेषु दत्तादरो नानाश्राद्धगणैकचालितमना भट्टोत्तमो राजते ॥ ३ ॥ उच्चैर[1]ध्ययनं पुरातनकथा स्त्रीभिः सहालापनं तासा[2]मर्भकलालनं [3]पतिनुतिस्तत्पाकमिथ्यास्तुतिः । [4]आदेशस्य करावलम्बनविधिः पाण्डित्यलेखक्रिया [5]होरागारुडमन्त्रतन्त्रकविधिर्भिक्षोर्गुणा द्वादश ॥ ४ ॥ प्रातः क्षालितलोचनाः करतले चञ्चत्पवित्राङ्कुरास्तत्तस्याननिवेशितोर्ध्वतिलकाश्चै[6]लान्तबद्धाक्षताः । को जातश्च मृतोऽथवा मृततिथिः कस्यालये वर्तते चेत्थं हर्षशतैर्युताः प्रतिदिनं धावन्त्यहो भिक्षुकाः ॥ ५ ॥

## परगृहवासः

शिरसा धार्यमाणोऽपि सोमः [7]सोमेन शंभुना । तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥ १ ॥ विना कार्येण ये मूढा गच्छन्ति परमन्दिरम् । अवश्यं लघुतां यान्ति कृष्णपक्षे यथा शशी ॥ २ ॥ कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् । कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥ ३ ॥ [8]उडुगणपरिवारो नायकोऽप्यो[9]षधीनाममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः । भवति विगत[10]रश्मिर्मण्डलं प्राप्य [11]भानोः [12]परसदननिविष्टः को [13]लघुत्वं न याति ॥ ४ ॥

## उदरपूरणदूषणम्

अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः । वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे ॥ १ ॥ किमकारि न कार्पण्यं कस्यालङ्घि न देहली । अस्य पापोदरस्यार्थे किमनाटि न नाटकम् ॥ २ ॥ एकः स एव जीवति हृदयविहीनोऽपि सहृदयो राहुः । यः सकल[14]लघिमकारणमुदरं न [15]बिभर्ति [16]दुःपूरम् ॥ ३ ॥ कंधरां [17]समपहाय कं धरां प्राप्य [18]संयति जहास कस्यचित् । मां किलानमयतः स्वपूर्तये दुर्भरात्किमुदराद्वियोगतः ॥ ४ ॥ अहितहितविचारशून्यबुद्धेः [19]श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य । उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः ॥ ५ ॥ इयमुदरदरी दुरन्तपूरा यदि न भवेद[20]भिमानभङ्गभूमिः । क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥ ६ ॥ अप-

१ कर्णेन्द्रियम्; पक्षे,-वेदः. २ स्मरणम्; पक्षे,-मन्वादिवाक्यम्. ३ आचरणम्; पक्षे,-गमनम्. ४ दन्तानाम्; पक्षे,-ब्राह्मणानाम्. ५ इन्द्रियाणाम्; पक्षे,-धेनूनाम्. ६ समानधर्मत्वम्. ७ शत्रुवदाचरति. ८ अतिक्रान्तानि वृत्तानि कथयतीति. ९ धाष्टर्ययुक्तस्त्रीवचनानि. १० खेदं प्राप्नोति. ११ पादयोः स्तम्भनं कुर्वती. १२ उद्वेगं कुर्वती. १३ वलयः चर्मवलयः संजाता यस्याः सा वलिता, सा चासौ तनुश्च तद्वती; पक्षे,-वलितं वलनं तद्युक्ताया तद्वती. १४ नवीनविवाहिता स्त्री. १५ नूतनोढा. १६ पुरुषात्. १७ उद्वेगं प्राप्नोति. १८ जरा. १९ भयकारणम्. २० सुन्दरम्. २१ वज्रसदृशाः. २२ अरण्यम्. २३ योद्धारः. २४ अग्रगण्यः. २५ भोक्तृणाम्. २६ बृहस्पतिवत् कुशलः. २७ दक्षिणायाम्; अयं तु वैदिकैरेवावगम्यो दक्षिणासंबद्धः सांकेतिकः शब्दः.

१ पठनम्. २ शिशुः. ३ स्तुतिः. ४ भाविशुभाशुभफलकथनप्रागल्भ्यमिति भावः. ५ जन्मपत्रादिफलकथनम्. ६ वस्त्रान्ते. ७ उमासहितेन. ८ नक्षत्रसमूहः परिवारो यस्य. ९ वनस्पतीनाम्. १० निस्तेजाः. ११ सूर्यस्य. १२ परगृहम्. १३ हीनदशाम्. १४ लघुत्वकारणम्. १५ धारयति. १६ दुःखेन पूरयितुं शक्यम्. १७ मस्तकम्. १८ युद्धे. १९ श्रौतसिद्धान्तैः. २० अवमानकारणम्.

हरति महत्त्वं प्रार्थना किं न जाने जनयति गुरुलज्जामित्यहं किं न वेद्मि । तदपि वद वदान्यं तं सदा प्रत्यहं मां जठरपिठरवर्ती वह्निरर्थीकरोति ॥ ७ ॥ गङ्गातरंगकणशीकरशीतलानि विद्याधराध्युषितचारुशिलातलानि । स्थानानि किं हिमवतः प्रलयं गतानि यत्सावमानपरपिण्डरतो मनुष्यः ॥ ८ ॥ अभिमतमहामानग्रन्थिप्रभेदपटीयसी गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका । विपुलविलसल्लज्जावल्लीवितानकुठारिका जठरपिठरी दुष्पूरेयं करोति विडम्बनम् ॥ ९ ॥ ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः । तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ १० ॥ मातर्नातः परमनुचितं यत्खलानां पुरस्तादस्ताशङ्कं जठरपिठरीपूर्तये नर्तितासि । तत्क्षन्तव्यं सहजसरले वत्सले वाणि कुर्यां प्रायश्चित्तं गुणगणनया गोपवेषस्य विष्णोः ॥ ११ ॥ दीनो दीनमुखैस्तथैव शिशुकैराकृष्टजीर्णाम्बरां क्रोशद्भिः क्षुधितैर्निरन्नविधुरां पश्येन्न चेद्गेहिनीम् । याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ १२ ॥ हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः । संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १३ ॥ किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः । वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां दुःखोपात्ताल्पवित्तस्मयपवनवशान्नर्तितभ्रूलतानि ॥ १४ ॥

## सेवकनिन्दा

स्वाभिप्रायपरोक्षस्य परचित्तानुवर्तिनः । स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम् ॥ १ ॥ चलेषु स्वामिचित्तेषु सुलभे पिशुने जने । यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ २ ॥ सेवा श्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् । स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः ॥ ३ ॥ सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् । स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ ४ ॥ वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् । पुंसां विवेकहीनानां सेवया न धनार्जनम् ॥ ५ ॥ या प्रकृत्यैव चपला निपतत्यशुचावपि । स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ ६ ॥ मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् । प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ ७ ॥ तावज्जन्मातिदुःखाय ततो दुर्गतता सदा । तत्रापि सेवया वृत्तिरहो दुःखपरम्परा ॥ ८ ॥ नाश्नाति सेवयौत्सुक्याद्विनिद्रो न प्रबुध्यते । न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ ९ ॥ भूशय्या ब्रह्मचर्यं च कृशत्वं लघु भोजनम् । सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ १० ॥ शीतातपादिकष्टानि सहते यानि सेवकः । धनाय तानि चाल्पानि यदि धर्माय मुच्यते ॥ ११ ॥ मृदुनातिसुवृत्तेन सुमृष्टेनातिहारिणा । मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ १२ ॥ स्वयं जहाति सेवकः सुखं च मानमेव च । यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १३ ॥ प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ १४ ॥ मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा धृष्टः पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः । क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १५ ॥ विज्ञैः स्निग्धैरुपकृतमपि द्वेषतामेति कश्चित्साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति । चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १६ ॥ भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि । व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ १७ ॥ आहारे वडवानलश्च शयने यः कुम्भकर्णायते संदेशे बधिरः पलायनविधौ सिंहः शृगालो रणे । अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥ १८ ॥

## जीवितसाफल्यम्

यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः । सफलं जीवितं तस्य नात्मार्थे को हि जीवति ॥ १ ॥ यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा । अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ २ ॥ वाणी रसवती यस्य भार्या

---

१ अम्बुकणाः. २ समर्थां. ३ जठरभाण्डम्. ४ उपहासः. ५ विषयाक्षेपेण पर्यस्ता भ्रष्टा बुद्धिर्यस्य. ६ शिखरी पर्वतस्तस्य कुहरं बिलं तत्संबन्धी यो ग्रावा पाषाणः स एव शय्या तस्यां निषण्ण उपविष्टः. ७ उदरभाण्डम्. ८ गोपवेषधारिणः कृष्णस्य. ९ कृपणः. १० रोदनं कुर्वद्भिः. ११ भार्या. १२ नागानाम्. १३ अविनीतानाम्. १४ गर्वः. १५ सूचके. १६ सेवकाः. १७ विक्रीता असवः प्राणा येन सः.

१ नाशितम्. २ भिक्षा. ३ भारवाहकत्वेनोपजीवनम्. ४ इच्छति. ५ बहुभाषकः. ६ भयशीलः. ७ अनर्थः नाशो वा. ८ समुद्रस्य. ९ वार्ताहरणे. १० पादविकलः. ११ रोदने.

पुत्रवती सती । लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ ३ ॥ स जीवति यशो[1] यस्य कीर्तिर्यस्य स जीवति । अयशोऽकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥ ४ ॥ चलं वित्तं चलं चित्तं चले जीवितयौवने । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥ ५ ॥ यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति । काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ६ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । [2]परिवर्तिनि संसारे मृतः को वा न जायते ॥ ७ ॥ अञ्जलि[3]रकारि लोकैर्ग्लानि[4]र्निर्मनास्वैव रञ्जिता[5] जगती । संध्याया इव वसतिः स्वल्पापि सखे सुखायैव ॥ ८ ॥ यज्जीवति क्षणमपि प्रथितं[6] मनुष्यैर्विज्ञानविक्रमयशोभिरभज्यमानम् । तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ९ ॥ यो नात्मजे न च गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च बन्धुवर्गे । किं तस्य जीवितफलं हि मनुष्यलोके काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ १० ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् । संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न वाऽधो ब्रह्माण्डो[7]दुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ ११ ॥

## ऋणम्

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ १ ॥ पापं कर्तुमृणं[8] कर्तुं मन्यन्ते मानवाः सुखम् । परिणामोऽतिगहनो महतामपि नाशकृत् ॥ २ ॥ लोकद्वयप्रतिभयैकनिदानमे[9]तद्धिक्प्राणिनामृणमहो [10]परिणामघोरम् । एकः स एव हि पुमान्परमस्ति लोके क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ३ ॥

## प्रवासः

यो न संचरते देशान्यो न सेवेत पण्डितान् । तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ॥ १ ॥ यस्तु संचरते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥ २ ॥ देशे देशे किमपि कुतुका[11]दद्भुतं लोक[12]मानाः संपाद्यैव [13]द्रविणम[14]तुलं स[15]द्म [16]भूयोऽप्यवाप्य । संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ३ ॥ आकिंचन्या[1]दतिपरिचयाज्जाययोपेक्ष्य[2]माणो भूपालानामननुसरणाद्विभ्यदेवाखिलेभ्यः । गेहे तिष्ठन्कुमतिरलसः कूपकूर्मैः स[3]धर्मा किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ॥ ४ ॥ तीर्थानामवलोकनं परिचयः सर्वत्र वित्तार्जनं नानाश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः । एते सन्ति गुणाः प्रवासविषये दोषोऽस्ति चैको महान्यन्मुग्धा[4]मधुराधरा[5]धरसुधापानं विना स्थीयते ॥ ५ ॥

## व्यापारिणः

आसीत्सत्ययुगे बलिस्तदनु च त्रेतायुगे भार्गवो रामः सत्यपराक्रमोऽथ भगवान्धर्मस्तथा द्वापरे । दाता कोऽपि न चास्ति संप्रति कलौ जीवन्ति केनार्थिनश्चेत्येवं कृतनिश्चयेन विधिना व्यापारिणो निर्मिताः ॥ १ ॥ शक्रोद्याननिवासितामधिगतो दाता स कल्पद्रुमः पातालं किल कामधेनुरपि सा कामप्रसूरन्वगात् । इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिरक्षणार्थमधुना व्यापारिणो निर्मिताः ॥२॥ कौपीनं धृतवान्हरोऽपि भगवान्विष्णुः प्रविष्टो जलं वाराशिरपेयतामुपगतः को नाम दातुं क्षमः । इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिजीवनार्थमधुना व्यापारिणो निर्मिताः ॥ ३ ॥ व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् । यो गृहेष्वेव निद्राति द[6]रिद्राति स दुर्मतिः ॥ ४ ॥

## कलिमहिमा

यवनैरवनिः क्रान्ता हिन्दवो विन्ध्यमाविशन् । बलिना वेदमार्गोऽयं कलिना कवलीकृतः ॥ १ ॥ सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति । कुमार्यश्च प्रसूयन्ते प्राप्ते कलियुगे सदा ॥ २ ॥ परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात् । परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥ ३ ॥ राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु । ब्राह्मणानेव बाधन्ते तत्रापि श्रोत्रियान्कृशान् ॥ ४ ॥ कुशलाः शब्दवार्तायां वृत्तिहीनाः सुरागिणः । कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ५ ॥ वाग्उच्चारोत्सवं मात्रं तत्क्रियां कर्तुमक्षमाः । कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ६ ॥ कृते च रेणुका कृत्या त्रेतायां जानकी तथा । द्वापरे द्रौपदी कृत्या कलौ कृत्या गृहे गृहे ॥ ७ ॥ मद्युग-

---

१ दानादिप्रभवा कीर्तिः शौर्यादिप्रभवं यशः. २ भ्रमणशीले. ३ अर्घदानार्थमिति भावः; पक्षे,–अञ्जलिकरणेन लोके आज्ञाकारित्वं ध्वन्यते. ४ निस्तेजस्कत्वम्; पक्षे,–असामर्थ्यम्. ५ आरक्ततां नीता; पक्षे,–अनुरागवती कृता. ६ प्रख्यातम्. ७ उदुम्बरफले यथा जन्तवस्तिष्ठन्ति तथा तादृशा मनुष्या ब्रह्माण्डरूपोदुम्बरे तिष्ठन्ति. ८ ऋणम्. ९ कारणम्. १० परिणामे भयंकरम्. ११ आश्चर्यम्. १२ वीक्षमाणाः. १३ द्रव्यम्. १४ बहुलम्. १५ गृहम्. १६ पुनः.

१ दारिद्र्यात्. २ अवमानितः. ३ सदृशः. ४ षोडशवार्षिकी. ५ अधरोष्ठः. ६ दरिद्री भवति.

मध्योत्पन्नाः कृतयुगधर्मानुसारिणः किमिति । इति रोषादिव कलिना पीड्यन्ते साधवो बलिना ॥ ८ ॥ नाधीते[1]ऽत्र जनो यदि कश्चिदधीते शते सहस्रे वा । दुस्तर्केषु श्राम्यति दूरीकुरुते श्रुतिस्मृतिसुतर्कान् ॥ ९ ॥ सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते जनकश्चिरायुः । परेषु मैत्री स्वजनेषु वैरं पश्यन्तु लोकाः कलिकौतुकानि ॥ १० ॥ एतादृशे कलियुगेऽपि शतेषु कश्चिज्जातादरो जगति यः श्रुतिमार्ग एव । यत्किंचिदाचरतु पात्रमसौ स्तुतीनां श्लाघ्यं मितापमपि किं न मरौ[3] सरश्चेत्[2] ॥ ११ ॥ उपनयनविवाहावुत्सवैकप्रधानौ कलिविभवत एषां कालभेदानभिज्ञाः । विजहति न कदाचिद्वेदपाठैकयोग्ये वयसि च यवनानीवाचनाभ्यासमेते ॥ १२ ॥ न देवे देवत्वं कपटपटवस्तापसजना जनो मिथ्यावादी विरलतरवृष्टिर्जलधरः । प्रसङ्गो नीचानामवनि[4]पतयो दुष्टमनसो जना भ्रष्टा नष्टा अहह कलिकालः प्रभवति ॥ १३ ॥ गता गीता नाशं क्वचिदपि पुराणं व्यपगतं विलीनाः स्मृत्यर्था निगमनिचयो दूरमगमत् । इदानीं रैदासप्रभृतिवचनैर्मोक्षपदवी तदेवं जानीमो कलियुग तवैवैष महिमा ॥ १४ ॥ अपरैर्व्यापारैरहरिह नयन्तोऽशनदशास्वथ स्नाताः संध्यां विदधति न जातु स्वसमये । त्यजन्तः स्वां वृत्तिं द्विजकुलभवग्रामगणकीभवन्तो हन्तामी कथमपि च जीवन्ति बहवः ॥ १५ ॥ कुक्षेः पूर्त्यै यवनविततेर्भृत्यकृत्यानि कर्तुं विक्रीणीते वपुरपि निजं वेतनैरेतदास्ताम् । विप्रो भूत्वाप्यहह गणनानैपुणैर्वञ्चयित्वा स्वर्णस्तेयं रचयति जनः स्वामिनां पोषकाणाम् ॥ १६ ॥ वेदव्यासः स नव दश यो वेद वेदाक्षराणि श्लोकं त्वेकं परिपठति यः स स्वयं जीव[5] एव । आपस्तम्बः स इह कलयेत्सम्यगौ[6]पासनं यः कष्टं शिष्टक्षितिकृति कलौ कार्श्यमृ[7]च्छन्ति विद्याः ॥ १७ ॥ ये कायस्थजनाश्च ये नृपसुता ये च द्विजाः शस्त्रिणस्ते यत्नादनुसृत्य निर्दयतया शुष्कास्तुरुष्काधिपान्[8] । देवान्भूमिसुरांश्च पान्ति कृतिनस्ते चेन्मुधोदासते[9] ब्राह्मण्याय जलाञ्जलिः किल भुवि प्राज्ञैः प्रदेयो भवेत् ॥ १८ ॥ आक्रान्तासु वसुंधरासु यवनैरासेतुहेमाचलं विद्राणे[10] क्षितिभृद्गणे विकरुणे निद्राति नारायणे । निर्विघ्नप्रसरे कलावपि बलान्निष्कण्टकं वैदिकं पन्थानं किल तत्र तत्र परिपाल्येको हि लोकोत्तरः ॥ १९ ॥ अज्ञानामविरामलौकिकवचोभाजाममीषां पुनर्मन्त्रोच्चारण एव पर्यवसितं मौनव्रतं कर्मसु । ग्रामायव्ययलेखनेन नयतां कालानशेषानहो पारम्पर्यत ईदृशामिह नृणां ब्राह्मण्यमन्यादृशम् ॥ २० ॥ ये मुष्णन्ति निशि प्रविश्य भवनं ये वा बलात्कानने नैते स्वामिधनं हरन्ति ननु तान्निन्दन्ति चोरा इति । सद्यो हन्त हरन्ति पोषकधनं संख्यां विपर्यस्य ये कष्टं तानपि वञ्चकानिह पुरस्कुर्वन्ति सर्वे जनाः ॥ २१ ॥ सौहार्दं शशशृङ्गवत्सुजनता वन्ध्यासुतस्पर्धिनी[1] किं ब्रूमो गुणिनां गुणग्रहिलता व्योमप्रसूनोपमा । दृष्टिः शीलसुधाहलाहलमयी राज्ञां सुधामण्डले लोके संप्रति यत्कले स जयति त्वद्दृष्टिलीलारसः ॥ २२ ॥ निर्वीर्या पृथिवी निरोषधिरसा नीचा महत्त्वं गता भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः । भार्या भर्तृविरोधिनी पररता पुत्राः पितुर्द्वेषिणो हा कष्टं खलु वर्तते कलियुगे धन्या नरा ये मृताः ॥ २३ ॥ दूरादर्थिनमाकलय्य भजते सद्यो विरूपाक्षतां[2] सङ्गे किं च विरोचनत्वमथ[3] संस्थाने नृसिंहाकृतिम्[4] । पाण्डित्योक्तिषु वक्रतुण्डरचनां[5] दाने त्वपर्णात्मतामेकः[6] पञ्चसुरात्मकः प्रभुरहो भाग्यैः कलौ लभ्यते ॥ २४ ॥ धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरे गतं पृथ्वी मन्दफला नराः कपटिनश्चित्तं च शाठ्योर्जितम् । राजानोऽर्थपरा न रक्षणपराः पुत्राः पितुर्द्वेषिणः साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ॥ २५ ॥ सन्तः क्वापि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते विद्वांसोऽपि न सन्ति सन्ति यदि वा मात्सर्ययुक्ताश्च ते । राजानोऽपि न सन्ति सन्ति यदि वा लोभाद्धनग्राहिणो दातारोऽपि न सन्ति सन्ति यदि वा सेवानुकूलाः कलौ ॥ २६ ॥ हर्म्यस्थानमधर्मकर्मविततेर्दुर्मानहैमासनं[7] शास्त्रस्तोमललाटभूलिपिलयः शान्तिः स्वानामपि । सर्वाम्नाय[9]वचःसमापनदिनं संस्था[10] सदर्चा[8]विधेरर्थाशाजनिभूरभूदिह महानर्थावहोऽयं कलिः ॥ २७ ॥ प्रातर्हन्त कृताप्लवो[11]ऽपि रजकस्पृष्टाञ्जडो रासभै[12]रूढान्धारयते पटाननुदिनं धृत्वा बहिर्गच्छति । गत्वा म्लेच्छमुखाशुचीन्स्पृशति च स्पृष्ट्वापि न स्नात्यहो न स्नातोऽप्यथ भुङ्क्त एव चपलो भुक्त्वापि न व्रीडति[13] ॥ २८ ॥ शस्त्रैर्जीवति शास्त्रमुज्झति परं शूद्राहृतैरम्बुभिः स्नात्वाचामति देवताः स्नपयति स्वैरं पचत्योदनम्[14] । उच्छिष्टान्न बिभेति याति यवनैरुच्चावचैः[15] संगतिं

१ अध्ययनं न करोति. २ स्वल्पजलम्. ३ मरुदेशे. ४ राजानः. ५ बृहस्पतिः. ६ सार्तोग्निम्. ७ प्राप्नुवन्ति. ८ म्लेच्छविशेषान्. ९ उदासीना भवेयुः. १० नष्टे.

१ वन्ध्यासुततुल्या. २ विकृतनेत्रत्वम्; पक्षे,–शिवताम्; ३ रुचिराहित्यम्; पक्षे,–सूर्यत्वम्. ४ नृसिंहस्येव क्रूरामाकृतिम्; पक्षे,–नृसिंहस्याकृतिम्. ५ वक्रा या तुण्डस्य रचना ताम्; मुखवक्रत्वमित्यर्थः; पक्षे,–वक्रतुण्डस्य गणपतेरिव या रचना ताम्. गणेशरूपमित्यर्थः. ६ न विद्यन्ते पर्णान्यपि यस्य ताम्. अकिंचनत्वमित्यर्थः; पक्षे,–अपर्णा पार्वती तद्रूपताम्. ७ सुवर्णनिर्मितमासनम्. ८ यज्ञानाम्. ९ वेदवचसाम्. १० मरणम्. ११ स्नानम्. १२ गर्दभैः. १३ न लज्जते. १४ अन्नम्. १५ उच्चनीचैरनेकभेदभिन्नैः.

मातङ्गान्निकटं गतानगणयन्मार्गान्मुहुर्[२]गाहते ॥ २९ ॥ नीचैर्दुर्यवनैः[३] शुनीभिरपि वा निःशङ्कमालोकितं भुङ्क्ते पङ्क्तिविदूषकैः[४] सह नरैरज्ञातवेदाक्षरैः । मद्यास्वादनमत्तचित्तजनतामोहाय भीहानितः कर्माण्यारभते श्रुतिस्मृतिवचोदूराण्य[५]साराण्यहो[६] ॥ ३० ॥ विद्वत्ता वसुधातले विगलिता पाण्डित्यधर्मो गतः श्रोतॄणां हृदयेष्वबुद्धिरधिका ज्ञानं गतं चारणे[७] । गाथागीतविनोदवाक्यरचनायुक्त्या जगद्रञ्जितं ज्योतिर्वैद्यकशास्त्रसारमखिलं क्षुद्रेषु[८] जातं कलौ ॥ ३१ ॥ धिक्त्वां रे कलिकाल याहि विलयं केयं विपर्यस्तता हा कष्टं श्रुतिशालिनां व्यवहृतिर्म्लेच्छोचिता दृश्यते । एकैर्वाञ्छ्यदेवता भगवती विक्रेतुमानीयते निःशङ्कैरपरैः परीक्षणविधौ सर्वाङ्गमुद्धाट्यते ॥ ३२ ॥ कन्यां कामप्युदूह्य प्रविजहदुदयद्यौवनामत्र[९] एनां द्रव्याशापाशकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु । अन्योन्याश्लेषवाञ्छाविगलितवयसोरात्तमालिन्यमत्योर्दंपत्योर्व्याकृतं, वै हतविधिरुभयोर्लोकयोः शोकयोगम् ॥ ३३ ॥

---

## मद्यपानगर्हणम्

वैकल्यं[१०] धरणीपातमयथोचितजल्पनम्[११] । संनिपातस्य[१२] चिह्नानि[१३] मद्यं सर्वाणि दर्शयेत् ॥१॥ एकतश्चतुरो वेदा ब्रह्मचर्यं तथैकतः । एकतः सर्वपापानि मद्यपानं तथैकतः ॥ २ ॥ मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः । कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ३ ॥ अयुक्तं बहु भाषन्ते यत्र कुत्रापि शेरते । नग्ना विक्षिप्य गात्राणि बालका इव मद्यपाः ॥ ४ ॥ मत्तो हिनस्ति[१४] सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या । मातरमपि कामयते[१५] सावज्ञं मद्यपानमत्तः सन् ॥ ५ ॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति[१६] । पापं कृत्वा दुर्गतिं[१७] यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ ६ ॥

---

१ चाण्डालः. २ प्रविशति. ३ दुष्टयवनैः. ४ पङ्क्तिबाह्यैः. ५ श्रुतिस्मृतिबाह्यानि. ६ निष्फलानि. ७ नटादौ. ८ नीचेषु. ९ संजातयौवनाम्. १० विकलत्वम्. ११ अयुक्तप्रलापः. १२ त्रिदोषस्य. १३ लक्षणानि. १४ नाशयति. १५ इच्छति. १६ पापाचरणम्. १७ नरकम्.

## तमाखुः

तमाखुपत्रं[१] राजेन्द्र भज माज्ञानदायकम्[२][३] । तमाखुपत्रं राजेन्द्र भज माज्ञानदायकम् ॥ १ ॥ दारिद्र्यशीलोऽपि नरस्तमाखुं नैव मुञ्चति । निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ २ ॥ बिडौजाः[४] पुरा पृष्टवान्पद्मयोनिं[५] धरित्रीतले सारभूतं किमस्ति । चतुर्भिर्मुखैरित्यवोचद्विरिञ्चिस्तमाखुस्तमाखुस्तमाखुस्तमाखुः ॥ ३ ॥ न स्वादु नौषधमिदं न च वा सुगन्धि नाक्षिप्रियं किमपि शुष्कतमाखुचूर्णम् । किं चाक्षिरोगजनकं च तदस्य भोगे बीजं नृणां नहि नहि व्यसनं विनान्यत् ॥ ४ ॥ सुपर्णपरिसेवितस्तदनु[६] साधुपूगान्वितो[७] द्विजावनमहापटुस्तदनु[८] सारसंधानभाक्[९] । सदैव सुधयाशनं[१०] भवति यस्य विष्णोः समस्तमाखुरिति सेव्यतां भवति वै यतो रागिता[११] ॥ ५ ॥ श्रीकृष्णः पूतनायाः स्तनमलमपिबत्कालकूटेन पूर्णं प्रस्कन्नं भूप्रदेशे किमपि च पिबतो यत्तदा तस्य वक्त्रात् । तस्मादेषा तमाखुः सुरवरपरमोच्छिष्टमेतद्दुरापं स्तुत्वा नत्वा मिलित्वा ह्यनिशमतिमुदा सेव्यते वैष्णवाग्र्यैः ॥ ६ ॥ भ्रातः कस्त्वं तमाखुर्गमनमिह कुतो वारिधेः पूर्वपारात्कस्य त्वं दण्डधारी नहि तव विदितं श्रीकलेरेव राज्ञः । चातुर्वर्ण्ये विधात्रा[१२] विविधविरचितं ब्रह्मणा धर्महेतोरेकीकर्तुं बलात्तन्निखिलजगति रे शासनादागतोऽस्मि ॥ ७ ॥

---

१ आखुर्मूषिकः पत्रं वाहनं यस्य. २ मा लक्ष्मीः. ३ अज्ञानदायकं तमाखुपत्रं मा भजेति. ४ इन्द्रः. ५ ब्रह्मदेवम्. ६ सुपर्णेन गरुडेन सेवितः; पक्षे,–सुष्ठुपर्णेन नागवल्लीदलेन सह परिसेवितः. ७ साधूनां पूगैः संघैरन्वितः; पक्षे,–साधुः सम्यक्पूगः क्रमुकस्तेनान्वितः. ८ द्विजा द्विजन्मानो ब्राह्मणादयस्तेषामवनं रक्षणं तस्मिन्महासमर्थः; पक्षे,–द्विजा दन्ताः. ९ सारं श्रेष्ठवस्तु मोक्षादि तस्य संधानं संधिं भजति; पक्षे,–सारः खदिरसारस्तेन संधानं सम्यङ्मेलनं भवति. १० सुधयामृतेन यस्य भोजनं भवति; पक्षे,–सुधया चूर्णेन सहैव यस्य भक्षणं भवति. ११ यतो विष्णोरररागिता विषयेष्वप्रीतिर्जायते; पक्षे,–यतस्तमाखोस्तमाखुपत्राद्रागिता मुखरक्तिमा जायते. १२ जगत्कर्त्रा, ब्रह्मणो विशेषणम्.

**इति श्रीसुभाषितरत्नभाण्डागारे द्वितीयं सामान्यप्रकरणं समाप्तम्**

# तृतीयं राजप्रकरणम्

## राजसभावर्णनम्

सभाकल्पतरुं वन्दे वेदशाखोपशोभितम् । शास्त्रपुष्पसमाकीर्णं विद्वद्भ्रमरमण्डितम् ॥ १ ॥ विद्वांसः कवयो भट्टा गायकाः परिहासकाः । इतिहासपुराणज्ञाः सभा सप्ताङ्गसंयुता ॥ २ ॥ धनदैर्धर्मराजैश्च कविभिर्गुरुभिर्वृता । सभा ते भाति भूमीन्द्र सुधर्मातोऽधिका क्षितौ ॥ ३ ॥ सुवर्णवर्णललिता पदविन्यासशालिनी । वाणीव भाति ललिता सभा ते जगतीपते ॥ ४ ॥ विबुधावलिसंपूर्णा सुखपूर्णदिगीश्वरा । चतुराननसंपूर्णा स्वर्गादपि सभाधिका ॥ ५ ॥ गुरुरेकः[1] कविरेकः[2] सदसि मघोनः[3] कलाधरोऽप्येकः[4] । अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे ॥ ६ ॥ अनेकविद्वज्जनरत्नपूर्णं वेदोदकन्यायतरंगरम्यम् । अलङ्घनीयं गुरुतीर्थमेकं सभासमुद्रं शिरसा नमामि ॥ ७ ॥ सारस्वते स्रोतसि दूरमग्नैः सुधीवरैरुद्धृतसूक्तिरत्ने । न तत्किमप्युर्वरितं यदेषामुपायनीकृत्य पुरो भवेयम् ॥ ८ ॥ सद्वेदिमध्योत्तमहेमकुम्भस्तना सुवर्णाधिकृता प्रसन्ना । सद्रत्नभूषाविमला त्वयासौ कान्तेव संसन्नृप भाति रम्या ॥ ९ ॥ पद्मानना पद्मपलाशनेत्रा पद्मच्छविः पद्मकरामलांशुका । पद्मीशनाथैः[5] परिशीलनीया लक्ष्मीरिवाभाति नरेश ते सभा ॥ १० ॥ साम्योऽपि किल शीतलशीला विश्रुता अपि बहु श्रुतबन्तः । पण्डिता अपि जडाः परवादे श्रोत्रिया इह सदा निवसन्ति ॥ ११ ॥ क्वचिच्चारुचामीकरारम्भरम्या क्वचिद्रत्नविद्योतितध्वान्तदक्षा । क्वचिद्धीरकश्रेणिकैलासहासा क्वचित्क्षीरवीरप्रवीरप्रकाशा ॥ १२ ॥ नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते । वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥ १३ ॥ चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंसाश्रयम् । नानावाशककङ्कपक्षिरुचिरं कायस्थसर्पास्पदं नीतिक्षुण्णतटं च राजकरणं हिंसैः समुद्रायते ॥१४॥

---

१ बृहस्पतिः. २ शुक्रः. ३ इन्द्रस्य. ४ चन्द्रः. ५ हस्तिनाथैः. ६ प्राप्नोति. ७ गुप्तचराः. ८ शब्दं कुर्वाणाः; पिशुना इत्यर्थः. ९ राज्ञोऽधिकरणम्.

## राजमिलनम्

क्षुत्क्षामार्भकसंभ्रमोक्तिनिगडैः किर्मीरिता नर्मतो भार्याक्रन्दितकुन्तकीलितहृदो गर्वाद्गुरुत्वं गताः । प्रभ्रष्टाः पदतः कदापि नहि ये तेऽद्य त्वदीयैर्गुणैराकृष्टा विदुषां वरा वयमहो त्वां द्रष्टुमभ्यागताः ॥ १ ॥

## सामान्यराजप्रशंसा

राजंस्त्वद्दर्शनेनैव गलन्ति त्रीणि तत्क्षणात् । रिपोः शस्त्रं कवेर्दैन्यं नीवीबन्धो मृगीदृशाम् ॥ १ ॥ चिरायत्कौतुकाविष्टं कल्पवृक्षमुदीक्षितुम् । तन्मे सफलमद्यासीन्नेत्रं त्वय्यवलोकिते ॥ २ ॥ सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः । नारयो[1] लेभिरे[2] पृष्ठं न वक्षः[3] परयोषितः ॥ ३ ॥ त्वया वीर गुणाकृष्टा ऋजुदृष्ट्या विलोकिताः । लक्षं[4] लब्ध्वैव गच्छन्ति मार्गणा[5] इव मार्गणाः[6] ॥ ४ ॥ कल्पद्रुमो न जानाति न ददाति बृहस्पतिः । अयं तु जगतीजानिर्जानाति च ददाति च ॥ ५ ॥ रविः करसहस्रेण दशाशापरिपूरकः । त्वमेकेन करेणैव सहस्राशाप्रपूरकः ॥ ६ ॥ बलिः पातालनिलयोऽधःकृतश्चित्रमत्र किम् । अधःकृतो दिविस्थोऽपि चित्रं कल्पद्रुमस्त्वया ॥ ७ ॥ आर्तानामिह जन्तूनामार्तिच्छेदं करोति यः । शङ्खचक्रगदाहीनो द्विभुजः परमेश्वरः ॥ ८ ॥ बहुधा राज्यलाभेन यस्तोषस्तव भूपते । बहुधाराज्यलाभेन[11] स तोषो मम भूपते ॥ ९ ॥ भुजंगभोग[12][13]संक्रान्ता कलत्रं[14] तव मेदिनी । अहंकारः परां कोटिमारोहति कुतस्तव ॥ १० ॥ तुलामारुह्य[15] रविणा वृश्चिके[16] निहितं पदम् । भवता शिरसि न्यस्तमयत्नेनैव भोगिनाम्[17] ॥ ११ ॥ किं कृतेन[18] न यत्र त्वं यत्र त्वं किमसौ कलिः । कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥ १२ ॥

---

१ वैरिणः. २ पलायनाभावादित्यर्थः. ३ उरःस्थलम्. ४ ज्या; पक्षे,–विनयादिः. ५ शरव्यम्; पक्षे,–लक्षद्रव्यम्. ६ याचकाः. ७ बाणाः. ८ पृथिवीपतिः. ९ किरणा हस्ताश्च. १० दिशो मनोरथाश्च. ११ बहुधारा गलन्ति यस्य तदाज्यं घृतम्. १२ शेषः; पक्षे,–जारः. १३ फणा; पक्षे,–उपभोगः. १४ भार्या. १५ तुलाराशिम्. १६ वृश्चिकराशौ. १७ सर्पाणाम्; पक्षे,–कामिनाम्. १८ कृतयुगेन.

असिधारापथे नाथ शत्रुशोणितपिच्छिले । आजगाम कथं लक्ष्मीर्निर्जगाम कथं यशः ॥ १३ ॥ कोऽप्यन्यः कल्पवृक्षोऽयमेकोऽस्ति क्षितिमण्डले । दत्तपाणिपल्लवोऽप्येकः कुरुतेऽधः सुरद्रुमम् ॥ १४ ॥ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः । मार्गणौघः[1] समायाति गुणो[2] याति दिगन्तरम् ॥ १५ ॥ युधिष्ठिरोऽसि भीमोऽसि चरितैरर्जुनो भवान् । प्रज्ञया सहदेवोऽसि वाच्यता नकुलस्य ते ॥ १६ ॥ बलिकर्णदधीचाद्याः पुरा पञ्चत्वमागताः । पञ्चत्वं न गताश्चित्रं त्वयि जीवति पञ्चमे ॥ १७ ॥ एक एव महान्दोषो भवतां विमले कुले । लुम्पन्ति पूर्वजां कीर्तिं जाता जाता गुणाधिकाः[3] ॥ १८ ॥ भग्नासु रिपुसेनासु नरेन्द्र त्वं महामहाः । खड्गान्तर्निजमेवैकमद्राक्षीः संमुखं मुखम् ॥ १९ ॥ किं वर्ण्यतां कुचद्वन्द्वमस्याः कमलचक्षुषः । आसमुद्रकरग्राही भवान्यत्र करप्रदः ॥ २० ॥ वेधा वेदेनयाश्लिष्टो[4] गोविन्दोऽपि गदान्वितः[5] । शंभुः शूली[6] विषादी[7] च देव केनोपमीयसे ॥ २१ ॥ तृष्णापहारी[8] विमलो द्विजावासो[9] जनप्रियः । ह्रदः पद्मकरः[10] किं तु बुधस्त्वं[11] स जलाश्रयः[12] ॥ २२ ॥ सदा हंसालसं बिभ्रन्मानसं प्रचलज्जलम् । भूभृन्नाथोऽपि नायाति यस्य साम्यं हिमालयः ॥ २३ ॥ मीमांसको महीपोऽयमन्यथा शक्तिमान्कथम् । नैयायिकोऽपि स्यादेव परशक्तेस्तु खण्डनात् ॥ २४ ॥ राजन्दौवारिकादेव प्राप्तवानस्मि वारणम्[13] । मदवारणमिच्छामि[14] त्वत्तोऽहं जगतीपते ॥ २५ ॥ राजन्कनकधाराभिस्त्वयि सर्वत्र वर्षति । अभाग्यच्छत्रसंच्छन्ने मयि नायान्ति बिन्दवः ॥ २६ ॥ सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा । परमेकं न जानासि वक्तुं नास्तीति याचके ॥ २७ ॥ आश्वासस्नेहभक्तीनामेकमालम्बनं महत् । प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसंचयः ॥ २८ ॥ सत्यभामासमाश्लिष्टः[15] साधुवृन्दावने[16] रतः । यशोदयासमायुक्तस्त्वां[17] पायात्त्वादृशो हरिः ॥ २९ ॥

भवान्हि भगवानेव गतो[1] भेदः परस्परम् । महत्यागदयायुक्तः[2] सत्यभामासमाश्रितः[3] ॥ ३० ॥ एकमेव गुणं प्राप्य नम्रतामगमद्धनुः । तवाशेषगुणा राज्ञः स्तब्धतेति सुविस्मयः ॥ ३१ ॥ भूषणाद्युपभोगेन प्रभुर्न भवति प्रभुः । परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ ३२ ॥ कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते[4] । सप्तसप्तिसमारूढा[5] भवन्ति परिपन्थिनः[6] ॥ ३३ ॥ हुतमिष्टं च दत्तं च धर्मश्चार्यं कुलस्य ते । गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥ ३४ ॥ फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः[7] । द्रष्टुमाखण्डलः शक्तः क्काहमेष क्व ते गुणाः ॥ ३५ ॥ अमितः समितः[8] प्राप्तैरुत्कर्षैर्हर्षदः प्रभो । अहितः सहितः साधुयशोभिरसतामसि ॥ ३६ ॥ स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति । प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३७ ॥ पश्यन्त्यसंख्यापथगां त्वद्दानजलवाहिनीम् । देव त्रिपथगात्मानं गोपयत्युग्रमूर्धनि[9] ॥ ३८ ॥ यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः । पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितम् ॥ ३९ ॥ त्वयि संगरसंप्राप्ते धनुषासादिताः शराः । शैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥ ४० ॥ ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः । निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥ ४१ ॥ मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः । श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥ ४२ ॥ यस्य चेतसि निर्व्याजं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकाचलः ॥ ४३ ॥ देवत्वद्दानपाथोधौ दारिद्र्यस्य निमज्जतः ॥ न कोऽपि हि करालम्बं दत्ते मत्तेभदायक ॥ ४४ ॥ राजचन्द्र समालोक्य त्वां तु भूतलमागतम् । रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यप्युपागमन् ॥ ४५ ॥ धारयित्वा त्वयात्मानं महात्यागधनाधुना । मोचिता बलिकर्णाद्याः स्वयशोगुप्तकर्मणः ॥ ४६ ॥ क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी । ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र दरिद्रता ॥ ४७ ॥ योऽसंकृत्परगोत्राणां[10] पक्षच्छेदक्षणक्षमः[11] । शतकोटिदतां[12] बिभ्रद्विबुधेन्द्रः[13] स राजते ॥ ४८ ॥ ताम्बूलेन विना राजञ्जडीभूता सरस्वती । न निःसरेन्मुखाद्वाणी गृहात्कुलवधूरिव ॥ ४९ ॥ अर्थिप्रत्य-

---

१ याचकाः; पक्षे,-बाणाः. २ विनयादिः; पक्षे,-ज्या. ३ अत्र वंशे पूर्वापेक्षयोत्तरोत्तरः पुरुषो न कोऽपि न्यूनगुणोऽभूत्किंतु विशिष्टगुण एवाभवदिति भावः. ४ वेदनया दुःखेनाश्लिष्टः; पक्षे,-वेदेन नयेन चाश्लिष्टः. ५ गदेन रुजान्वितः; पक्षे,-गदया सहितः. ६ शूलेन युक्तः; पक्षे,-त्रिशूलेन युक्तः. ७ दुःखी; पक्षे,-विषमत्तीति सः. ८ तृषा; पक्षे,-आशा. ९ पक्षिणः; पक्षे,-ब्राह्मणाः. १० कमलम्; पक्षे,-लक्ष्मीः. ११ पण्डितः. १२ उदकाश्रयः; पक्षे,-डलयोः सावर्ण्यात् जडाश्रयो मूर्खाश्रयः. १३ गजम्; पक्षे;-निवारण. १४ मदेन युक्तं वारणम्; पक्षे,-मत्-अवारणम्. १५ सत्यभामयालिङ्गितः; पक्षे,-सत्यं भा कान्तिर्मा लक्ष्मीरेताभिर्युक्ताः. १६ साधु यद्वृन्दावनं तस्मिन्रतः; पक्षे,-साधूनां वृन्दं समूहस्तस्यावनं रक्षणं तस्मिन्नासक्तः. १७ यशोदया नन्दपत्न्या युक्तः; पक्षे,-यशः कीर्तिर्दया कारुण्यं ताभ्यां युक्तः.

१ गकारेण; पक्षे,-नष्टः. २ महती या गदा तया युक्तः; पक्षे,-मह उत्सवस्त्यागो दानं दया करुणा तैर्युक्तः. ३ सत्यभामया समन्वितः; पक्षे,-सत्यं सूनृतं भा कान्तिर्मा लक्ष्मीराभिः सम्यग्युक्तः. ४ अश्वम्. ५ सूर्यमण्डलभेदिन इत्यर्थः. ६ शत्रवः. ७ सहस्रबाहुरर्जुनः. ८ युद्धात्. ९ शिवमस्तके. १० शत्रुकुलानाम्; पक्षे,-प्रकृष्टपर्वतानाम्. ११ सहायः; पक्षे,-पतत्रः. १२ शतस्य कोटेश्च दातृताम्; पक्षे,-वज्रेण खण्डकृताम्. १३ पण्डिताः; पक्षे,-देवाः. ३

थिलक्षैरप्यपराङ्मुखचेतसम् । त्वां पराङ्मुखतां निन्युः केवलं परयोषितः ॥ ५० ॥ तव निर्वर्णयद्वर्गे स्वर्णे वर्णयतो गिरा । त्वत्कोशगेहान्निर्गत्य तीर्थेषु वसति ध्रुवम् ॥ ५१ ॥ न समासः समर्थस्य वसु व्याकरणस्य ते । विग्रहो नैव केनापि न परः सर्वनामभाक् ॥ ५२ ॥ अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ५३ ॥ धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः । गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ ५४ ॥ अलौकिकमहालोकप्रकाशितजगत्रयः । स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥ ५५ ॥ शासति त्वयि हे राजन्नखण्डावनिमण्डलम् । न मनागपि निश्चिन्ते मण्डले शत्रुमित्त्रयोः[1] ॥ ५६ ॥ मत्वा लोकमदातारं संतोषे यैः कृता मतिः । त्वयि राजनि ते राजन्न तया व्यवसायिनः ॥ ५७ ॥ पद्मोदयदिनाधीशः सदागतिसमीरणः । भूभृदावलिदम्भोलिरेक एव भवान्भुवि ॥ ५८ ॥ सन्नारीभरणोमा[2] यमाराध्य विधुशेखरम् । सन्नारीभरणो[3]ऽमायस्ततस्त्वं पृथिवीं जय ॥ ५९ ॥ देव त्वमेव पातालमाशानां[4][5] त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको[6] लोकत्रयात्मकः ॥ ६० ॥ जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः । अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥ ६१ ॥ अखण्डमण्डलः[7] श्रीमान्पश्यैष पृथिवीपतिः । न निशाकरवज्जातु कलावैकल्यमागतः[8] ॥ ६२ ॥ अरातिविक्रमालोकविकस्वरविलोचनः । कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ६३ ॥ कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसंकाशं त्वामेकं रिपवः पुरः ॥ ६४ ॥ उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति । अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥ ६५ ॥ भवतामहमिव बहवो मम तु भवानिव भवानेव । कुमुदिन्याः कति न विधोर्विधुरिव विधुरेव कुमुदिन्याः ॥ ६६ ॥ लब्धार्धचन्द्र[9] ईशः कृतकंसभयं[10] च पौरुषं विष्णोः । ब्रह्मापि नाभिजातः[11] केनोपमिमीमहे नृप भवन्तम् ॥ ६७ ॥ सरलप्रियं[1] गुणाढ्यं लम्बितमालं[2] विचित्रतिलकं[3] च । मनमिव वपुस्तवैतत्कथमवनं नृप जनस्यास्य ॥ ६८ ॥ बाणकरवीरदमनकशतपत्रकबन्धुजीवकुसुमानि । नृप विविधविटपरूपस्तथापि विटपः[4] कथं नासि ॥ ६९ ॥ स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः । चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ७० ॥ कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्कानाम्[5][6] । रचितो रजोभरपयस्तेजश्वासान्तराम्बरैरेषः[7][8][9] ॥ ७१ ॥ तिग्मरुचिरप्रतापो विधुरं[10]निशाकृद्विभो मधुरलीलः । मतिमानतत्त्ववृत्तिः[11] प्रतिपदपक्षाग्रणीर्विभाति[12] भवान् ॥ ७२ ॥ शनिरशनिश्च[13][14] तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारो[15]ऽनुदारश्च[16] ॥ ७३ ॥ क्षणदासावक्षणदा[17] वनमवनं[18] व्यसनमव्यसनम्[19] । बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥ ७४ ॥ प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् । दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ ७५ ॥ गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः । विश्वंभराप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ७६ ॥ समदमतंगजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी ॥ ७७ ॥ विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च । प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ७८ ॥ पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर । भूषयति कर्णमेकः परस्तु कर्णं[21] तिरस्कुरुते ॥ ७९ ॥ हरवन्न विषमदृष्टिर्हरिवन्न[22] विभो विधूतविततवृषः[23] । रविवन्न चातिदुःसहकरैस्तापितभूः[24] कदाचिदसि ॥ ८० ॥ स्तनयुगमुक्ताभरणाः

---

१ मित्रः सूर्यः. २ सतीर्नारीर्बिभर्ति पालयतीति सन्नारीभरणा तादृशीमुमां याति पत्नीत्वेन प्राप्नोति यस्तम्. ३ सन्ना अवसन्ना अरीणामिभा हस्तिनो यस्मात्तादृशो रणो यस्य तादृशोऽमायोऽकपटः. ४ अलमत्यर्थं पाता पालकः; पक्षे,–पाताललोकः. ५ आशानामभिलाषाणां निबन्धनं मूलम्; पक्षे,–आशानां दिशां निबन्धनं ज्ञापकः, भूलोक इत्यर्थः. ६ चामरमरुतां चामरीयवायूनां भूमिराश्रयः. चामरवीज्यमानत्वात्; पक्षे,–अमराणां मरुद्गणानां च भूमिराश्रयः, स्वर्गलोक इत्यर्थः. ७ मण्डलं राज्यं बिम्बं च. ८ कलावैदग्ध्यं चन्द्रषोडशांशश्च. ९ चन्द्रकला; पक्षे,–गलहस्तः. १० कृतकंसभयम्; पक्षे,–कृत–कंस–भयम्. ११ न–अभिजातः कुलीनः; पक्षे,–नाभिजातः.

१ सरला वृक्षविशेषाः प्रियंगवश्चैतेषां समाहारस्तेनाढ्यं पूर्णम्; पक्षे,–सरलं च तत्प्रियं हृद्यं च गुणैर्गौरवर्णत्वादिभिर्युक्तम्. २ लम्बिनस्तमाला यस्मिंस्तत्; पक्षे,–लम्बिमाला माल्यं यस्य. ३ विचित्रा नानाविधास्तिलका वृक्षविशेषा यस्मिंस्तत्; पक्षे,–विचित्रो विचित्रवर्णस्तिलकः कस्तूरीकुङ्कुमादिकृतो यस्मिंस्तत्. ४ विटान्पालयतीति सः. ५ कुबेरः. ६ विधिविशेषः ७ परागसमूहः. ८ शङ्काभ्यन्तरप्रकाशम्. ९ एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभिः पञ्चभिर्भूतै रचित इत्यन्वयः. १० विधुराणां शत्रूणां निशेव निशामरणं तत्कर्ता. ११ मतिर्वस्तुतत्त्वावधारणक्षमा बुद्धिः; मानं प्रमाणं ताभ्यां तत्त्वे याथार्थ्ये वृत्तिरनुसरणं यस्य सः. १२ प्रतिपदं प्रतिस्थानं पक्षाणामात्मीयानामग्रणीरग्रसरः. १३ शनिग्रहः. १४ वज्रम्. १५ महान्. १६ अनुगता दारा वनिता यस्य. वशीकृतवनित इत्यर्थः. १७ अनुत्सवदा. १८ रक्षकम्. शत्रूणां पलायनस्थानत्वात्. १९ द्यूतनृत्यादि. २० अविस्तीर्णम्. दुःखदशायां तदविस्तारात्. २१ राधेयम्. दानातिशयेनेत्यर्थः. २२ असमदृष्टिः; पक्षे,–त्रिलोचनः. २३ सुकृतम्; पक्षे,–वृषासुरः. २४ राजग्राह्यभागः; पक्षे,–किरणाः.

कण्टककलिताङ्गयष्टयो देव । त्वयि कुपितेऽपि प्रागिव विश्वस्तास्ते रिपुस्त्रियो जाताः ॥ ८१ ॥ संततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते । द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ ८२ ॥ कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः । धरणीव धृतिर्धृतिरिव धरणी सततं विभाति यस्य तव ॥ ८३ ॥ रत्नसानुशिखराङ्गणफुल्लत्कल्पपादपतलेषु निषण्णाः । उद्गृणन्ति नृपहंस सुवर्णं त्वद्यशः प्रवरकिंनररामाः ॥ ८४ ॥ गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः । ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ ८५ ॥ बलमार्तभयोपशान्तये विदुषां संमतये बहुश्रुतम् । वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम् ॥ ८६ ॥ तावकाः कति न सन्ति मादृशा मादृशस्तु भवदेकजीविनः । अम्बुदस्य कति वा न चातकाश्चातकस्य पुनरेक एव सः ॥ ८७ ॥ निखिलेषु गुणेषु चित्रता ते मनसो वैभवमद्भुतं तवैव । न च ते परतः प्रमाणभावस्तदपि न्यायनिविष्टतातिचित्रम् ॥ ८८ ॥ स्फुरदद्भुतरूपमुग्रतापज्वलनं त्वां सृजतानवद्यविद्यम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ८९ ॥ कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः । पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ९० ॥ गुणभेदविदग्रिमप्रसङ्गे व्यवधानादनुपस्थितं पुरस्तात् । अपि वाजिनमात्रशेषमिष्टौ घटयन्वाजिभिरर्थ्यसे विधिज्ञैः ॥ ९१ ॥ यदि वै मनसि प्रशान्तिरुच्चैः कुरु कल्पद्रुमदानकौशलम् । न भवेदिति वा वद स्फुटं कलिवर्णं प्रतियामि मन्दिरम् ॥ ९२ ॥ नानन्वयस्ते न च ते विरोधोऽलंकारकोटौ तव नोपमापि । क्षितीश नो ते विषमं न किंचित्साहित्यसौहित्यनिधिस्तथापि ॥ ९३ ॥ अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ ९४ ॥ तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥ ९५ ॥ विशांपते विस्तरतो न वक्तुं जानामि जानन्नपि ते गुणौघान् । यस्यैव योऽसि प्रथमानकीर्ते स एव तद्वानिति निर्निरूढि ॥ ९६ ॥ यशोदयामण्डितकान्तदेहो बाल्येऽपि गोपालजनस्य नेता । गोमण्डलं पासि बलेन युक्तः कथं न राजन्पुरुषोत्तमोऽसि ॥ ९७ ॥ नक्षत्रभूः क्षत्रकुलप्रसूतेर्युक्तो न भोगैः खलु भोगभाजः । सुजातरूपोऽपि न याति यस्य समानतां कांचन काञ्चनाद्रिः ॥ ९८ ॥ अखण्डिता शक्तिरथोपमानं न स्वीकृतं न च्छलरीतिरस्ति । अस्पृष्टसंदेहविपर्ययस्य कोऽयं तव न्यायनये निवेशः ॥ ९९ ॥ स्वतःप्रकाशो मनसो महत्त्वं धर्मेषु शक्तिर्न तथान्यथा धीः भूपालगोपालपदैकभक्तेरन्यैव नैयायिकता तवेयम् ॥ १०० ॥ यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः । गृहीतदीपा इव भिन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ १०१ ॥ लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिःस्यन्दमुपान्तभाजाम् । गृहीतसारस्त्रिदशैः पयोधिः पीयूषसंदर्शनसौख्यमाप ॥ १०२ ॥ यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारे परार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात् ॥ १०३ ॥ एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् । एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्तीखटिकाः क्षिणोति ॥ १०४ ॥ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्याम् । संदर्शनं ते गुणकीर्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् ॥१०५॥ अत्यादराद्ध्ययनं द्विजानामर्थोपलब्ध्या फलवद्विधाय । क्रतूनतुच्छानवितुं तवैषा मीमांसकाद्याधिकृतिः प्रसिद्धा ॥ १०६ ॥ तुच्छान्तराध्यासमसंनिकृष्टमध्यक्षमत्यन्तमनिच्छतस्ते । अख्यातिसख्यानुगतद्विषश्च ख्यातिः स्थिताऽनिर्वचनीयरूपा ॥ १०७ ॥ अन्यार्थमङ्गीकृतवारिपाणौ विशङ्कमानास्तव दाननीरम् । परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम् ॥ १०८ ॥ तवाग्रतो वीर महीमहेन्द्र मन्दं गजाः शृङ्खलिनो विभान्ति । आवासदानादरिभूपतीनामाशान्तशीला इव सापराधाः ॥ १०९ ॥ कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् । नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ११० ॥ दारिद्र्यदायादगणाधमेन दीनो द्विजोऽर्थर्णपदातिसात्कृतः । जागर्ति नाथे त्वयि भो द्विजानां विधेहि तथैन सुखं भजे नृप ॥ १११ ॥ कमलभूतनया वदनाम्बुजे वसतु ते कमला करपल्लवे । वपुषि ते रमतां कमलाङ्गजः प्रतिदिनं हृदये कमलापतिः ॥ ११२ ॥ उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः । निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥ ११३ ॥ अनेन सर्वार्थिकृतार्थता कृता हृतार्थिनौ कामगवीसुरद्रुमौ । मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥ ११४ ॥ मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते । इतीव चापं दधदाशुगं क्षिपन्नयंनयं सम्यगुपादिशद्द्विषाम् ॥ ११५ ॥ नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान्पततः पदद्वये । तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥११६॥ इदं नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य

रोहणः । कियद्भिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥ ११७ ॥ कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः । तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥ ११८ ॥ अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु । प्रत्यर्पिताः शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥ ११९ ॥ अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः । चतुर्दशत्वं कृतवान्कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ १२० ॥ अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् । अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ १२१ ॥ दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसरावरोधिनीम् । बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ १२२ ॥ पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे । भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्दधावधर्मोऽपि कृशस्तपस्विताम् ॥ १२३ ॥ स्फुरद्धनुर्निस्वनतद्धनाशुगप्रगल्भवृष्टिव्ययितस्य संगरे । निजस्य तेजःशिखिनः परःशता वितेनुरङ्गारमिवायशः परे ॥ १२४ ॥ अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद्भुवः । प्रदक्षिणीकृत्य जयाय सृष्ट्या रराज नीराजनया स राजघः ॥ १२५ ॥ सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नः सहकृत्वरी बहुम् । दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरीतुरी ॥ १२६ ॥ प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि मेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १२७ ॥ अयं दरिद्रो भवतेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् । मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नृपः ॥ १२८ ॥ विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः । अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम् ॥ १२९ ॥ अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च । दधौ पटीयान्समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥ १३० ॥ अधोविधानात्कमलप्रवालयोः शिरःसु दानादखिलक्ष्माभुजाम् । पुरेदमूर्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया ॥ १३१ ॥ सदुत्तंस दैवादयं कोऽपि दीनो ऋणाब्धौ विलीनो विहीनो गुणेन । भवत्संनिधिं सन्निधिं प्राप्य पीनो बभूवाशु मीनो यथा नीरपूरम् ॥ १३२ ॥ कति नो विषया निभालिताः कति वा भूमिभुजो न शीलिताः । धरणीधर तावकान्गुणानवधार्याजगणं गुरुं लघुम् ॥ १३३ ॥ तव नित्यमुत्सवपरम्परा भवत्वनिशं त्वमित्थमुपकारसादरः । निजकीर्तिकान्तिकलितोज्ज्वले जगत्यथ सत्सुतादिभिरलं सुखं भज ॥ १३४ ॥ अभ्युद्धृता वसुमती दलितं रिपूरः क्रोडीकृता बलवता बलिराजलक्ष्मीः । एकत्र जन्मनि कृतं यदनेन राज्ञा जन्मत्रये तदकरोत्पुरुषः पुराणः ॥ १३५ ॥ एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषां च विदुषां च मृगीदृशां च । तापं च संमदरसं च रतिं च पुष्णन्शौर्योष्मणा च विनयेन च लीलया च ॥ १३६ ॥ शक्तिं प्रमापयति वीर तवोपमानं प्रामाण्यमाप्तवचनेषु परैव जातिः । जातौ गुणा गुणगणाश्रयिणो विशेषा वैशेषिकं किमपि दर्शनमद्भुतं ते ॥ १३७ ॥ किं कारणं सुकविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः । देव त्वदस्त्रचकिताः श्रयितुं स्वजातिमेके मृगाङ्कमृगमादिवराहमन्ये ॥ १३८ ॥ संभाव्यमिष्टभुवनाभयदानपुण्यसंभारमस्य वपुरत्र हि विस्फुरन्ति । लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो धर्मश्च मानविजयौ च पराक्रमश्च ॥ १३९ ॥ प्रत्यक्षरस्रुतसुधारसनिर्विषाभिराशीर्भिरभ्यधिकभूषितभोगभाजः । गायन्ति कञ्चुकविनिह्नुतरोमहर्षस्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः ॥ १४० ॥ भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ १४१ ॥ साकं कुरंगकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥ १४२ ॥ अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः । शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥ १४३ ॥ नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् । दृप्तारिवीरविसरेण वसुंधरेयं निर्विप्रलम्भपरिलम्भविधिर्वितीर्णा ॥ १४४ ॥ अन्तःपुरीयसि रणेषु सुतीयसि त्वं पौरं जनं तव सदा रमणीयते श्रीः । दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्रसंचारमत्र भुवि संचरसि क्षितीश ॥ १४५ ॥ राजन्विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः । धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसंपदमेत्य मातः ॥ १४६ ॥ पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचक्षुः । नारीयते समरसीम्नि

१ राजपक्षे-भद्रशिलीमुखवारणदानकरशब्दं यथाक्रमं शोभनबाणनिवारकवितरणहस्तबोधकाः; हस्तिपक्षे तु-भद्रजातिभ्रमरहस्तिमदचलशुण्डादण्डबोधकाः. २ हस्तिमदजलं. ३ उपायानां सततानुष्ठानमेवायतत्वं भुजानामाजानुलम्बितत्वम्. ४ उद्धतानां जनानाम्; पक्षे,-असुराणाम्. ५ सामदानविधिभेदरूपैः; पक्षे,-चतुर्भिः.

 

कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥ १४७ ॥ दोर्भ्यां तितीर्षति तरङ्गवतीभुजंगमादातुमिच्छति करे हरिणाङ्कबिम्बम् । मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान्गदितुमुद्यममादधाति ॥ १४८ ॥ हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः । सुखमनुभव राजंस्त्वद्विषो यान्तु नाशं दिवसकमललज्जाशर्वरीरेणुपङ्कैः ॥ १४९ ॥ विदधतु धरणीशा दानमुच्चैर्धरायां प्रभवतु सुजनस्तत्प्रेरकः पुण्यशीलः । निजपरमतिहीनः केवलं सत्खदीनस्त्वमिह नृप कुलीनः कार्यकर्ता विभासि ॥ १५० ॥

कवीनां संतापो भ्रमणमभितो दुर्गतिरिति त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम् । चतुर्णां वेदानां व्यरचि नवता वीर भवता द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः ॥ १५१ ॥ समाजे सम्राजां सदसि विदुषां धाम्नि धनिनां निकाये नीचानामपि च तरुणीनां परिषदि । वयं यत्रैव स्मः क्षणमतिथयस्तत्र शृणुमः स्फुरद्रोमोद्भेदाः सुभग भवतः पौरुषकथाः ॥ १५२ ॥ न लोपो वर्णानां न खलु परतः प्रत्ययविधिर्निपातो नास्त्येव क्वचिदपि न भग्नाः प्रकृतयः । गुणो वा वृद्धिर्वा सततमुपकाराय जगतां मुनेर्दाक्षीपुत्रादपि तव समर्थः पदविधिः ॥ १५३ ॥ न मिथ्यावादस्ते न च विगुणचर्चास्वभिरतिर्न वा वाच्यं किंचिद्वचसि न मनाग्व्यायिनि मतिः । तथाप्येतच्चित्रं यदसि जगतीजानिरधुना त्वमेवैको लोके निगमपरभागार्थनिपुणः ॥ १५४ ॥ चकोराणां चन्द्रः कुसुमसमयः काननभुवां सरोजानां भानुः कुवलयकदम्बं मधुलिहाम् । मयूराणां मेघः प्रथयति यथा चेतसि सुखं तथास्माकं प्रीतिं जनयति तवालोकनमिदम् ॥ १५५ ॥ अदातारं दातृप्रवरमनयं विश्वविनयं विरूपं रूपाढ्यं विगतजयिनं विश्वजयिनम् । अकुल्यं कुल्यं त्वामहमवदमाशापरवशान्मृषावादेत्युक्तिस्त्वयि खलु मृषावादिनि मयि ॥ १५६ ॥ यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनीरसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमकरान् । अपि त्वत्तेजोभिस्तमसि शमिते रक्षति दिशामसौ यात्रामैत्रीं नभसि नितरामम्बरमणिः ॥ १५७ ॥ सुराणां पातासौ स पुनरतिपुण्यैकहृदयो ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः । करस्तस्यात्यर्थे वहति शतकोटिप्रणयितां स सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥ १५८ ॥ मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ कथं ताभिः क्षिप्तास्त्वयि नयनविक्षेपविशिखाः । अथ ज्ञातं ब्रूमः शृणु सुभग शृङ्गारनलिनीवनक्रीडाहंसं स्मरमिव विदुस्त्वां मृगदृशः ॥ १५९ ॥ यशश्चन्द्रैरुद्यत्सुकृतनरकल्पद्रुमकरैः परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदैः । निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधिश्चिरं जीयाज्जीयादधिधरणि सोऽयं नरपतिः ॥ १६० ॥ अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ १६१ ॥

तुलाधारो धाता वहति वसुधा शूर्पपदवीं फणीशः स्यात्सूत्रं कनकशिखरी मानपलिका । तुलादण्डः सत्यं यदि भवति दामोदरगदा तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम् ॥ १६२ ॥ न तूणादुद्धारे न गुणघटने नैं श्रुतिशिखं समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि । नृणां दृश्ये देव क्वचन विशिखान्किंतु पतितद्विषद्वक्षोरन्ध्रैरनुमितिरमूनोचरयति ॥ १६३ ॥ अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैरवैमि प्रारब्धे वमथुभिरवश्यायसमये । न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न तद्वधूवक्राम्भोजं भवतु न स तेषां कुदिवसः ॥ १६४ ॥ यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनीतमस्तन्द्राचन्द्रातप तप सहस्राणि शरदाम् । इयं चास्तां युष्मद्गुणकथनपीयूषपटलश्रितोत्सङ्गानन्दत्सुरनरभुजङ्गा त्रिजगती ॥ १६५ ॥ स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथवा ते वृत्तिरेवंविधैव । अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥ १६६ ॥ नियमयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय । अतनुषु विभवेषु ज्ञातयः सन्तु नाम त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ १६७ ॥ अभिमतफलदाता त्वं च कल्पद्रुमश्च प्रकटमिह विशेषं कंचनोदाहरामः । कथमिव मधुरोक्तिप्रेमसंमानमिश्रं तुलयति सुरशाखी देव दानं त्वदीयम् ॥ १६८ ॥ अकाण्डधृतमानसव्यवसितोत्सवैः सारसैरकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः । दिशः समवलोकिताः सरसनिर्भरप्रोल्लसद्भवत्पृथुवरूथिनीरजनिभूरजःश्यामलाः ॥ १६९ ॥ सहस्रकरपूरणान्निखिलजन्तुवक्राम्बुजप्रकाशकरणादथ प्रबलवैरितेजोवधात् । दरिद्रतिमिरोद्धृतेरखिलभूपचूडामणिर्जगन्मणिरहर्मणिर्जगदिदं च धत्तः समम् ॥ १७० ॥ यशःकरणधोरणीतुलितरोहिणीवल्लभ त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जनः । पयोधरमहीधरे नटति तस्य वामभ्रुवां रणत्कनककिङ्किणीकलरवेण देव स्मरः ॥ १७१ ॥ यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीवृतां सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुलिशकोटिभि-

---

१ लक्षसंख्याकम्; पक्षे,—शरव्यम्. २ पाणिनेः. ३ वर्धय.

१ परिमाणपात्रताम्. २ परिमाणपाषाणः. ३ संधाने. ४ आकर्णान्तम्. ५ बाणान्. ६ प्रसारिणः. ७ करशीकरैः. ८ नीहारकाले.

निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥ १७२ ॥ आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः । तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ॥ १७३ ॥ अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति । अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १७४ ॥ नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति । आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १७५ ॥ त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै । सामर्थ्यानामिव समुदयः संचयो वा गुणानामाविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ १७६ ॥ हेषन्ते यजितजलधरध्वानमेते तुरंगा भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति । यान्नौत्सुक्यं यदपि चलनाद्वालधेर्व्यञ्जयन्ति त्वद्दोर्दण्डद्वितयवशगा तत्समग्रा जयश्रीः ॥ १७७ ॥ दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती मात्स्यो न्यायः कथयति यथा वारुणीदण्डनीतेः । पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं तन्नः पुण्यैरजनि भवता वीर राजन्वती भूः ॥ १७८ ॥ यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं भक्त्येशः परितोषितः सुचरितैरानन्दिताः सज्जनाः । पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचकास्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे ॥ १७९ ॥ दाने कल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि प्रौढग्रीष्मरविर्धने धनपतिः सत्ये दयायां शिबिः । गाम्भीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः ॥ १८० ॥ विद्वन्मानसहंस वैरिकमलासंकोचचन्द्रद्युते दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ १८१ ॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वसहा वेपते देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम् । अज्ञातद्विपभिक्षभिक्षुककुलावस्थानदुस्थाशया वेपन्ते मददन्तिनः परममी भूमीपते तावकाः ॥ १८२ ॥ अर्थिभ्रंशर्वहूभवत्फलभरव्याजेन कुब्जायितः सत्यस्विन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः । आस्ते निर्व्ययरत्नसंपदुदयोदग्रः कथं याचकश्रेणीवर्जनदुर्यशोनिबिडितव्रीडस्तु रत्नाचलः ॥ १८३ ॥ देव त्वत्करनीरदे दिशि दिशि प्रारब्धपुण्योन्नतौ चञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णामृतं वर्षति । स्फीता कीर्तितरंगिणी समभवत्तृप्ता गुणग्रामभूः पूर्णे चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ १८४ ॥ देव त्वामसमानदाननिहितैरर्थैः कृतार्थीकृतत्रैलोक्यं फलभारभङ्गुरशिराः कल्पद्रुमो निन्दति । टङ्कच्छेदनवेदनाविरमणात्संजातसौख्यस्थितिः प्राचीर्नत्रणिताङ्गरोहणतया श्रीरोहणः स्तौति च ॥१८५॥ गण्डौ पाण्डिमसात्तनूस्तनिमसात्पक्ष्मावली बाष्पसात्कीरः पञ्जरसान्मनोऽपि हरसात्कण्ठोऽपि कैवल्यसात् । आसन्देव चमूवरेण्य भवतः प्रत्यर्थिवामभ्रुवां कोदण्डे परिवेषभाजि विजयश्रीसाधने योधने ॥ १८६ ॥ देव त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुजस्तस्मिन्कालभुजंगमो निवसति स्फूर्जत्कृपाणच्छलात् । एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टयन्दीर्घव्योमविसारि निर्मलयशो निर्मोकमुन्मुञ्चति ॥ १८७ ॥ कर्पूरप्रतिपन्थिनो हिमगिरिग्रावाग्रसंघर्षिणः क्षीराम्भोनिधिमध्यगर्भजयिनो गङ्गौघसर्वंकषाः । स्वच्छन्दं हरिचन्दनद्युतितुदः कुन्देन्दुसंवादिनस्त्रासासन्नरविन्दकन्दरुचयोऽनेके गुणाः केचन ॥ १८८ ॥ मन्ये स्पर्शमणिं तवैनमतुलं पाणिं द्विजाभ्यर्चने दुर्वर्णान्यपि भिक्षुभालफलकान्यासन्सुवर्णानि यत् । तच्चित्रं परमत्र मित्र भवता दत्ताः स्वहस्तादिमा दुर्वर्णा न सुवर्णतामुपगताः क्षुद्रास्तु मुद्राः कथम् ॥ १८९ ॥ संतप्तश्रमहारिशीतलतले पुण्याश्रमालंकृताबुद्यद्दैवदवानलेन कलिते विद्वत्तरूणां चये । सद्यो वर्ष सुवर्णवारिद विभो स्वर्णाम्बुधारास्ततो विश्वव्यापियशाः शिरोऽवनिभृतामाक्रम्य नन्दानिशम् ॥ १९० ॥ इन्दुस्त्वद्यशसा जितोऽवनिपते भास्वांनिधिस्तेजसा कन्दर्पो वपुषा सुधाजलनिधिर्वीचोविलासेन च । तथ्यं ते जयशील-

---

१ लोकालोकपर्वतपर्यन्तम्. २ दिवसस्य. ३ ऐन्द्रे. ४ साक्षात्. ५ पुच्छस्य. ६ 'कृ'धातोर्लिङ्. ७ असंभवेन. ८ व्ययाभावादुपचीयमानस्य. ९ लज्जयैवेति भावः. १० दानशौण्डे.

१ लज्जासंवरणोपायासंभवादिति भावः. २ पानीयम्. ३ जलभरैर्वृद्धिं प्राप्ता. ४ गुणसमूहभूमिः. ५ अनुपमदानाय न्यस्तैः सुवर्णादिभिः. ६ यतस्त्वया दानेन सर्वे याचकाः सफलीकृता अतस्तत्फलानां गृहयालवः केऽपि च नासन्निति भावः. ७ खनित्रैः. ८ निर्व्रणतया. ९ पर्वतः. १० यतस्तथैव सर्वेषां सरत्नतया रत्नार्थिनोऽभावान्न कैश्चिदपि विदार्यत इति भावः. ११ सेनाप्रधान. १२ परिवेषो मण्डलीकरणं धनुषस्तं भजते सेवतेऽसौ परिवेषभाक्तस्मिञ्जाते सति. कर्णान्तमाकर्षणेन कुण्डलतां प्राप्ते सतीत्यर्थः. १३ रणे. १४ चन्दनवृक्षः. १५ खड्गः. १६ यथेच्छम्. १७ रिपुमस्तकेष्विति यावत्. १८ कञ्चुकम्. १९ यथा कश्चन सर्पस्तरुस्कन्धे संघट्टनं कुर्वन्स्वं कञ्चुकं परित्यजति तथा त्वत्कृपाणाहिः शत्रुतरुस्कन्धेषु संश्लिष्य यशःकञ्चुकं मुञ्चतीति भावः.

मेतदधुना त्वद्दानमद्दैन्ययोर्मध्ये कं नु विजेष्यतीति विषये दोलायते मे मनः ॥ १९१ ॥ यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रतां त्वत्रां प्रत्येव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः । दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं विख्यातः स्फुटमेक एव हि भवान् सीमा गुणग्राहिणाम् ॥ १९२ ॥ देव त्वं जय यस्य राजति महाराष्ट्रीकुचोच्चं कुलं लाटीवाङ्मृदु नर्म चेदिवनितानाभीगभीरं मनः । आभीरीकटिविस्तृता मतिरसिर्गौडीकचश्यामला कर्णाटीरतिनिष्ठुरो रणरसः कीरीमुखाभं यशः ॥ १९३ ॥ ते [1]कौपीनधनास्त एव हि परं [2]धात्रीफलं भुञ्जते तेषां द्वारि [3]नदन्ति वाजिनिवहास्तैरेव लब्धा [4]क्षितिः । तैरेतत्[5]समलंकृतं निजकुलं किंवा बहु ब्रूमहे ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥ १९४ ॥ साशङ्कस्य समाकुलीकृतमतेरत्यन्तनिस्तेजसश्छिन्नाङ्गस्य विकम्पमानहृदयस्यारूढमन्योर्भृशम् । लज्जां संत्यजतः क्रमं विमृशतो विघ्नान्बहून्पश्यतः क्लेशो योऽर्थिजनस्य वक्तुमनसो मा भूत्स ते विद्विषाम् ॥ १९५ ॥ नो कामः प्रतिहन्यते प्रणयिषु स्वप्नेऽपि नाथ त्वया नैवाधःकुरुषे वृषं द्विरसना व्याला न ते वल्लभाः । नो बह्वचस्तव मूर्तयो न च तनुर्नित्यं जडानुग्रहव्यग्रा नो विषमा च दृक्त्वमथ च ख्यातः क्षितावीश्वरः ॥ १९६ ॥ [6]संग्रामाङ्गणसंगतेन भवता [7]चापे [8]समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम् । कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ १९७ ॥ हारानाहर देव चन्द्रधवलान्नो चेत्पयोधेस्तटीं संप्राप्ते त्वयि सैन्यवारणगणैर्मज्जद्भिरक्षोभितम् । सिन्दूरारुणमम्बु मेघपटलीपीतोज्झितं शुक्तिषु स्वल्पैरेव दिनैः करिष्यसि महीमाताम्रमुक्ताफलाम् ॥१९८॥ कृष्णत्वं घनमण्डलस्य गलितं लग्नं मुखे त्वद्विषां विद्युद्दाम जगाम तावकमतिं गर्जिर्भवद्दुन्दुभिम् । वृष्टिस्त्वत्परिपन्थिपार्थिववधूनेत्रेषु चक्रे स्थितिं चापं ते वसुधाधिनाथ बलभित्कोदण्डकान्तिः श्रिता ॥ १९९ ॥ नालिङ्गन्ति कुचद्वयं भवदिभप्रोत्तुङ्गकुम्भद्वयत्रासाद्वेणिलतासु नैव दधति प्रीतिं तवासिभ्रमात् । भ्रूभङ्गान्भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डल ॥२००॥

१ कौपीनमेव धनं येषाम्; पक्षे,–कौ पृथिव्यां पीनधनाः पुष्टधनाः. २ आमलकीफलम्; पक्षे,–पृथ्वीफलम्; राज्यमित्यर्थः. ३ न इति पदच्छेदः. गजाश्वसमूहाः; पक्षे,–वाजिनिवहा अश्वसमूहा नदन्ति हेषितं कुर्वन्तीत्यर्थः. ४ क्षयः; पक्षे,–भूमिः. ५ समलं सदोषं कृतम्; पक्षे,–सम्यगलंकृतम्. ६ युद्धभूमिम्. ७ धनुषि. ८ सज्जीकृते.

अस्य क्षोणिपतेः [1]परार्धपरया लक्षीकृताः संख्यया [2]प्रेक्षाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः । गीयन्ते स्वरमष्टमं [3]कलयता जातेन वन्ध्योदरान्मूकानां [4]प्रकरेण कूर्मरमणीदुग्धोदधे [5]रोधसि ॥ २०१ ॥ द्वारं [6]खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजैरन्तः [7]कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः । आक्रान्तं [8]महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे राजन्सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥ २०२ ॥ शौर्यं केसरिणा परोपकरणं कल्पद्रुमेणार्पितं लावण्यं मकरध्वजेन च शरच्चन्द्रेण शुभ्रं यशः । धैर्यं ते कमठाधिपेन विपुलं गाम्भीर्यमम्भोधिना सौभाग्यं तु तवैव केवलमिदं तत्केन नो विद्महे ॥ २०३ ॥ कामं कामसमस्त्वमत्र जगति ख्यातोऽसि यत्सर्वदा रूपेणैव महीपते तव धनुःपाण्डित्यमन्यादृशम् । त्वं यस्मिन्विशिखं विमुञ्चसि तमेवोद्दिश्य मुक्तत्रपं त्रुट्यत्कञ्चुकमुद्गतस्पृहमहो धावन्ति देवाङ्गनाः ॥ २०४ ॥ सर्वे लुण्ठितमुद्रैस्तव भटैस्तेन द्विषत्सुभ्रुवस्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते । त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं तद्गम्भीर वदामि कुप्यसि न चेत्साधोरयं कः क्रमः ॥ २०५ ॥ कोदण्डस्तव हस्तगो हृदि वलत्यर्तिस्तव द्वेषिणां त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते । देव त्वं तु जयस्यमित्रमनिशं ते यान्ति वैकुण्ठतां संग्रामे तव भूपते महदिदं चित्रं समालोक्यते ॥ २०६ ॥ मेदिन्यां विषमेषुरित्यनुदिनं शृङ्गारवीरोद्भटाचार्यः श्रीजगतीपतिः कमलदृक्कैर्नाम नो गीयते । शय्यायां च रणाङ्गणे च पतिताः सीदन्ति निश्चेतनाः कामिन्यश्च विरोधिनश्च शतशो येनामुना खण्डिताः ॥ २०७ ॥ दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डांशुगध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् । वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डवभ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥ २०८ ॥ को दण्डं न ददाति देव भवते कोदण्डमातन्वते को नारातिरुपैति पारमुदधेः कोणारुणे लोचने । का कुञ्चान्तरमेत्य वैरितरुणी काकुं न वा भाषते राजन्गर्जति वारणे तव पुरः को वा रणे वर्तताम् ॥२०९॥ दृष्ट्वा मण्डलमध्यलग्नमधुलिड्वृतण्डलक्षस्फुरत्तत्कोदण्डलसल्लतेषु लहरीः को न क्षमाखण्डले । स्वारात्ताण्डवभागकाण्डवनभुग्धाराज्वलत्खाण्डवक्रुध्यत्पाण्डवकाण्डवर्षमतुलं ब्रह्माण्ड-

१ परार्धसंख्यामतिक्रान्तया. २ अन्धः. अस्य राज्ञोऽकीर्तिरेव नास्तीति भावः. ३ स्वीकुर्वता. ४ समूहेन. ५ तीरे. ६ खड्गधारिभिः; पक्षे,–गण्डकैः. ७ द्वारपालैः; पक्षे,–सर्पैः. ८ पट्टाभिषिक्तस्त्रीभिः; पक्षे,–महिषस्त्रीभिः.

वर्त्म स्मरेत् ॥ २१० ॥ आलानं[1] जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः[2] पूर्वाद्रिः[3] करवालचण्डमहसो[4] लीलोपधानं श्रियः । संग्रामामृतसागरप्रमथनक्रीडाविधौ[5] मन्दरो[6] राजन्राजति वैरिराजवनितावैधव्यदस्ते भुजः ॥ २११ ॥ लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा । इन्दुः[7] किं घटितः किमेष विहितः पूषा[8] किमुत्पादितं चिन्तारत्नमहो[9] मुधैव किममी सृष्टाः कुलक्ष्माभृतः[10] ॥ २१२ ॥ नानाभूषणभूषितः प्रतिभयापात्रं प्रभूता स्थितिर्भारासक्तकरो भवाधिकरुचिर्भूरीकृताश्वद्विपः । शश्वत्संगतभासमानमुकुटो भिक्षुप्रवृद्धादरस्त्वं राजेन्द्र रिपुस्तवापि नितरां भेदः परं भेदकृत् ॥ २१३ ॥ प्रत्यावासकसज्जतां प्रथमतस्त्वां योद्धुमुत्कण्ठिता योधास्तेऽभिसृता मनागरिचमूः स्वाधीननाथा स्थिता । भीत्या प्रोषितभर्तृका समभवत्त्वत्सायकैः खण्डिता दूरादन्तरिता विधाय कलहं हा विप्रलब्धा विधे ॥ २१४ ॥ प्रामाण्यं स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्मनोवृत्तयः । विश्वव्यापकतां गतो न च महानन्यो भ्रमः क्वापि ते नास्ते देव मतं किमस्ति भवतः शास्त्रेषु न ज्ञायते ॥ २१५ ॥ प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते भूमीन्द्र प्रचुरक्षणस्थिरतया वर्णाश्रिरं स्थापिताः । सर्वज्ञैकसदीश्वरोऽपि न परं ब्रूते भवानीश्वरं तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः ॥ २१६ ॥ एकं वस्तु यदस्ति विश्वजनतानन्दप्रमोदात्मकं सत्यं तत्त्वमसीति वाक्यमखिलं त्वय्येव विश्राम्यति । त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्याप्ते जनकादिकीर्तिजनके किं ज्ञानमीमांसया ॥ २१७ ॥ खड्गाणेषु यमो जयेषु नियमः पाते स्थिरं चासनं भ्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृतिः श्रीमतः । ध्यानं शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्तन्निर्विण्णहृदः किमीश्वरपरे वाञ्छन्ति पातञ्जले ॥ २१८ ॥ दृष्टान्तो न तवास्ति वाचि न च ते संदेहलेशः क्वचिद्व्याजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचिः । सामान्यं च विशेषवन्न मनुषे नाक्षेपबुद्धिर्मनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथं साहित्यतर्कज्ञता ॥ २१९ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुखं भाषया तारुण्येन च कामिनी मधुरया वाण्या पिकः खं जलात् । मालिन्यान्नयनं श्रिया च सदनं ताम्बूलरागान्मुखं ब्रह्माण्डं सकलं त्वया नरपते भाति स्म चित्रं महत् ॥ २२० ॥ दारिद्र्योपहतो यथा घनधनं चान्द्रीं चकोरः प्रभां कामार्तस्तरुणीं क्षुधापरिगतः सद्व्यञ्जनं भोजनम् । सच्छिष्यः सुगुरुं वियोगविधुरो वत्सो यथा मातरं तद्वद्वः सततं स्मरामि मनसा मद्वत्सलाञ्श्रीमतः ॥ २२१ ॥ लक्ष्मीस्ते सदने सदा विहरतां वित्ते च चिन्तामणिः स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव । वाणी ते वदने दया नयनयोर्दानं करे चान्वहं विष्णुश्चेतसि ते मतिश्च वसतां कीर्तिश्च लोकत्रये ॥ २२२ ॥ गङ्गायत्यसितापगा फणिगणः शेषीयति श्रीपतिः श्रीकण्ठीयति कैरवीयति कुलं नीलोत्पलानां च वै । कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वःकुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसंघट्टतः ॥ २२३ ॥ लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थितिः । चित्तं नाथ तवास्तु धर्मसदने दानप्रसङ्गः करे सर्वास्ते विपदः प्रयान्तु विपिने त्वं दीर्घजीवी भव ॥ २२४ ॥ आयुस्ते नरवीर वर्धतु सदा हेमन्तरात्रिर्यथा लोकानां प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा । लोकानां भयवर्धनो भव सदा हेमन्ततोयं यथा नाशं यान्तु तवारयोऽपि सततं हेमन्तपद्मं यथा ॥ २२५ ॥ यद्बाहू वहतः पराक्रमहतप्रत्यर्थिसीमन्तिनीचक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् । यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ २२६ ॥ सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरां भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् । मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥ २२७ ॥ आदाय प्रतिपक्षकीर्तिनिवहान्ब्रह्माण्डभूषान्तरे निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोग्निभिः । तत्तादृक्पुटपाकशोधितमिव प्राप्तं गुणोत्कर्षिणां पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः ॥ २२८ ॥ व्यासं[1] नैकतयास्थितं श्रुतिगणं[2] जन्मी[3] न वल्मीकतो नाभौ[4] नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषम्[5] । चित्रार्थो न

१ वन्धनस्तम्भः. २ अनेनास्य सेतोरविनश्वरत्वं सूचितम्. ३ उदयाचलः. ४ सूर्यः. ५ विलोडनलीला. ६ यथा क्षीराब्धिमन्थने मन्दराचलस्तथा संग्रामामृतसागरविलोडने त्वद्भुजः. यथा च तत्रामृतमुत्पन्नं तथात्र यश इति भावः. ७ यतस्त्वमेव विमलसकललावण्यगृहमतस्त्वत्पुरः सकलङ्कस्य चन्द्रस्य लावण्यमयत्वेन घटनं व्यर्थमेवेति भावः. ८ यतः पूषा त्वत्प्रतापगरिमलक्षांशमपि नाप्नोतीति भावः. ९ यतश्चिन्तारत्नस्यायं प्रभावो यद्याचकयाचितार्थानां सद्य एव पूरणं भवति तच्च त्वत्त एव भवतीति. अतश्चिन्तामण्युत्पत्तिर्वृथेति भावः. १० यतः पृथ्वीभारस्त्वया भुजाभ्यामेव धारितोऽतस्तदुत्पत्तिर्व्यर्थेति भावः.

१ अनेकशाखारूपेण न विस्तारितवान्, तत्कर्ता व्यासो नाभवमित्यर्थः. २ वेदसमूहम्. ३ नाहं वाल्मीकिरित्यर्थः. ४ नाहं चतुर्मुख इत्यर्थः. ५ नाहं सहस्रजि[illegible] इत्यर्थः.

[१]बृहत्कथामचकथं [२]सुत्राम्णि नासं [३]गुरुर्देव त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥ २२९ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली । लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥ २३० ॥ येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः । ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ २३१ ॥ अत्युच्चाः परितः स्फुरन्ति गिरयः [४]स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ २३२ ॥ येषां कण्ठपरिग्रहप्रणयितां संप्राप्य [५]धाराधरस्तीक्ष्णः सोऽप्यनुरज्यते च कमपि [६]स्नेहं पराप्नोति च । तेषां संगररङ्गसक्तमनसां राज्ञां त्वया भूपते पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ २३३ ॥ द्वेष्या कीर्ति[७]कलिन्दशैलसुतया नद्यास्य यद्दोर्द्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तस्मिन्विनिमज्ज्य [८]बाहुजभटै[९]रारम्भि रम्भापरीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ २३४ ॥ अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति [१०]कम्पं सात्त्विकभाव[११]मश्नुति रिपुक्षोणीन्द्रदाराधरा । अस्यैवाभिमुखं निपत्य समरे यास्यद्भि[१२]रूर्ध्वं निजः [१३]पन्था [१४]भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥२३५॥ विद्राणे [१५]रणचत्वरादरिगणे त्रस्ते समस्ते पुनः कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या [१६]जगत्युद्भटः । आगच्छन्नपि संमुखं वि[१७]मुखतामेवाधिगच्छत्यसौ द्रागेतच्छुरिकारयेण [१८]ठणिति च्छिन्नापसर्पच्छिराः ॥ २३६ ॥ हित्वा [१९]दैत्यरिपोरुरःस्वभवनं [२०]शून्यत्वदोषस्फुटासीदन्[२१]मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि [२२]तद्व्यक्तावनद्धीकृतं लूतातन्तुभिरन्तरद्य भुजयोः [२३]श्रीरस्य विश्राम्यति ॥ २३७ ॥ सिन्धोर्जैत्र[२४]मयं पवित्रमसृजत्तत्कीर्ति[२५]पूर्ताद्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न [२६]वाचंयमाः ।

यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य [१]दृश्येतरो [२]यस्यासौ जलदेवतास्फटिकभूर्जागर्ति [३]योगेश्वरः ॥ २३८ ॥ युद्धा चाभिमुखं रणस्य चरणस्[४]यैवादसीयस्य वा बुद्ध्वान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः । छिन्नं [५]वावनतीभवन्निजभियः खिन्नं [६]भरेणाथवा राज्ञानेन हठाद्वि[७]लोठितमभूद्भूमावरीणां शिरः ॥ २३९ ॥ राज्ञामस्य शतेन किं कलयतो हेतिं[८] शतघ्नीं [९]कृतं लक्षै[१०]र्लक्षभिदो दृशैव जयतः [११]पद्मानि [१२]पक्षैरलम् । कर्तुं सर्वप[१३]रच्छिदः किमपि नो शक्यं [१४]परार्धेन वा तत्सं[१५]ख्यापगमं विनास्ति न गतिः काचिद्धतैतद्द्विषाम् ॥ २४० ॥ क्षीरोदन्वदपः [१६]प्रमथ्य [१७]मथिता[१८] देशेऽमरैर्निर्मिते [१९]स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् । केषां नाजनि वा जनेन जगतामेतत्कवित्वामृतस्रोतःप्रोतपि[२०]पासुकर्णकलशीभाजाभिषेकोत्सवः ॥ २४१ ॥ निस्त्रिं[२१]शत्रुटितारिवारणघटाकुम्भास्थि[२२]कूटाव[२३]टस्थान[२४]स्थायुकमौक्तिकोत्[२५]करकिरः कैरस्य नायं करः । [२६]उन्नीतश्चतुरङ्गसैन्यसमर[२७]त्वङ्गत्तुरं[२८]गक्षुरक्षुण्णासु क्षितिषु क्षि[२९]पन्निव यशःक्षोणी[३०]जबीजव्रजम् ॥ २४२ ॥ यत्कस्यामपि [३१]भानुमान्न ककुभि स्थे[३२]मानमालम्बते जातं यद्घनकाननैकशरणप्राप्तेन दावाग्निना । एषैतद्भुजतेजसा विजितयोस्तावत्त[३३]योरौचिती धिक्तं [३४]वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥ २४३ ॥ आत्मन्यस्य [३५]समुच्चितीकृतगुणस्याहोतरामौचिती यद्गात्रान्तरवर्ज[३६]नादजनयद्भूजानिरेष द्विषाम् । भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्तन्मर्माणि [३७]दलंदलं समि[३८]द्दलंकर्मीणबाणव्रजः ॥ २४४ ॥ यद्भर्तुः कुरुतेऽभिषे[३९]णनमयं शक्रो भुवः सा ध्रुवं दिग्दाहैरिव भस्मभिर्मघवता सृष्टैर्धृतो[४०]द्धूलना । शंभोर्मा बत सांध्यवेलनटनं [४१]भाजि व्रतं द्रागिति क्षोणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसंध्याधिया ॥ २४५ ॥ प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां कोषः शोषमगादगाधजगतीशिल्पेऽप्यनल्पा-

१ नाहं गुणाढ्य इत्यर्थः. २ इन्द्रे. ३ नाहं वाचस्पतिरित्यर्थः. ४ विस्तीर्णाः. ५ खड्गम्. ६ तैलादि; पक्षे,–मित्रत्वम्. ७ यमुनया. ८ क्षत्रियभटैः. ९ एतद्विरोधिनां मरणमेव शरणमिति भावः. १० औत्पातिके भूकम्पे सात्त्विकोत्प्रेक्षा. ११ प्राप्नोति. १२ ऊर्ध्वलोकम्. १३ आसन्नमृत्योरादित्यमण्डलं सच्छिद्रमिव दृश्यते. १४ सूर्यमण्डले. १५ रणाङ्गणात्. १६ प्रसिद्धः. १७ पराङ्मुखत्वम्; पक्षे,–विगतमुखत्वम्. १८ ठणिति कश्चिदनुकरणशब्दः. १९ विष्णोः. २० रिक्ततादोषः. २१ तन्तुवायकीटाः. २२ बद्धम्. २३ लक्ष्मीः. २४ जेतृ जयशीलम्, ततोऽप्यधिकमित्यर्थः. २५ खातम्. २६ सर्वेऽपि कवयो मौनिनो भवन्ति, वर्णयितुमशक्यत्वादिति भावः.

१ सावर्ण्याददृश्यः. २ इन्दुः. ३ शिवलिङ्गः. ४ अमुष्य. ५ नम्रीभवत्. ६ भारेण. ७ परिवर्तितम्. ८ आयुधम्. ९ अलम्. १० लक्षसंख्या; पक्षे,–शरव्यम्. ११ पद्मसंख्यया; पक्षे,–अब्जानि. १२ पद्मसंख्याभिः. १३ शत्रुच्छिदः. १४ परार्धसंख्यया; पक्षे,–परेषामरीणामर्धेन. १५ एकत्वादिः; पक्षे,–युद्धम्. १६ विलोड्य. १७ मथनोद्भूतो निर्जलो दधिक्षीरविकारः. १८ रूपान्तरे, रूपान्तरापादनेन क्षीराब्ध्यावभावं गमिते सतीत्यर्थः. १९ स्वेनाक्रमणार्थम्. २० पूरिते. २१ खड्गः. २२ संघातः २३ गर्तप्रदेशः. २४ स्थायिनः. २५ समूहः. २६ उत्प्रेक्षितः. २७ संचरत्. २८ कृष्टासु. २९ वपन्निव. ३० वृक्षः. ३१ सूर्यः. ३२ स्थिरत्वम्. ३३ औचित्यम्. ३४ अग्नेर्जलम्. सहजद्वेषि तस्मिन्. ३५ समाहृतगुणस्य. ३६ दण्डनमकरोदित्यर्थः. ३७ दलयित्वा. ३८ अमोघबाण इत्यर्थः. ३९ सेनयाभियानम्. ४० धृतभस्मानुलेपना. ४१ मा अभञ्जि.

यितः । निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ २४६ ॥ अस्त्रारिप्रकरः शरश्च नृपतेः संख्ये पतन्तावुभौ सीत्कारं च न संमुखौ रचयतः कम्पं च न प्राप्नुतः । तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ २४७ ॥ एतस्योन्नतसर्वकर्मकृतिनस्त्रैलोक्यचूडामणेः शंभुब्रह्मपुरंदरप्रभृतयः स्तुत्यै न शक्ता यदि । देवः पन्नगनायको भगवती वाणी स्वयं चेज्जडा सौन्दर्यस्य निरूपणे वद कथं शक्तो भवेन्मानवः ॥ २४८ ॥ अर्धे दानववैरिणा गिरिजयाप्यर्धं हरस्याहृतं देवेत्थं भुवनत्रये स्मरहराभावे समुन्मीलति । गङ्गा सागरमम्बरं शशिकला शेषश्च पृथ्वीतलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २४९ ॥ अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा संभाराः खलु तेऽन्य एव विधिना यैरेव सृष्टो युवा । श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २५० ॥ यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान्दारयन् । तेषां दुःसहकामदेहदहनप्रोद्धूतनेत्रानलज्वालालीभरभासुरे पुररिपावस्तं गतं कौतुकम् ॥ २५१ ॥ येऽणुत्वं मनसि स्वके विवृणुते रीत्या कयापि स्फुटं काणादाचरणस्य तत्समुचितं मन्ये प्रतिक्ष्माभृताम् । न्यायाभिज्ञतमोऽपि यत्प्रथयसे चित्ते महत्त्वं निजे मीमांसामतपक्षपातत इदं मन्ये त्वयाङ्गीकृतम् ॥ २५२ ॥ ये लब्धाश्रयमायतः फलभूतं कुर्वन्ति किंचिद्गुणं वार्धौ वारिमुचो न कस्य विदितास्ते कर्ममीमांसकाः । आलोच्यैव निराश्रयान्फलभरैः संबन्धतः सद्गुणाञ्श्रीमद्राम तवाद्भुतं पुनरिदं मीमांसकत्वं स्तुमः ॥ २५३ ॥ त्रैलोक्याभयलग्नकेन भवता वीरेण विस्मारितः सज्जीभूतमुहूर्तमण्डलधनुःपाण्डित्यमाखण्डलः । किं चाजस्रमखार्पितेन हविषा संफुल्लमांसोल्लसत्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥ २५४ ॥ कल्पक्षोणिरुहोऽयमित्यनुदिनं भूमीसुरैर्भाव्यसे कामोऽसाविति कामिनीभिरमितश्चित्ते चिरं चिन्त्यसे । श्रीनारायण एव केवलमिति प्रेम्णा श्रिया ध्यायसे त्वं कालोऽयमिति प्रतिक्षितिधरैरेकोऽप्यनेकात्मभृत् ॥ २५५ ॥ नीतिस्त्रीमुकुरो जयध्वजनवस्तम्भः प्रतापांशुमत्पूर्वा दिक्परिपन्थिभूपतिमहासंपन्मृगीवागुरा । उद्यत्पुण्यलतालवालमतनूमत्तद्विपालानकं यः श्रीकेलिनिकेतनं गुणमणिश्रेणीनवीनाकरः ॥२५६॥ रत्नान्यम्बुधितोयगर्भमगमन्मेरुः सुराश्रिश्रिये स्वीयाङ्के कमलां निधाय विदधे निद्रां हरिर्नीरधौ । यस्मिन्दित्सति भूरि दातरि नृणां भालस्थले दुर्लिपिं व्रीडानम्रशिराः कमण्डलुमयं जग्राह मार्ष्टुं विधिः ॥ २५७ ॥ लक्ष्मीश्चेन्न सरस्वती तदुभयं यद्यस्ति नोदारता सा चैतत्त्रितयं भवेच्च कुहचित्पुण्यैरगण्यैरपि । सौजन्यं न विजृम्भते तदपि चेन्नास्तेऽवक्लृप्ता मतिस्तत्सर्वं परमेश्वरस्य कृपया त्वय्येव संभाव्यते ॥ २५८ ॥ शत्रूणां यमदण्डतां मृगदृशां कंदर्पकोदण्डतां गीर्वाणद्रुमभावमर्थिविदुषां मध्ये त्रयाणामिति । आश्चर्यं मनुजेन्द्ररत्न भवतो यद्बाहुदण्डद्वयं नानात्वं गतमेकमेव जगतां मध्ये त्रयाणामिति ॥ २५९ ॥ रक्तेनैव विलोचनेन करुणारत्नाकरेण त्वया दृश्यन्ते नरदेवरत्न सुहृदां विद्वेषिणो नो नृपाः । किं सिक्ताः प्रथमं सुधाभिरभवन्दावानलैः किं परैः पूर्वं पल्लविताः कुतः किमपरे भस्मत्वमासादितम् ॥ २६० ॥ या लाक्षावलयानि बाहुयुगले कण्ठे च काचस्रजं मन्यन्ते बहुभूषणानि वनिता दीनद्विजानां पुरा । ता माणिक्यचितानि हेमवलयान्युज्झन्ति मुक्तास्रजं यद्द्वाराद्बहुदानशीलनृपते त्वत्त्यागलीलायितम् ॥ २६१ ॥ मेरुर्दूरगतो हिमालयगिरिः प्रालेयरूपोऽभवच्चन्द्रे श्रीसहजेऽपि याचकभयात्क्षीणत्वमुन्मीलति । कौपीनं कृतवान्हरोऽपि भगवान्विष्णुर्जलं सेवते वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः ॥ २६२ ॥ कल्याणं भवतां यशः प्रसरतां धर्मः सदा वर्धतां संपत्तिः प्रथतां प्रजा प्रणमतां शत्रुक्षयो जायताम् । वाक्यं संवदतां वपुः प्रभवतां लक्ष्मीपतिः प्रीयतामायुस्ते शरदां शतं विजयतां दानाय दीर्घायुषे ॥ २६३ ॥ दृष्ट्वैवाङ्कुशमुद्रया निगडितो दारिद्र्यदन्तावलो वाचा सुन्दर्याचर्यां मम कुतो गङ्गावगाहोत्सवः । अभ्युत्थानमस्क्रियार्घघटनैर्मानोऽपि दानोत्तरो लीलेयं भवता वयं तु विदुषां मूर्धानमध्यासिताः ॥ २६४ ॥ पद्मा सद्मनि केशवस्य गहने रत्नानि रत्नाकरे हेमाद्रिर्हिमसानुना व्यवहितः स्वर्गे सुराणां तरुः । जम्बुद्वीपधरासु भूमिपतयो जाम्बूनदैर्दुर्मदास्त्वं तावत्सकलाश्रयेऽसि सुलभो भाग्यैर्द्विजानामिह ॥ २६५ ॥ राजन्नभ्युदयोऽस्तु जीव शरदां साग्रं शतं तेऽरयो रोगैर्यान्तु लयं यशःशशधरः काष्ठासु देदीप्यताम् । शिष्टान्पाहि बुधान्नय प्रणतिभिर्देह्यर्थिनां स्वं सदा

१ सुलभैः. २ युगपत्. ३ दुःखाभावात्; पक्षे,-निर्गलभावात्. ४ भयाभावात्; पक्षे,-दुष्प्रयोगाभावात्. ५ अगमादिति भावः; पक्षे,-प्रत्यक्षादिति भावः. ६ संसारादित्यर्थः; पक्षे,-चापादित्यर्थः. ७ सर्वम्; पक्षे,-यथाश्रुतम्. ८ हरिणा हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः. ९ प्रकाशमाने. १० पर्वतविशेषः.

१ आलानकं गजबन्धनस्तम्भः. २ दयासागरेण.

वाणी ते वदने रमा प्रतिदिनं गेहे भुजे त्वाज्जयः ॥ २६६ ॥ प्रभ्रश्यच्छ्रुतिमस्तकः प्रविगलत्सद्वर्णविप्रस्थिति- र्नश्यत्स्वाङ्गबलः प्रनष्टवचनप्राग्भावपूर्णस्मृतिः । वृद्धोऽत्यन्त- मयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो धर्मः संप्रति चाल्यते तव करालम्बेन भूमीपते ॥ २६७ ॥ बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणयन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्नि- पतितोऽस्यौचित्यवारांनिधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयते ॥ २६८ ॥ हित्वा त्वामुपरोधशून्य- मनसां मन्ये न मौलिः परो लज्जावर्जनमन्तरेण न रमाम- न्यत्र संदृश्यते । यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ २६९ ॥ धर्मं पालय नन्दय द्विजगणान्नामं समाराधय प्रत्यर्थिक्षितिपालभूरुहवनं निर्मूलमुन्मूलय । कान्ताचित्तसरोजसौभगवने भृङ्गत्वमासादय स्फीतां कीर्तिम- शेषलोकजयिनीमाकल्पमाकल्पय ॥ २७० ॥ ऐश्वर्यं नहुषस्य शंभुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः । दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा श्रीवीरक्षितिपालमौलिन्नृपतेः साम्यं कथंचिद्भवेत् ॥ २७१ ॥ भिक्षुद्वारि सदानवारिमधुप- श्रेणीमि[1]भान्दूभ्रमाद्धत्ते यन्तृवधूर्वधूकरतलं शोणाम्बुजा- शङ्कया । सैवान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ २७२ ॥ श्रीवीर क्षितिपाल ते सुललितं दानोद्यमे यद्वचः क्वास्ते सर्वहिरण्यमित्युदभवत्तत्कालमाकर्ण्य तत् । तापः प्राप [2]हिरण्यरेतसि जनिं जाड्यं हिरण्याचले स्वेदाम्भोऽपि हिरण्य- गर्भवपुषि स्वापाय संत्रासतः ॥ २७३ ॥ राजानः शशि- भास्करान्वयभुवः के के न संजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे । येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्यां करः प्रापितः ॥ २७४ ॥ स्वान्ते वैभवमस्ति नैव परतः प्रामाण्य- निर्धारणं नैवातद्गति तत्प्रकारकमतिर्नैवोपमानं तव । त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ २७५ ॥ वीर क्षीर- समुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां मृगाङ्क- मलिनो धत्तां कथं चन्द्रमाः । स्यादेतत्त्वदरातिसौध- शिखरप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तस्याङ्क- शायी मृगः ॥ २७६ ॥ श्रीमद्वीर महीमहेन्द्र भवतः प्रस्थानकालोद्भवद्वादित्रध्वनिभीतभानुहरयो द्रागम्बरं प्राग- मन् । तस्मिन्नेवमुपद्रवे किल विपर्यस्तं समस्तं रवे[1]र्युग्यैः सप्तरथाङ्गमेकमपदः सूतश्चिरादुद्भ्रमः ॥ २७७ ॥ गर्वग्रन्थि- लगुर्जरज्वरकरः कर्णाटकर्णाटवीदावाग्निर्द्रविडेन्द्रवीर्यदलनो गौडेन्द्रनिद्राहरः । हम्मीरप्रमदामदालसलसत्क्रूनर्तनस्तम्भन- प्रस्थाने तव वीर डिण्डिमचमत्कारः समुज्जृम्भते ॥ २७८ ॥ चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्टव्याकृष्टं निःश्व- सन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधारम् । नासावंश[2]प्रणाली- विषमपथपतद्बाष्पपानीयमेता देव त्वद्वैरिनार्यः कुचकलश- युगेनान्वहं संवहन्ति ॥ २७९ ॥ त्वत्प्रारब्धप्रचण्ड- [3]प्रधननि[4]र्धनितारातिवीरातिरेकक्रीडत्की[5]लालकु[6]ल्यावलिभिरल- भत [7]स्यन्दमाकन्दमुर्वी । [8]दम्भोलिस्तम्भभास्वद्भुज [9]भुजग- जगद्भर्तुराभर्तुरेनां तेनायं मूर्धरत्नद्युतिततिमिषतः शोभते शोण[10]भावः ॥ २८० ॥ आसीदासीमभूमीवलयमलयजाले- पनेपथ्यकीर्तिः सप्ता[11]कूपारपारीसदनजन[12]घनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूयच्चूडारत्नो- डुपत्नी[13]करपरिचरणामन्दनन्दन्नखेन्दुः ॥ २८१ ॥ एतेनो- [14]त्कृत्तकण्ठप्रतिसुभट[15]नटारब्धनाट्याद्भुतानां कष्टं द्रष्टैव नाभू- द्भुवि [16]समरसमालोकिलोकास्पदेऽपि । अश्वै[17]रस्वैरवेगैः कृत- [18]खुरखु[19]रलीमङ्[20]क्षुसंक्षुद्यमानक्ष्मापृष्ठोत्तिष्ठदन्धंकरणरणधुरोरेणु- धारान्धकारात् ॥ २८२ ॥ मन्दोद्धूतैः शिरोभिर्मणिभरगु- रुभिः प्रौढरोमाञ्चदण्डस्फायन्निर्मोकसंधिप्रसरदविगलत्संमद- स्वेदपूराः । जिह्वायुग्मामिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ २८३ ॥ आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीतादा- तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्या- गत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्ते चूडारत्नांशुगर्भा- स्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ २८४ ॥ श्रावं श्रावं त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्राप्ताभीप्सि- तेभ्यः सकलविषयजं भूपवर्गं विहाय । त्वत्तोऽहं प्राप्तुमि- च्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ २८५ ॥ विद्यावन्तो विनीताः प्रसभमभिसभं वाक्प्रपञ्चेषु जीवाः के वा नैवार- भन्ते त्रिजगति विततां कीर्तिवल्लीमतल्लीम् । तेषामाधा-

१ अन्दूः पादशृङ्खला. २ ब्रह्मणि.

१ अश्वाः. २ जलमार्गः. ३ संग्रामः. ४ विनाशं प्राप्ताः. ५ रुधिरनदी. ६ श्रेणयः. ७ क्षरणम्. ८ वज्रम्. ९ शेषस्य. १० रक्तिमा. ११ समुद्रपरतीराणाम्. १२ निरन्तरम्. १३ अंशवः; पक्षे,-हस्ताः. १४ छिन्नकण्ठैः. १५ नर्तकः. १६ युद्धप्रेक्षकजनालयेऽपि. १७ अमन्दवेगैः. १८ खुरसंचारैः. १९ सपदि. २० संचूर्ण्यमानात्.

रभावं भुवनभरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफलजुषः स्वःपतिं स्वल्पयन्ति ॥ २८६ ॥ वक्राम्भोजं सरस्वत्य[1]धिवसति सदा शोर्णे[2] एवाधरस्ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः[3] । वाहिन्यः[4] पार्श्वमेताः सुचिरपरिचिता नैव मुञ्चन्त्यभीक्ष्णं स्वच्छेऽन्तर्मानसे[5]ऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ २८७ ॥ केचिद्बद्धाः सहेलं निजभवनगता मोचिताः केऽपि केचिद्गेहाद्गेहान्तराणि क्षणमपि गमिताः केऽपि नीता निबन्धम् । हत्वा हत्वा च केचित्प्रतिपदमदयं प्रापिता व्यर्थभावं क्षोणीनाथस्य तस्योन्नतभुजपरिघेनारयः सारयश्च[6] ॥ २८८ ॥ उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या, न च वचसि कटुश्चित्रपाकानुभावी । कोषापेक्षी परस्मादुचितबहुकथस्तत्परः पुण्यलोके चित्रं राजाधिराज त्वमिव तव रिपुस्तत्र कम्पं[7] प्रतीमः ॥ २८९ ॥ उत्पत्त्युत्पन्नशिष्टा विविधगुणगणा यत्र यान्ति प्रतिष्ठां बाधेन प्राक्तनानां न च नियमविधिर्नापि संख्यार्थदाने । ऊहः सर्वत्र यस्य स्फुरति च सकलः सत्य एवार्थवादो मीमांसाभावमञ्चत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥ २९० ॥ हेलाप्रस्थानवेलाहतपृथुपृतनादुन्दुभिध्वानधाराधारावाहिप्रसङ्गादसमन्तपसकृत्संभ्रमभ्रान्तचित्ताः । दैवादाकुञ्चिताङ्गं विगलितनयनस्पन्दमिन्दीवराक्ष्यो लीयन्ते त्वद्रिपूणां निजगृहवलभीचारुचित्राङ्गनासु ॥ २९१ ॥ श्रीकण्ठासक्तहस्तोऽधिगतमणिगणः शैशवाभ्यस्तविद्यो लावण्यध्वस्तकामः कविजनमिलितो यौवनाप्तप्रकामः । आदत्तक्षोणिदण्डो द्विजवशकृतधीः कङ्कणाहारयुक्तः स श्रीमान्वीर वीर त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ २९२ ॥ लोकानां मानमात्रं मनुजजनरतिस्त्वं ससूदाङ्घ्रिरक्षो राज्ञामासत्त्वदक्षः कृतसमयरुचिर्मण्डितो वीरवर्गैः । कायत्वञ्चीनकेतुः करकलितयवा कोषमानैर्विहीनः श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मन्दं[9] प्रतीमः ॥ २९३ ॥ वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्तदेहः संग्रामप्राप्तधैर्यो न विदलितरुची राजलक्ष्म्यातिहीनः । नित्यं दारासभस्थः प्रखरतनुनिभो यः सुभिक्षानुवर्ती श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ २९४ ॥ श्रीवीर त्वद्रिपूणां रणशिरसि शरैर्भिन्नशीर्षाङ्ककाणां वीरावेशाद्गतानां दिवमधिकरुषान्योन्यशौण्डीर्यभाजाम् । श्लेषेदिव्याङ्गनानां भुवि कचनिचयो द्राक्कटाक्षे शरासासीषुभ्रान्त्यारिवीरभ्रमकुटिलहृदामाजिरावर्तते स्म ॥ २९५ ॥

---

## विशिष्टराजप्रशंसा

### अकबरः

हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीचिस्तेजोऽग्नेर्धूमधारा वितरणकरिणो गण्डदानप्रणाली । वैरिश्रीवेणिदण्डो लवणिमसरसीबालशैवालवल्लीवेल्लत्यम्भोधरश्रीरकबरधरणीपालपाणौ कृपाणः ॥ १ ॥ वीर त्वं कार्मुकं चेदकबर कलयस्युग्रटङ्कारघोषं दूरे सद्यः कलङ्का इव धरणिभृतो यान्ति कङ्कालशेषाः । शङ्कापन्नश्च किं कारणमिति मनसा भ्रान्तिपङ्कायितेन त्यक्त्वाहंकारमङ्काद्विसृजति गृहिणीं किं च लङ्काधिनाथः ॥ २ ॥ कर्णाटं देहि कर्णाधिकविधिविहितत्याग लाटं ललाटप्रोत्तुङ्गं द्राविडं वा प्रचलभुजबलप्रौढिमागाढराढम् । प्रस्फूर्जद्गुर्जरं वा दलितरिपुवधूगर्भं वैदर्भकं वा गाजी राजीवदृष्टे कुशशतमथवा शाहजल्लालुदीन[1] ॥ ३ ॥ गाजीजल्लालुदीन क्षितिपकुलमणे द्राक्प्रयाणे प्रतीते प्रेयस्यः प्रारभन्ते तरलतरगतिव्याकुला मङ्गलानि । नेत्राम्भःपूरपूर्णस्तनकलशमुखन्यस्तबालप्रवालास्त्रुट्यन्मुक्ताकलापच्युतकुचकुसुमच्छद्मनाकीर्णलाजाः ॥ ४ ॥

### अनङ्गभीमः

पृथ्वीश्रीमदनङ्गभीम महती तद्वेष्टनं वारिधिः पीतोऽसौ कलशोद्भवेन मुनिना स व्योम्नि खद्योतवत् । तद्विष्णोर्दनुजाधिनाथजयिनः पूर्णं पदं नाभवद्देवश्चेतसि वर्तते तव सदा त्वत्तो महान्नापरः ॥ ५ ॥

### अर्जुनेन्द्रः

आयातस्ते समीपं तव गुणविमलान्पण्डितो वादकर्ता काव्ये भव्ये हि रेवाभवविगतरसे रुग्युगे रोगहर्ता । नाहं जाने चिकित्सां सकलगुणनिधे दुर्दरिद्रत्वरोगे श्रीमद्राजार्जुनेन्द्र प्रबलमपि यते कल्पिता सा चिकित्सा ॥ ६ ॥

### कर्णः

मुखे[2] हारावाप्तिर्नयन[3]युगले कङ्कणभरो नितम्बे[4] पत्राली [5]सतिलकमभूत्पाणियुगलम् । अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशादपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥ ७ ॥ त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषस्त्वं[6] बाणान्दश पञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि । ते [7]देवीपतयस्त्वदस्त्रनिहतास्त्वं मानुषीणां पतिर्निन्दा तेषु कथं स्तुतिस्तव कथं श्रीकर्ण निर्णीयताम् ॥ ८ ॥ लोकेशः कर्ण-

---

१ वाणी; पक्षे,-नदीविशेषः. २ आरक्तः; पक्षे,-नदविशेषः. ३ मुद्राभिः सहितः; पक्षे,-अब्धिः. ४ सेना; पक्षे,-नद्यः. ५ अन्तःकरणे; पक्षे,-सरोविशेषे. ६ अष्टापदाख्यक्रीडनकस्य गुटिकाः. ७ ककारस्थाने पकारम्. ८ इह पद्ये शत्रुपक्ष आद्याक्षरत्यागः. ९ पद्येऽस्मिन् मकारस्थाने दकारः पठनीयः.

१ अकबरस्यैव नामान्तरम्. २ मुखे हाहा इति रावस्य शब्दस्यावाप्तिः. ३ नयनयुगले कं उदकं तस्य कणास्तेषां भरः. ४ नितम्बे पत्राणामालिः पङ्क्तिः. ५ तिलकवृक्षालम्बिपाणियुगलम्. ६ वैरिणः. ७ देवाङ्गनास्वामिनः.

राजाद्भुतकनकमयस्तावकीनप्रतापाद्ब्रह्माण्डानां समूहो द्रव इव भवितेत्येव संभाव्य यत्नात्। तस्यापि प्लावनार्थं जलनिधिनिकरे व्यर्थतामत्र याते देव त्वद्वैरिनारीनयननयनजैर्निर्ममे नीरधिर्न ॥९॥ श्रीकर्ण प्रौढतेजाः प्रबलरिपुबलासह्यसंतापदक्षो नायं श्रीमत्प्रतापो जगति विलसति श्रीमहाराज किंतु। मन्येऽहं कौशिकेनानुपमितमहसा नूतनस्वर्गसृष्टावुत्कृष्टः सृष्ट एष प्रखरतरकरो भास्करोऽसौ द्वितीयः॥ १० ॥

### कर्णाटवसुंधराधिपः

मागाः प्रत्युपकारकातरधिया वैवर्ण्यमाकर्णय श्रीकर्णाटवसुंधराधिपसुधासिक्तानि सूक्तानि नः। वर्ण्यन्ते कति नाम नार्णवनदीदावाग्निविन्ध्याटवीसंध्यामारुतनिर्झरप्रभृतयस्तेभ्यः किमाप्तं मया ॥ ११ ॥

### कलिङ्गेश्वरः

आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान्विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः। आनन्दः कलिताकृतिः सुमनसां वीरश्रियो जीवितं धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥ १२ ॥ धम्मिल्ले[१] नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः। एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ नानामण्डनतां पुरंदरपुरीवामभ्रुवां विग्रहे ॥१३॥

### कल्याणदासः

कीर्तिस्वर्गतरंगिणीहिमगिरिर्विद्यानटीरङ्गभूर्लावण्यामृतभाजनं रसिकतावल्लीरसालद्रुमः। कान्तापाङ्गमृगस्थली तरुणतालक्ष्मीविलासाम्बुजं जीयाद्विश्वविभूषणं नरपतिः कल्याणदासाभिधः ॥ १४ ॥

### काबिलेन्द्रः

विस्फार्य व्योमगङ्गाबलदुरुलहरीकैतवात्केसरालीरुच्चैर्मस्तिष्कदेशे हिमकरकपटान्मण्डलीकृत्य पुच्छम्। दिङ्नागारब्धलम्बस्तव विशदयशःकेसरी काबिलेन्द्र ब्रह्माण्डारण्यवीथीगिरिगहनदरीसंक्रमी बंभ्रमीति ॥ १५ ॥ वेलामुल्लङ्घ्य हेलादलितधरणिभृद्वाहिनीकोटिपूरैरुद्वेल्लत्काबिलेन्द्रप्रबलजलनिधिः प्लावनायोज्जजृम्भे। स्यान्मग्ना मेदिनीयं प्रबलभुजबलप्रौढतचन्द्रहासज्वालाभिः संततं चेन्न दहति वडवावीतिहोत्रोवधेता (?) ॥ १६ ॥

### कार्तवीर्यः

काष्ठानुषङ्गात्परिवर्धमाने जाग्रत्प्रतापज्वलने त्वदीये। श्रीकार्तवीर्य प्रसभं पतन्ति प्रत्यर्थिपृथ्वीपतयः पतङ्गाः ॥१७॥

### कुसुमेन्द्रसाहिः

वीर श्रीकुसुमेन्द्रसाहिनृपतेः प्रौढप्रतापो वरः कन्या काचन मालवक्षितिपतेः साम्राज्यलक्ष्मीरियम्। तस्या वेषकरग्रहस्य समये तत्कुम्भसंस्थापनं कर्तुं मण्डपबन्धनं विरचितुं विप्रा वयं प्रेषिताः ॥ १८ ॥

१ धूताकारः. २ स्थानम्. ३ केशचूडे. ४ बलात्कारेण.

### कृष्णः

श्रीकृष्ण त्वत्प्रतापेन प्रतप्ताङ्गीर्दिगङ्गनाः। दिग्गजा वीजयन्त्येव कर्णतालैः पुनःपुनः ॥ १९ ॥ मन्येऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती विद्धा दर्भैः किमपि चरणे वासुदेवस्य कीर्तिः। इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा दत्त्वा दत्त्वा मृदुनि पुरतः पादमेषा प्रयाति ॥ २० ॥ क्षीरक्षालितपाञ्चजन्यकिरणश्रीगर्वसर्वंकषाः श्रीकृष्णार्जुनसारथेऽसुररिपो त्वत्कीर्तिविस्फूर्तयः। कैलासन्ति हिमाचलन्ति विकसत्कुन्दन्ति कन्दन्ति च क्षीरोदन्ति हलायुधन्ति विबुधाहारन्ति हीरन्ति च ॥ २१ ॥ त्वद्वाहूद्धूतधूल्यः करिकरनिकरैः सीकराश्च प्रयुक्ता व्योम व्यापुः समन्ताद्यदुमुकुटमणे तत्र पङ्कोऽद्भुतोऽभूत्। आगच्छद्भिः सुरैः क्ष्मां तव भजनकृते स्फाटिकीभिः शिलाभिर्बद्धः पन्थास्तदानीं सुरसरिदिति तं मानवा मानयन्ति ॥ २२ ॥

### गुर्जराधीशः

कालिन्दि[१] ब्रूहि कुम्भोद्भव[२] जलधिरहं नाम गृह्णासि कस्माच्छत्रोर्मे नर्मदाऽहं त्वमपि कथमहो मत्सपत्न्याश्च नाम। मालिन्यं ब्रूहि किं ते प्रविरलविगलत्कज्जलैर्मालवीनां नेत्राम्भोभिः किमासां समजनि कुपितो गुर्जराणामधीशः ॥२३॥

### चोलेन्द्रः

त्वत्खड्गखण्डितसपत्न[३]विलासिनीनां भूषाभवन्त्यभिनवा भुवनैकवीर। नेत्रेषु कङ्कण[४]मथोरुषु पत्त्रवल्ली[५] चोलेन्द्रसिंह तिलकं[६] करपल्लवेषु ॥ २४ ॥ सिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकैस्तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः। तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैरित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम्[७] ॥ २५ ॥

### जगद्देवः

चक्रः पप्रच्छ पान्थं कथय मम सखे नास्ति स क्वापि देशो वस्तुं नो यत्र रात्रिर्भवति भुवि खगायेति स प्रत्युवाच। नीते मेरौ समाप्तिं कनकवितरणैः श्रीजगद्देवनाम्ना सूर्येऽनन्तर्हितेऽस्मिन्कतिपयदिवसैर्वासराद्वैतसृष्टिः ॥ २६ ॥

### जनकः

ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोंकारनादस्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्तः। राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥ २७ ॥

१ नर्मदायाः समुद्रस्य च संवादोऽयम्. २ यमुनाभ्रान्त्या समुद्रेण कालिन्दीत्युक्ते कोपात्साकूतमिदं नर्मदाया उत्तरम्–'हे कुम्भोद्भव अगस्त्यमुने' ब्रूहि इति. ३ शत्रुः. ४ जलकणम्; पक्षे,–वलयम्. ५ पत्रयुक्ता; पक्षे,–पत्रिकारचना. ६ तिलयुक्तं कं जलम्; पक्षे,–ललाटभूषणम्. ७ आश्रयस्थानम्.

**दलपतिरायः**

चन्द्रं चन्द्रार्धचूडं चतुरुदधिचयं चन्द्रिकां चन्द्रकान्तं चार्वङ्गीलोचनान्तं चमरसहचरीबालभारोच्चयं च खर्वीकुर्वन्ति दूर्वीकरतिलकमपि ध्वस्तगुर्वीतिभीति स्वर्वीथिप्रस्थितास्ते दलपतिगृहिणी त्वद्यशस्तोमसोमाः ॥ २८ ॥

**दशरथः**

चिरादक्षणोर्जाड्यं शमयति समस्तासुरवधूकचाकृष्टिक्रीडाप्रसभसुभगंभावुकभुजः । त्रिलोकीजङ्घालोज्ज्वलसहजतेजामनुकुलप्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः ॥ २९ ॥ यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायितैर्निष्पीते दनुजेन्द्रचन्द्रवदनाङ्कूवल्लरीविभ्रमे । लक्ष्मीमस्त्रविपाटलक्षतमयीमालम्बते केवलं पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः ॥ ३० ॥

**दिल्लीन्द्रचूडामणिः**

राजेति क्षणदाकरं विजयते दानोरुलक्ष्मीरिति स्वर्नागं बहुवाहिनीपतिरिति क्षीरोदमास्कन्दति । दुर्गाधीश इति स्फुटं पुररिपुं विद्वेष्टि भोगोद्भटश्रीरित्यर्हति वासुकिं स्वयशसा दिल्लीन्द्रचूडामणिः ॥ ३१ ॥

**नाना**

जयश्रियः कृपाणीयं वेणी नानाख्यभूपतेः । अस्यां करगृहीतायामसावभिमुखी तव ॥ ३२ ॥

**निजामशाहः**

नृपतिनिजाम तवाद्भुतचरणार्पणबहलपीडाभिः । रचयति बहिरिव रसनामरुणध्वजकैतवादवनिः ॥ ३३ ॥ धरणिधर निजामशाह युष्मत्करकरवालकरालकालसर्पः । द्विषदसुपवनं निपीय पीनो दिशि दिशि मुञ्चति कञ्चुकं यशस्ते ॥ ३४ ॥ अटत्कटकघोटकप्रकटचापटङ्कारवचटच्चटदिति स्फुटं स्फुटति मेदिनी कर्परम् । निजामधरणीपतौ वलति कौतुकाडम्बरादिदं भुवनमण्डलं दरदरीदरीदर्यहो ॥ ३५ ॥ क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलैर्द्रागेव द्रवरूपतामुपगते चामीकराणां चये । श्रश्यद्वासवधामधोरणि मुहुर्मज्जद्ग्रहग्रामणि त्रस्यत्कामिनि निःपतद्वनितलं मेरोः समुन्मीलति ॥ ३६ ॥ क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजंगीश्वरं जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत् । मत्तेभेन्द्रविभिन्नकुम्भविदलन्मुक्ताकलापच्छलादच्छाण्डपरम्परामधिरणं सूते स्फुरन्ती मुहुः ॥ ३७ ॥ वाहव्यूहखुरक्षतां वसुमतीं संवीक्ष्य मूर्च्छावतीं भेरीझाङ्कृतिचञ्चलेन पयसा वारांनिधिः सिञ्चति । दिग्बाला तनुते निजामनृपतेर्वातं पताकांशुकैर्धूलीधोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥ ३८ ॥ विद्वद्गोष्ठीगरिष्ठ प्रतिभटदमन श्रीनिजामः प्रतीमः कृत्वा त्वत्कीर्तिगाथां वहति गणविधिं पद्मयोनिः कठिन्या । वक्त्रालेखा गुरूणाममृतकरकलां कम्बुमल्लीमरालाः शुद्धा लेखा लघूनां विसभुजगनभोनिम्नगादन्तिदन्ताः ॥ ३९ ॥ अङ्गाः संजातभङ्गाश्चनवनवसतिप्राप्तरङ्गाः कलिङ्गास्तैलङ्गाः स्वर्गगङ्गाभिषवणमतयः शौर्यदङ्गाश्च वङ्गाः । लाटाः स्विद्यल्ललाटाः पदगमनदृढाश्वासलोलाश्च चोला जायन्ते श्रीनिजाम पृथुरण भवतः प्रौढनिःसाणनादात् ॥ ४० ॥

**नृसिंहः**

आहवे जगदुद्दण्डराजमण्डलराहवे । श्रीनृसिंह महीपाल स्वस्त्यस्तु तव बाहवे ॥ ४१ ॥ त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते । अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः ॥ ४२ ॥ कौमुदीव तुहिनांशुमण्डलं जाह्नवीव शशिखण्डमण्डनम् । पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते ॥ ४३ ॥ गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि । यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंहक्षितीन्द्र ॥ ४४ ॥ विद्यारत्नं सरसकविता यानरत्नं तुरंगो वाञ्छारत्नं परमपदवी भोगरत्नं मृगाक्षी । स्रोतोरत्नं विबुधतटिनी मासरत्नं वसन्तो भूभृद्रत्नं कनकशिखरी भूपरत्नं नृसिंहः ॥ ४५ ॥ निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी सभारत्नं विद्वान् श्रवणपुटरत्नं हरिकथा । कलारत्नं गानं दिविगमनरत्नं दिनकरो महीरत्नं मन्ये सपदि नरसिंहः क्षितिपतिः ॥ ४६ ॥ श्रीलक्ष्मीनरसिंहसान्द्रजलदे चञ्चन्नखालीतडिद्धाम्नि च्छन्नरिपुप्रतापतपने कोपावलिं वर्षति । पूर्णा शोणितवाहिनी सुरमनःसंतापदावानलः शान्तोऽभूद्विरराम वैरिवनितासीमन्तमार्गोदयः ॥ ४७ ॥ निर्यच्छोणितपूरताम्रवपुषः स्वैरं रुदन्तो मुहुर्देव श्रीनरसिंह ते रिपुजना दिग्वाससो निस्त्रपाः । उद्गच्छज्जठरान्त्रनालसहितास्ते नूनमासन्पुनर्जन्मानो रणभूमिमातुरुदरात्तत्कालमेव च्युताः ॥४८॥ देव त्वत्तरुणप्रतापशिखिनो निःशेषमेधायते शत्रूणां पटलं तदीयमयशो जानामि धूमायते । मार्तण्डांशुलसन्नखावलिरसौ ज्वालाकलापायते दुःखानां निकरस्तथा सुमनसां सङ्घः पतङ्गायते ॥ ४९ ॥ किं मध्याह्नदिवाकरोऽयमपरः किं वायमौर्वानलः किं वासौ चपलाचयः पशुपतेः किं भालनेत्रानलः । किं वाऽसौ प्रलयानलः किमथवा सर्वोऽपि भौमानलः श्रीमत्सिंह भवत्प्रतापमहिमा नोदेति केषां मतिः ॥ ५० ॥ काठिन्यं कुचकुम्भयोर्नयनयोश्चाञ्चल्यमेतद्द्वयं भो ब्रह्मन्भवता कथं न पदयोरस्माकमासादितम् । इत्थं श्रीनरसिंह ते त्रिभुवनाधीशस्य धाटीभिया कान्तारेषु मिथः पलायनपरा जल्पन्ति वैरिस्त्रियः ॥५१॥ एताः संप्रति गर्भगौरवभराद्राज्ञोऽवरोधाङ्गनाः कान्तारेषु पलायितुं बत कथं पद्भ्यां भवेयुः क्षमाः । इत्थं चेतसि

१ दलपतिरायः कश्चिन्नृपस्तत्पत्नीसंबोधनम्. २ इन्द्रस्य. ३ सुवर्णम्.

१ चन्द्रकलाभूषणम्; हरमित्यर्थः. २ गण्डप्रदेशे. ३ पङ्किले. ४ प्रोञ्छति. ५ स्वस्तीत्याहेत्यर्थः; अतिशुभ्रेत्यर्थः. ६ इन्धनायते.

संविभाव्य सदयं वैकुण्ठकण्ठीरव त्वन्नादावलिभिः सखीभिरिव किं तद्गर्भपातः कृतः ॥ ५२ ॥ स्नातस्त्वद्रिपुरक्तपाथसि यशो धौताम्बरं धारयँल्लक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवतां पूजयन्। जुह्वच्चैतदसून्प्रकोपदहने युष्मत्प्रतापोदयः शत्रुच्छत्रधरार्थदर्पयशसां प्राणाहुतीराददे ॥ ५३ ॥ कीर्तिः श्रीनरसिंह ते त्रिपथगा तत्रोदितं कैरवं चान्द्रं मण्डलमत्र नीलमिव यत्तद्भृङ्गवृन्दं किमु। यद्वा त्वद्दलितारिवृन्दतरुणीचित्तेन्धनाग्नेः स्थलं चन्द्रस्तत्र विभाति नीलमिव यद्धूमः स मन्यामहे ॥ ५४ ॥ अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार। धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंहक्षितीन्द्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ ५५ ॥ नृत्यद्भर्गाट्टहासप्रचयसहचरैस्तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंहक्षितीन्द्र। नेदृग्ययेष नाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥५६॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छक्रेभोद्भिन्नगण्डस्थलविगलदतिस्वच्छमुक्तामणीनाम्। माला तारावलीयं विलसति च पतद्दानपाथःपयोधिर्नो चेत्कत्या नु तारावलिरथ लवणः सागरोऽसौ कुतस्त्यः ॥ ५७ ॥ द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः। द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥५८॥

### परशुरामः

आदर्शाय शशाङ्कमण्डलमिदं हर्म्याय हेमाचलं दीपाय द्युमणिं महीमिव कथं नो भिक्षवे दत्तवान्। दित्सापल्लवितप्रमोदसलिलव्याकीर्णनेत्राम्बुजो जानीमो भृगुनन्दनस्तदखिलं न प्रायशो दृष्टवान् ॥ ५९ ॥ गोत्राचारविचारपारगतया वृद्धाभिरादिष्टया मात्रा वस्तुषु तेषु तेषु पुरतः प्रस्तारितेषु क्रमात्। अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा येनात्तं धनुरीक्षिताश्च सपदि क्षत्रावतंसा दिशः ॥६०॥ तन्वन्ती तिमिरद्युतिं कृतवती प्रत्यर्थिचक्रव्यथामेषा भार्गव तावकी विजयते निस्त्रिंशधारा निशा ॥ युद्धक्रुद्धविपक्षपक्षविदलत्कुम्भीन्द्रकुम्भस्थलभ्रश्यन्मौक्तिककैतवेन परितस्तारावलीं वर्षति ॥ ६१ ॥

### पाण्ड्यः

तवाङ्गणे सुन्दर वीर पाण्ड्य मतंगजाः शृङ्खलिनो विभान्ति। आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ॥ ६२ ॥ विन्ध्याद्रिः करसाधनी निरुपमो रत्नाकरः कोशभृत्सौगन्धी मलयाचलः परिचराः सर्वेऽपि विद्याधराः। विश्वाशापरिपूरणं वितरणं देशोऽप्यहो दक्षिणः पाण्ड्याखण्डल वीर पाण्ड्य भवतः किं किं न लोकोत्तरम् ॥ ६३ ॥ एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं संग्रामाङ्गणसीम्नि जंगमगिरिस्तोमभ्रमाधायिभिः। पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामरश्रेणीमध्यचरः पुरः क्षितिधरक्षेपाय धत्ते धियम् ॥ ६४ ॥

### पारसीकक्षितीशः

यदपि कटकयात्रारोधि पाथोधिना ते दिशि दिशि मम पत्या पारसीकक्षितीश। तदपि कुरु मुधा नो जीवितान्तं नितान्तं कथयति बहुभार्यं नैकनारीवियोगः ॥ ६५ ॥

### पृथ्वीराजः

मन्दश्चन्द्रकिरीटपूजनरसे तृष्णा न कृष्णार्चने स्तम्भः शंभुनितम्बिनीप्रणतिषु व्यग्रो न धातुर्गृहे। अस्माकं परमर्दनोऽस्ति वदने न्यस्तेन संरक्षितः पृथ्वीराजनरेश्वरादिति तृणं तत्पत्तने पूज्यते ॥ ६६ ॥

### बङ्गालिदासः

बङ्गालिदास भवतः शुभनामवर्णाः पञ्चेषुपञ्चविशिखन्ति नितम्बिनीषु। प्राणन्ति बन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलीषु ॥ ६७ ॥

### बल्लालः

बल्लाल क्षोणिपाल त्वदहितनगरे संचरन्ती किराती कीर्णान्यालोक्य रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी। मुक्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्ति ॥ ६८ ॥

### बाङ्गालक्षोणिपालः

आग्नेयास्त्रप्रवीणप्रबलमृगभटाः शत्रुसंक्षोभदक्षा यस्य प्रौढप्रतापानलबहलशिखास्विन्धनत्वं प्रयान्ति। सोऽयं प्राचीपयोधिप्रहितकरततीतूर्णसंपूर्णकोपो बाङ्गालक्षोणिपालस्त्रिभुवनजनतागीतकीर्तिप्ररोहः ॥ ६९ ॥

### बीसलः

आ विन्ध्यादा हिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गादुद्ग्रीवेषु प्रहर्षान्नृपतिषु विनमत्कन्धरेषु प्रपन्नः। आर्यावर्तं यथार्थं पुनरपि कृतवान्म्लेच्छविच्छेदनाभिर्देवः शाकंभरीन्द्रो जगति विजयते बीसलः क्षोणिपालः ॥ ७० ॥

### भावसिंहः

यस्याग्निः कोपपुञ्जे वसति खुरपुटे वाजिनां गन्धवाहो लक्ष्मीः सस्नेहदृष्टौ कमठकुलमणेर्वाचि वाचामधीशा। रौक्षे कौक्षेयकाग्रे क्षपितरिपुगणे कोपनोऽसौ कृतान्तः कस्तं श्रीभावसिंहं प्रबलमखभुजामाश्रयं नाश्रयेत ॥ ७१ ॥

### भीमः

रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः। झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ॥ ७२ ॥

१ विष्णोरुदरे. २ शेषे. ३ ज्योतिरिङ्गणः. ४ विस्तारस्य. ५ सदृशैः. ६ कीर्तिवच्छुक्ल इत्यर्थः.

१ उपगतानाम्. २ महती. ३ खड्गाग्रे.

**भैरवः**

धनानि विद्वत्कविमण्डलीषु पञ्चेषुबाणानपि कामिनीषु । वर्षन्ति वज्राण्यरिधोरणीषु श्रीभैरवक्षोणिमणेः कटाक्षाः ॥ ७३ ॥

**भोजः**

त्वच्चित्ते भोज निर्व्याजं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ ७४ ॥ भोज त्वद्दानपाथोधौ दरिद्रस्य निमज्जतः । न कोऽपि हि भुजालम्बं दत्ते मेऽभयदायकम् ॥ ७५ ॥ निजानपि गजान्भोजं ददानं प्रेक्ष्य पार्वती । गजेन्द्रवदनं पुत्रं रक्षत्यथ पुनःपुनः ॥ ७६ ॥ प्रतापभीत्या भोजस्य तपनो मित्रतामगात् । और्वो वाडवतां धत्ते तडित्क्षणिकतां श्रिता ॥७७॥ भोज त्वत्कीर्तिकान्ताया नभोभालस्थितं महत् । कस्तूरीतिलकं राजन्गुणागारं विराजते ॥ ७८ ॥ अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् । शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ ७९ ॥ धारेश त्वत्प्रतापेन पराभूतस्त्विषांपतिः । सुवर्णपात्रव्याजेन देव त्वामेव सेवते ॥ ८० ॥ त्वद्यशोजलधौ भोज निमज्जनभयादिव । सूर्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥ ८१ ॥ शुक्तिद्वयपुटे भोज यशोब्धौ तव रोदसी । मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ ८२ ॥ अद्य धारा सदाधारा सदालम्बा सरस्वती । पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते ॥ ८३ ॥ श्रीभोज साम्यं तव कल्पवृक्षः सदा वदान्योऽपि कथं प्रयाति । यतो भवद्दानसुपुष्टविप्रहृव्येन कुक्षिंभरिरस्य भर्ता ॥ ८४ ॥ भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम् । हरेः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ ८५ ॥ भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु । यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ ८६ ॥ यथा यथा भोजयशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम् । तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ ८७ ॥ पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे श्रीमन्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव । इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं श्रीमद्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च ॥ ८८ ॥ धाराधीश धरामहेन्द्रगणनाकौतूहली यामयं वेधास्त्वद्गणने चकार खटिकाखण्डेन रेखां दिवि । सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधराभावात्तु त्यजति स्म सोऽयमवनीपृष्ठे तुषाराचलः ॥ ८९ ॥ राजन्मुञ्जकुलप्रदीप सकलक्ष्मापालचूडामणे युक्तं संचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि । मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाभिनम्रः शशी मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् ॥ ९० ॥ छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमारक्षादक्षिण दक्षिणक्षितिपतिः प्रेक्ष्यान्तरिक्षं क्षणात् । निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृन्निःस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ ९१ ॥ मुक्ताः [1]केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः[2] प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ९२ ॥ विद्वद्वृन्दगुणानुरूपविभवत्यागैककल्पद्रुमे स्वर्गे वासिनि भोजराजनृपतौ विद्यानवद्यात्मनि । दातारो भुवि नैव भूमिवलये मा सन्तु किं तावता ज्ञातारोऽपि न सन्ति हन्त नितरामेतावता दूयते ॥ ९३ ॥ स्पृष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्तर्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरटत्कोणपादाट्टहासः । भोजेन्द्र त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्यद्ध्वाङ्क्षग्रीवत्रोटिकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्राक् ॥ ९४ ॥ भो भोः श्रीभोजदेवं श्रयत विनयतः शत्रवः क्षत्रवर्गाः प्राणत्राणाय नौका न भवति भवतां क्वाप्यरण्यं शरण्यम् । मत्वा मातङ्गकुम्भद्वितयमिति पुरा क्रूरवृत्तिर्भिनत्ति क्रुद्धः शुद्धान्तकान्ताकुचकलशयुगं रंहसा[3] सिंहशावः ॥ ९५ ॥ नीरक्षीरे गृहीत्वा सकलखगपतीन् याति नालैकजन्मा[4] चक्रं धृत्वा कराब्जे सकलजलनिधींश्चक्रपाणिर्मुकुन्दः । सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्यन्व्याप्ता त्वत्कीर्तिकान्ता सकलवसुमती भोजराज क्षितीन्द्र ॥ ९६ ॥ स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनोर्वत्सस्यानेतुकामस्तृणचयमधुना मुग्ध दुग्धं न तस्याः । श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम् ॥ ९७ ॥ कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्तामादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिग्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ ९८ ॥

**मणिपालः**

प्रामाण्यं परतो न शक्तिगणना सादृश्यलोपः सदा कार्ये चेश्वरकर्तृ नन्वनुमितौ ज्ञानं विशिष्टात्मकम् । सर्वं न्यायनयानुसारि विबुधे चैतन्यनाशोपमान्नश्येत्तन्मणिपाल भूप भवतो नैयायिकत्वं कुतः ॥ ९९ ॥

---

१ सूर्यः. २ गण्डस्थलद्वितयम्. ३ द्यावापृथिव्यौ. ४ इन्द्रः ५ कुतूहलविशिष्टः. ६ 'खडू'इति प्रसिद्धेन कठिनीशकलेन.

१ सुरतक्रीडायां विच्छिन्नसूत्राद्धाराद्गलिताः. २ अपसारिताः. ३ जवेन. ४ ब्रह्मा.

### मल्लशाहः

मृगः प्रमीलललोचनः पिकः कृतोक्तिमोचनः श्रितानतिः कृताततिर्मरालिकास्खलद्गतिः । निरीक्ष्यते लसन्मते सुमल्लशाहभूपते तवारिकामिनी वृथाद्भुतं हुताटवी यथा ॥ १०० ॥ पलायिता तवारिवामलोचना यदा यदा पुलिन्दनायकैः सुलिसकालकूटसायकैः । विहाय नासिकासु मौक्तिकं स्रजं च मौक्तिकीं विलुण्ठिताः पुमर्थपञ्चमेह मल्लभूपते ॥ १०१ ॥ आदायादाय मुक्तास्तदनु शिखिधियादाय माणिक्यवर्गं धूमभ्रान्तिं वहन्त्यः खवदनकमलामोदलुब्धालिवृन्दे । पक्तुं भिल्लयः प्रवृत्ताः सरभसमसकृद्यद्विषत्पत्तनेषु ब्रूमः किं कीर्तिपूरं धवलितवसुधं मल्लशाहस्य तस्य ॥ १०२ ॥

### माणिकः

यशःशशाङ्काभ्युदये प्रवृद्धो द्विषद्वधूनेत्रजलाम्बुराशिः । नष्टं हि दारिद्र्यतमो बुधानां तव क्षितौ माणिक भूमिपाल ॥ १०३ ॥ सदग्रहारैर्भवता प्रदत्तैर्मदङ्गना कण्ठतटाग्रहारैः । श्रीमाणिकक्षोणिपते प्रतुष्टा यथा यशो गायति तद्विधेहि ॥ १०४ ॥ संजाते द्रवरूपतां हि रजताद्रौ स्वर्णशैले द्रुतं भूमीपालललाम माणिकविभो प्रौढैः प्रतापानलैः । योगेऽभूदनयोः सुपाण्डुररुचिः सातेऽरिकान्ताजनैर्नीता स्वीयकपोलयोश्च विरहव्याजेन गोपायते ॥ १०५ ॥ भोगासक्तैकचेता भयवशसुखकृद्भीतिहा स्वाश्रितानां भोगान्भव्याय यच्छन्नगति भवनतः साधु भण्डारतिश्च । भूपानां ग्लानिकर्ता भटनगजभयध्वंसदेहो हि भल्लाकीर्णः श्रीमाणिकेन्द्रस्त्वमिव तव रिपुस्तत्र दम्भं प्रतीमः ॥ १०६ ॥ सङ्ग्रामक्षोणिदृप्यच्चपलरिपुचमूसिन्धुकीलालमालां पीत्वा कालः कृपाणोऽम्बुद उपसमरं गर्जते वीरघोषैः । वर्षत्युद्दामगौरं दिशि दिशि तव भोः कीर्तिवारीभकुम्भप्रोद्यन्मुक्ताहिमाश्मच्छुरितमरिततेर्माणिकक्षोणिपाल ॥ १०७ ॥

### माधवः

सत्यासक्तमना गुणाकरलताकीर्णो न दीनाश्रयोऽरिष्टध्वंसपराजयश्च सुमनोवृन्दैरलं वन्दितः । नानास्थानकलाप्रधानमहिमा नित्यं सदानन्दकः श्रीमान्माधव एव माधवसमः क्षोणीतले राजते ॥ १०८ ॥

### मानसिंहः

काञ्चीं काञ्ची न धत्ते कलयति न दृशा केलितल्पं कलिङ्गी सिन्दूरं दूर एव क्षिपति करतलन्यस्तमान्ध्री पुरंध्री । सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तता रक्तिमानं कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे ॥ १०९ ॥

### मालवाखण्डलः

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः । भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्नानदानाम्बुपट्टः खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥ ११० ॥

१ वंशपरंपरया वसुमतीप्रदानैः.

### मुकुन्ददेवः

करवारिरुहेण संधुनाने तरवारिं नृपतौ मुकुन्ददेवे । वरयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाः ॥ १११ ॥

### मुञ्जः

लक्ष्मीर्यास्यति गोविन्दे वीरश्रीर्वीरमेष्यति । गते मुञ्जे यशःपुञ्जे निरालम्बा सरस्वती ॥ ११२ ॥

### मुद्दाफरशाहः

आकाश प्रसर प्रसर्पत दिशस्त्वं पृथ्वि पृथ्वी भव प्रत्यक्षीकृतमादिराजयशसां युष्माभिरुज्जृम्भितम् । श्रीमुद्दाफरशाहपार्थिवयशोराशेः समुज्जृम्भणाद्बीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोक्ष्यति ॥ ११३ ॥

### राजबहादुरः

नित्यं वृद्धिमुपैषि संकलयसे सर्वाः कलाः सर्वदा सानन्दं कुमुदाकरं वितनुषे नास्ते कलङ्कस्तव । सर्वाशाः परिपूरयन्समुदयं धत्सेऽनिशं सर्वतो न श्रीराजबहादुरेन्द्र नृपते चन्द्राधिकस्त्वं कथम् ॥ ११४ ॥

### राजेन्द्रसिंहः

मूर्धा कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या वचसि न च पटुश्चित्रपाकानुभावी । कोषापेक्षी परस्मादुचितबहुकथः सर्वदा पूर्णलोक इत्थं राजेन्द्रसिंह त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥ ११५ ॥

### रामचन्द्रः

एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा । राघव नृप तव यशसा दशापि गौरीकृता हरितः ॥ ११६ ॥ त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य । कपिकौणपमण्डलयोः शिव शिव भूयो भवन्ति संरम्भाः ॥ ११७ ॥ शरासने सायकमादधाने श्रीरामभद्रक्षितिपालमौलौ । सुराङ्गनानां वरलालसानां वामानि नेत्राणि परिस्फुरन्ति ॥ ११८ ॥ गायन्तु किंनरगणाः सह किंनरीभिः श्रीरामचन्द्र शिखरेषु हिमाचलस्य । शेषेन्दुकुन्ददलबालमृणालनालनीहारहारहरहाससितं यशस्ते ॥ ११९ ॥ नालीकभङ्गकृदतीव नदीनबन्धुर्नक्षत्रपो नवसुधाविभवैकहेतुः । राजा किमिन्दुरपि नार्यभिमानहारी राजा परं जयति राघवसार्वभौमः ॥ १२० ॥ नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्ति प्लवगपदनमद्भूनिर्भराक्रान्तभोगैः । लिखति दशनटङ्कैरुन्नमद्भिर्नमद्भिर्जरठकमठभर्तुः कर्परे सर्पराजः ॥ १२१ ॥ रघुतिलक नृपाल त्वद्विषत्क्षोणि-

१ दिशः. २ अलीकभङ्गकृत्; पक्षे,–कमलविकासकृत्. ३ अनाथबन्धुः; पक्षे,–नदीनः समुद्रस्तद्बन्धुः. ४ क्षत्रियश्रेष्ठः; पक्षे,–नक्षत्रनायकः. ५ वसुधैश्वर्यस्य कारणम्; पक्षे,–नवीनायाः सुधाया यो विभवस्तस्य मुख्यकारणम्. ६ शत्रुमानहारी; पक्षे,–नारीणां मानहारकः. ७ शरीरम्. ८ कपाले. ९ शेषराजः.

पालप्रतिलसदपकीर्तिश्यामले विश्वजाले । भगवति भजमाने कृष्णतां शूलपाणौ किमुदधिगिरिपुत्र्यौ चक्रतुस्तत्र विघ्नः ॥ १२२ ॥ अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम् । इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ १२३ ॥ यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः । स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुरस्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥ १२४ ॥ झगिति जगतीमागच्छन्त्याः पितामहविष्टपान्महति पथि यो देव्या वाचः श्रमः समजायत । अथ कथमसौ मुञ्चेदेनं न चेदवगाहते रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ १२५ ॥ लज्जा कीर्तिर्जनकतनया शैवकोदण्डभङ्गे तिस्रः कन्या निरुपमतया भेजिरे रामचन्द्रम् । अन्त्या पाणिग्रहणसमये ज्यायसी जातकोपा भूपैः सार्धं खलु गतवती मध्यमाऽथो दिगन्तान् ॥ १२६ ॥ गेहे गेहे सुभग भवतो रामभद्र क्षितीश त्वामालिख्य स्वमपि सविधे सस्पृहं भावयन्त्यः । तस्मिन्नाकस्मिकमुपगते वल्लभे भीतिभाजः पौष्पं चापं तव करतले वेपमाना लिखन्ति ॥ १२७ ॥ अहो रघुशिरोमणेरभिनवप्रतापावलिप्रचण्डकिरणप्रथाप्रसरसाध्वसादाश्चयम् । सुराधिपतिरम्बुदान्कमलमन्दिरा सेवते हिमांशुरपि चन्द्रमाः सततमम्बुधौ मज्जति ॥ १२८ ॥ कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्योः प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रतख्यात्यै विष्णुपदं स्पृशत्यनुदिनं शेषस्य शीर्षाण्यपि ॥ १२९ ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनिताबाष्पोदधेः साधनाद्युत्तुङ्गे पृथिवीभुजां परिवृढे शश्वद्विपक्षे स्थितम् । सर्वक्ष्मापतिमौलिमण्डनमणे श्रीरामचन्द्र प्रभो चित्रं पश्य तव प्रतापदहनं जानन्ति सत्तार्किकाः ॥ १३० ॥ श्रीराम त्वदनेकचित्रचरितप्रोद्दामकीर्तिश्रुतिप्रागल्भ्याद्वैवधूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् । अश्रोत्राः फणिनस्तदेतदुचितं नो चेदहिस्वामिना व्याधूते शिरसि क्व भूः क्व गिरयः क्वामी दिशामीश्वराः ॥ १३१ ॥ भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी दिवं याता ब्रह्ममरालसंगमवशात्सा तत्र गर्भिण्यभूत् । पश्य स्वर्गतरंगिणीपरिसरे कुन्दावदातं तया मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ १३२ ॥ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च । नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ १३३ ॥ कीर्तिः श्रीरघुवंशदीप भवतो दूती मुरारेः प्रियां यस्मात्तुभ्यमदात्तदादि गिरिशोऽभूदर्धनारीश्वरः । ब्रह्माभूच्चतुराननः सुरपतिश्चक्षुःसहस्रं दधौ स्कन्दो मन्दमतिश्चकार न करस्पर्शं स्त्रियाः शङ्कितः ॥ १३४ ॥ एकं काञ्चनभूधरं सुवलयं वासः सुधावारिधिं तारं तारकराजमण्डलमिदं संप्राप्य सत्कुण्डलम् । दूरेऽस्थापि च तेन तेन सदृशं त्वां भूषणं चापरं स्त्रीं मानग्रहिलेव याचतितरां श्रीराम कीर्तिस्तव ॥ १३५ ॥ संग्रामो दिवसायते तव भुजः पूर्वाचलेन्द्रायते त्वत्कोधोऽप्यरुणायते तव लसच्छौर्यं प्रकाशायते । त्वद्वैरी तिमिरायते तद-

१ स्वसतीत्वव्रतज्ञापनाय दिव्यकरणं युक्तमेव. अत्रायं भावः—या हि स्त्री दिव्यं कर्तुमिच्छति सा पूर्वं गङ्गां गाहते, अपरं देवताः प्रदक्षिणीकृत्य पाण्योरनलं दधती सप्तमण्डलान्यतिक्रामति; ततो विष्णुपदं स्पृशति; तथा सर्पं कर्षति, तद्वदियं त्वत्कीर्तिरपि जलाग्निराजपदविष्णुपदसर्पस्पर्शनाख्यानि पञ्च दिव्यानि स्वसतीत्वनिर्वाहाय विधत्त इति. २ उत्कटा. ३ कम्पितः. ४ शेषशिरोविधूनने भूमेः पात एव स्यात्तत्स्तेषां गिर्यादिवस्तूनां काश्रयस्थानं भवेदतस्तेषां भूम्याश्रितत्वात्तस्याश्च शेषाश्रितत्वादित्यर्थः.

१ हंसः. २ तीरे. ३ कुन्दवदुज्ज्वलम्. ४ लक्ष्मीम्. ५ तदाप्रभृति. ६ महेश्वरेणेत्थं तर्कितम्—यद्यहमुमां स्वपार्श्वे न स्थापयिष्यामि तदैवं कीर्तिदूती लक्ष्मीमिवापहृत्य मम कामिनीं गौरीमपि रामाय प्रदास्यतीति भिया स्वाङ्ग एव गौरी स्थापिता. तत्प्रभृत्यर्धनारीश्वरो हर इति ख्यातिः. ७ ब्रह्मणा स्वपत्नीरक्षणार्थं चतसृष्वपि दिक्षु मुखानि निर्मितानीति भावः. ८ यतो बहूनि चक्षूंषि मम चेन्द्रविष्यन्ति तदा स्वाप्सरसः प्रलोभ्यापहर्तुमागच्छन्तीं कीर्तिदूतीमवलोकयिष्यामीति भावः. ९ मन्दा विवाहेऽलसा मतिर्यस्य सः. १० यतश्चेदहं कृच्छ्रेण प्राप्स्त्रियं परिणेष्यामि तथापि तदपहरणे मम तस्या वियोग एव भावी, ततः किमनेन परिणयनारम्भेणेति विचारादिति भावः. ११ ममैकः काञ्चनगिरिर्दक्षिणे करे कटकोऽस्ति, वामे तु न किमपीत्येकनेत्राञ्जनवन्न शोभेते पाणी, अतोऽपरं तादृशं वलयाख्यं भूषणं मह्यं देहीति प्रार्थयते. १२ यतो न ह्येकं वास उपर्यधश्चाङ्गे परिधातुं शक्यते. १३ उज्ज्वलम्. १४ इदमेकं तारकाणां राजा चन्द्रस्तस्य मण्डलं सत्कुण्डलमेकस्मिन्कर्णे संप्राप्य तत्सममपरकुण्डलं द्वितीयकर्णार्थं याचति. १५ दिक्पर्यन्तं प्राप्तापि. १६ स्त्रिया यो मानः. स्वपतिसौभाग्यसुरूपत्वादिगर्वस्तेन ग्रहिला ग्रहगृहीता. १७ अन्यापि या मानिनी मानग्रहगृहीता भवेत्सा विदेशस्थापि पतिं प्रभविष्णुं तत्तद्वस्तु याचते यद्ब्रह्ममण्डलेऽपि नाप्यते तथेयं कीर्तिरप्यपरं भूषणं याचत इत्यर्थः. १८ यथा दिवसे सूर्यः प्रभाप्रगल्भतामुपैति तथा त्वत्खड्गभानुरपि संग्रामे स्वस्पष्टतां प्रकटयतीत्यर्थः. १९ यथा भानुरुदयाचले भासते तथा चासौ त्वद्भुजे भासत इत्यर्थः. २० यथारुणो रक्तवर्णोऽग्रे प्रादुर्भवति तथा क्रोधोऽपि रक्तमुखनेत्रादिना प्रादुर्भवतीत्यर्थः. २१ यथा सूर्यस्योदये सर्वत्र प्रकाशः प्रसरति तथा त्वत्खड्गभानोरुदये तव शौर्यं स्पष्टमुदेतीत्यर्थः. २२ यथा सूर्योदये तमांसि नाशमायान्ति तथा त्वत्खड्गभानूदये तव वैरिणो दिगन्तगामिनो भवन्तीत्यर्थः.

बलाहत्सूर्य[1]कान्तायतेत्वत्कीर्तिः कमलायते[2] रघुपते त्वत्खड्ग[3]-चण्डद्युतेः ॥ १३६ ॥ अस्माकं परमन्दिरस्य[4] चरितं यद्यप्यवाच्यं भवेत्स्वामी त्वं कथयामि[5] तेन भवतः किंचित्प्रियादूषणम् । श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहः सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती[6] मया ॥ १३७ ॥ सत्यं सा बहुरूपिणी[7] समभवत्सिद्धि[8]स्वरूपा भवत्कीर्तिः[9] श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे । क्ष्मापारे रिपुमन्दिरे नृपपुरे रत्नाकरे निर्झरे कान्तारे गिरिशेखरे विषधरागारे तथैवाम्बरे ॥ १३८ ॥ गर्वावेशविशालरावणभुजप्रोद्यत्[10]प्रतापानलज्वाला[11]जाल[12]नवाम्बुदः कथमसौ सीतापतिर्वर्ण्यते । यस्यारातिनृपाः कृपाणजलधौ मग्नाः पुरो गौरवादत्युच्चैर्गतयो[13] भवन्ति च पुनर्भित्त्वा रवेर्मण्डलम् ॥ १३९ ॥ भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो यच्चाशोकमहावनं दलितवानक्षं च यत्क्षुण्ण[14]वान् । सीतोपायनमौलिरत्नसहितः प्राप्तश्च यस्त्वामसौ तत्राप्येष भवत्प्रतापमहिमा निर्यन्त्रणः[15] कारणम् ॥ १४० ॥ धत्ते नायक राम तावकयशो रामे[16] शशाङ्के मरुद्वाहे[17] स्वर्ग[18]गजे हरे फणिपतौ वाण्यां वृषे भे[19] रुचिम् । अन्येषां तु तदम्बरे[20] तदहिते[21] तद्यञ्जने तन्मदे तत्कण्ठे च तदीक्षणे तदलके तत्प्रोथके[22] तत्पथे[23] ॥ १४१ ॥ श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे दृष्ट्वा यद्यदभूदरिक्षितिभुजां तत्तत्समाकर्णय । अङ्गे वेपथु[24]रुन्धता नयनयोर्वक्त्रे तृणं[25] भूयसी भीतिश्चेतसि वाचि संस्तुतिकथा हस्त[26]द्वयं मस्तके ॥ १४२ ॥ आकृष्टे कवचादहीन्द्ररसनाकल्पे[1] कृपाणे त्वया श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिनां वेश्मसु । गाहन्ते[2] सहसा लुलायचमरी[3]शार्दूल[4]शाखाचरी[5]यक्षोरक्षशृगालकोल[6]शल्य[7]भल्लूकभिल्लादयः ॥ १४३ ॥ रेफ व्यञ्जनराजता[9] तव तवाकारप्रकर्षः स्वरेष्वन्त्यस्यापि मकार विस्फुरति ते वर्गाक्षरेष्वादिता[10] । यैः संभूय निगद्यते रघुकुलालंकारहीराङ्कुरो देवः क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥ १४४ ॥ खेदाम्भःकणमण्डलानि खुरली[11]खेलोद्भवान्यन्वहं तद्वाहो रसयन्[12]महाबल इति ख्यातिं गतो मारुतः[13] । तं चास्वाद्य मुहुः सहस्रफणिताशाली बलीयान्[14]निर्हि धत्ते कोमलकोमलैरपि फणैः श्रीरामचन्द्र स्थिराम्[15] ॥ १४५ ॥ श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपितेऽप्याकर्णान्तगतेऽथ मुष्टिगलितेऽप्येणाङ्किलग्नेऽपि च । न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया ॥ १४६ ॥ गाम्भीर्येण महोदयेन शरणत्राणेन मर्यादया सर्वाशापरिपूरणेन महता स्थैर्येण धैर्येण च । राम त्वामनुकर्तुमिच्छतितरां वारांनिधिः किं त्वसौ पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः ॥ १४७ ॥ देव श्रीनृप रामचन्द्र भवतो दिग्जैत्रयात्रोत्सवे धावद्वीरतुरंगचञ्चलखुरक्षुण्णक्ष्मामण्डलात् । वातोद्धतरजोमिलत्सुरनदीसंजातपङ्कस्थलीदूर्वाचुम्बनचञ्चवो हरिहयास्तेनैव वृद्धं[16] दिनैः ॥ १४८ ॥ साधर्म्येण कथं गृणन्तु[17] यमुनावेणीं कृपाणीं च ते श्रीमद्राम चमूवरेण्य भवतो वाग्ब्रह्मसिद्धान्तिनः । नाकृष्टां हलिना न कालियवशात्क्रूरां न धाराजडां न च्छाया[18]जनितां न वक्रै[19]र्बहुलां न प्रसभङ्गां[20] क्वचित् ॥ १४९ ॥ आबाल्यं पतिरेष मे जगदिदं जानाति तत्त्वं पुनर्भूमध्ये समुपागता तदपि ते विख्यायते यः पतिः । वृद्धा नास्य गृहे वसामि सुचिरं तिष्ठन्स्थिरात्रेति तन्मात्सर्यादिव राम भूप भवतः कीर्तिर्दिगन्तं गता ॥ १५० ॥ का शृङ्गारकथा कुतूहलकथा गीतादिकानां कथा माद्यद्-

१ यथा भानोरुदये सूर्यकान्तमणिषु महांस्तापः संजायते तथा त्वैतदुदये सति वैरिस्त्रीहृदयेषु महान्पश्चात्तापो भवतीत्यर्थः २ यथा भानोरुदये कमलानि विकस्वराणि भवन्ति तथा त्वत्खड्गभानोरुदये त्वत्कीर्तिर्विकासमुपैतीत्यर्थः. ३ तिग्मांशुत्वात्खड्गस्य सर्वथा सूर्योपमत्वमस्तीति शेषः. ४ परस्त्रियाः. ५ यतो भक्ताः स्वस्वामिनः कथमपि हानिं सोढुमक्षमाः. स्त्रीदुर्लक्षणं तु परमपमानकारणमतो ब्रवीमीत्यर्थः. ६ यथा काञ्चित्पाणिगृहीती परपुरुषस्य हृदये विलासं कुर्यात्तदा तस्या असतीत्वलक्षणेन पुरुषस्य महद्दूषणं लग्नं भवेत्. ७ नानारूपत्वेन विश्वव्यापिन्यभूदिति भावः. ८ अणिमाद्यष्टसिद्धिमती. ९ यथा योगिनी सिद्धागिरिदर्यादिषु स्वकामचारिणी भवेत्तथा त्वत्कीर्तिरपीति भावः. १० देदीप्यमानाः. ११ समूहः. १२ अन्योऽप्यनलोऽम्बुदेन शाम्यति यथा तथा तत्प्रतापाग्निरपि रामेण शामित इति भावः. १३ स्वर्गयायिनो भवन्ति. अन्यो हि यो जलधौ निमग्नो भवति स च नीचैर्गतिरेव भवतीति प्रसिद्धम्. १४ मारितवान्. १५ अस्खलितः. १६ बलभद्रे. १७ उच्चैःश्रवसि. १८ ऐरावते. १९ नक्षत्रे. २० रामवक्षे. तद्वक्षस्य नीलत्वादिति भावः. २१ चन्द्रशत्रौ. राहावित्यर्थः. २२ वृषनासिकायाम्. २३ नक्षत्रपथे. आकाश इत्यर्थः. २४ कंप. २५ येषां मुखे तृणं दृश्यते ते शूरा अपि गोवदवध्या इति भावः, २६ शिरसि करद्वयं [illegible]

१ सदृशे. २ तन्मन्दिराणां शून्यत्वेन वनचरतिरश्चां तत्र प्रवेशस्यानिवार्यत्वादिति भावः. ३ वनगावः. ४ व्याघ्राः. ५ वानर्यः. ६ शूकराः. ७ शल्यकाः. ८ ऋक्षाः. ९ व्यञ्जनेषु श्रेष्ठत्वम्. १० कखगादिषु. ११ शस्त्राभ्यासः. १२ आस्वादयन्. १३ यदा त्वया वैरिणो हतास्तदा त्वद्भुजयोः परिश्रमजः स्वेद उत्पन्नस्तच्छोषणाद्वायुर्महाबलोऽभूदिति भावः. १४ शेषः. १५ पृथ्वीम्. १६ दूर्वाङ्कुरभक्षणे रता अरुणेन प्रेरिता अपि न तूर्णं प्रयान्ति किं तु शनैरेव. अत एव ग्रीष्मर्तौ महान्तो दिवसा जायन्त इति भावः. १७ कथयन्तु. १८ छाया सूर्यभार्या. १९ पानीयवाहाः. २० जाततरङ्गाम्.

न्तिकथा तुरंगमकथा कोदण्डदीक्षाकथा । एकैवास्ति परं पलायनकथा त्वद्वैरिभूमीभुजां देव श्रीरघुनाथ नाथ जगति स्वप्नेऽपि नान्या कथा ॥ १५१ ॥ त्वं चेत्कल्पतरुर्वयं सुमनसस्त्वं चेत्सुधात्मा कलाः संपूर्णा वयमीश्वरो यदि भवान् स्वच्छा विभूतिर्वयम् । संपूर्णः कमलाकरो यदि भवान् श्रीराजहंसा वयं स्वामिंस्त्वं शृणु रामचन्द्र नृपते किं किं न तेऽङ्गं वयम् ॥ १५२ ॥ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रहृता ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि । आज्ञा वारिधिबन्धनावधि यशो लङ्केशनाशावधि श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥ १५३ ॥ त्वत्कीर्तिर्धनिका धनं मधुरिमा तस्याधमर्णा सुधा शीतांशुः प्रतिभूस्तदर्थनकृते सैषा दिवं धावति । सा लीना तत्र वाचि रामनृपते चन्द्रो निरस्तध्वनिः शङ्कातङ्कभृदंशुकावृततनुर्नक्तं समुत्सर्पति ॥ १५४ ॥ अस्रामास तृणं प्रियाद्रुहि तृणामास स्मरारेर्धनुर्दारामास मुनेः शिलापि नववरामास स्वयं पादुका । कुल्यामास महार्णवोऽपि कपयो योधांवभूवुस्तदा पौलस्त्यो मशकीबभूव भगवंस्त्वं मानुषामासिथाः ॥ १५५ ॥ उप्ता कीर्तिलता गुणैस्तत्र विभो सिक्ता च दानोदकैर्मेरुस्तम्भमवाप्य दिक्षु वितता प्राप्ता नभोमण्डलम् । धूपैस्त्वत्प्रतिपक्षलक्षवनितानिःश्वासजैर्धूपिता ऋक्षैः कोरकितेन्दुना कुसुमिता श्रीरामचन्द्र प्रभो ॥ १५६ ॥ यद्बीजानि च मौक्तिकानि करिणां दन्ता यदीयाङ्कुरा यत्पत्राणि शरद्घना हिमगिरिर्यस्याः प्रकाण्डो महान् । यत्पुष्पाणि च तारका हिमरुचिर्यस्याः फलं सुन्दरं सेयं राजति रामकीर्तिलतिका ब्रह्माण्डभाण्डोदरे ॥ १५७ ॥ नो ग्लानिं भजते दिने न च सुराधीशैः समापीयते नो राहुर्ग्रसते न वा मृगदृशां वक्त्रैः पराजीयते । नो मेघैश्च पिधीयते न च कुहूकालेऽपि संक्षीयते श्रीरामक्षितिपाल भाति जगति त्वत्कीर्तिचन्द्रः सदा ॥ १५८ ॥ आकृष्टे युधि कार्मुके रघुपते वामोऽब्रवीद्दक्षिणं पुण्ये कर्मणि भोजने च भवतः प्रागल्भ्यमस्मिन्न किम् । वामान्यः पुनरब्रवीन्न मम भीः पृच्छाम्यहं स्वामिनं छिन्द्यां रावणवक्त्रपङ्क्तिमथवेत्येकैकमादिश्यताम् ॥ १५९ ॥ अम्भः कर्दमतामुपैति सहसा पङ्कः पुनः पांसुतां रेणुर्वारणकर्णतालयुगलैर्दिक्प्रान्तनीहारताम् । निम्नत्वं गिरयः समं विषमतां शून्यं जनैराकीर्णतां निर्याते त्वयि रामचन्द्रनृपते त्यक्तस्वरूपं जगत् ॥ १६० ॥ पाताले मञ्जु मूलं फणिपतिरभितः कीर्तिवल्लेस्त्वमेषा स्थूणा कैलासशैलो गगनमिह महामण्डपः पौण्ड्रदण्डाः । दन्तीन्द्रस्थूलदन्ता दलततिरतुला शारदाभ्राणि सारास्ताराः पुष्पाणि चन्द्रः फलमिदममलं रामराजेन्द्र मन्ये ॥ १६१ ॥ कूर्मः पादोऽस्य यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः । ज्योतिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना शत्रुश्रेणी पतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ १६२ ॥ शक्तिः सर्वातिरिक्ता विलसति न च ते पीलुपाकप्रियत्वं वाक्यं धर्मे प्रमाणं स्वयमपि चरितं नान्य ईशोऽस्ति कश्चित् । नो वायं भेद आस्ते क्वचिदपि विषये नैव मिथ्याप्रवादश्चित्रं पाण्डित्यमेतद्वहसि रघुपते गौतमाद्यैरतर्क्यम् ॥ १६३ ॥ पूर्वत्रासिद्धबुद्धिर्द्विगुणितकरणेऽप्यस्ति तेऽल्पप्रयत्नो यः कश्चिन्नैव लोपं भजति बहुतरापेक्षिणोऽप्यन्तरङ्गाः । नो वा बाधः परेण क्वचिदपि विषये नापवादो गुणानां वृद्धीनां वर्णमात्रे सदनमिति नवो रामसाधुत्वमार्गः ॥ १६४ ॥ प्रौढिं धत्तां कलासु प्रथयतु कुमुदं सत्पथे संचरेद्वा नेत्रानन्दं विधत्तां भवतु च विबुधानन्दतु राजा तथापि । दोषान्वेषी कलंकी सहजजडतनुः संक्षयः पक्षपाती नक्षत्रेशः कथं वा कलयतु तुलनां रामचन्द्रेण चन्द्रः ॥ १६५ ॥ माद्यद्वैतण्डगण्डच्युतमदमदिरासंचरच्चञ्चरीकीझांकारानन्दगीताः कविभवनभुवस्ताः पुरस्ताद्भवन्ति । पश्चाद्भवन्ति येषामुपरि करुणया राम-

१ यतोऽम्भसो द्रवत्वेऽपि भवदीयाश्वाद्युत्थापितरजःसंपर्कात्तस्य कर्दमता जातेति भावः. २ घोटकखुरक्षुण्णाः सन्तः. ३ त्वत्सेवया वने प्रवेशादरण्यमपि जनपदवद्भवति. ४ मनोहरम्.

१ स्तम्भः. २ श्वेतयष्टिका. ३ पर्णसंततिः. ४ अवष्टम्भहेतुः. ५ दीपदण्डः. ६ दीपाधारपात्रम्. ७ मध्यवर्तित्वाद्वर्तुलदशाङ्कुरः. ८ चन्द्रपक्षे,-तथा कलास्वंशेषु प्रौढिं प्रागल्भ्यं धत्तां बिभर्तु; रामपक्षे,-यथा कलासु विज्ञानेषु प्रौढिं धत्ते. ९ चन्द्रपक्षे,-तथा कुमुदं प्रकाशं प्रथयतु विस्तारयतु; रामपक्षे,-यथा कौ पृथिव्यां मुदं हर्षं जनयति. १० चन्द्रपक्षे,-तथा सतां देवानां पन्थाः सत्पथ आकाशस्तस्मिन्संचरेत्; रामपक्षे,-यथा सत्पथे सतां योग्ये मार्गे संचरति. ११ चन्द्रपक्षे,-तथा नेत्राणां लोचनानामानन्दं विधत्तां कुरुताम्; रामपक्षे,-यथा नेतॄणां रक्षकाणामानन्दं जनयति. १२ चन्द्रपक्षे,-तथा विबुधान्देवानवतु रक्षतु; रामपक्षे,-यथा विबुधान्पण्डितानवति. १३ चन्द्रपक्षे,-तथा च राजा शोभितोऽस्तु; रामपक्षे,-तथा नाम्ना क्रियया गुणैश्च राजा. १४ चन्द्रपक्षे,-दोषा रात्रिस्तामन्वेषते तच्छीलः; रामपक्षे,-न दोषमन्वेषते किंतु गुणान्. १५ चन्द्रपक्षे,-कलङ्कवान्; रामपक्षे,-कलङ्की न. १६ चन्द्रपक्षे,-सहजतो जलमयी तनुर्यस्य सः रामपक्षे,-निसर्गतो मूढस्वभावो न. १७ चन्द्रपक्षे,-कृष्णपक्ष एकैककलाक्षयात्सक्षयः; रामपक्षे,-न कदाचन तस्य क्षयः, किंतु सर्वदा वृद्धिरेव. १८ चन्द्रपक्षे,-पक्षेऽतीतेऽमायां पतनशीलः; रामपक्षे,-पक्षपाती न. १९ चन्द्रपक्षे,-नक्षत्राणां तारकाणामीशः स्वामी; रामपक्षे,-न च नक्षत्रेशः; किंतु सर्वेषां क्षत्राणामीशः; २० हस्ती. २१ भ्रमरी.

 

मन्ये देव तया क्रमेण जनितो युष्मत्प्रतापानलो येनाराति-वधूविलोचनजलैः सिक्तोऽपि [1]संवर्धते ॥ १५ ॥ देव त्वद्भुजदण्डदर्पगरिमोद्दीर्णप्रतापानलज्वालापङ्क्तिमकीर्तिपारदघटीविस्फारिता बिन्दवः। शेषाहिः कति तारकाः कति कति क्षीरोदधिः कत्यपि प्रालेयाचलशङ्खशुक्तिकरकाः कर्पूरकुन्देन्दवः ॥ १६ ॥ [2]भङ्गाकीर्तिमषीमलीमसतया प्रत्यर्थिसेनाभटश्रेणीतिन्दु[3]ककाननेषु विलसत्यस्य प्रतापानलः । अस्मा[4]दुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं भालोद्धूतभवाक्षिभानुहुतभुग्जम्भारि[5]दम्भोलयः ॥ १७ ॥ तादृग्दीर्घविरिञ्चिवा[7]सरविधौ जानामि यत्कर्तृतां शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः । व्योमव्यापिविपक्षराजकयशस्तारापराभावुकः कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ १८ ॥ शंभुर्मानससंनिधौ सुरधुनीं मूर्ध्ना दधानः स्थितः श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ । मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभूर्मन्ये वीर तव प्रतापदहनं ज्ञात्वोल्बणं भाविनम् ॥ १९ ॥ युष्मत्प्रौढतरप्रतापतपनज्वालावलीव्याकुले ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पयःसागरे । शंभुर्जह्नुसुतां दधाति शिरसा भूमिस्तुषाराचलं तापव्याकुलितः पतत्यतितरां भानुः समुद्रे मुहुः ॥ २० ॥ नार्यः कुङ्कुमशङ्कया निटिलगं प्रोञ्छन्त्यपास्तद्विषां सांध्यं रागममुं विभाव्य गगने गच्छन्ति केलीगृहम् । मुग्धा द्रावधियोऽरयस्तव विभो यान्ति द्रुतं कानने लाक्षाराग इति प्रकुप्यति धवे कान्ता प्रतापोदये ॥ २१ ॥ यो नास्ताचलमस्तकं प्रति गतो दीनत्वमालम्बते यो नायाति निशासु संशयपदं नोदेति गिर्याश्रयात् । यो राहोरपि कर्कशेषु दशनेष्वासीन्न वा गोचरः सोऽयं भूप तव प्रतापतपनो वर्वर्ति सर्वोपरि ॥ २२ ॥ कान्तारे जलवृक्षवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो बालैराकुललोचनैः प्रतिपदं रुद्धक्रमाश्चङ्क्रमे । पृथ्वीचण्डरुचे पटच्चरदशासंघट्टदीप्तप्रभं सिञ्चन्त्यञ्जलिसंचिताश्रुभिरलं युष्मत्प्रतापानलम् ॥ २३ ॥ अध्यायोधनवेदि मार्गणकुशानास्तीर्य खड्गस्रुचा हुत्वारेः पललं चरुं हविरसृक्तन्मस्तकस्वस्तिकैः । संवेष्ट्याहवनीयमानसदसिस्योऽसौ प्रतापानलोऽस्यापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥ २४ ॥ देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानलज्वालाजालभयादिवाभिविशति क्षीराम्बुधिं माधवः। भर्गः स्वर्गधुनीं दधाति शिरसा त्यक्तत्रिलोकीकृतिर्वेधाः किं तु मुहुः कमण्डलुजलैरात्मानमासिञ्चति ॥ २५ ॥ श्रीमद्वीराधिवीर पृथुतरमहसस्त्वत्प्रतापाग्निकीली[1]च्छुत्वाब्धेः शोषवार्तां शरणमनुगतः कुत्रचित्कश्चिदेव । चन्द्रः कीर्त्यां सुधास्ये त्रिदशतरुवरः पाणिपद्मे च कोशे लक्ष्मीः [2]क्ष्वेडं च कोपे जलधरकुसुमं वैरिकान्तादृगन्ते ॥ २६ ॥ द्रागाक्रम्योदयाद्रिं च[3]रमगिरिमितिस्पर्धया तिग्मरश्मेर्मेरुं पर्यस्य लङ्कानगरमुपगतः कौतुकात्त्वत्प्रतापः । वीक्ष्यामुं वीतिहोत्रं पुनरपि विपदं देव निश्चिन्वतीनां यः क्षोभो राक्षसीनां क्षणमजनि स हि त्वद्विषां सर्वदास्ताम् ॥ २७ ॥ त्वत्खड्गाघातजातव्यथरिपुवनितामुक्तबाष्पाम्बुधारासारा[4]दाराद्दुदाराद्दिशि दिशि सरितामुद्भवाश्चिद्रवेयुः । कल्पान्तक्रूरकेलिप्रकरविजयिनो विस्फुरत्त्वत्प्रतापात्पारावारानपारानपि सपदि पराग्शुष्यतः पूरयेत्कः ॥२८॥ दुर्वारारातिवाजीवनदवदहनः कौङ्कुमो दिग्वधूनां सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीपः । त्वद्दोरुद्दामदर्वीकरमुखहुतभुग्भूतधात्रीपुरंध्र्यावासो माञ्जिष्ठमुर्वीरमणकुलमणे जागरीति प्रतापः ॥ २९ ॥ भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रतापज्योतिर्ज्वालावलीभिर्जलनिधिवलयं निर्जलं किं न भूयात् । युष्मत्प्रत्यर्थिपृथ्वीपरिवृढवनितानीरनेत्रस्रवन्तीसूत्रस्रोतःसहस्रैरयमिह परितश्चेन्न पूर्येत सद्यः ॥ ३० ॥

---

## कीर्तिवर्णनम्

राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः । मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ १ ॥ अस्थिवद्दधिवच्चैव कुष्ठवत्पिष्टवत्तथा । राजंस्तव यशो भाति शरच्चन्द्रमरीचिवत् ॥ २ ॥ सरस्वती स्थिता वक्त्रे लक्ष्मीर्वेश्मनि ते स्थिता । कीर्तिः किंकु पिता राजन् येन देशान्तरं गता ॥३॥ यद्गुणैर्ग्रथितैः शुद्धैरमितैर्ब्रह्मगोलकः । विधत्ते कीर्तिकन्यायाः क्रीडाकन्दुककौशलम् ॥ ४ ॥ सिक्तं स्फटिककुम्भान्तः स्थितं श्वेतीकृतैर्जलैः । मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ॥ ५ ॥ अहो विशालं भूपाल भुवनत्रितयोदरम् । मातुं मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६ ॥ त्वत्कीर्तिराजहंसा वैरिवधूवदनभाजनस्थमपि ।

---

१ अत्रायं भावः—वैरिस्त्रियः स्वभर्तृमरणाद्यथा यथाऽधिकं रुदन्ति तथा तथाऽधिकं तन्नेत्राम्बुभिस्त्वत्प्रतापाग्निः संवर्धते त्वत्प्रतापोऽधिको भवतीति यावत्; यतः स प्रतापाग्निर्वडवानलात्पितुस्तडितश्च मातुः समुत्पन्नस्तौ च पितरौ पानीययोगादेवोज्जृम्भेतेऽतस्तत्पुत्रोऽपि त्वत्प्रतापो भवद्वैरिरमणीनेत्राम्बुभिः सिच्यमानो वृद्धिमाप्नोत्येतदुचितमेवेति. २ पराजयः. ३ कालस्कन्धवनेषु. ४ तिन्दुककाष्ठेभ्यो दह्यमानेभ्यो महान्तः स्फुलिङ्गा उत्तिष्ठन्तीति वृद्धव्यवहारः. ५ हरनिटिलनेत्रम्. ६ कुलिशम्. ७ 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति.

१ अर्चिः. २ गरलम्. ३ अस्ताचलः. ४ धारासंपातः. ५ अपरिमितः.

पीतं हासक्षीरं व्यक्तीकृतमश्रुनीरं च ॥ ७ ॥ कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥ ८ ॥ रजनीषु विमलभानोः करजालेन प्रकाशितं वीर । धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम् ॥ ९ ॥ दूरेऽपि श्रुत्वा भवदीयकीर्तिं कर्णौ हि तृप्तौ न च चक्षुषी मे । तयोर्विवादं परिहर्तुकामः समागतोऽहं तव दर्शनाय ॥ १० ॥ आकर्ण्य भूपाल यशस्त्वदीयं विधूनयन्तीह न के शिरांसि । विश्वंभराभङ्गभयेन धात्रा नाकारि कर्णौ भुजगेश्वरस्य ॥११॥ यस्माञ्जनश्यामलखड्गपट्टजातानि जाने धवलत्वमापुः । अरातिनारीशरकाण्डपाण्डुगण्डस्थलीनिर्लुठनाद्यशांसि ॥१२॥ यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि । तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥ १३ ॥ इयं यशांसि द्विषतः सुधारुचः किमङ्कमेतद्विषतः किमाननम् । यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसी मसी ॥ १४ ॥ अदः समित्संमुखवीरयौवैतत्रुटद्भुजाकैम्बुमृणालहारिणी । द्विषद्व्रणस्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ १५ ॥ अनिःसरन्तीमपि देहगर्भात्कीर्तिं परेषामसतीं वदन्ति । स्वैरं चरन्तीमपि च त्रिलोक्यां त्वत्कीर्तिमाहुः कवयः सतीं नु ॥ १६ ॥ करवालकरालवारिधारा यमुना दिव्यतरंगिणी च कीर्तिः । तव कामद तीर्थराज दूरादनुबध्नाति सरस्वती कवीनाम् ॥ १७ ॥ त्रिजगदङ्गनलङ्घनजाङ्घिकैस्तव यशोभिरतीव पवित्रिताः । प्रथमपार्थिवपुंगवकीर्तयो विबुधसिन्धुजलैरिव सिन्धवः ॥ १८ ॥ त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीयैः संदर्भितुं विबुधवामदृशः प्रवृत्ताः । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति ताश्च मिथो हसन्ति ॥ १९ ॥ पृथ्वीपते शुभमते भवतो भवस्य ब्रूमो वयं सुयशसा कियदन्तरं वा । गौरीं चकार गिरिशो निजमर्धमङ्गं गौरीकृतं च भवता भुवनं समस्तम् ॥ २० ॥ कीर्तिस्तव क्षितिप याति भुजङ्गगेहं मातङ्गसंगमकरी च दिगन्तकेषु । त्यक्त्वाम्बरं भजति नन्दनमप्यगम्यं किं किं करोति न निरर्गलतां गता स्त्री ॥ २१ ॥ निर्मुक्तशेषधवलैरचलेन्द्रमन्थसंक्षुब्धदुग्धमयसागरगर्भगौरैः । राजन्निदं बहुलपक्षदलन्मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २२ ॥ प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती । गिरिगरिमनितम्बाच्छादने सावधाना तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥ २३ ॥ त्यजसि यदपि लक्ष्मीं कीर्तिमासाद्य दानैर्व्रजति तदपि कीर्तिः सिन्धुपारं न लक्ष्मीः । कथय क इह हेतुर्नारवेश त्वदीये वसति हृदयपद्मे नन्दसूनुर्मुरारिः ॥ २४ ॥ अनुक्षणमनुक्षणं क्षितिप रक्ष्यमाणा त्वया प्रयाति विदिशो दश प्रबलकीर्तिरेकाकिनी । इयं नियतमर्थिषु प्रतिदिनं वितीर्णा रमा जहाति न तवान्तिकं द्वितयमेतदत्यद्भुतम् ॥ २५ ॥ समुन्नतघनस्तनस्तबककुम्बितुम्बीफलक्कणन्मधुरवीणया विबुधलोकवामभ्रुवा । त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ २६ ॥ वनेषु वनदेवता दिवि दिवौकसां वल्लभा भुजंगकुलकन्यका भुजगलोकलीलावने । यशः समरसंचितं नरमृगेन्द्र गायन्ति ते प्रभाविजितकौमुदीकुमुदपाण्डुताडम्बरम् ॥ २७ ॥ अपायि मुनिना पुरा पुनरमायि मर्यादयाप्यतारि कपिना पुरा पुनरदाहि लङ्कारिणा । अमन्थि मुरवैरिणा पुनरबन्धि लङ्कारिणा क्व नाम वसुधापते तव यशोम्बुधिः क्वाम्बुधिः ॥ २८ ॥ महाराज श्रीमज्जगति यशसा ते धवलिते पयःपारावारं परमपुरुषोऽयं मृगयते । कपर्दी कैलासं सुरपतिरपि स्वं करिवरं कलानाथं राहुः कमलभवनो हंसमधुना ॥ २९ ॥ कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो । शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३० ॥ पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पतङ्गः स्यादङ्कीकृततमपतङ्गापद्युदयः । यशोऽमुष्यैवोपार्जयितुमसमर्थेन विधिना कथंचित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ३१ ॥ इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिर्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि । अद्याप्युर्वीवलयतिलकश्यामलिम्नानुलिप्तान्याभासन्ते वद धवलितं किं यशोभिस्त्व-

१ कम्पयन्ति. २ पृथ्वी. ३ शेषस्य. ४ युवतिसमूहः. ५ शङ्खवलयानि. ६ गुंफितुम्. ७ देवाङ्गनाः. ८ नागलोकम्; पक्षे,-गणिकापतिगेहम्. ९ ऐरावतादीनामष्टदिग्गजानां समागमकरी; पक्षे,-चण्डालसंगमकारिणी. १० दिक्पर्यन्तेषु; पक्षे,-विजनप्रदेशेषु. ११ व्योम; पक्षे,-वस्त्रम्. १२ सुरालयवनम्. पक्षे,-पुत्रम्. १३ गन्तुमशक्यम्; पक्षे,-गमनानर्हम्. १४ निष्प्रतिबन्धत्वम्.

१ पीतः. २ अगस्तिना. ३ मितः. ४ तीर्णः. ५ हनुमता. ६ मथितः. ७ बद्धः. ८ क्षीरसमुद्रम्. ९ विष्णुः. १० शिवः. ११ इन्द्रः. १२ ऐरावतम्. १३ चन्द्रम्. १४ विधिः. १५ यतः सर्वेषां समुद्राणां पर्वतानां गजानां सर्वभक्ष्याणां पक्षिणां च त्वच्छ्वेतकीर्त्या श्वेतत्वात्क्षीराब्ध्यादीनामनवगमस्तेषामतस्ते तान्सर्वत्रावलोकयन्तीति भावः. १६ तन्तुवायः; पक्षे,-कुं पृथिवीं विन्दति लभते सः. १७ पटं वस्त्रं करोषि; पक्षे,-पटुं करोषि. १८ तन्तुः; पक्षे,-सद्गुणः. १९ नग्नाः; पक्षे,-स्तुतिपाठकाः. २० कलङ्कः. २१ दिग्गजानाम्. २२ युक्तानि. २३ नीलिम्ना.

दीयैः ॥ ३२ ॥ किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥ ३३ ॥ कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् । स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३४ ॥ अध्याहार स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयः फणसमुचितः काययष्टीनिकायः । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः ॥ ३५ ॥ कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ ३६ ॥ समितिपतिनिपाताकर्णनद्रागुदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु । लिखितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ३७ ॥ सुसितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ३८ ॥ देव त्वद्यशसि प्रसर्पति जगल्लक्ष्मीसुधोच्चैःश्रवश्चन्द्रैरावणकौस्तुभः स्थितिमिवामन्यन्त दुग्धाम्बुधौ । किं त्वेकः पुनरस्ति दूषणकणो यन्नोपयाति भ्रमात्कृष्णं श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रेवती ॥ ३९ ॥ इन्दुं निन्दति चन्दनं न सहते मल्लीस्रजं नेक्षते हारं द्वेष्टि सिताब्जमुज्झति बिसस्तोमं विगृह्णाति च । श्रीभूपाल महीधरेषु विपिनेष्वम्भोधितीरेषु च त्वत्कीर्तिस्त्वदरिप्रिया च विलसत्युच्चैः स्फुरत्पाण्डिमा ॥ ४० ॥ इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः । स्वर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गते त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥ ४१ ॥ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते । चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयोबुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः ॥ ४२ ॥ कर्पूरादपि केतकादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि कैरवादपि चलत्कान्तादृगन्तादपि । दूरोन्मुक्तकलङ्कशंकरशिरःशीतांशुखण्डादपि श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी ॥ ४३ ॥ देव त्वद्यशसा सदा सुमहसा गीर्वाणवृन्देऽखिले शम्भोर्भावमवापिते तु सहसा यत्कौतुकं तच्छृणु । साकूताः सकुतूहलाः सचकिताः सोत्कण्ठिताः साद्भुताः साशङ्काश्च मुहुर्मुहुर्मधुरिपौ लक्ष्म्यादृशः पातिताः ॥ ४४ ॥ किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः किंवा केतकसूचयः किमथवा चन्द्रोपलानां चयः । इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः ॥ ४५ ॥ श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान्पूर्तये । उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं तस्याग्रे फणिपुंगवं तदुपरि स्फारं सुधादीधितिम् ॥ ४६ ॥ भारत्या वदनं श्रिया च सदनं श्रीकण्ठभक्त्या मनो धर्मेण श्रवणौ परैश्च चरणौ शौर्येण बाहुद्वयम् । दानेनापि करौ समीक्ष्य सकलं यस्याज्ञया भूतलं स्थातुं चानवकाशतां कथयितुं कीर्तिस्तु दूरं गता ॥ ४७ ॥ अस्योर्वीरमणस्य पार्वणविधुद्वैराशंसज्जं यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥ ४८ ॥ कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हंसन्ति च प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च । त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः ॥ ४९ ॥ किं चित्रं भुवनानि पावयति यद्यच्चाहितानां यशो हंसान्मज्जयति प्रतापदहनं निर्वापयत्याशु यत् । आश्चर्यं नृपनायकस्य भवतो यत्कीर्तिमन्दाकिनी तानारोहति भूधराञ्जलनिधीनुल्लङ्घ्य गच्छत्यपि ॥ ५० ॥ अर्वाङ्गाहितपौर्वकीर्तिवनितादीव्यत्सितांशुप्रभं कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् । विश्वव्याप्यविनाशि शंकरपदं यायात्त्वदीयं यशो न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः ॥ ५१ ॥ कृत्वा मेरुमुलूखलं प्रहसता वृन्देन दिग्योषितां स्वर्गङ्गामुसलेन शालय इव त्वत्कीर्तयः कण्डिताः । तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः किं चान्यच्छशिखण्डशूर्पविसरज्योत्स्नाश्च तत्पांसवः ॥ ५२ ॥ कैलासीयति कैरवीयति लसत्कर्पूरपुञ्जीयति क्षीरोदीयति मौक्तिकीयति नभोगङ्गातरङ्गीयति । हंसौघीयति मानसीयति शरन्मेघीयति क्षोणिभृन्नाथीयत्यमृतीयति क्षितितले देव त्वदीयं यशः ॥ ५३ ॥ गङ्गीयत्यसितापगा फणिगणं शेषीयति श्रीपतिः श्रीकण्ठीयति

१ शेषपूरकः. २ समूहः. यावत्फणं कायैर्भवितव्यमिति भावः. ३ कायसंघातः. ४ अभिन्ना, अक्षरविन्यासयोग्या इति यावत्. ५ बलभद्रम्.

१ संनद्धम्. २ कैलासस्य ३. कैलासादपि शुभ्रम्. ४ रूपान्तरम्. ५. सर्वस्यापि पुनरुक्तिः.

कैरवीयति कुलं नीलोत्पलानां वने[१] । कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वःकुम्भीयति[२] कुम्भिनामपि घटा त्वत्कीर्तिसंघट्टतः ॥ ५४ ॥ पूर्णेन्दुः करकन्दुको हिमगिरिः क्रीडाविहारस्थली क्षीराब्धिर्गृहदीर्घिका प्रियसखी वाचां पतिर्देवता[४] । शय्या दिग्गजराजदन्तवलभी त्वत्कीर्तिकन्याकृते[५] पाञ्चालीमिथुनं[६] व्यधायि विधिना गौरीगिरीशावपि ॥ ५५ ॥ शत्रुक्षत्रकलत्रनेत्रसलिलैर्जम्बालजालस्पृशि[७] भ्रान्त्वा भूपतिभालभूषण भवत्कीर्तिर्भुवो मण्डले । यद्यान्ती विबुधालयं प्रति सुधाकुण्डे सुधांशोर्व्यधादङ्घ्रिक्षालनमित्ययं[८] किल मलस्तस्मिन्गतः स्मरताम् ॥ ५६ ॥ एतत्कीर्तिविवर्तधौतनिखिलत्रैलोक्यनिर्वासितैर्विश्रान्तिः[१०,११] कलिता कथासु जरतां[१२] श्यामैः[१३] समग्रैरपि । जज्ञे कीर्तिमयादहो भयभरैरस्मादकीर्तिः पुनः सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥ ५७ ॥ त्वत्तेजःप्रतिभाभयादपसृताः प्रत्यर्थिभूभृत्स्त्रियः कान्तारे घनकण्टकिद्रुमवनव्यस्तप्रयुक्ताम्बराः । आर्याणां पुरतस्त्रपापरवशा गच्छेयुरेताः कथं क्षौमाकातरया न चेत्परिणमेत्त्वत्तावकीनं यशः ॥ ५८ ॥ चन्द्रश्चन्दनमिन्दुरिन्दुरमणं पीयूषमीशादयो विश्वस्योपकृतावनेन महता ते तेऽवतारा धृताः । एतद्यत्र न विद्यते त्रिभुवने न स्थानमेवंविधं जाने जङ्गमपारिजातसगुणं त्वय्येव पूर्वं यशः ॥ ५९ ॥ चन्द्राद्रूप्यकमण्डलोः समुदयद्गौरांशुगङ्गाजलैर्ज्योत्स्नाचन्दनचर्चनैर्विकसितैस्ताराप्रसूनैरपि । एतद्विष्णुपदं किमश्नुति भवत्कीर्तिर्महायोगिनी पूजामूर्तिविधायि लक्ष्म तुलसीदाम्ना कदाऽन्विष्यति ॥ ६० ॥ गङ्गासागरसंगमे कृतशतस्नाना बदर्याश्रमे स्थित्वासौ परिधाय तद्गुणमयं श्वेतं दुकूलं पुनः । ब्राह्मं वैष्णवमैन्द्रमैश्वरमपि स्थानं स्पृशन्ती मुहुः कीर्तिस्ते पतिदेवता युगशतं दीर्घायुराकाङ्क्षति ॥ ६१ ॥ अर्घायाम्बुधिरिन्दुमण्डलमपि श्रीचन्दनं तण्डुलास्तारा बिल्वदलं नभः सुरधुनी धूपः प्रदीपो रविः । खेटाः पञ्चफलानि किंच ककुभस्ताम्बूलमारार्तिकं मेरुः श्रीजगतीपते तव यशोयागेश्वरस्यार्चने[१५] ॥६२॥ देव क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः । स्यादेवं त्वदरातिसौधवलभीप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ ६३ ॥ भोगीन्द्रः प्रमदोत्तरङ्गमुरगीसंगीतगोष्ठीषु ते कीर्तिं देव शृणोतु विंशतिशती यच्चक्षुषां वर्तते । रक्ताभिः सुरसुन्दरीभिरभितो गीतं च कर्णद्वयीदुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ॥ ६४ ॥ गीयन्ते यदि पन्नगीभिरनिशं त्वत्कीर्तयस्तद्वयं तुष्टा एव परंतु चेतसि चमत्कारोऽयमारोहति । तासां तादृशभावभङ्गचलनासंस्थानसंदर्शिनि व्यालेन्द्रेऽप्यवधूतमूर्धनि महीचक्रं पुनर्भ्राम्यति ॥ ६५ ॥ यद्गन्धद्विपदानवारिभिरभूत्सङ्ग्रामभूः पङ्किला तस्यां वैरिकरीन्द्रमौक्तिकमयं बीजं च येनाहितम् । तस्मात्प्रादुरभूद्यशस्तरुरयं तस्योद्गताः कोरकास्तारास्तेषु च पूर्णचन्द्रकपटादेकैक उज्जृम्भते ॥ ६६ ॥ यत्कीर्तिर्वलयं भुवः सुविमलं संपाद्य संचारतः क्रान्त्वा मेरुगिरिं विधाय सरितांनाथस्य सख्यं दृढम् । आराध्यामृतभानुशेखरमलं संपाद्य तद्रूपतां गच्छन्ती त्रिदशालयं द्रुतगतिः शीतांशुना स्पर्धते ॥ ६७ ॥ शैलूषी तव कीर्तिरद्भुतकरी दृष्ट्वा समस्ता दिशो मेरुं वंशवरं परीत्य परितस्तूर्णं समारुह्य तम् । भ्राम्यन्ती परितः प्रनर्तिततनुर्मुक्तावलीमौक्तिकैस्ताराभिस्तरलीकरोति गगनं भूमण्डलाखण्डल ॥६८॥ त्वत्कीर्तिः शशिनः समीपमगमत्कान्तिप्रतिस्पर्धया दृष्ट्वा तं च कलङ्किनं पुनरसौ स्नातुं जगमाम्बुधिम् । श्रुत्वा तं च घटोद्भवेन मुनिना पीतोज्झितं तत्पयः पुण्यं ब्रह्मकमण्डलुं कलयितुं ब्रह्माण्डमन्यं ययौ ॥ ६९ ॥ कैलासीयति केतकीयति हसत्कुन्दीयति प्रोच्छलत्क्षीरोदीयति चन्दनीयति लसत्कर्पूरपूरीयति । पीयूषीयति शर्करीयति शरच्चन्द्रीयति क्ष्मापते स्वर्गङ्गीयति शंकरीयति भवत्कीर्तिः करीन्द्रीयति ॥ ७० ॥ विश्वासो भवता यशस्यपि निजे कार्यो न शौर्याधिके मा कोशादिवशान्नपुंसकमिति ज्ञात्वावहेलां कृथाः । यज्जङ्घालधुरंधरेण धरणीनाथ द्विधा कुर्वता ब्रह्माण्डं विदधेऽमुना भवदरिक्षोणीभुजां निर्गमः ॥ ७१ ॥ रिङ्गत्तुङ्गतरङ्गसुन्दरसुधासिन्धुं तरत्युज्ज्वला रागाच्छर्वपुरःसरानभिसमं देवान्मुदालिङ्गति । क्रूराहीश्वरमाश्लिषत्यधिगृहं याति ध्रुवं भूपते साध्वीशब्दरता तथापि कुतुकं कीर्तिः प्रभक्ता क्षितौ ॥ ७२ ॥ कस्तूरी सितिमानमागतवती शौक्ल्यं गताः कुन्तला नीलं चोलमभूत्सितं धवलिमा जातो मणीनां गणे । ध्वान्तं शान्तमभूत्समं नरपते त्वत्कीर्तिचन्द्रोदये त्रैलोक्येऽप्यभिसारसाहसरसः शान्तः कुरङ्गीदृशाम् ॥ ७३ ॥ स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदपूरोदरच्छायाहारिणि वारिणि द्युसरितो दिक्पूरवि-

---

१ जले. 'जीवनं भुवनं वनं' इति कोशः. २ ऐरावणमिवाचरति ३ हस्तिनाम्. ४ सरस्वती. ५ त्वत्कीर्तिरेव कन्या तदर्थम्. ६ पुत्रिकायुगलम्. ७ वैरिराजः. ८ कर्दमः. ९ अत्रायं भावः— यच्चन्द्रान्तः कालुष्यमवलोक्यते तत्पङ्किलभूभ्रमणेन कर्दमाङ्कितचरणया त्वत्कीर्त्या चन्द्रामृतकुण्डे स्वमलिनपादक्षालनतो जनितमिति. अन्योऽपि हि यो देवतालयं याति स जलपूर्णकुण्डे चरणौ प्रक्षाल्य याति तथेयमपीति. १० विलसैः. ११ निष्कासितैः. १२ वृद्धानाम्. १३ श्यामवस्तुभिः. १४ वस्त्रम्. १५ यशोरूपस्य यागेश्वरस्य शिवस्य.

स्तारिणि । आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥ ७४ ॥ क्षीरोदीयन्ति सद्यः सकलजलधयो वासुकीयन्ति नागाः कैलासीयन्ति शैला दिवि च दिविषदः शंकरीयन्ति सर्वे । यौष्माकीणे समन्तात्प्रचलति धवले चारुकीर्तिप्रताने मद्योषाकाचभूषाः किमिति न सहसा मौक्तिकीयन्ति देव ॥७५॥ उद्यद्वालाङ्कुरश्रीर्दिशि दिशि दशनैरेभिराशागजानां रोहन्मूलासुगौरैरुरगपतिफणैरत्र पातालकुक्षौ । अस्मिन्नाकाशदेशे विकसितकुसुमा राशिभिस्तारकाणां नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधाब्धिम् ॥ ७६ ॥ वापी पातालमूलं जलमुरगनदी कच्छपः स्वच्छकन्दः शेषो नालं दलानां विततिरपि फणाः कर्णिका शैवशैलः । तारास्ताराः परागा मधु च मधुमती केसरा दन्तिदन्तास्तस्मिंस्त्वत्कीर्तिपद्मे भ्रमति मधुकरः शर्वरीसार्वभौमः ॥ ७७ ॥ नेपालीनामराले विरचयति कचे केतकीपत्रकृत्यं कण्ठे मुक्ताकलापाद्द्विगुणयति सितान्पाण्ड्यसीमन्तिनीनाम् । कर्णे कर्णाटकीनां प्रकटयतितमां दन्तताटङ्कलक्ष्मीं कार्पूरी पत्रवल्ली भवति तव यशो गण्डयोः केरलीनाम् ॥ ७८ ॥ लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासि यष्ट्यारिकण्ठे मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती । तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥ ७९ ॥ शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीर्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खङ्गयष्टिः । आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥ ८० ॥ अन्तः संतोषबाष्पैः [1]स्थगयति न [2]दृशस्ताभिराकर्णयिष्यन्नङ्गै[3]र्नानस्तिलोमा रचयति पुलकश्रेणिमानन्दकन्दाम् । न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ ८१ ॥ यावत्पौ[4]लस्त्यवास्तूभव[5]दुभयहरिल्लोमरेखोत्तरीये सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः । याव[6]त्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रौ[7]वद्री संध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ८२ ॥ आस्ते [8]दामोदरीयामियमुदरदरीं याधिशय्य त्रिलोकी संमातुं शक्तिमन्ति [9]प्रथिमभरवशादत्र नैतद्यशांसि । तामेतां पूरयित्वा निरगुरिव [1]मधुध्वंसिनः [2]पौण्ड्रपद्मच्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ८३ ॥ देव ब्रह्माण्डभाण्डे सदसि विकसितन्यायनान्दीनिनादैर्भूतेशप्रीतिहेतोर्भुवनधवलनं नाटकं नाटयन्त्याः । त्वत्कीर्तेर्मूर्तयोऽमी कुमुदकुमुदिनीकान्तकर्पूरकुन्दक्षीराब्धिक्षीरमुक्तामणिविबुधसरित्तारकाशेषशङ्खाः ॥ ८४ ॥ बीजं चेदिन्द्रदन्तिस्फुरितगलतटीमुक्तमुक्तामणिः स्याचन्द्रश्चेदालवालं यदि भवति सुधावारिसेकीन्दुमौलिः । तत्रोत्पन्ना लता काप्यमृतकरनिभं चेत्प्रसूनं प्रसूते मन्ये तत्स्यात्तदानीमवनिधव भवत्कीर्तिलेशोपमार्थम् ॥ ८५ ॥ दुग्धाम्भोधावगाधे विहरति सुधया क्षालयत्यङ्घ्रियुग्मं कृत्स्नां ज्योत्स्नां दुकूलं कलयति मलयोद्भूतचर्चां तनोति । स्वच्छन्दं नृत्यति द्राग्भुजगपतिशिरस्येव निद्राति चन्द्रे त्वत्कीर्तिः स्वामिनीव त्रिजगति विहरत्येवमुर्वीश गुर्वी ॥ ८६ ॥ स्वर्गे कल्पद्रुमाधस्तव जयति यशःपुञ्जयागेश्वरोऽयं यं नित्यं देवराजः स्नपयति नियतं कामधुग्दुग्धपूरैः । यन्मौलौ विल्वपत्रद्युतिमिदममलं व्योम धत्तेऽतिनीलं चन्द्रः पाटीरपङ्कं तदुपरि ललितास्तारकास्तण्डुलानि ॥ ८७ ॥ यत्कीर्तिः कापि गङ्गाखिलमलनिचयं नाशयन्ती गभीरं क्षीराब्धिं यत्प्रतापज्वलनकरगणैः शोषितं पूरयन्ती । भूलोकस्यान्तरालस्फुरदतुलमहादुःखपापौघपङ्कं भूयः प्रक्षालयन्ती त्रिजगति महिता सौख्यमाविष्करोति ॥ ८८ ॥ तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यन्यञ्चद्दिव्यस्रवन्तीसितचमरचयं लालयन्दिग्वधूभिः । राकाचन्द्रातपत्रं दिनकरमुकुटं ग्राहयँल्लोपकालान्निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्ती बघेल ॥ ८९ ॥ कालिन्दीनर्मदाम्भःस्रुतमदसलिलोत्सङ्गिनौ [3]पुष्पवन्तौ बिभ्राणः कुम्भयुग्मं गगनतलगतः स्वर्धुनीपूरशुण्डः । घण्टालः साधुवादैरनभिमतयशोमृन्मलं संदधानः कीर्तिस्तोमाभ्रकुम्भी जगदुदरसरःसंभ्रमी बम्भ्रमीति ॥ ९० ॥ स्फूर्जद्ब्रह्माण्डशुक्तौ तव भुजजलदोद्दामदानौघवर्षप्रोद्यत्त्वत्कीर्तिमुक्ताफलममलमहो वामकर्णे निधाय । अन्यं तेनैव तुल्यं धरणिधरसुता प्रार्थयामास पत्यौ तस्यालाभेन मन्ये प्रभुरपि जगतामर्धनारीश्वरोऽभूत् ॥ ९१ ॥

## कीर्तिप्रतापौ

रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः । भूमौ प्रतापयशसी सृष्टवान्सततोदिते ॥ १ ॥ मलिनयितुं खलवदनं

१ आच्छादयति. २ दृग्भिः. ३ अविद्यमानलोमा. ४ विभीषणवैश्रवणयोः. ५ दक्षिणोत्तरदेशावित्यर्थः ६ प्रभू, इन्द्रवरुणावित्यर्थः. ७ उदयास्तशैलावित्यर्थः. ८ वैष्णवीम्. ९ महिमातिशयवशात्.

१ विष्णोः. २ नाभिपुण्डरीकव्याजापन्नानि. ३ सूर्याचन्द्रमसौ.

विमलयति जगन्ति देव कीर्तिस्ते । मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥ २ ॥ सिन्दूरं सीमन्तास्थितं मुक्ताद्वैरिराजवनितानाम् । यस्य प्रतापयशसी हरतः स्म सदृग्गुणासहने ॥ ३ ॥ तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा । तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥ ४ ॥ कीर्त्यास्य चन्द्रकरकोमलयातिशुभ्रं शोणं नवार्ककिरणप्रतिमप्रतापैः । श्यामद्युति द्विषदकीर्तिमषीभिरित्थं चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥ ५ ॥ क्षितिप किमपि चित्रं जागरूकेऽपि युष्मद्यशसि शशिकदम्बे त्वत्प्रतापेऽर्कबिम्बे । नयनकुवलयानि त्वद्विषत्कामिनीनामपि च वदनपद्मान्याशु यत्संकुचन्ति॥६॥ गुणागारे गौरे यशसि परिपूर्णे विलसति प्रतापो वा भिन्नान्दहति तव भूमीन्द्रतिलक । नवैव द्रव्याणीत्यकथयदहो मूढतमधीश्चतुर्धा तेजोऽपि व्यभजत कणादः कथमसौ ॥ ७ ॥ कीर्तिस्वर्गतरङ्गिणीभिरभितो वैकुण्ठमाप्लावितं क्षोणीनाथ तव प्रतापतपनैः संतापितः क्षीरधिः । इत्येवं दयितायुगेन हरिणा त्वं याचितः स्वाश्रयं हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान् ॥ ८ ॥ भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमादेतस्य स्तुम हे महेभदशनस्पर्धीनि कैरक्षरैः । लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदैरस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥ ९ ॥

---

## राज्याधिकारगर्हणम्

परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम् । धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १ ॥ औत्सुक्यमात्रमवसादयति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनवृत्तिरेव । नातिश्रमापनयनाय यथा श्रमाय राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ २ ॥ परार्थानुष्ठाने जडयति नृपं स्वार्थपरता परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः । परार्थश्चेत्स्वार्थादभिमततरो हन्त परवान्परायत्तः प्रीते कथमिव रसं वेत्तु पुरुषः ॥ ३ ॥ भयं तावत्सेव्यादभिनिविशते सेवकजनं ततः प्रत्यासन्नाद्भवति हृदयेष्वेव निहितम् । अतोऽध्यारूढानां पदमसुजनद्वेषजननं मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ ४ ॥ छिन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् । तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ५ ॥

१ सुहृत्. २ सूर्याय. ३ परिधिः. ४ छलात्. ५ कुण्डलनां वैयर्थ्यसूचिकां रेखावेष्टनाम्. ६ रञ्जद्भिः. ७ कृत्रिमम्. ८ रसलिप्तसुवर्णं रजतसुवर्णं भवति तत्पुनरग्निदाहात्प्रकृतिस्थं भवतीति प्रसिद्धमेव. ९ नाशयति. १० गुरुता. ११ निकटस्थायिजनात्. १२ अतिशयप्राप्तमहिम्नाम्. १३ दुर्जनस्य. १४ उन्नतानाम्.

---

## राजसेवकः

राजसेवा मनुष्याणामसिधारावलेहनम् । व्याघ्रीगात्रपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥ १ ॥ संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम् । स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ २ ॥ अन्तःपुराणां विहितव्यवस्थः पदे पदेऽहं स्खलितानि रक्षन् । जरातुरः संप्रति दण्डनीत्या सर्वं नृपस्यानुकरोमि वृत्तम् ॥ ३ ॥ अशुभपुषि कलावप्यप्रमत्ता स्वधर्मादनुदिनमुपकारानाचरन्ते बुधानाम् । बहुजनपरिपुष्टा बद्धदीक्षास्त एते तनुसुखमपि हित्वा तन्वते राजसेवाम् ॥ ४ ॥ नैषां संध्याविधिरविकलो नाच्युतार्चापि साङ्गा न स्वे काले हवननियमो नापि वेदार्थचिन्ता । न क्षुद्वेलानियतमशनं नापि निद्रावकाशो न द्वौ लोकावपि तनुभृतां राजसेवापराणाम् ॥ ५ ॥ सर्वः कल्ये वयसि यतते लब्धुमर्थान्कुटुम्बी पश्चात्पुत्रैरुपहितभरः कल्पते विश्रमाय । अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां सेवाकाकुः परिणतिरभूत्स्त्रीषु कष्टोऽधिकारः ॥ ६ ॥ नोच्चैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वापि नाकर्णितं शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्ब्यते । सर्वत्र स्खलितेषु दत्तमनसा यातं मया नोद्धतं सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥ ७ ॥ भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभादन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः । दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ ८ ॥ अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः प्रज्ञाविक्रमशालिनोऽपि हि भवेत्किं भक्तिहीनात्फलम् । प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च ॥ ९ ॥

---

## रथवेगवर्णनम्

आलिङ्गन्तो वसुधां निजखुरदलितामिवानुनेतुममी । वदनविनिर्गतचरणा इव लक्ष्यन्ते जवादश्वाः ॥ १ ॥ उद्धत-

१ नियतम्. २ सत्यमप्यसत्येनासत्यमपि सत्येन चावृतम्. ३ अर्थिप्रत्यर्थिप्रभृतयः. ४ खड्गधारा. ५ जिह्वया घट्टनम्. ६ सर्पिणी. ७ प्रथमे. ८ योग्यो भवति.

पांसुपटलानुमितप्रबन्धधावत्खुराग्रचयचुम्बितभूमिभागाः । निर्मथ्यमानजलधिध्वनिघोरघोषमेते रथं गगनसीम्नि वहन्ति वाहाः ॥ २ ॥ मुक्तेषु रश्मिषु निरायतपूर्वकाया निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः । वातोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ३ ॥ यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां यदन्तर्विच्छिन्नं भवति कृतसंधानमिव तत् । प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोर्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ४ ॥ विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिनामायान्तीव जवेन संमुखममी मार्गस्थिताः शाखिनः । खेदं पादतलाहतेरिव पुरो गन्तुं गतो नेहते पादानामनुकूलमारुतभरोद्धूतोऽपि धूलिव्रजः ॥ ५ ॥ अग्रे यान्ति रथस्य रेणुवदमी चूर्णीभवन्तो घनाश्चक्रभ्रान्तिररान्तरेषु जनयत्यन्यामिवारावलिम् । चित्रन्यस्तमिवाचलं हयशिरस्यायामवच्चामरं यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥ ६ ॥

## समुद्रवर्णनम्

साक्षात्किलाष्टमूर्तेस्तस्यैषा मूर्तिरम्मयी प्रथमा । गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्यः ॥ १ ॥ लक्ष्मीरस्य हि यादः कृष्णोरःस्थापि सुभटभुजवसतिः । इन्दुः स च मृडचूडामणिरपि जगतामलंकारः ॥ २ ॥ आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् । फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ३ ॥ नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा । अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ४ ॥ स्यादेव तोयममृतप्रकृतिर्यदि स्यान्नैकान्तमद्भुतमिदं पुनरद्भुतं नः । लक्ष्मीतुषारकरकौस्तुभपारिजातधन्वन्तरिप्रभृतयो यदपां विवर्तः ॥ ५ ॥ आकण्ठदृष्टशिरसाप्यभिभाव्यपृष्ठपार्श्वोदरेण चिरमृग्भिरुपास्यपानः । नाभीसरोरुहजुषा चतुराननेन शेते किलात्र भगवानरविन्दनाभः ॥ ६ ॥

## पर्वतवर्णनम्

अयम[1]तिजरठाः प्रकामगुर्वीरलघुविलम्बि[2]पयोधरोपरुद्धाः । सततमसुमतामगम्यरूपाः [3]परिणतदिक्करिकास्तटीर्बिभर्ति ॥ १ ॥ अयमभिनवमेघश्यामलोत्तुङ्गसानुर्मदमुखरमयूरीमु[4]क्तसंसक्तकेकः । शकुनि[5]शबल[6]नीडानोकहस्निग्ध[7]वर्ष्मा वितरति [1]बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ २ ॥ दधति [2]कुहरभाजामत्र भल्लूकयूना[3]मनुरसितगुरूणि [4]स्त्यान[5]मम्बूकृतानि । शिशिरकटुकषायः [6]स्त्यायते [7]सल्लकीनामि[8]भदलितविकीर्ण[9]ग्रन्थिनिष्यन्दगन्धः ॥ ३ ॥ इह समदशकुन्ताक्रान्त[10]वानी[11]रवीरुत्[12]प्रसवसुरभिशीतस्वच्छतोया वहन्ति । फलभर[13]परिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ ४ ॥ एते ते गिरिकूटसंघटशिलासंघट्टशीर्णाम्भसः प्रेङ्खच्चामरचारुसीकरकणस्मेरा दरीनिर्झराः । यत्पातेषु निकुञ्जकुञ्जरमुखभ्रश्यन्मृणालाङ्कुरग्रासोद्ग्रन्थितटं रटन्ति परितः कण्ठीरवा भैरवम् ॥ ५ ॥

## सरोवर्णनम्

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ १ ॥

## वनश्रीवर्णनम्

नीपस्कन्धे निवसति लसद्बर्हभारो मयूरो दीर्घापाङ्गश्चरति च तृणं शाद्वलेऽयं कुरंगः । कुम्भेनोच्चैः स्पृशति विटपे सल्लकीं कुञ्जरोऽसौ कस्मै नायं कमलनयने रोचतेऽरण्यभागः ॥ १ ॥ हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः कुसुमललितैर्विष्वग्वातैस्तरङ्गितपादपाः । विविधविहगश्रेणीचित्रध्वनिप्रतिनादिता मनसि न मुदं केषां दध्युः शिवा वनभूमयः ॥ २ ॥ वानीरप्रसवैर्निकुञ्जसरिता[14]मासक्तवासं पयः पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः । उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः [15]प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानायते ॥ ३ ॥ [16]जृम्भा[17]जर्जरडि[18]म्बडम्[19]बरघनश्रीमत्कदम्बद्रुमाः शैलाभोगभुवो भवन्ति ककुभः [20]कादम्बिनीश्यामलाः । [21]उद्यत्[22]कन्दलकान्तकेतकभृतः [23]कच्छाः सरित्स्रोतसामाविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ ४ ॥ नि[24]ष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्च[25]ण्ड[26]सत्त्वस्वनाः स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः । सीमानः [27]प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं तृष्यद्भिः [28]प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ ५ ॥ वृन्तैः क्षुद्रप्रवाल-

१ गिरिपक्षे,—कठिनाः, वृद्धवेश्यापक्षे,—जीर्णाः. २ मेघः पक्षे,—कुचाः. ३ परिणतास्तिर्यग्दन्तप्रहारिणो दिग्गजा यासु ताः; पक्षे,—परिणते प्रकटे दिक्करिके दिग्वर्तुलं दशनक्षतम्. करिका नखक्षतं यासां ताः. ४ मिलिताः. ५ कर्बुरैः. ६ पक्षिवासवृक्षाः. ७ शरीरम्.

१ विपुलशिलः. २ गुहावासिनाम्. ३ प्रतिरवेण स्थूलानि. ४ घनताम्. ५ सश्लेष्मकथूत्कारध्वनयः. ६ निबिडीभवति. ७ वृक्षभेदानाम्. ८ खण्डित. ९ विस्तीर्ण. १० पर्व. ११ वेतसलतानाम्. १२ पुष्पैः. १३ परिपाकेन. १४ लग्नसौरभम्. १५ शिखरेषु. १६ विकासेन. १७ पृथग्भूतः. १८ गोलकः. १९ आडम्बरेण. २० मेघमालाश्यामाः. २१ विकसितैः. २२ नवाङ्कुरैः. २३ कूलानि. २४ निःशब्दतया गम्भीराः. २५ भीषणाः. २६ वनजन्तूनाम्. २७ भूविदारमध्येषु. २८ कृकलासैः.

स्थगितमिव तलं भाति शेफालिकानां गन्धः सप्तच्छदानां सपदि गजमदामोदमोहं करोति । एते चोच्चिद्रपद्मच्युतबहुलरजःकायपिङ्गाङ्गरागा गायन्त्यत्राप्यवाचः किमपि मधुलिहो वारुणीपानमत्ताः ॥ ६ ॥ श्रोत्रं हंसस्वनोऽयं सुखयति दयितानूपुराह्लादकारी दृष्टिप्रीतिं विधत्ते तटतरुविवरालक्षिता सौधमाला । गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं गात्राणां ह्लादमेते विदधति मरुतो वारिसंपर्कशीताः ॥ ७ ॥

## मृगयावर्णनम्

निहत निहत तूर्णं धत्त धत्त त्वराभिर्मिलत मिलत के के कुत्र कुत्र प्रयान्ति । इत इत इत एते यान्ति यान्तीत्यरण्यादतुलकलकलश्रीः सर्वतः प्रादुरासीत् ॥ १ ॥ अनवरतधनुर्ज्यास्फालनक्रूरकर्मा रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः । उपचितमपि गात्रं व्यायतत्वादलक्ष्यं गिरिचर इव नागः प्राणसारं बिभर्ति ॥ २ ॥ मार्गं देहि पदं निधेहि निभृतं तं शब्दमाकर्णय श्वानं वारय कन्दलात्कलकलः कोऽयं सखे तावकः । इत्यन्योन्यमनेकधा मृगवधव्यापारपारंगमैर्व्याधैः कोऽप्यधिको रसः प्रतिपदं जल्पद्भिरुत्पाद्यते ॥ ३ ॥ क्ष्वेलातर्जितसिंहगर्जितभयभ्राम्यद्गजग्रामणीभीत्कारद्रवदक्षदर्शनकृतभ्रूभङ्गशाखामृगम् । कुन्तक्षुण्णतरक्षुवक्त्रगलितक्षोणीनिषण्णार्भकघ्राणं व्यापृतरोहिताहितबहूत्कारं वनाभ्यन्तरम् ॥ ४ ॥ एष क्षुभ्नाति[1] पङ्कं दलति[2] कमलिनीमत्ति गुन्द्राप्ररोहानारान्मुस्तास्थलानि स्थपुटयति[3] जलान्युत्कसेतूनि[4] याति । प्राप्तः प्राप्तः प्रविष्टो वनगहनमयं याति यातीति सैन्यैः पश्चादन्विष्यमाणः प्रविशति विषमान्काननान्तान्वराहः ॥ ५ ॥ आस्तीर्यन्तामुपान्ते वनवृति[5]निपुणैर्जालिकैर्जालबन्धा मुच्यन्तां शृङ्खलाभ्यः श्वगणिभिरटवीगह्वरे सारमेयाः । आकीर्यन्तां स्थलानि श्रमशिथिलहयैः सादिभिः पाशहस्तैर्व्याधूयन्तां कृतान्तैरिव महिषचरैर्दण्डिभिः काननानि ॥ ६ ॥ शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षुव्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् । खड्गव्यालूनकण्ठं तुमुलकलकलप्रान्तकूजच्छकुन्तं भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ७ ॥

१ विलोडयति. २ विमर्दयति. ३ विषमोन्नतानि करोति. ४ उत्काः संशयमारूढाः सेतवो येषां तानि. ५ अरण्यवेष्टनपटुभिः.

## मृगयानिवृत्तिः

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ १ ॥

## ऋष्याश्रमवर्णनम्

विष्वक्तपोवनकुमारसमर्प्यमाणश्यामाकतण्डुलहृतां च पिपीलिकानाम् । श्रेणीभिराश्रमपथाः प्रथमानचित्रपत्त्रावलीवलयिनो मुदमुद्वहन्ति ॥ १ ॥ व्याजृम्भमाणवदनस्य हरेः करेण कर्षन्ति केसरसटाः कलभाः किलैके । अन्ये च केसरिकिशोरकपीतमुक्तं दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥ २ ॥ मधुरमिव वदन्ति स्वागतं भृङ्गनादैर्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः । ननु ददत इवार्घं पुष्पवृष्टिं किरन्तः कथमतिथिसपर्यां शिक्षिताः शाखिनोऽपि ॥ ३ ॥ नीपस्कन्धे कुहरिणि शुकाः स्वागतं व्याहरन्ति घ्राणग्राही हरति हृदयं हव्यगन्धः समीरः । एता मृग्यः सलिलपुलिनोपान्तसंसक्तदर्भं पश्यन्त्योऽस्मान्सचकितदृशो निर्झराम्भः पिबन्ति ॥ ४ ॥ कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन । एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां नष्टातङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥ ५ ॥ रसालानामन्तर्मदकलरणत्कोकिलकुलं समन्तादुन्मीलद्बकुलमुकुलामोदभरितम् । घनस्निग्धच्छायं क्रमुककदलीशीतलतलं ननु प्रीतिं धत्ते नवमिदमृषेराश्रमपदम् ॥ ६ ॥ नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः । विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ ७ ॥ तत्ताद्दक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभिर्मेध्या वत्सतरी विहस्य बटुभिः सोल्लुण्ठमालभ्यते । अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटैरापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ ८ ॥ प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरीकल्पाभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः । श्वः संचीवरयिष्यमाणबटुकव्याधौतशुष्यत्त्वचो निद्राणातिथयस्तपोवनगृहाः कुर्वन्ति नः कौतुकम् ॥ ९ ॥ नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूतप्रियापीतादप्यधिकं तपोवनमृगः[1] पर्याप्तमाचामति । गन्धेन स्फुरता[2] मनागनुसृतो[3] भक्तस्य सर्पिष्मतः[4] कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥१०॥

१ अग्ररसम्. २ पिबति. ३ अग्रस्य. ४ सघृतस्य.

आमूलं क्वचिदुद्धता क्वचिदपि च्छिन्ना स्थली बर्हिषामानम्रा कुसुमोच्चयाच्च सदयाकृष्टाग्रशाखा लता । एते पूर्वविलूनवल्कलतया रूढव्रणाः शाखिनः सद्यश्छेदममी वहन्ति समिधां प्रस्यन्दिनः पादपाः ॥ ११ ॥ वासोऽर्थे दययैव नातिपृथवः कृत्तास्तरूणां त्वचो भग्नानेकजरत्कमण्डलु नभःस्वच्छं पयो नैर्झरम् । दृश्यन्ते त्रुटितोज्झिताश्च बटुभिर्मौञ्ज्यः क्वचिन्मेखला नित्याकर्णनया शुकेन च पदं साम्नामिदं गीयते ॥ १२ ॥ क्रीडन्माणवकाङ्कितताडनशतैरुज्जागरस्य क्षणं शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः । चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः किं चायं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः ॥ १३ ॥ पक्वानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलेऽपि । संदृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः ॥ १४ ॥

---

## राजनीतिः

### राजा

राजास्य जगतो वृद्धेर्हेतुर्वृद्धाभिसंगतः । नयनानन्दजननः शशाङ्क इव वारिधेः ॥ १ ॥ राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् । राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ २ ॥ धार्मिकं पालनपरं सम्यक्परपुरंजयम् । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥ ३ ॥ पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ ४ ॥ सदानुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ ५ ॥ सर्वदेवमयो राजा मनुना संप्रकीर्तितः । तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ ६ ॥ सर्वदेवमयस्यापि विशेषो भूपतेरयम् । शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ ७ ॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८ ॥ यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ९ ॥ अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः । शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥ १० ॥ निकटस्थं दहत्यग्निर्न तु दूरापसर्पितम् । कुलं दहति राजाग्निः सपशुद्रव्यबान्धवम् ॥ ११ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥ १२ ॥ आक्षेपवचनं तस्य न वक्तव्यं कदाचन । अनुकूलं प्रियं चास्य वक्तव्यं जनसंसदि ॥ १३ ॥ इन्द्रात्प्रभुत्वं ज्वलनात्प्रतापं क्रोधो यमाद्वैश्रवणाच्च वित्तम् । पराक्रमं रामजनार्दनाभ्यामादाय राज्ञः क्रियते शरीरम् ॥ १४ ॥ उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वँल्लघून्वर्धयन्नत्युच्चान्नमयन्नतान्समुदयन्विश्लेषयन्संहतान् । क्षुद्रान्कण्टकिनो बहिर्निरसयन्म्लानान्पुनः सेचयन्मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दति ॥ १५ ॥

### सभासदः

धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः । समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ १६ ॥ श्रुत्यध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ १७ ॥

### पुरोहितः

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादपरो नित्यमेष राजपुरोहितः ॥ १८ ॥

### धर्माध्यक्षः

कुलशीलगुणोपेतः सर्वधर्मपरायणः । प्रवीणः प्रेक्षणाध्यक्षो धर्माध्यक्षो विधीयते ॥ १९ ॥

### वैद्यः

आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः । आर्यशीलगुणोपेत एष वैद्यो विधीयते ॥ २० ॥

### मन्त्री

मन्त्रतन्त्रार्पितप्रीतिर्देशकालोचितस्थितिः । यश्च राज्ञि भवेद्भक्तः सोऽमात्यः पृथिवीपतेः ॥ २१ ॥ स ह्यमात्यः सदा श्रेयान्काकिनीं यः प्रवर्धयेत् । कोशः कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ २२ ॥ कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः । नृपतिः किंक्षणो मूर्खो दरिद्रः किं वराटकः ॥ २३ ॥ प्राप्तार्थग्रहणं द्रव्यपरिवर्तोऽनुरोधनम् । उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ २४ ॥ स्वदेशजं कुलाचारं विशुद्धमथवा शुचिम् । मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ २५ ॥ अधीतव्यवहाराङ्गं मौलं ख्यातं विपश्चितम् । अर्थस्योत्पादकं चैव विदध्यान्मन्त्रिणं नृपः ॥ २६ ॥ अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः । मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ २७ ॥ संग्रहं नाकुलीनस्य[1] सर्पस्येव करोति यः । स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ २८ ॥ पृष्टो ब्रूते न सत्यं यः परिणामे सुखावहम् । मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥ २९ ॥ मूर्खं व्यसनिनं लुब्धमप्रगल्भं भयाकुलम् । क्रूरमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥३०॥ दूरादर्थं घटयति नवं दूरतश्चापशब्दं त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु । मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥३१॥ शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधनस्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः । क्लीवान्पालयिता

---

१ कुशानाम्.

१ न अकुलीनस्य; पक्षे,—नाकुर्वल्मीकं तत्र लीनस्य.

शठान्व्यथयिता धर्म्येऽतिलोभान्वितो द्विर्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥ ३२ ॥

## सेनापतिः

समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः। शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ ३३ ॥ शूरोऽर्थशास्त्रनिपुणः कृतशास्त्रकर्मा सङ्ग्रामकेलिचतुरश्च तुरङ्गयुक्तः। भर्तुर्निदेशवशगोऽभिमतश्च तन्त्रे सेनापतिर्नरपतेर्विजयागमाय ॥ ३४ ॥

## गजाः

यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम्। यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ ३५ ॥ यतो गजैर्विना राज्ञां राज्यशोभा न जायते। जयप्रतापौ सैन्यस्य रक्षा तस्मादिहोच्यते ॥ ३६ ॥ यद्वद्वनमसिंहं च यद्वद्राष्ट्रमपार्थिवम्। यद्वच्छौर्यमशस्त्रं तु तद्वत्सैन्यमकुञ्जरम् ॥ ३७ ॥ प्राकारगोपुराट्टालकपाटोद्घाटनादिषु। भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः ॥ ३८ ॥ शरजालाञ्चितमुखः कोऽन्यः शक्तः परं गजात्। हन्तुं प्राकारमुन्मथ्य रथांश्च नरकुञ्जरान् ॥ ३९ ॥ एकशक्तिप्रहारेण म्रियतेऽश्वो नरोऽपि च। सहेच्छतं प्रहाराणां महायुद्धेषु वारणः ॥४०॥ क्रीडासु च नरेन्द्राणां चले पुष्पितपङ्कजे। स्नपयन्ति गजा हस्तैर्लग्नपुष्करपुष्करैः ॥ ४१ ॥ स्त्रियोऽवतारयन्त्येते मृण्मया इव निश्चलाः। नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमः सखा ॥ ४२ ॥ चलन्ति येषां न शतं गजेन्द्राः पुरः प्रयाणे बत शैलतुल्याः। वाञ्छन्ति चैवं विजयं कथं ते राजेति शब्दं च कथं लभन्ते ॥ ४३ ॥ रक्षन्ति पक्षं मुदिताः स्वकीयं मथ्नन्ति सैन्यं कुपिताः परेषाम्। प्राणैरपीच्छन्ति हितं प्रभूणां गजैः समानं क्व बलं बलीयः ॥ ४४ ॥ सैन्योत्तारणतो धुनीषु सततं यो वारिबन्धायते यो मथ्नन्परितः परोद्धतबलं युद्धेषु योधायते। यः स्वीयक्षितिनाथरक्षणविधौ प्रोच्चैकदुर्गायते स प्राज्ञैर्विजिगीषुभिर्गजगणः कैः पार्थिवैर्नोऽर्घ्यते ॥ ४५ ॥ मातङ्गैरथ यैर्महेन्द्रभवनं पुण्याधिकं जन्यते यैः श्यामैरपि सर्वलोकमहिता कीर्तिः सिता तन्यते। यैर्मत्तैरपि संगरे रिपुमदः शोषं समानीयते तेऽमी भाग्यवतः प्रयान्ति पुरतः स्तम्बेरमा भूपतेः ॥ ४६ ॥ चीत्कारैर्नाशयन्तः स्वपतिभटमनो मोदयन्तो मदाढ्याः प्रौढाः सङ्ग्रामसीम्नि स्वबलवहलतां बाढमाढौकमानाः। शुण्डादण्डप्रहारैः परममपि बलं कम्पयन्तः परेषां येषां सर्वे गजेन्द्रा भुवि विजयविधौ ते मता भूमिपालाः ॥ ४७ ॥ सेतुं संभेदयन्तो बलविकटभटप्रोन्नतिं त्रोटयन्तः प्राकारं दारयन्तः परमनसि परां भीतिमुत्पादयन्तः। व्यूहं विद्रावयन्तः सुघनमपि वनं हेलयोत्पाटयन्तो येषामाजौ गजेन्द्राः खलु धरणिभुजां तज्जयः सिद्ध एव ॥ ४८ ॥ तावद्गर्जन्ति वीर्यात्परनिधनविधौ युद्धमध्येऽपि धीरास्तावद्धावन्ति वेगं परमपि दधतः संमुखीनास्तुरङ्गाः। शूरारूढः सुसज्जो मदमुदितमना मानिमानं विधुन्वन्यावन्नायाति कोपात्कृतविविधरवाटोप एकोऽपि नागः ॥ ४९ ॥

## तुरगाः

अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी। अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम् ॥ ५० ॥ निपत्य युधि वेगेन मिषतां सर्वधन्विनाम्। शत्रुं निहत्य यात्येकः शूरो वाजिप्रभावतः ॥ ५१ ॥ शस्त्रास्त्रैर्भिन्नदेहोऽपि श्रान्तोऽपि गुरुभारतः। न मुञ्चति रणे नाथमतः कोऽन्यो हयात्सुहृत् ॥ ५२ ॥ दूरस्थोऽपि बली शत्रुर्न शेते रजनीष्वपि। तस्य भीत्या गृहे यस्य हरयो वेगवत्तराः ॥ ५३ ॥ न गजैर्न नरैः कार्यं सिद्धिमभ्येति भूभृताम्। तथा निमेषमात्रेण यथा वाहैः सुसाधितैः ॥ ५४ ॥ राज्यं शतक्रतुसमृद्धिसमानमश्वैरश्वैः श्रियः सकलकामदुघा भवन्ति। अश्वैर्यशांसि विपुलानि समुल्लसन्ति नाश्वैः प्रयान्ति सदृशत्वमिभादयोऽपि ॥ ५५ ॥ तीक्ष्णाग्रहेतिहतिभिः सृतलोलदन्तं चञ्चत्करालकरवालविघट्टिताङ्घ्रिम्। कोऽन्यो विहाय हयमाहवजातमूर्च्छप्राणप्रयाणसमयेऽवतुमीशमीशः ॥ ५६ ॥ पादाः कन्दुकवत्स्थितिश्च गिरिवद्धेषारवो मेघवन्नेत्रे नीरजवज्जवः पवनवच्चास्फालनं सिंहवत्। विन्यासो नटवन्मुखं कुलवधूवक्त्रेन्दुवद्वाजिनो यस्य क्षोणिभुजो विशस्तदितरे साम्राज्यमुर्वीतले ॥ ५७ ॥

## खड्गः

खड्गाल्लक्ष्मीस्तथा राज्यं यशः खड्गादवाप्यते। खड्गाद्वैरिविनाशं च यत्नात्तमभिदध्महे ॥ ५८ ॥ यस्मिन्खड्गे शरीरं प्रतिफलति यथा खड्गराजोऽभिवन्द्यो वन्द्योऽयं देववृन्दैरपि यदि स भवेदर्धचन्द्रोपपन्नः। नानावर्णैर्युतश्चेत्स भवति नृपतेः शत्रुनाशैकहेतुः सेतुर्लक्ष्मीप्रवाहे निखिलरिपुकुलध्वंसने धूमकेतुः ॥ ५९ ॥

## सैन्यम्

प्रथमं युद्धकारित्वं समस्तबलपालनम्। दिङ्मार्गयोधशोधित्वं पत्तिकर्म प्रचक्षते ॥ ६० ॥ स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम्। प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ६१ ॥ वरमल्पबलं सारं न बह्वी मुण्डमालिका। कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ६२ ॥

## दुर्गः

न गजानां सहस्रेण न लक्षेण च वाजिनाम्। तथा सिध्यन्ति कार्याणि यथा दुर्गप्रभावतः ॥ ६३ ॥ अदुर्गो विषयः कस्य नारेः परिभवास्पदम्। अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥ ६४ ॥ विषहीनो यथा नागो मदहीनो यथा गजः। सर्वेषां वश्यतां याति दुर्गहीनस्तथा

नृपः ॥ ६५ ॥ शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः । तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥ ६६ ॥ एकः शतं योधयते प्राकारस्थो धनुर्धरः । शतं सहस्राणि तथा सहस्रं लक्षमेव च ॥ ६७ ॥ दुर्गाणि राज्ञा कार्याणि सजलानि दृढानि च । द्रव्यमन्नं च तेष्वेव स्थापनीयं प्रयत्नतः ॥ ६८ ॥

### दूतः

मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतो विधीयते ॥ ६९ ॥ उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा । सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ ७० ॥ भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी । ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभानवान् ॥ ७१ ॥ साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः । परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ७२ ॥ नियोगिभिर्विना राज्यं नास्ति भूपे हि केवले । तस्मादमी विधातव्या रक्षितव्याः प्रयत्नतः ॥ ७३ ॥

### भाण्डागारी

प्रवीणो वाक्पटुर्धीमान्स्वामिभक्तश्च नित्यशः । अलुब्धः सत्यवादी च भाण्डागारी स इष्यते ॥ ७४ ॥

### लेखकः

सकृदुक्तगृहीतार्थो लघुहस्तो जितेन्द्रियः । शब्दशास्त्रपरिज्ञाता एष लेखक इष्यते ॥ ७५ ॥

### प्रतीहारी

इङ्गिताकारतत्त्वज्ञो बलवान्प्रियदर्शनः । समयज्ञः स्वामिभक्तः प्रतीहारी स इष्यते ॥ ७६ ॥

### सूपकारः

पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मृष्टपाचकः । शूरश्च कठिनश्चैव सूपकारः स इष्यते ॥ ७७ ॥

### चाराः

भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने । चारचक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः ॥ ७८ ॥

### अन्तःपुरवर्गाः

काणाः कुब्जाश्च षण्ढाश्च तथा वृद्धाश्च पङ्गवः । एते चान्तःपुरे नित्यं नियोक्तव्याः क्षमाभृता ॥ ७९ ॥

### स्त्रियः

पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः । परोक्षे च समक्षे च रक्षितव्याः प्रयत्नतः ॥ ८० ॥ सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो रक्ष्या नार्यो हि सर्वदा । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ८१ ॥

### महिषी

महिष्या हृष्टया भाव्यं गृहकार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ ८२ ॥

### भृत्याः

बहूनामप्यसाराणां समुदायो हि दारुणः । राज्ञा भृत्याः प्रकर्तव्यास्ते हि सर्वक्रियाक्षमाः ॥ ८३ ॥ तृणैरावेष्ट्यते रज्जुस्तया नागो हि बध्यते । एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ॥ ८४ ॥ न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना । तेषां च व्यवहारोऽयं परस्परनिबन्धनः ॥ ८५ ॥ भृत्यैर्विना स्वयं राजा लोकानुग्रहकार्यपि । मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥ ८६ ॥ अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८७ ॥ शिरसा विधृता नित्यं तथा स्नेहेन पालिताः । केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ८८ ॥ ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा । न चिन्तयति यः पापं स भृत्योऽर्हो महीभुजाम् ॥ ८९ ॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा । पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ९० ॥ अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च यः । यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ९१ ॥ न क्षुधा पीड्यते यस्तु निद्रया न कदाचन । न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ९२ ॥ श्रुत्वा साङ्ग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति । प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९३ ॥ सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट् । नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥ ९४ ॥ सीमा संकोचमायाति वह्नौ चर्म इवाहितम् । स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥ ९५ ॥ स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च । मन्यते न च संधार्यो भूभुजा भूतिमिच्छता ॥ ९६ ॥ स्वाम्यादेशात्सुभृत्यस्य न भीः संजायते क्वचित् । प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम् ॥ ९७ ॥ सालसं मुखरं क्रूरं स्तब्धं व्यसनिनं शठम् । असंतुष्टमभक्तं च त्यजेद्भृत्यं नराधिपः ॥ ९८ ॥ स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः[1] । तज्जीवनमपि व्यर्थमजागलकुचाविव ॥ ९९ ॥ द्विजा अपि न गच्छन्ति यां गतिं नैव योगिनः । स्वाम्यर्थे संत्यजन्प्राणांस्तां गतिं याति सेवकः ॥ १०० ॥ राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति । तेऽपि संमानमात्रेण प्राणैः प्रत्युपकुर्वते ॥ १०१ ॥ सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः । अनुकूलः शुचिर्दक्षः प्रभोर्भृत्योऽपि दुर्लभः ॥ १०२ ॥

### स्नानम्

स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं शौचस्यायतनं मलापहरणं संवर्धनं तेजसः । रूपोद्द्योतकरं गदप्रशमनं कामाग्निसंदीपनं नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥ १०३ ॥

१ कुत्सितभृत्यः.

## ताम्बूलम्

ताम्बूलं मुखरोगनाशि निपुणं संवर्धनं तेजसो नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम् । वक्त्रालंकरणं प्रहर्षजननं विद्वन्नृपाग्रे रणे कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥ १०४ ॥

## शस्त्रधारणम्

दुष्टाविनीतशत्रूणां भयकृद्वन्धुसंनिभम् । शस्त्रधारणमौजस्यं रक्षोविद्युद्ग्रहापहम् ॥ १०५ ॥

## छत्रधारणम्

वर्षानिलरजोघर्महिमादीनां निवारणम् । राज्यलक्ष्म्या गृहं धन्यं चक्षुष्यं छत्रधारणम् ॥ १०६ ॥

## चामरम्

चामरं श्रीकरं दिव्यं राज्यशोभाकरं परम् ।

## सिंहासनम्

सिंहासनं सुखैश्वर्यकरं लोकानुरञ्जनम् ॥ १०७ ॥

## मालाधारणम्

सुमनोवररत्नानां धारणं दिव्यरूपकृत् ।

## चन्दनलेपः

पापालक्ष्मीप्रशमनं चन्दनाद्यनुलेपनम् ॥ १०८ ॥

## मृगया

मेदच्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ १०९ ॥

## कटकप्रयाणम्

वाजी चारुगतिः शशाङ्कधवलं छत्रं प्रिया पृष्ठतः । प्रोत्तुङ्गस्तनमण्डला विजयिनो भृत्याः पुरः पञ्चषाः । ताम्बूलं मधुरं सखा सुचतुरः संपद्यते चेत्पथि प्राहुस्तत्कटकप्रयाणमितरत्प्राणप्रयाणं बुधाः ॥ ११० ॥

## उपवनानि

नवं वयो हारि वपुर्वराङ्गनाः सखी कलावित्कलवल्लकीस्वनः । धनं हि सर्वं विफलं सुखैषिणो विना विहारोपवनानि भूपतेः ॥ १११ ॥ पुंसां सर्वसुखैकसाधनफलाः सौन्दर्यगर्वोद्धुरक्रीडालोलविलासिनीजनमनःस्फीतप्रमोदावहाः । गुञ्जद्भृङ्गविनिद्रपङ्कजभरस्फारोल्लसद्दीर्घिकायुक्ताः सन्ति गृहेषु यस्य विपुलारामाः स पृथ्वीपतिः ॥ ११२ ॥

## तरवः

बहुभिर्बत किं जातैः पुत्रैर्धर्मार्थवर्जितैः । वरमेकः पथि तरुर्यत्र विश्रमते जनः ॥ ११३ ॥ दशकूपसमा वापी दशवापीसमो ह्रदः । दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ॥ ११४ ॥

## नीतिः

सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य[१] वक्ता श्रोता च दुर्लभः ॥ ११५ ॥ यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् । धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ ११६ ॥ प्रजां संरक्षति नृपः स वर्धयति पार्थिवम् । वर्धनाद्रक्षणं श्रेयस्तन्नाशेऽन्यत्सदप्यसत् ॥ ११७ ॥ आत्मानं प्रथमं राजा विनयेनोपपादयेत् । ततोऽमात्यांस्ततो भृत्यांस्ततः पुत्रांस्ततः प्रजाः ॥ ११८ ॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ११९ ॥ नृपाणां च नराणां च केवलं तुल्यमूर्तिता । आधिक्यं तु क्षमा धैर्यमाशा दानं पराक्रमः ॥ १२० ॥ प्रजां न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १२१ ॥ अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः । तस्यैका जायते तृप्तिर्द्वितीया न कथंचन ॥ १२२ ॥ प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥ १२३ ॥ यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिवर्धितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ १२४ ॥ निजवर्षाहितस्नेहा बहुभक्तजनान्विताः । सुकाला इव जायन्ते प्रजापुण्येन भूभृतः ॥ १२५ ॥ यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा । अकर्णधारा जलधौ विप्लवेतेह नौरिव[१] ॥ १२६ ॥ प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति । अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ १२७ ॥ नरेशे जीवलोकोऽयं निमीलति निमीलति[२] । उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १२८ ॥ हिरण्यधान्यरत्नानि गजेन्द्राश्चापि वाजिनः । तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥ १२९ ॥ मा तात साहसं कार्षीर्विभवैर्गर्वमागतः । स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ॥ १३० ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । नहि दुर्बलदग्धानां काले किंचित्प्ररोहति ॥ १३१ ॥ यानि मिथ्याभिभूतानां पतन्त्यश्रूणि रोदताम् । तानि संतापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ १३२ ॥ मा तात संपदामग्रमारूढोऽस्मीति विश्वसीः । दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥ १३३ ॥ कितवा[३]यं प्रशंसन्ति यं प्रशंसन्ति चारणाः[४] । यं प्रशंसन्ति बन्धक्यः[५] स पार्थ पुरुषाधमः ॥ १३४ ॥ राजानो यं प्रशंसन्ति यं प्रशंसन्ति वै द्विजाः । साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥ १३५ ॥ प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति संहताः । गृहीतहस्तच्छत्रस्य वारिधारा इवारयः ॥ १३६ ॥ कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च । आज्ञामवितथां कुर्याद्यथाशक्ति महीपतेः ॥ १३७ ॥ अल्पेच्छुर्धृतिमान्प्राज्ञश्छायेवानुगतः सदा । आदिष्टो न विकल्पेत स राजवसतिं वसेत् ॥ १३८ ॥

---

१ हितस्य.

१ कर्णधाररहिता नौका यथा जलधौ शीर्यते तद्वत्. २ सतिसप्तमी. ३ शठ । धूर्ता वा. ४ स्तुतिपाठकाः. ५ कुलटाः.

अप्राप्तकाले वचनं बृहस्पतिरपि ब्रुवन् । प्राप्नुयाद्बुद्ध्यवज्ञानमपमानं च शाश्वतम् ॥ १३९ ॥ किं भक्तेनासमर्थेन किं शक्तेनापकारिणा । भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥ १४० ॥ जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् । नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥१४१॥ नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम् । कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥ १४२ ॥ अतिव्ययोऽनपेक्षा च तथार्जनमधर्मतः । मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ १४३ ॥ क्षिप्रमायमनालोच्य व्ययानश्च स्ववाञ्छया । परिक्षीयत एवासौ धनी वैश्रवणोपमः ॥ १४४ ॥ यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् । कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ १४५ ॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥ १४६ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ १४७ ॥ दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः । राज्यमेकश्चकारोच्चैः सुमन्त्री चन्द्रगुप्तकः ॥ १४८ ॥ अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १४९ ॥ सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ १५० ॥ तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः । वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् ॥ १५१ ॥ माता पिता गुरुर्भ्राता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति स्वधर्मे यो न तिष्ठति ॥१५२॥ विशोधयेन्महीपालो मन्त्रिशालामशेषतः । अयुक्तो नार्हति स्थातुमस्यां मन्त्ररहस्यवित् ॥ १५३ ॥ षट्कर्णो भिद्यते[1] मन्त्रश्[2]चतुःकर्णः स्थिरो भवेत् । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं[3] न गच्छति ॥ १५४ ॥ त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः । नियोजयेत्तथैवैतांस्त्रिविधेष्वपि कर्मसु ॥ १५५ ॥ तुल्यार्थं तुल्यसामर्थ्यं सर्वज्ञं व्यवसायिनम् । अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ १५६ ॥ निर्विशेषो यदा राजा समं भृत्येषु तिष्ठति । तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ १५७ ॥ प्रसादो निष्फलो यस्य यस्य क्रोधो निरर्थकः । न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गनाः ॥ १५८ ॥ अविवेकिनि भूपाले नश्यन्ति गुणिनां गुणाः । प्रवासरसिके[4] कान्ते यथा साध्व्याः स्तनोन्नतिः ॥ १५९ ॥ न कश्चिच्चण्डकोपानामात्मीयो नाम भूभृताम् । होतारमपि जुह्वन्तं[5] दहत्येव हुताशनः ॥ १६० ॥ चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः । पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः ॥ १६१ ॥ यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः । कुलीनो वाऽकुलीनो वा स श्रियो भाजनं भवेत् ॥ १६२ ॥ राज्ञि मातरि देव्यां च कुमारे मुख्यमन्त्रिणि । पुरोहिते प्रतीहारे समं वर्तेत राजवत् ॥ १६३ ॥ पानमक्षास्तथा नार्यो मृगया गीतवादिते । एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥१६४॥ आयाच्चतुर्थभागेन व्ययकर्म प्रवर्तयेत् । प्रभूततैलदीपो हि चिरं भद्राणि पश्यति ॥ १६५ ॥ कर्मणा मनसा वाचा चक्षुषापि चतुर्विधम् । प्रसाधयति लोकं यस्तं लोको नु प्रसीदति ॥ १६६ ॥ संभोजनं संकथनं संप्रश्नोऽथ समागमः । ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ १६७॥ मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः । उत्सृज्य तद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ १६८ ॥ अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ १६९ ॥ किमप्यसाध्यं महतां सिद्धिमेति लघीयसाम् । प्रदीपो भूमिगेहान्तध्वान्तं हन्ति न भानुमान् ॥ १७० ॥ अरावप्युचितं कार्यमातिथ्यं गृहमागते । छेत्तुमप्यागते च्छायां नोपसंहरते द्रुमः ॥ १७१ ॥ अगाधहृदया भूपाः कूपा इव दुरासदाः । घटका[1] गुणिनो[2] नो चेत्कथं लभ्येत जीवनम्[3] ॥ १७२ ॥ कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः । अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ १७३ ॥ भोगिनः[4] कञ्चुकासक्ताः[5] क्रूराः कुटिलगामिनः । सुदुष्टा मन्त्रसाध्याश्च[6] राजानः पन्नगा[7] इव ॥ १७४ ॥ अकस्माद्द्वेष्टि यो भक्तमाजन्मपरिसेवितम्[8] । न व्यञ्जने[9] रुचिर्यस्य त्याज्यो नृप इवातुरः[10] ॥ १७५ ॥ सुगन्धं केतकीपुष्पं कण्टकैः परिवेष्टितम् । यथा पुष्पं तथा राजा दुर्जनैः परिवेष्टितः ॥ १७६ ॥ असत्प्रलापः पारुष्यं पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नैव चिन्तयेत् ॥ १७७ ॥ प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ १७८ ॥ मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः । अयशश्चार्थनाशश्च नरके गमनं तथा ॥ १७९ ॥ इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ १८० ॥ मन्त्रो[11] योध इवाधीरः सर्वाङ्गैः संवृतैरपि । चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥१८१॥ आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती । तदूरीकृत्य कृति-

१ भेदं प्राप्नोति, सर्वेषां ज्ञानविषयो भवतीति भावः. २ विचारः. ३ पारम्. ४ सदा प्रवासिनि भर्तरि सति वियोगेन भार्याया यौवनं यथा नश्यति तद्वत्. ५ होमकर्तारम्.

१ कार्यसाधकाः; पक्षे,—कुम्भाः. २ गुणवन्तः; पक्षे,—रज्जुयुक्ताः. ३ जीवनोपायभूतं द्रव्यम्; पक्षे,—उदकम्. ४ विलासिनः; पक्षे,—भोगवन्तः. ५ कवचम्; पक्षे,—सर्पकञ्चुकम्. ६ विचारः; पक्षे,—शाबरादिः. ७ सर्पाः. ८ सेवकम्; पक्षे,—ओदनम्. ९ राजचिह्नेषु; पक्षे,—लेह्यादौ. १० रोगी. ११ रहस्यं सुगुप्तमपि योद्धृवदेकत्र न स्थातुं सहते.

भिर्वाचस्पत्यं प्रतायते ॥ १८२ ॥ तृप्तियोगः परेणापि महिम्ना न महात्मनाम् । पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ १८३ ॥ बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः । चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥१८४॥ तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः । नैकमोजः प्रसादो वा रसभावविदः कवेः ॥ १८५ ॥ कृतापचारोऽपि परैरनाविष्कृतविक्रियः । असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ १८६ ॥ मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते । प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥ १८७ ॥ नालम्बते दैष्टिकतां न निषीदति पौरुषे । शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ १८८ ॥ स्थायिनोऽर्थे प्रवर्तन्ते भावाः संचारिणो यथा । रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥ १८९ ॥ तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता । सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ १९० ॥ करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् । प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ १९१ ॥ स दोषः सचिवस्यैव यदसत्कुरुते नृपः । याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ १९२ ॥ न सर्पस्य मुखे रक्तं न दुष्टस्य कलेवरे । न प्रजासु न भूपाले धनं दुरधिकारिणि ॥ १९३ ॥ यद्यपि क्षितिपालानामाज्ञा सर्वत्रगा स्वयम् । तथापि शास्त्रदीपेन चरत्येव मतिः सताम् ॥ १९४ ॥ असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणाम् । यथा वैद्यस्तथा राजा शस्त्रपाणिर्विषह्यति ॥ १९५ ॥ जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत् । अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ १९६ ॥ पातकानां समस्तानां द्वे परे तात पातके । एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥ १९७ ॥ राजा संपत्तिहीनोऽपि सेव्यः सेव्यगुणाश्रयः । भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ १९८ ॥ स जयी वरमातङ्गा यस्य तस्यास्ति मेदिनी । कोशो यस्य सुदुर्धर्षो दुर्गस्तस्य स दुर्जयः ॥ १९९ ॥ सुवर्णैः पट्टचेलैश्च शोभा स्याद्वारयोषिताम् । पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ २०० ॥ यं यं नृपोऽनुरागेण संमानयति संसदि । तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ २०१ ॥ ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते । ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि नियच्छति ॥ २०२ ॥ नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम् । सर्वस्वं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ २०३ ॥ अपराधेऽपि निःशङ्को नियोगी चिरसेवकः । स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ २०४ ॥ उपकर्ताऽधिकारस्थः स्वापराधं न मन्यते । उपकारं ध्वजीकृत्य सर्वमेवावलुम्पति ॥ २०५ ॥ आज्ञाभङ्गकरान्राजा न क्षाम्येत्स्वसुतानपि । विशेषः कोऽनुरागस्य राजचित्तगतस्य च ॥ २०६ ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥ २०७ ॥ भोगस्य भाजनं राजा न राजा कार्यभाजनम् । राजकार्यपरिध्वंसान्मन्त्री दोषेण लिप्यते ॥ २०८ ॥ वरं प्राणपरित्यागः शिरसो वापि कर्तनम् । न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम् ॥ २०९ ॥ विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च । अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ २१० ॥ यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति । सोऽन्धवज्जगतीपालः सीदेत्संचारकैर्विना ॥ २११ ॥ सदामात्यो न सिद्धः स्यात्समृद्धः सर्व एव हि । सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥ २१२ ॥ मूलभृत्यान्परित्यज्य नागन्तून्प्रतिमानयेत् । नातः परतरो दोषो राज्यभेदकरो यतः ॥ २१३ ॥ मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा । मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ २१४ ॥ मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् । वलयं स्फटिकस्येव को हि संधातुमीश्वरः ॥ २१५ ॥ वज्रं च राजतेजश्च द्वयमेवातिभीषणम् । एकमेकत्र पतति पतत्यन्यत्समन्ततः ॥ २१६ ॥ मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा । उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ २१७ ॥ यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ २१८ ॥ अयुद्धे हि यदा पश्यन्न किंचिद्धितमात्मनः । युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ २१९ ॥ जये च लभते लक्ष्मीं मृते चापि सुराङ्गनाम् । क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥ २२० ॥ पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् । प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ २२१ ॥ राज्यलोभादहंकारादिच्छतः स्वामिनः पदम् । प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥ २२२ ॥ आत्मनश्च परेषां च यः समीक्ष्य बलाबलम् । अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ २२३ ॥ राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः । अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यतेऽपि यत् ॥ २२४ ॥ वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः । अभ्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत् ॥ २२५ ॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥ २२६ ॥ षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया । इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता ॥ २२७ ॥ मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपतेः । न शक्यास्ते समाधातुमिति नीतिविदां

१ हस्तिपकस्य. २ अपसारयितुमिति भावः. ३ अग्रेकृत्य.

मतम् ॥ २२८ ॥ न तथोत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा । अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत् ॥ २२९ ॥ विजेतुं प्रयतेतारीन्न युद्धेन कदाचन । अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ॥ २३० ॥ साम्ना दानेन भेदेन समस्तैरथवा पृथक् । साधितुं प्रयतेतारीन्न युद्धेन कदाचन ॥ २३१ ॥ बलिना सह योद्धव्यमिति नास्ति निदर्शनम् । यद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत् ॥ २३२ ॥ स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते । कलिर्बलवता सार्धं कीटपक्षोद्गमो यथा ॥ २३३ ॥ महत्यल्पेऽप्युपायज्ञः सममेव भवेत्क्षमः । समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः ॥ २३४ ॥ धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् । निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ २३५ ॥ यथा प्रभुकृतान्मानाद्युध्यन्ते भुवि मानवाः । न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥ २३६ ॥ अविद्वानपि भूपालो विद्यावृद्धोपसेवया । परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ २३७ ॥ पानं स्त्री मृगया द्यूतमर्थदूषणमेव च । वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ २३८ ॥ शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनायकः । त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ २३९ ॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः । एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ २४० ॥ यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी । स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ २४१ ॥ धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः । अनीतिपवनक्षिप्तः कार्याब्धौ स निमज्जति ॥२४२॥ हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययः सदा । नित्यं भृत्यानपेक्षा च तस्य स्याद्धनदा धरा ॥ २४३ ॥ दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते । शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ २४४ ॥ आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः । भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ २४५ ॥ कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् । फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ २४६ ॥ कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः । आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम् ॥ २४७ ॥ विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् । सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥ २४८ ॥ ये जात्यादिमहागर्वान्नरेन्द्रान्नोपयन्ति च । तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ २४९ ॥ ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः । प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ २५० ॥ सर्पान्व्याघ्रान्गजान्सिंहान्दृष्ट्वोपायैर्वशीकृतान् । राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ २५१ ॥ राजानमेव संश्रित्य विद्वान्याति परां गतिम् । विना मलयमन्यत्र चन्दनो न प्ररोहति ॥ २५२ ॥ धवलान्यातपत्राणि वाजिनश्च मनोरमाः । सदा मत्ताश्च नागेन्द्राः प्रसन्ने सति भूपतौ ॥ २५३ ॥ सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ २५४ ॥ सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः । आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा ॥ २५५ ॥ यो न वेत्ति गुणान् यस्य न तं सेवेत पण्डितः । नहि तस्मात्फलं तस्य सुकृष्टादूषरादिव[1] ॥ २५६ ॥ द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः । भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ २५७ ॥ अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा । न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥ २५८ ॥ सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम् । आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ २५९ ॥ यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः । सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥ २६० ॥ जीवेति प्रब्रुवन्प्रोक्तः कृत्यं कृत्यविचक्षणः । करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ २६१ ॥ प्रभुप्रसादजं वित्तं सुपात्रे यो नियोजयेत् । वस्त्राद्यं विदधात्यङ्गे स भवेद्राजवल्लभः ॥ २६२ ॥ अन्तःपुरचरैः सार्धं यो मन्त्रं न समाचरेत् । न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ २६३ ॥ संमतोऽहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत् । कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ २६४ ॥ द्विषि द्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् । यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ २६५ ॥ द्यूतं यो यमदूताभं हालां हालाहलोपमाम् । पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ २६६ ॥ युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे । प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ २६७ ॥ दुराराध्या हि राजानः पर्वता इव सर्वदा । व्यालाकीर्णाः[2] सुविषमाः कठिना दुःखसेविताः ॥ २६८ ॥ दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम् । स्वल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यति ॥ २६९ ॥ दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः । तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्थिताः ॥ २७० ॥ अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते । धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥ २७१ ॥ सव्यदक्षिणयोर्यत्र विशेषो नोपलभ्यते ।

१ मरुभूमेः. २ व्याघ्रादिश्वापदसंकुलाः; पक्षे,—सचिवादिकुटिलमतिपरिवृताः.

कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ २७२ ॥ काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते । न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ २७३ ॥ यस्मिन्कृत्यं समावेश्य निर्विशङ्केन चेतसा । आस्यते सेवकः स स्यात्कलत्रमिव चापरम् ॥ २७४ ॥ यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् । लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ २७५ ॥ कुतः सेवाविहीनानां चामरोद्धूतसंपदः । उद्दण्डधवलच्छत्रवाजिवारणवाहिनी ॥ २७६ ॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् । देवानां च विनश्येत स द्रुतं सुमहानपि ॥ २७७ ॥ अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते । अपि संमानहीनोऽपि स सर्वत्रापि पूज्यते ॥ २७८ ॥ अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः । यदाप्नोति बलं लोकात्तस्यांशमपि नो गुणी ॥ २७९ ॥ यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः । स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ २८० ॥ फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् । संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ २८१ ॥ भूपः कूप इवाभाति नमज्जनसुखावहः[1] । ददाति गुणसंबन्धाद्यथा पात्रानुरूपतः ॥ २८२ ॥ अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः । वृत्तिभङ्गान्महीपालं त्यक्त्वा यान्ति सुसेवकाः ॥ २८३ ॥ कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः । कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ २८४ ॥ देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः । वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ २८५ ॥ प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् । गणिकाः कामुकानां च सर्वलोकस्य शिल्पिनः ॥ २८६ ॥ सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् । भुञ्जते च यथाशक्ति जलजा जलजा यथा ॥ २८७ ॥ शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् । रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ २८८ ॥ विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च । प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ २८९ ॥ प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् । पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ २९० ॥ गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः । पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥ २९१ ॥ फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः । दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ २९२ ॥ नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि । अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ २९३ ॥ यथा गौर्दुह्यते काले पाल्यते च तथा प्रजा । सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥ २९४ ॥ लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः ॥ लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ २९५ ॥ उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ २९६ ॥ मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् । भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ २९७ ॥ न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः । यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥ २९८ ॥ चारतस्करदुर्वृत्तैस्तथा साहसिकादिभिः । पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ २९९ ॥ प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः । अधर्मादपि षड्भागो जायते यो न रक्षति ॥ ३०० ॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ ३०१ ॥ गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते । प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ३०२ ॥ चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः । ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ३०३ ॥ यः संमानं समाधत्ते भृत्यानां क्षितिपोऽधिकम् । वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ ३०४ ॥ विश्वासः संपदां मूलं तेन यूथपतिर्गजः । सिंहो मृगाधिपत्येऽपि न मृगैरुपभुज्यते ॥ ३०५ ॥ कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा । संभवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ ३०६ ॥ अपृष्टस्तु नरः किंचिद्यो ब्रूते राजसंसदि । न केवलमसंमानं लभते च विडम्बनम् ॥ ३०७ ॥ अजन्मा पुरुषस्तावद्गतासुस्तृणमेव वा । यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥ ३०८ ॥ विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुंतुदः । उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ ३०९ ॥ निर्विषोऽपि यथा सर्पः फटाटोपैर्भयंकरः । तथाडम्बरवान्राजा न परैः परिभूयते ॥ ३१० ॥ भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् । नास्त्येकमपि यद्येषां न तत्कुर्यात्कथंचन ॥ ३११ ॥ साम्नैव हि प्रयोक्तव्यमादौ कार्यं विजानता । सामसिद्धानि कार्याणि विक्रियां यान्ति न क्वचित् ॥ ३१२ ॥ शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः । राज्यलोभोद्यतो विप्रः शक्रेण शपथैर्हतः ॥ ३१३ ॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् । पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ ३१४ ॥

१. नमन्तो नम्रा ये जनास्तेषां सुखावहः; पक्षे,—मज्जने सुखावहो न भवतीति नमज्जनसुखावहः. २ विद्याविनयादिः. पक्षे,—रज्जवः.

नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया । वह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद्वनम् ॥ ३१५ ॥ कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् । प्राप्ते काले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ ३१६ ॥ स्वाम्यमात्यश्च राज्यं च कोषो दुर्गं बलं सुहृत् । एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम् ॥ ३१७ ॥ संधिविग्रहयानानि संस्थितिः संश्रयस्तथा । द्वैधीभावश्च भूपानां षड्गुणाः परिकीर्तिताः ॥ ३१८ ॥ उत्साहस्य प्रभोर्मन्त्रस्यैवं शक्तित्रयं मतम् । आत्मनः सुहृदश्चैव तन्मित्रस्योदयास्त्रयः ॥ ३१९ ॥ सामदाने भेददण्डावित्युपायचतुष्टयम् । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३२० ॥ क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् । तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥ ३२१ ॥ रक्षाधिकारादीशत्वाद्भूतानुग्रहकारणात् । यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः ॥ ३२२ ॥ राजा नाम चरत्येष भूमौ साक्षात्सहस्रदृक् । न तस्याज्ञामतिक्रम्य संतिष्ठेरन्निमाः प्रजाः ॥ ३२३ ॥ राज्ञामाज्ञाभयाद्यस्मान्न च्यवन्ते पथः प्रजाः । व्यवहारस्ततो ज्ञेयः शान्तितो राजशासनम् ॥ ३२४ ॥ नित्यार्यपृथिवीपालैश्चारित्रविधयः कृताः । चारित्रेभ्यस्ततः प्राहुर्गरीयो राजशासनम् ॥ ३२५ ॥ पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । जये भवति संदेहः प्रधानपुरुषक्षयः ॥ ३२६ ॥ अभिभूतोऽप्यवज्ञातो यो राज्ञां द्वारि तिष्ठति । स तु राज्ञां श्रियं भुङ्क्ते नाभिमानी कदाचन ॥ ३२७ ॥ अन्तःपुरधनाध्यक्षैर्वैरिभूते निराकृते । संसर्गं न व्रजेल्लोके विना पार्थिवशासनात् ॥ ३२८ ॥ जृम्भां निष्ठीवनं कौर्यं कोपं पर्यङ्किकां श्रमम् । भ्रुकुटिं वातमुद्रां च तत्समीपे विवर्जयेत् ॥ ३२९ ॥ राज्ञस्तु दर्शनं कुर्याज्ज्ञात्वावसरसौष्ठवम् । गुणादिख्यापनात्पूर्वमुपनीतो महाशयैः ॥ ३३० ॥ दर्शनं नाधमद्वारा राज्ञः कार्यं विपश्चिता । गरिष्ठोऽप्यतिनीचः स्यादुपनीतो लघुर्भवेत् ॥ ३३१ ॥ शत्रोरत्यन्तमित्रं यत्तेन मैत्रीं विवर्जयेत् । अर्दयेत्तद्विरोधेन प्रतिष्ठाघातकारिणा ॥ ३३२ ॥ यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते । कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम् ॥ ३३३ ॥ एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् । आदिमध्यावसानेषु न ते यास्यन्ति विक्रियाम् ॥ ३३४ ॥ सर्व एव जनः शूरो ह्यनासादितसंगरः । अदृष्टपरसामर्थ्यः सदर्पः को भवेन्नहि ॥ ३३५ ॥ रुष्टोऽपि राजा यद्वद्वान्न तत्तुष्टो व्रणिग्जनः । अतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण सः ॥ ३३६ ॥ नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् । विसृजेन्नैव लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ ३३७ ॥ चरेद्धीमानकटको युञ्जेत्स्नेहं न नास्तिकः । अनृशंसश्चरेदर्थं चरेत्कार्यमनुद्धतः ॥ ३३८ ॥ संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः । नाभक्तं चारयेच्चारं कुर्यात्कार्यमपीडया ॥ ३३९ ॥ सर्वे यत्र विनेतारः सर्वे यत्राभिमानिनः । सर्वे महत्त्वमिच्छन्ति कुलं तदवसीदति ॥ ३४० ॥ अकृत्वा निजदेशस्य रक्षां यो विजिगीषते । स नृपः परिधानेन वृतमौलिः पुमानिव ॥ ३४१ ॥ विजिगीषुररिर्मित्रं पार्ष्णिग्राहोऽप्यमध्यमः । उदासीनोऽन्तरान्तर्धिरित्येषा नृपतेः स्थितिः ॥ ३४२ ॥ गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः । हंसाकारोऽपि संत्याज्यो गृध्राकारैः सभासदैः ॥ ३४३ ॥ ये ह्याहवेषु वध्यन्ते स्वाम्यर्थमपराङ्मुखाः । विकटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ३४४ ॥ पदानि क्रतुतुल्यानि आहवेष्वनिवर्तिनाम् । राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ ३४५ ॥ तवाहंवादिनं क्लीबं निर्हेतिं परमागतम् । न हन्याद्विनिवृत्तं च युद्धं प्रेक्षितुमागतम् ॥ ३४६ ॥ सुतभृत्यसुहृद्वैरिस्वामिसद्गुरुदैवते । एकैकोत्तरतो वृद्ध्या श्रीकारः पत्रमूर्धनि ॥ ३४७ ॥ सपक्षो लभते काको वृक्षस्य विविधं फलम् । पक्षहीनो मृगेन्द्रोऽपि भूमिसंस्थो निरीक्षते ॥ ३४८ ॥ सपक्षो लभते लक्षं गुणमुक्तोऽपि मार्गणः । न लक्ष्यस्थो विपक्षः स्याद्गुणैरापूर्यते यदि ॥ ३४९ ॥ परस्परानुरक्ता ये योधाः शार्ङ्गधनुर्धराः । संनद्धास्तुरगारूढास्ते जयन्ति रणे रिपून् ॥ ३५० ॥ जिते लक्ष्मीर्मृते स्वर्गः कीर्तिश्च धरणीतले । तस्माद्युद्धं विधातव्यं हन्तव्या परवाहिनी ॥ ३५१ ॥ विधाय वैरं सामर्षे नरोऽरौ य उदासते । प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ३५२ ॥ सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः । कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥ ३५३ ॥ असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत्कृत्स्नं नो संध्यां भजते रविः ॥ ३५४ ॥ चिन्त्यते नयं एवादावमन्दं समुपेप्सुभिः । विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा ॥ ३५५ ॥ स्वजातीयं विना वैरी न जय्यः स्यात्कदाचन । विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत् ॥ ३५६ ॥ युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमः । शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः ॥ ३५७ ॥ दुर्गदेशप्रविष्टोऽपि शूरोऽभ्येति पराभवम् । गाढपङ्कनिमग्नाङ्गो मातङ्गोऽप्यवसीदति ॥ ३५८ ॥ नये-

१ ज्वालामालिनमग्निम्. २ तृणसमूहे. ३ शत्रुवर्गीयोन्मूलनसमर्थः.

नाङ्कुरितं शौर्यं जयाय न तु केवलम्। अन्ययुक्तं विषं भुक्तं पथ्यं स्यादन्यथा मृतिः ॥ ३५९ ॥ मृदुभिर्बहुभिः शूरः पुंभिरेको न बाध्यते। कपोतपोतकैरेकः श्येनो जातु न बाध्यते ॥ ३६० ॥ विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा। अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ ३६१ ॥ म्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम्। पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३६२ ॥ रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति भृत्या ये। तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥ ३६३ ॥ गन्तव्या राजसभा द्रष्टव्या राजपूजिता लोकाः। यद्यपि न भवन्त्यर्थास्तथाप्यनर्था विनश्यन्ति ॥ ३६४ ॥ अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थान्। तृणमपि दग्धुमशक्तो वडवाग्निः संपिबत्यब्धिम् ॥ ३६५ ॥ अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात्। नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ३६६ ॥ सप्रतिबन्धं कार्यं प्रभुरधिगन्तुं सहायवानेव। दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ३६७ ॥ अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः। उभयबलसाधुवादश्रवणसुखस्यैव नास्त्यन्तः ॥ ३६८ ॥ अविवेकमतिर्नृपतिर्मन्त्री गुणवत्सु वक्रितग्रीवः। यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः ॥ ३६९ ॥ अतिगम्भीरे भूपे कूप इव जनस्य दुरवतारस्य। दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ ३७० ॥ सद[१]वनमसदनु[२]शासनमाश्रितभरणं च राजचिह्नानि। अभिषेकः पटबन्धो बालव्यजनं व्रणस्यापि ॥ ३७१ ॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः। सचिवजितं षण्ढजितं युवतिजितं चैव राजानम् ॥ ३७२ ॥ आश्रयितव्यो नरपतिरर्जयितव्यानि भूरि वित्तानि। आरब्धव्यं वितरणमानेतव्यं यशोऽपि दशदिग्भ्यः ॥ ३७३ ॥ असमैः समीयमानः समैश्च परिहीयमाणसत्कारः। धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥ ३७४ ॥ अनुयातानेकजनः परपुरुषैरुह्यतेऽस्य निजदेहः। अधिकारस्थः पुरुषः शव इव न शृणोति वीक्षते कुमतिः ॥ ३७५ ॥ स क्षत्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः। वहन्द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ॥ ३७६ ॥ क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः। राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ३७७ ॥ अत्यु[३]च्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः। सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ ३७८ ॥ यः काकिनीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम्। कालेषु कोटिष्वपि मुक्तहस्तस्तं राजसिंहं न जहाति लक्ष्मीः ॥ ३७९ ॥ उपेक्षितः क्षीणबलोऽपि शत्रुः प्रमाददोषात्पुरुषैर्मदान्धैः। साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति ॥ ३८० ॥ मित्राणि शत्रुत्वमिवानयन्ती मित्रत्वमप्यवशाच्च शत्रून्। नीतिर्नयत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवत एव पुंसः ॥ ३८१ ॥ सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहीधर्मयशःसमूहः। दुर्मन्त्रिणा नाशयते तथैव लक्ष्मीमहीधर्मयशःसमूहः ॥ ३८२ ॥ नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये सौधविहारसाराः। बिडालवृन्दार्पितदुग्धपूराः स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥ ३८३ ॥ सुहृदामुपकारकारणाद्द्विषतामप्यपकारकारणात्। नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ॥ ३८४ ॥ विषमोऽपि[१] विगा[२]ह्यते नयः कृ[३]ततीर्थः पयसामिवाशयः। स तु तत्र विशेषदुर्लभः सदु[४]पन्यस्यति कृत्य[५]वर्त्म यः[६] ॥ ३८५ ॥ द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः[७] सुमर्षणः। न महानपि भूतिमिच्छता फलसंपत्प्रवणः[८] परिक्षयः ॥ ३८६ ॥ अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः। क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ३८७ ॥ अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया[९]। अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ ३८८ ॥ क्षययुक्तमपि स्वभावजं दधतं धाम[१०] शिवं समृद्धये। प्रणयन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ३८९ ॥ प्रभवः खलु कोश[११]दण्ड[१२]योः कृतपञ्चाङ्ग[१३]विनिर्णयो नयः। स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ ३९० ॥ अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः। विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥ ३९१ ॥ विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः। नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ ३९२ ॥ चञ्चलं वसु नितान्तमुन्नता मेदिनीमपि हरन्त्यरातयः। भूधरस्थिरमुपे-

१ सतामवनं रक्षणम्. २ दुष्टशासनम्. ३ अत्युन्नते.

१ दुर्बोधोऽपि; पक्षे,-दुःप्रवेशोऽपि. २ विगृह्यते; पक्षे,-प्रविश्यते. ३. कृताभ्यासद्युपायः सन्; पक्षे,-कृतजलावतारः सन्. ४ देशकालाद्यविरुद्धम्, यथार्थमित्यर्थः; पक्षे,-गर्तग्राहपाषाणादिरहितम्. ५ संधिविग्रहादिकार्यम्; पक्षे,-स्नानादिकम्. ६ यथा केचित्कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति, तीर्थकरस्तु विरलः, तद्वन्नीतावपि निगूढमपि तत्त्वं सति वक्तरि बोद्धारः सन्ति, वक्ता तु न सुलभ इत्यर्थः. ७ अत्यन्तदुरन्तः. क्षयोन्मुख इत्यर्थः. ८ फलसिद्ध्युन्मुखः. ९ अनुत्साहेन. १० क्षात्रं तेजः; पक्षे,-प्रकाशम्. ११ अर्थराशिः. १२ तुरंगसैन्यम्. १३ 'सहायाः साधनोपाया विभागो देशकालयोः। विनिपातः प्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते ॥' इति.

रमागतं मावमंस्त सुहृदं महीपतिम् ॥ ३९३ ॥ आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च। येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ३९४ ॥ स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः। सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः ॥ ३९५ ॥ नराधिपा नीचजनानुवर्तिनो बुधोपदिष्टेन न यान्ति ये पथा। विशन्त्यतो दुर्गममार्गनिर्गमं समस्तसंबाधमनर्थपञ्जरम् ॥ ३९६ ॥ नृपोऽपकृष्टः सचिवात्तदर्पणः स्तनंधयोऽत्यन्तशिशुः स्तनादिव। अदृष्टलोकव्यवहारमूढधीर्मुहूर्तमप्युत्सहते न वर्तितुम् ॥ ३९७ ॥ व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः। प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता[1] इवेषवः ॥ ३९८ ॥ क्रतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसंग्रहे। प्रियासु नारीष्वधनेषु बन्धुषु धनव्ययस्तेषु न गण्यते बुधैः ॥ ३९९ ॥ परं विनीतत्वमुपैति सेवया महीपतीनां विनयो हि भूषणम्। प्रवृत्तदानो मृदुसंचरत्करः[2] करीव भद्रो विनयेन शोभते ॥ ४०० ॥ अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन[3] न विद्विषादरः ॥ ४०१ ॥ यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम्। अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः क्रियेत ॥ ४०२ ॥ आसन्नमेव नृपतिर्भजते मनुष्यं विद्याविहीनमकुलीनमसंगतं वा। प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति ॥ ४०३ ॥ सत्यानृता च [4]रुषा प्रियवादिनी च हिंस्रा[5] दयालुरपि चार्थपरा वदान्या[6]। नित्यव्यया प्रचुरनित्यधनागमा च वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४०४ ॥ राजन्दुधुक्षसि[7] यदि क्षितिधेनुमेतां तेनाद्य वत्समिव लोकममुं पुषाण[8]। तस्मिंश्च सम्यगनिशं परिपोष्यमाणे नानाफलैः फलति कल्पलतेव भूमिः ॥ ४०५ ॥ सिध्यन्ति कर्मसु महत्स्वपि यैन्नियोज्याः[9] संभावनागुणमवेहि तमीश्वराणाम्[10]। किं प्राभविष्यदरुणस्[11]तमसां वधाय तं चेत्सहस्रकिरणो[12] धुरि नाकरिष्यत् ॥ ४०६ ॥ तातार्यमन्त्रिसुतसोदरपण्डितानां नित्यं भजन्ति विभजीकृतभव्यभोगान्। तस्मात्कदाचन रहस्यपि तद्विधानामाज्ञां विभज्य न दिशन्ति महीं महीशाः ॥ ४०७ ॥ ये बाहवो न युधि वैरिकठोरकण्ठपीठोच्छलद्रुधिरराजिविराजितांसाः। नापि प्रियापृथुपयोधरपत्रभङ्गसंक्रान्तकुङ्कुमरसाः खलु निष्फलास्ते ॥ ४०८ ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन। इति महति विरोधे विद्यमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ४०९ ॥ नियतविषयवर्ती प्रायशो दण्डयोगाज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः। कृशमपि विकलं वा व्याधितं वाऽधनं वा पतिमपि कुलनारी दण्डभीत्याऽभ्युपैति ॥ ४१० ॥ नृपः कामासक्तो गणयति न कार्यं न च हितं यथेच्छं स्वच्छन्दश्चरति किल मत्तो गज इव। ततो मानाध्मातः पतति तु यदा शोकगहने तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥ ४११ ॥ अवज्ञानात्प्राज्ञो भवति मतिहीनः परिजनस्ततस्तत्प्रामाण्याद्भवति न समीपे बुधजनः। बुधैस्त्यक्ते राज्ये न हि भवति नीतिर्गुणवती विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ४१२ ॥ अयुक्तं युक्तं वा यदभिहितम[1]ज्ञेन विभुना स्तुयादेतन्नित्यं जडमपि गुरुं तस्य विनुयात्[2]। विवत्सुर्नैःस्पृह्यं[3] कथमपि सभायामभिनयेत्[4]स्वकार्यं संतुष्टे क्षितिभृति रहस्येव[5] कथयेत् ॥ ४१३ ॥ मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः। मुहुर्भ्रश्यद्बीजा मुहुरपि बहुप्रापितफलेत्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ४१४ ॥ इच्छेद्यस्तु सुखं निवस्तुमवनौ[6] गच्छेत्स राज्ञः सभां कल्याणीं[7] गिरमेव संसदि[8] वदेत्कार्यं विदध्यात्कृती। अक्लेशाद्धनमर्जयेदधिपतेरावर्जयेद्वल्लभान्[9]कुर्वीतोपकृतिं जनस्य जनयेत्कस्यापि नापक्रियाम्[10] ॥ ४१५ ॥ अज्ञो वा यदि वा विपर्ययगते[11] ज्ञानेऽथ संदेहभृद्[12]दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः। निःसंदेहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः[13] ॥ ४१६ ॥ सूचीमात्रविभेदसंभ्रमगुणः क्षोणीशवामभ्रुवामुत्तुङ्गस्तनमण्डलेषु लभते लीलारतिं कञ्चुकः। नाराचैर्निबिडैर्विभिन्नवपुषां पुंसां महायोधने स्वर्गस्त्रीकुचकुम्भसंभ्रमपरीरम्भः कथं दुर्लभः ॥ ४१७ ॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते। निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति[14] ॥ ४१८ ॥ ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते तं गच्छन्त्यनु-

१ तीक्ष्णाः. २ करः हस्तः; पक्षे,-शुण्डादण्डः. ३ जातस्नेहेन. ४ कर्कशा. ५ घातुका. ६ दानशौण्डा. ७ दोहनं कर्तुमिच्छसि. ८ पोषणं कुरु. ९ भृत्याः. १० राज्ञाम्. ११ सूर्यसारथिः. १२ सूर्यः.

१ उक्तम्. २ तद्गुरोः स्तवनं कुर्यात्. ३ निःस्पृहताम्. ४ अभिनयपूर्वकं दर्शयेत्. ५ एकान्ते. ६ पृथिव्याम्. ७ मनोज्ञाम्. ८ सभायाम्. ९ प्रियान्. १० अपकारम्. ११ प्रतिकूलतां गते. १२ विकल्पात्मकः. १३ प्रजानाशः संप्राप्त इति भावः. १४ यावन्मरणं द्रोहमाचरति, तन्मरणायैव यतति.

ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया । भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया भक्त्या कार्यधुरं वहन्ति कृतिनस्ते दुर्लभास्तादृशाः ॥ ४१९ ॥ द्वारे रुद्धमुपेक्षते कथमपि प्राप्तं पुरो नेक्षते विज्ञप्तौ गजमीलनानि कुरुते गृह्णाति वाक्यच्छलम् । निर्यातस्य करोति दोषकथनं तद्विद्विषामग्रतः स स्वामी यदि सेव्यते कुमतिभिः किं नः पिशाचैः कृतम् ॥ ४२० ॥ वृत्तिच्छेदविधौ द्विजातिमरणे मित्रार्थसंप्रेषणे संप्राप्ते मरणे कलत्रहरणे स्वामिग्रहे गोग्रहे । प्राणत्राणपरायणैकमनसां येषां न शस्त्रग्रहस्तानालोक्य विलोकते च मनसा सूर्योऽपि सूर्यान्तरम् ॥ ४२१ ॥ धर्मः प्रागेव चिन्त्यः सचिवगतिमती भावनीये सदैव ज्ञेया लोकानुवृत्तिर्वरचरनयनैर्मण्डलं वीक्षणीयम् । प्रच्छाद्यौ रागरोषौ मृदुपरुषयुतौ वर्जनीयौ च काले स्वात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥ ४२२ ॥ कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के सहायाः का शक्तिः कोऽभ्युपायः फलमिह च कियत्कीदृशी दैवसंपत् । संपत्तौ को निबन्धः प्रविदितवचनस्योत्तरं किं नु मे स्यादित्येवं कार्यसिद्धाववहितमनसो हस्तगाः संपदः स्युः ॥ ४२३ ॥

## सामान्यनीतिः

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते । स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १ ॥ प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः । किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २ ॥ सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् । सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥ ३ ॥ न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते । अनाहूता न चायान्ति तेनाश्मानोऽपि देवताः ॥ ४ ॥ पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् । मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ ५ ॥ गतेऽपि[1] वयसि ग्राह्या विद्या सर्वात्मना बुधैः । यद्यपि स्यान्न फलदा सुलभा साऽन्यजन्मनि ॥ ६ ॥ यस्य चाप्रियमन्विच्छेत्तस्य कुर्यात्सदा प्रियम् । व्याधा मृगवधं कर्तुं सम्यग्गायन्ति सुस्वरम् ॥७॥ प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् । अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेत्तथापि च ॥ ८ ॥ सुमन्त्रिते सुविक्रान्ते सुकृतौ सुविचारिते । प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी ॥ ९ ॥ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः । न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥१०॥ नोदन्वानर्थितामेति सदाऽम्भोभिः प्रपूर्यते । आत्मा तु पात्रतां नेयः पात्रमायान्ति संपदः ॥ ११ ॥ काकतालीययोगेन यदनात्मवति क्षणम् । करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीत्वचापलम् ॥ १२ ॥ यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च । अवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥ १३ ॥ केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः । केचिज्ज्ञानावलेपेन केचिन्नष्टैस्तु नाशिताः ॥ १४ ॥ मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः । आपन्निकषपाषाणे नरो जानाति सारताम् ॥ १५ ॥ दुष्टैरपि निजैरेव प्रावृतं सर्वमुत्तमम् । वरं जीर्णाम्बरं वापि हट्टे कर्पटमर्हति ॥ १६ ॥ चिन्तनीया हि विपदामादावेव प्रतिक्रियाः । न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ १७ ॥ वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह । कृशताऽभिमता देहे पीनता न तु शोफतः ॥१८॥ स्त्री विनश्यति रूपेण ब्राह्मणो राजसेवया । गावो दूरप्रचारेण हिरण्यं लोभलिप्सया ॥ १९ ॥ अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः । विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत् ॥ २० ॥ धनमस्तीति वाणिज्यं किंचिदस्तीति कर्षणम् । सेवा न किंचिदस्तीति भिक्षा नैव च नैव च ॥ २१ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः । हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ २२ ॥ गीतशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ २३ ॥ जानन्ति पशवो गन्धाद्वेदाज्जानन्ति पण्डिताः । चाराज्जानन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥२४॥ युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः । रवेरविषयं वस्तु किं न दीपः प्रकाशयेत् ॥ २५ ॥ वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् । वृथा दानं समर्थस्य वृथा दीपो दिवापि च ॥ २६ ॥ अजायुद्धमृषिश्राद्धं प्रभाते मेघडम्बरम् । दंपत्योः कलहश्चैव परिणामे न किंचन ॥ २७ ॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ २८ ॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ २९ ॥ सौहृदेन परित्यक्तं निःस्नेहं खलवत्त्यजेत् । सोदरं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ ३० ॥ यन्निमित्तं भवेच्छोको दुःखं वा त्रास एव च । आयासो वा यतः शूलस्तदेकाङ्गमपि त्यजेत् ॥ ३१ ॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥ ३२ ॥ न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम् । यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥ ३३ ॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत्

[1] वृद्धत्वेऽपि.

॥ ३४ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ३५ ॥ अनायके न वस्तव्यं न वसेद्बहुनायके । स्त्रीनायके न वस्तव्यं न वसेद्बालनायके ॥ ३६ ॥ सर्वथा संत्यजेद्वादं न कंचिन्मर्मणि स्पृशेत् । सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः ॥ ३७ ॥ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् । कर्मणां फलमस्तीति मनसा त्रितयं चरेत् ॥ ३८ ॥ प्राणातिपातः स्तैन्यं च परदाराभिमर्शनम् । त्रीणि पापानि विदुषा नित्यशः परिवर्जयेत् ॥ ३९ ॥ न कश्चिदपि जानाति किं कस्य श्वो भविष्यति । अतः श्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥ ४० ॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ ४१ ॥ उपकारः परो धर्मः परार्थं मर्म नैपुणम् । पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥ ४२ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ४३ ॥ परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् । न हीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥४४॥ मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ४५ ॥ परदारपरद्रव्यपरद्रोहपराङ्मुखः । गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति ॥ ४६ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥ ४७ ॥ स्त्रीबालस्वामिमित्रघ्नो गोघ्नो विश्वासघातकः । सुरापो ब्रह्महा चोरो यान्त्येते सर्वनारकान् ॥ ४८ ॥ कूटसाक्षी[1] मृषावादी यश्चासदनुशास्ति वै । ते मोहमृत्यवः सर्वे तथा ये वेदनिन्दकाः ॥ ४९ ॥ वटं भिन्द्यात्पटं छिन्द्यात्कुर्याद्रासभनिःस्वनम् । येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥५०॥ न हीदृशं [2]संवननं त्रिषु लोकेषु विद्यते । दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥ ५१ ॥ विवादो धनसंबन्धो याचनं स्त्रीषु संगतिः । आदानमग्रतः स्थानं मैत्रीभङ्गस्य हेतवः ॥ ५२ ॥ दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् । कथितानि रहस्यानि सौहृदं किमतः परम् ॥ ५३ ॥ दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते । भिन्नश्लिष्टा तु या प्रीतिः सा दुःखैकप्रदायिनी ॥ ५४ ॥ ययोरेव समं वित्तं ययोरेव समं कुलम् । तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ५५ ॥ उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः । अधमा मातुलाख्याताः श्वशुराच्चाधमाधमाः ॥ ५६ ॥ ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च । पुनः पुनः प्रवर्तन्ते तस्माच्छेषं न रक्षयेत् ॥ ५७ ॥ कुभोज्येन दिनं नष्टं कुकलत्रेण शर्वरी । कुपुत्रेण कुलं नष्टं तन्नष्टं यन्न दीयते ॥ ५८ ॥ बर्बरश्च तपस्वी स्याच्छूरश्चाप्यकृतव्रणः । मद्यपा स्त्री सती राजन्निति न श्रद्दधामहे ॥ ५९ ॥ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ६० ॥ सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः । तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ६१ ॥ व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः । अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः ॥ ६२ ॥ कुर्यान्न परदारेच्छां विश्वासं स्त्रीषु वर्जयेत् । हतो दशास्यः सीतार्थी हतः पत्न्या विदूरथः ॥ ६३ ॥ न मद्यव्यसनी क्षीबः कुर्याद्वेतालचेष्टितम् । वृष्णयो हि ययुः क्षीबास्तृणैः प्रहरणैः क्षयम् ॥ ६४ ॥ दानं सत्त्वाश्रितं कुर्यान्न पश्चात्तापवान्भवेत् । बलिनात्मार्पितो बन्धे दानशेषस्य शुद्धये ॥ ६५ ॥ न स्त्रीजितः प्रमूढः स्याद्गाढरागवशीकृतः । पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥ ६६ ॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लुतान् । वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ ६७ ॥ परेषां क्लेशदं कुर्यान्न पैशुन्यं प्रभुप्रियम् । पैशुन्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम् ॥ ६८ ॥ कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम् । बलिप्रार्थनया प्राप लघुतां पुरुषोत्तमः ॥ ६९ ॥ वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात्प्रीतिसंगतिम् । वसिष्ठस्याहरद्धेनुं विश्वामित्रो निमन्त्रितः ॥ ७० ॥ तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत् । विश्वामित्रोऽपि सोत्कण्ठं कण्ठे जग्राह मेनकाम् ॥ ७१ ॥ भक्तं रक्तं सदासक्तं निर्दोषं न परित्यजेत् । रामस्त्यक्त्वा सतीं सीतां शोकशल्याकुलोऽभवत् ॥ ७२ ॥ वर्जयेदिन्द्रियजयी निर्जने जननीमपि । पुत्रीकृतोऽपि प्रद्युम्नः कामितः शम्बरस्त्रिया ॥ ७३ ॥ प्रभुप्रसादे विश्वासं न कुर्यात्स्वप्नसंनिभे । नन्देन मन्त्री निक्षिप्तः शकटारोऽपि बन्धने ॥ ७४ ॥ अप्युन्नतपदारूढः पूज्यान्नैवापमानयेत् । नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यावमाननात् ॥ ७५ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम् । विदुरोक्तमकृत्वाभूत्कौरवः शोकशल्यभाक् ॥ ७६ ॥ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथंचन । पुत्रार्पितप्रभुत्वोऽभूद्धृतराष्ट्रस्तृणोपमः ॥ ७७ ॥ श्रुतिस्मृत्युक्तमाचारं न त्यजेत्साधुसेवितम् । दैत्यानां श्रीवियोगोऽभूत्सत्यधर्मक्रियामुचाम्[1] ॥ ७८ ॥ नदीनां नखिनां चैव शृङ्गिणां शस्त्र-

१ असत्यवादिसाक्षी. २ वशीकरणम्.

१ मत्तः.

पाणिनाम् । विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ ७९ ॥ न कुर्यादभिचारोग्रवश्यादिकुहकक्रियाम् । लक्ष्मणेनेन्द्रजित्कृत्याभिचारसमये हतः ॥ ८० ॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि । शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ ८१ ॥ चिन्ता जरा मनुष्याणामनध्वा वाजिनां जरा । असंभोगो जरा स्त्रीणां वस्त्राणामातपो जरा ॥ ८२ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ८३ ॥ पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह । पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥ ८४ ॥ यान्ति न्याय[1]प्रवृत्तस्य तिर्यञ्चो[2]ऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ८५ ॥ विद्याभ्यासो विचारश्च समयोरेव शोभते । विवाहश्च विवादश्च समयोरेव शोभते ॥ ८६ ॥ लक्ष्मीर्वसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः । जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम् ॥ ८७ ॥ यस्मिन्देशे न संमानो न प्रीतिर्न च बान्धवाः । न च विद्यागमः कश्चिन्न तत्र दिवसं वसेत् ॥ ८८ ॥ वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः । अथैवमागते काले भिन्द्याद्घटमिवाश्मनि ॥ ८९ ॥ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ ९० ॥ मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च । द्विषतां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ९१ ॥ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च । चतुर्णामपि चैतेषां निष्कृतिर्नैव विश्रुता ॥ ९२ ॥ गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् । गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥ ९३ ॥ आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः । परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥ ९४ ॥ विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् । तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयताम् ॥ ९५ ॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ९६ ॥ लुब्धमर्थेन गृह्णीयात्क्रुद्धमञ्जलिकर्मणा । मूर्खं छन्दानुवृत्त्या च तत्त्वार्थेन च पण्डितम् ॥ ९७ ॥ जानीयात्संगरे भृत्यान्बान्धवान्व्यसनागमे । आपत्कालेषु मित्राणि भार्यां च विभवक्षये ॥ ९८ ॥ खरं श्वानं गजं मत्तं रण्डां च बहुभाषिणीम् । राजपुत्रं कुमित्रं च दूरतः परिवर्जयेत् ॥ ९९ ॥ दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम् । क्रोधवन्तं मदोन्मत्तं नमस्कारेऽपि वर्जयेत् ॥ १०० ॥ पिपीलिकार्जितं धान्यं मक्षिकासंचितं मधु । लुब्धेन संचितं द्रव्यं समूलं च विनश्यति ॥ १०१ ॥ न सारणीया धीरेण रसना नीरसे जने । को नाम कुरुते फेरौ[1] नायकः सायकक्षतिम् ॥१०२॥ धातुवादेषु वित्ताशा मोक्षाशा कौलिके मते । जामातरि च पुत्राशा त्रयमेतन्निरर्थकम् ॥ १०३ ॥ द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन । यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ १०४ ॥ द्वाविमौ पुरुषौ लोके परप्रत्ययकारकौ । स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ १०५ ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ १०६ ॥ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः । प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १०७ ॥ द्वाविमौ पुरुषौ लोके न भूतौ न भविष्यतः । प्रार्थितं यश्च कुरुते यश्च नार्थयते परम् ॥ १०८ ॥ द्वाविमौ पुरुषौ लोके शिरःशूलकरावुभौ । गृहस्थश्च निरारम्भो यतिश्च सपरिग्रहः ॥ १०९ ॥ शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो । उभयोर्दुःखदायित्वे को भेदः शत्रुमित्रयोः ॥११०॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः । ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ १११ ॥ ददतो युध्यमानस्य पठतः पुलको न चेत् । आत्मनश्च परेषां च धिक्त्यागं पौरुषं श्रुतम् ॥ ११२ ॥ न तद्भुक्तं न तत्पीतं न तत्सुप्तं न तद्गतम् । यन्मांसमाहिषक्षीरलैलनावैंाजिवर्जितम् ॥११३॥ निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् । न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ॥११४॥ मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि । तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ ११५ ॥ मत्स्यादयोऽपि जानन्ति नीरक्षीरविवेचनम् । परं प्रसिद्धिर्हंसस्य यशः पुण्यैरवाप्यते ॥ ११६ ॥ पञ्चभिः कामिता कुन्ती तद्वधूरथ पञ्चभिः । सतीं वदति लोकोऽयं यशः पुण्यैरवाप्यते ॥ ११७ ॥ सौभाग्यं विरलस्य स्यात्समकर्मगुणेष्वपि । षड्विंशदायुधा पृथ्वी खड्गायत्तैव दृश्यते ॥ ११८ ॥ हस्तादपि न दातव्यं गृहादपि न दीयते । परोपकरणार्थाय वचने किं दरिद्रता ॥ ११९ ॥ वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ १२० ॥ भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः । विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ १२१ ॥ जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशाम् । वेत्ति विश्वंभरा भारं गिरीणां गरिमाश्रयन् ॥ १२२ ॥ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ १२३ ॥

१ न्यायमार्गानुसारिणः २ तिर्यग्जातीयाः पशव इत्यर्थः. ३ तज्जनितपापपरिहारः. ४ त्याज्यः. ५ विघ्नरूपः.

१ जंबुके. २ स्त्री. ३ अश्वः. ४ मित्रभावः.

अत्यासन्ना विनाशाय दूरतश्चाफलप्रदाः । मध्यभावेन सेव्यन्ते राजा वह्निर्गुरुः स्त्रियः ॥ १२४ ॥ अमृतं दुर्लभं नृणां देवानामुदकं तथा । पितॄणां दुर्लभः पुत्रस्तक्रं शक्रस्य दुर्लभम् ॥ १२५ ॥ शनैः[1] पन्थाः[2] शनैः कन्था शनैः पर्वतमस्तके । शनैर्विद्या शनैर्वित्तं पञ्चैतानि[3] शनैः शनैः[4] ॥१२६॥ अन्वयागतविद्यानामन्वयागतसंपदाम्[4] । विदुषां च प्रभूणां च हृदयं नावलिप्यते[5] ॥ १२७ ॥ मक्षिका मशको वेश्या मूषको याचकस्तथा । ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥ १२८ ॥ अकृतोपद्रवः कश्चिन्महानपि न पूज्यते । अर्चयन्ति नरा नागं न तार्क्ष्यं न गजादिकम् ॥ १२९ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया । श्रियोऽनुकूलदानेन लज्जया च कुलाङ्गनाः[6] ॥ १३० ॥ ब्राह्मणा गणका वेश्याः सारमेयाश्च[7] कुक्कुटाः । दृष्ट्वान्येषु कुप्यन्ति न जाने तस्य कारणम् ॥ १३१ ॥ पुत्रपौत्रवधूभृत्यैः संपूर्णमपि सर्वदा । भार्याहीनगृहस्थस्य शून्यमेव गृहं मतम् ॥ १३२ ॥ अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा । तदिदं देहि देहीति विपरीतमुपस्थितम् ॥ १३३ ॥ नवे वयसि यः शान्तः स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥ १३४ ॥ धिग्गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् । धिक्पुत्रमविनीतं च धिग्ज्योतिषमजातकम् ॥ १३५ ॥ अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च । अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥१३६॥ दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः[8] । श्यालको गृहनाशाय सर्वनाशाय मातुलः ॥ १३७ ॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि[9] । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः[10] ॥ १३८ ॥ उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः । आहारो मैथुनं निद्रा सेवनात्तु विवर्धते ॥१३९॥ कृतार्थः स्वामिनं द्वेष्टि कृतदारस्तु[11] मातरम् । जातापत्या पतिं द्वेष्टि गतरोगश्चिकित्सकम्[12] ॥ १४० ॥ चक्षुःपूतं[13] न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥ १४१ ॥ नास्ति यज्ञः स्त्रियः कश्चिन्न व्रतं नोपवासकम् । या तु भर्तरि शुश्रूषा तया स्वर्गे जयत्यसौ ॥ १४२ ॥ शुचि भूमिगतं तोयं शुचिर्नारी पतिव्रता । शुचिः क्षेमकरो राजा संतोषी ब्राह्मणः शुचिः ॥ १४३ ॥ नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने । वत्सोऽपि

१ पञ्चसु वाक्येषु अतिवाह्यते सिध्यति आरोहति प्राप्यते वर्धते इति पञ्चक्रियाध्याहारः. २ मार्गातिवाहनादीनि. ३ एतानि त्वरया न भवन्तीत्यर्थः. ४ वंशपरम्परागतविद्यानाम्. ५ सगर्वं न भवति. ६ कुलस्त्रियः. ७ श्वानः. ८ गजः. ९ स्वल्पमपि. १० वस्तुमाहात्म्येन. ११ कृता दाराः स्त्री येन सः. १२ वैद्यम्. १३ पवित्रम्.

स्तनपाने स्यात्छ्वा मृगग्रहणे शुचिः ॥ १४४ ॥ भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ॥ १४५ ॥ असारे खलु संसारे सारमेतच्चतुष्टयम् । काश्यां वासः सतां सङ्गो गङ्गाम्भः शंभुसेवनम् ॥ १४६ ॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ १४७ ॥ सप्तैतानि न पूर्यन्ते पूर्यमाणान्यनेकशः । ब्राह्मणोऽग्निर्यमो राजा पयोधिरुदरं गृहम् ॥ १४८ ॥ कल्पान्तवाससंक्षोभलङ्घिताशेषभूभृतः । स्थैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ १४९ ॥ संपत् सरस्वती सत्यं संतानं सदनुग्रहः । सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः ॥ १५० ॥ अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः । किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १५१ ॥ परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १५२ ॥ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः । स[1] हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥१५३॥ सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः । तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ १५४ ॥ साक्षरं पुरुषं दृष्ट्वा यो नरो नाभिमन्यते । बलीवर्दसमो लोके खुरशृङ्गविवर्जितः ॥ १५५ ॥ को न याति वशं लोके मुखे पिण्डेन पूरितः । मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १५६ ॥ लुब्धानां याचकः शत्रुश्चोराणां चन्द्रमा रिपुः । जारस्त्रीणां पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥ १५७ ॥ अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥ १५८ ॥ परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै । विस्तरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥ १५९ ॥ गुणिनां निर्गुणानां च दृश्यते महदन्तरम् । हारः[2] कण्ठगतः स्त्रीणां नूपुराणि च पादयोः ॥ १६० ॥ अलभ्यं लब्धुकामस्य जनस्य गतिरीदृशी । अलभ्येषु मनस्तापः संचितार्थो विनश्यति ॥१६१॥ शत्रुवाक्यामृतं श्रुत्वा तेन सौहार्दमार्जवम् । नहि धीरेण कर्तव्यमात्मनः शुभमिच्छता ॥ १६२ ॥ शूराश्च कृतविद्याश्च रूपवत्यश्च योषितः । यत्र यत्र गमिष्यन्ति तत्र तत्र कृतादराः ॥ १६३ ॥ चत्वारो धनदायादा धर्माग्निनृपतस्कराः । तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥ १६४ ॥ शीलभारवती कान्ता पुष्पभारवती लता । अर्थभारवती वाणी भजते कामपि[3] श्रियम्[4] ॥ १६५ ॥ पूरोत्पीडे तडागस्य परीवाहः[5] प्रतिक्रिया[6] । शोकक्षोभे च हृदयं प्रलापैरेव धार्यते

१ स क्रमः सर्वविद्याधनार्जनेऽपि चोक्तः. २ मुक्ताहारः. ३ अचिन्त्याम्. ४ शोभाम्. ५ प्रवहणम्. ६ उपायः.

॥ १६६ ॥ उपभोक्तुं न जानाति श्रियं प्राप्यापि मानवः । आकण्ठजलमग्नोऽपि श्वा लिह्लत्येव जिह्वया ॥ १६७ ॥ आर्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः । निर्धना दानमिच्छन्ति वृद्धा नारी पतिव्रता ॥ १६८ ॥ जामाता जठरं जाया जातवेदा जलाशयः । पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः ॥ १६९ ॥ जननी जन्मभूमिश्च जाह्नवी च जनार्दनः । जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ १७० ॥ सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः । तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥ १७१ ॥ सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् । स्वदारपरिहारेण परदारार्थिनो जनाः ॥ १७२ ॥ एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् । गतानुगतिको लोको न लोकः पारमार्थिकः ॥ १७३ ॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे । अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ १७४ ॥ गुरुपत्न्यां निशाधीशो ब्राह्मण्यां पाकशासनः । गतः पञ्चेषुलक्ष्यत्वं का कथाऽन्यस्य देहिनः ॥ १७५ ॥ यस्मिन्रुष्टे भयं नास्ति तुष्टे नैव धनागमः । निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ १७६ ॥ आलस्योपहता विद्या परहस्तगताः स्त्रियः । अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ १७७ ॥ निर्विषेणापि सर्पेण कर्तव्या महती फटा । विषमस्तु न चाप्यस्तु फटाटोपो[1] भयंकरः ॥ १७८ ॥ एक एव पदार्थस्तु त्रिधा भवति वीक्षितः । कुणपः[2] कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १७९ ॥ नारी परमुखद्रष्ट्री कविरव्यवहारवित् । अपथ्यसेवी रोगी च क्रियद्भिर्नोपहस्यते ॥ १८० ॥ अन्यदा भूषणं पुंसां क्षमा लज्जेव योषिताम् । पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ १८१ ॥ सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीति वादिनम् । कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ १८२ ॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो नहि सर्वत्र चन्दनं न वने वने ॥ १८३ ॥ प्रीतिर्लक्ष्मीर्व्ययः क्लेशः सा किं सा किं स किं स किम् । या लोभाद्या परद्रोहात्परार्थे यः परार्थकृत् ॥ १८४ ॥ मनो मधुकरो मेघो मानिनी मदनो मरुत् । मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥ १८५ ॥ यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य जीवस्य पुनरागमनं कुतः ॥ १८६ ॥ असार एष संसारः सारं सारङ्गलोचनाः । तदर्थं धनमिच्छन्ति तत्त्यागे तु धनेन किम् ॥ १८७ ॥ सत्यानुसारिणी लक्ष्मीः कीर्तिस्त्यागानुसारिणी । अभ्याससारिणी विद्या बुद्धिः कर्मानुसारिणी ॥ १८८ ॥ उपाध्यायश्च वैद्यश्च ऋतुकाले वरस्त्रियः । सूतिका दूतिका नौका कार्यान्ते ते च शष्पवत् ॥ १८९ ॥ विशाखान्ता गता मेघाः प्रसूतान्तं च यौवनम् । प्रणामान्तः सतां कोपो याचनान्तं हि गौरवम् ॥ १९० ॥ कृतान्तपाशबद्धानां दैवोपहतचेतसाम् । बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १९१ ॥ सदयं हृदयं यस्य भाषितं सत्यभूषितम् । कायः परहिते यस्य कलिस्तस्य करोति किम् ॥ १९२ ॥ अपत्यदर्शनस्यार्थे प्राणानपि च या त्यजेत् । त्यजन्ति तामपि क्रूरा मातरं दारहेतवे ॥ १९३ ॥ पुत्रसूः पाककुशला पवित्रा च पतिव्रता । पद्माक्षी पञ्चपैर्नारी भुवि संयाति गौरवम् ॥ १९४ ॥ दातुरुन्नतवित्तस्य गुणयुक्तस्य चार्थिनः । दुर्लभः खलु संयोगः सद्बीजक्षेत्रयोरिव ॥ १९५ ॥ आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः । परिज्ञानफलं विद्या दत्तभुक्तफलं धनम् ॥ १९६ ॥ आयुर्वित्तं गृहच्छिद्रं मन्त्रमौषधमैथुने । दानं मानापमानौ च नव गोप्यानि कारयेत् ॥ १९७ ॥ अग्नौ दग्धं जले मग्नं हृतं तस्करपार्थिवैः । तत्सर्वं दानमित्याहुर्यदि क्लैव्यं न भाषते ॥ १९८ ॥ संभ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् । विनयो वंशमाख्याति देशमाख्याति भाषितम् ॥ १९९ ॥ किं विद्यया किं तपसा किं योगेन श्रुतेन च । किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ २०० ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ २०१ ॥ त्यजेत्स्वामिनमत्युग्रमत्युग्रात्कृपणं त्यजेत् । कृपणादविशेषज्ञं तस्माच्च कृतशासनम् ॥ २०२ ॥ पात्रापात्रविवेकोऽस्ति धेनुपन्नगयोरिव । तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥ २०३ ॥ शनैर्विद्यां शनैरर्थानारोहेत्पर्वतं शनैः । शनैरध्वसु वर्तेत योजनान्न परं व्रजेत् ॥ २०४ ॥ द्यूतं पुस्तकवाद्ये च नाटकेषु च सक्तता । स्त्रियस्तन्द्री च निद्रा च विद्याविघ्नकराणि षट् ॥ २०५ ॥ अतिथिर्बालकः पत्नी जननी जनकस्तथा । पञ्चैते गृहिणः पोष्या इतरे च स्वशक्तितः ॥ २०६ ॥ गाढं गुणवती विद्या न मुदे विनयं विना । मूर्खतापि मुदे भूयान्महत्सु विनयान्विता ॥ २०७ ॥ अहो साहजिकं प्रेम दूरादपि

[1] निन्द्यम्. [2] शवः.

विराजते । चकोरनयनद्वन्द्वमाह्लादयति चन्द्रमाः ॥ २०८ ॥ साक्षरा विपरीताश्चेद्राक्षसा एव केवलम् । सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति ॥ २०९ ॥ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा । परापवादसस्येभ्यो गां चरन्तीं निवारय ॥ २१० ॥ एकस्तपो द्विरध्यायी त्रिभिर्गीतं चतुः पथम् । सप्त पञ्च कृषीणां च सङ्ग्रामो बहुभिर्जनैः ॥ २११ ॥ काकः पक्षिषु चाण्डालः स्मृतः पशुषु गर्दभः । नराणां कोऽपि चाण्डालः स्मृतः सर्वेषु निन्दकः ॥ २१२ ॥ दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता । अभ्यासेन न लभ्येयुश्चत्वारः सहजा गुणाः ॥ २१३ ॥ लोभमूलानि पापानि रसमूलानि व्याधयः । इष्टमूलानि शोकानि त्रीणि त्यक्त्वा सुखी भव ॥ २१४ ॥ प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ २१५ ॥ सुखार्थी त्यजते विद्यां विद्यार्थी त्यजते सुखम् । सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥ २१६ ॥ अन्नदानात्परं दानं विद्यादानमतः परम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवं च विद्यया ॥ २१७ ॥ दूरस्थाः पर्वता रम्या वेश्या च मुखमण्डने । युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ २१८ ॥ माता यदि विषं दद्याद्विक्रीणाति पिता सुतम् । राजा हरति सर्वस्वं तत्र का परिदेवना ॥ २१९ ॥ अहेरिव गणाद्भीतः परान्नाच्च विषादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ २२० ॥ अवज्ञात्रुटितं प्रेम नवीकर्तुं क ईश्वरः । संधिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम् ॥ २२१ ॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथाऽन्याम्भस्तत्रत्यो याति शुद्धये ॥ २२२ ॥ लेखनी पुस्तकं रामा परहस्ते गता गता । कदाचित्पुनरायाता भ्रष्टा मुष्टा च चुम्बिता ॥ २२३ ॥ पूर्वदत्तेषु या विद्या पूर्वदत्तेषु च यद्धनम् । पूर्वदत्तेषु या भार्या अग्रे धावति धावति ॥ २२४ ॥ श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च विन्दति ॥ २२५ ॥ मनो धावति सर्वत्र मदोन्मत्तगजेन्द्रवत् । ज्ञानाङ्कुशसमा बुद्धिस्तस्य निश्चलते मनः ॥ २२६ ॥ इच्छेच्चेद्विपुलां मैत्री त्रीणि तत्र न कारयेत् । वाग्वादमर्थसंबन्धं तत्पत्नीपरिभाषणम् ॥ २२७ ॥ अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् । अमृतं राहवे मृत्युर्विषं रुद्रस्य भूषणम् ॥ २२८ ॥ पण्डिते चैव मूर्खे च बलवत्यपि दुर्जने । ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ २२९ ॥ सङ्ग्रामे सुभटेन्द्राणां कवीनां कविमण्डले । दीप्तिर्वा दीप्तिहानिर्वा मुहूर्तादेव जायते ॥२३०॥ विषस्य विषयाणां हि दृश्यते महदन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ २३१ ॥ पुराणान्ते श्मशानान्ते मैथुनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ २३२ ॥ आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् । गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः ॥ २३३ ॥ न ज्ञातुं नाप्यनुज्ञातुं नेक्षितुं नाप्युपेक्षितुम् । स्वजनः स्वजने जातं विपत्पातं समीहते ॥ २३४ ॥ प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् । भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥ २३५ ॥ उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते । चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ २३६ ॥ अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ २३७ ॥ अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा । निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २३८ ॥ शंभुः श्वेतार्कपुष्पेण चन्द्रमा वस्त्रतन्तुना । अच्युतः स्मृतिमात्रेण साधवः करसंपुटैः ॥ २३९ ॥ अकृत्वा पौरुषं या श्रीर्विकासिन्यपि किं तया । जरद्गवोऽपि चाश्नाति दैवादुपगतं तृणम् ॥ २४० ॥ मन्दाकिनीपयःपानं मन्दाक्षीमुखचुम्बनम् । मन्दरोपवनक्रीडा मन्दानुष्ठानतः कुतः ॥ २४१ ॥ दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते । यदन्नं भक्षयेन्नित्यं जायते तादृशी प्रजा ॥ २४२ ॥ मौनं कालविलम्बश्च प्रयाणं भूमिदर्शनम् । भृकुट्यन्यमुखी वार्ता नकारः षड्विधः स्मृतः ॥ २४३ ॥ अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् । शंभुरम्बरहीनोऽपि सर्वज्ञः किं न जायते ॥ २४४ ॥ दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा । अङ्गहीनोऽपि सूर्येण सारथ्ये योजितोऽरुणः ॥ २४५ ॥ उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् । नीचमल्पप्रदानेन इष्टं धर्मेण योजयेत् ॥ २४६ ॥ अकुले पतितो राजा मूर्खपुत्रो हि पण्डितः । निर्धनस्य धनप्राप्तिस्तृणवन्मन्यते जगत् ॥ २४७ ॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् । ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः ॥ २४८ ॥ आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् । पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥ २४९ ॥ प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् । आत्मशक्तिसमं कोपं कुर्वाणो न विनश्यति ॥ २५० ॥ पठकः पाठकश्चैव ये चान्ये शास्त्रपाठकाः । सर्वे व्यसनिनो ज्ञेया यः क्रियावान्स पण्डितः ॥२५१॥ पण्डितैः सह सांगत्यं पण्डितैः सह संकथाः । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ २५२ ॥ शीलं शौर्यमना-

लस्यं पाण्डित्यं मित्रसंग्रहः। अचोरहरणीयानि पञ्चैतान्यक्षयो निधिः ॥ २५३ ॥ मातृवत्परदाराणि परद्रव्याणि लोष्टवत्। आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ २५४ ॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २५५ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ २५६ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा। अथवा विद्यया विद्या चतुर्थी नोपलभ्यते ॥२५७॥ षट्पदः पुष्पमध्यस्थो यथा सारं समुद्धरेत् । तथा सर्वेषु शास्त्रेषु सारं गृह्णन्ति पण्डिताः ॥ २५८ ॥ गुणान्भूषयते रूपं शीलं भूषयते कुलम् । सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ २५९ ॥ अगुणस्य हतं रूपमशीलस्य हतं कुलम्। असिद्धेस्तु हता विद्या अभोगस्य हतं धनम् ॥ २६० ॥ दिवा पश्यति नोलूकः काको नक्तं न पश्यति । अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥ २६१ ॥ यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥२६२॥ मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः। भवन्ति तं विना नैव यथा संख्याङ्कबिन्दवः ॥ २६३ ॥ वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत्। स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥२६४॥ पिण्डे पिण्डे मतिर्भिन्ना कुण्डे कुण्डे नवं पयः। जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥ २६५ ॥ गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा। इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥ २६६ ॥ विद्यया सह मर्तव्यं कुशिष्याय न दापयेत्। तथापि दीयते विद्या पश्चात्संजायते रिपुः ॥ २६७ ॥ मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम्। तन्मध्ये भूतसंचारो यद्वा तद्वा भविष्यति ॥ २६८ ॥ पुस्तकेषु च या विद्या परहस्तेषु यद्धनम्। सङ्ग्रामे च गृहे सैन्यं तिस्रः पुंसां विडम्बनाः ॥ २६९ ॥ असावधाने पाण्डित्यं क्रयक्रीतं च मैथुनम्। भोजनं च पराधीनं तिस्रः पुंसां विडम्बनाः ॥ २७० ॥ पादेन क्रम्यते पन्था मानहीनं च भोजनम्। अविवेकिप्रभोः सेवा पातकं किमतः परम् ॥२७१॥ तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसंतोषैः खलाः परविपत्तिषु ॥ २७२ ॥ प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः। कर्मान्ते दासभृत्याश्च पुत्रा नैव तथा स्त्रियः ॥ २७३ ॥ विनयं राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम्। अनृतं द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥२७४॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च। आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ २७५ ॥ मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा । न कल्पमपि कृष्णेन लोकद्वयविरोधिना ॥ २७६ ॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत्। वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ २७७ ॥ स्वभावेन हि तुष्यन्ति देवाः सत्पुरुषाः पिता । ज्ञातयः स्नानपानेन वाक्प्रदानेन पण्डिताः ॥ २७८ ॥ नराणां नापितो धूर्तः पक्षिणां चैव वायसः। चतुष्पदां शृगालस्तु स्वेच्छाचारी तपस्विनाम् ॥ २७९ ॥ चाण्डालः पक्षिणां काकः पशूनां चैव कुक्कुरः । कोपो मुनीनां चाण्डालःश्चाण्डालः सर्वनिन्दकः ॥ २८० ॥ भ्रमन्संपूज्यते चक्रं भ्रमन्संपूज्यते द्विजः । भ्रमन्संपूज्यते राजा स्त्री भ्रमन्ती विनश्यति ॥ २८१ ॥ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति। न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥ २८२ ॥ स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते। स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥ २८३ ॥ खड्गमूलं भवेद्राज्यमस्त्रीमूलं स्थिरं भवेत्। प्रजामूलं भवेदर्था वैरमूलं विनश्यति ॥ २८४ ॥ ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी । अविनीता रिपुर्भार्या पुत्रः शत्रुरपण्डितः ॥ २८५ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः। नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ २८६ ॥ विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च। व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ २८७ ॥ नास्ति मेघसमं तोयं नास्ति चात्मसमं बलम् । नास्ति चक्षुःसमं तेजो नास्ति धान्यसमं प्रियम् ॥ २८८ ॥ अधना धनमिच्छन्ति वादमिच्छन्ति गर्विताः। मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति देवताः ॥ २८९ ॥ सत्येन धार्यते पृथ्वी सत्येन तपते रविः। सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥ २९० ॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम् ॥ २९१ ॥ युक्तमुक्तं पुराविद्भिश्चिन्ता[१] जूर्तिः[२] सुदारुणा । न भेषजैर्लङ्घनैर्वा न चान्यैरुपशाम्यति ॥ २९२ ॥ आवासः क्रियतां गाङ्गे पापहारिणि वारिणि। स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ २९३ ॥ सुभाषितरसास्वादः प्रौढस्त्रीसंगमस्तथा । सेवा विवेकिनो राज्ञो दुःखनिर्मूलनं त्रयम् ॥ २९४ ॥ ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते दुःखभागिनः ॥ २९५ ॥ नवं वस्त्रं नवं छत्रं नव्या स्त्री नूतनं गृहम्। सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥ २९६ ॥ वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते। सर्वत्रैवं विचा-

१ मूर्खैः. २ ज्वरः.

रेण नाहारे न च मैथुने ॥ २९७ ॥ अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलाम्। शीतलाश्च पुनर्यान्ति का कस्य परिदेवना ॥ २९८ ॥ अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः। स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ २९९ ॥ कृतस्य करणं नास्ति मृतस्य मरणं तथा। गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ ३०० ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि। कुशकण्टकविद्धोऽपि प्राप्तकालो न जीवति ॥ ३०१ ॥ निमग्नस्य पयोराशौ पर्वतात्पतितस्य च। तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ ३०२ ॥ नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः। नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ॥ ३०३ ॥ कवयः किं न पश्यन्ति किं न भक्षन्ति वायसाः। मद्यपाः किं न जल्पन्ति किं न कुर्वन्ति योषितः ॥ ३०४ ॥ वह्निज्वालेव गृहिणी रक्षणीया प्रयत्नतः। वृद्धिक्षयविकाराभ्यां स्वाश्रयक्षेममिच्छता ॥ ३०५ ॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ३०६ ॥ अस्थिरं जीवितं लोके अस्थिरे धनयौवने। अस्थिरा पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥ ३०७ ॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत्। प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ ३०८ ॥ गणेशः स्तौति मार्जारं स्ववाहस्याभिरक्षणे। महानपि प्रसङ्गेन नीचं सेवितुमिच्छति ॥ ३०९ ॥ श्यामा मन्थरगामिन्यः पीनोन्नतपयोधराः। महिष्यश्च महिष्यश्च सन्ति पुण्यवतां गृहे ॥ ३१० ॥ पदे पदे च रत्नानि योजने रसकूपिका। भाग्यहीना न पश्यन्ति बहुरत्ना वसुंधरा ॥ ३११ ॥ राजा वेश्या यमो वह्निः प्राघूर्णो बालयाचकौ। परदुःखं न जानाति ह्यष्टमो ग्रामकण्टकः ॥ ३१२ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारबन्धनम्। धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ ३१३ ॥ प्रेम सत्यं तयोरेव ययोर्योगवियोगयोः। वत्सरा वासरीयन्ति वासरीयन्ति वत्सराः ॥३१४॥ किं धनेन कुबेरस्य सुभाषितगुणेन किम्। वाचस्पतेश्च दीपेन रवेः सिन्धोश्च बिन्दुना ॥ ३१५ ॥ मधुना सिञ्चयेन्निम्बं निम्बः किं मधुरायते। जातिस्वभावदोषोऽयं कटुकत्वं न मुञ्चति ॥ ३१६ ॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि। अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ३१७ ॥ अग्निहोत्रं गृहं क्षेत्रं मित्रं भार्यां सुतं शिशुम्। रिक्तपाणिर्न पश्येत राजानं देवतां गुरुम् ॥३१८॥ उत्तमं स्वार्जितं भुक्तं मध्यमं पितुरर्जितम्। कनिष्ठं भ्रातृवित्तं च स्त्रीवित्तमधमाधमम् ॥ ३१९ ॥ अलसस्य कुतो विद्या अविद्यस्य कुतो धनम्। अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ ३२० ॥ अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते। अनाश्रया न शोभन्ते पण्डिता वनिता लताः ॥ ३२१ ॥ विप्रार्थेषु धनक्षीणं स्वदारगतयौवनम्। स्वामिकार्ये हतप्राणमन्ते तिष्ठति माधवः ॥ ३२२ ॥ न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत्। कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ ३२३ ॥ अभ्रच्छाया तृणाग्निश्च खले प्रीतिः स्थले जलम्। वेश्यासक्तिः कुमित्रं च षडेते बुद्बुदोपमाः ॥ ३२४ ॥ प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा। दृष्ट्वैवोन्मादयत्येका पीता चान्यातिसंचयात् ॥ ३२५ ॥ राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च। पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ॥ ३२६ ॥ इक्षुदण्डास्तिलाः शूद्राः कामिनी हेम मेदिनी। दधि चन्दनताम्बूले मर्दनं गुणवर्धनम् ॥ ३२७ ॥ पराधीनं वृथा जन्म परस्त्रीषु वृथा सुखम्। परगेहे वृथा लक्ष्मीर्विद्या या पुस्तके वृथा ॥ ३२८ ॥ असंमाने तपोवृद्धिः संमानाच्च तपःक्षयः पूजया। पुण्यहानिः स्यान्निन्दया सद्गतिर्भवेत् ॥ ३२९ ॥ ध्यानशस्त्रं बकानां च वेश्यानां मोहशस्त्रकम्। साधुत्वशस्त्रं मैन्दानां परप्राणार्थहारकम् ॥ ३३० ॥ ललितान्तानि गीतानि प्रसूतान्तं च यौवनम्। विशाखान्ता मेघमाला तक्रान्तं खलु भोजनम् ॥ ३३१ ॥ धातुः परीक्षा दुर्भिक्षे स्त्रीपरीक्षा च निर्धने। युद्धे शूरपरीक्षा च मृत्योरत्यन्तमापदि ॥ ३३२ ॥ अन्यमाश्रयते लक्ष्मीस्त्वन्यमन्यं च मेदिनी। अनन्यगामिनी पुंसां कीर्तिरेका पतिव्रता ॥ ३३३ ॥ न कालः खड्गमुद्यम्य शिरः कृन्तति कस्यचित्। कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ३३४ ॥ जानन्नपि जनो दैवात्प्रकरोति विगर्हितम्। न कर्म गर्हितं लोके कस्यचिद्रोचते कृतम् ॥ ३३५ ॥ सद्भावेन जयेन्मित्रं सद्भावेन च बान्धवान्। स्त्रीभृत्यान्दानमानाभ्यां दाक्षिण्येनेतरं जनम् ॥ ३३६ ॥ संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने। त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ ३३७ ॥ न पुत्रात्परमो लाभो न भार्यायाः परं सुखम्। न धर्मात्परमं मित्रं नानृतात्पातकं परम् ॥ ३३८ ॥ ज्या[1]यांसमपि शीलेन विहीनं नैव पूजयेत्। अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ३३९ ॥ शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि। सर्वदा सर्वयत्नेन पुत्रे शिष्यवदाचरेत् ॥ ३४० ॥ सुकुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत्। व्यसने योजयेच्छत्रुमिष्टं धर्मेण योजयेत् ॥३४१॥

१ वरिष्ठम्.

नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः। पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ३४२ ॥ लालने बहवो दोषास्ताडने बहवो गुणाः। तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ३४३ ॥ दूरतः शोभते मूर्खो लम्बशाटपटावृतः। तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ३४४ ॥ सकृद्दुष्टं च मित्रं यः पुनः संधातुमिच्छति। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३४५ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः। कारणेन हि जायन्ते मित्राणि रिपवस्तथा ॥ ३४६ ॥ हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः। शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः ॥ ३४७ ॥ आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि। आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३४८ ॥ परदारान्परद्रव्यं परीवादं परस्य च। परीहासं गुरोः स्थाने चापल्यं च विवर्जयेत् ॥ ३४९ ॥ अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम्। यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ ३५० ॥ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः। बुद्धिप्रारब्धकार्यस्य नास्ति किंचन दुष्करम् ॥ ३५१ ॥ असूयया हतेनैव पूर्वोपायोद्यमैरपि। कर्तृणां गृह्यते संपत्सुहृद्भिर्मन्त्रिभिस्तथा ॥ ३५२ ॥ अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे। परापवादभीरूणां दूरतो यान्ति संपदः ॥ ३५३ ॥ आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः। क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ३५४ ॥ न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः। एतदेव हि पाण्डित्यं न स्वल्पाद्भूरिनाशनम् ॥ ३५५ ॥ अफलानि दुरन्तानि समव्ययफलानि च। अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥ ३५६ ॥ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः। इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥ ३५७ ॥ देहे पातिनि का रक्षा यशो रक्ष्यमपातवत्। नरः पतितकायोऽपि यशःकायेन जीवति ॥ ३५८ ॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति। तस्माद्देहेष्वनित्येषु कीर्तिमेकामुपार्जय ॥ ३५९ ॥ बुधाग्रे न गुणान्ब्रूयात्साधु वेत्ति यतः स्वयम्। मूर्खाग्रेऽपि च न ब्रूयाद्बुधप्रोक्तं न वेत्ति सः ॥ ३६० ॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः। तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यसि ॥ ३६१ ॥ यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः। ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥ ३६२ ॥ मूलं दोषस्य हिंसादेरर्थकामौ स्म मा मुषः। तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ ३६३ ॥ अभिद्रोहेण भूतानामर्जयन्गत्वरीः श्रियः। उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ ३६४ ॥ या गम्याः सत्सहायानां यासु खेदो भयं यतः। तासां किं यन्न दुःखाय विपदामिव संपदाम् ॥ ३६५ ॥ दुरासदानरीनुग्रान्धृतेर्विश्वासजन्मनः। भोगान्भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥ ३६६ ॥ नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते। आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ ३६७ ॥ कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः। साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव संपदः ॥ ३६८ ॥ कृतवानन्यदेहेषु कर्ता च विधुरं मनः। अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥ ३६९ ॥ शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः। विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ ३७० ॥ तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः। तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ ३७१ ॥ युक्तः प्रमाद्यसि हितादपेतः परितप्यसे। यदि नेष्टात्मनः पीडा मा सञ्जि भवता जने ॥ ३७२ ॥ जन्मिनोऽस्य स्थितिं विद्वाँल्लक्ष्मीमिव चलाचलाम्। भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥ ३७३ ॥ अविज्ञातप्रबन्धस्य वचो वाचस्पतेरिव। व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ३७४ ॥ कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी। तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ३७५ ॥ मनसा चिन्तितं कर्म वचसा न प्रकाशयेत्। अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥ ३७६ ॥ कुदेशं च कुवृत्तिं च कुभार्यां कुनदीं तथा। कुद्रव्यं च कुभोज्यं च वर्जयेत्तु विचक्षणः ॥ ३७७ ॥ अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च। अभावे सति संतोषः स्वर्गस्थोऽसौ महीतले ॥ ३७८ ॥ माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ३७९ ॥ कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम्। विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ३८० ॥ अविद्यं जीवनं शून्यं दिक्शून्या चेदबान्धवा। पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ ३८१ ॥ अदाता वंशदोषेण कर्मदोषाद्दरिद्रता। उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ३८२ ॥ अतिदर्पे हता लङ्का ह्यतिमाने च कौरवाः। अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् ॥ ३८३ ॥ वस्त्रहीनस्त्वलंकारो घृतहीनं च भोजनम्। स्तनहीना च या नारी विद्याहीनं च जीवनम् ॥ ३८४ ॥ पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः। हितप्रयोजनं मित्रं धनं सर्वप्रयोजनम् ॥ ३८५ ॥ दुर्लभं संस्कृतं वाक्यं दुर्लभः क्षेमकृत्सुतः। दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ ३८६ ॥ अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः। अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ३८७ ॥ अविद्यः पुरुषः शोच्यः

शोच्यं मैथुनमप्रजम् । निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ३८८ ॥ कुलीनैः सह संपर्कं पण्डितैः सह मित्रताम् । ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ३८९ ॥ कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः । निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ३९० ॥ तस्करस्य कुतो धर्मो दुर्जनस्य कुतः क्षमा । वेश्यानां च कुतः स्नेहः कुतः सत्यं च कामिनाम् ॥ ३९१ ॥ प्रेषितस्य कुतो मानः कोपनस्य कुतः सुखम् । स्त्रीणां कुतः सतीत्वं च कुतो मैत्री खलस्य च ॥ ३९२ ॥ दुर्बलस्य बलं राजा बालानां रोदनं बलम् । बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ३९३ ॥ यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते । ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ३९४ ॥ शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥ ३९५ ॥ सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदकं चैव सद्यःप्राणकराणि षट् ॥ ३९६ ॥ सिंहादेकं बकादेकं षट् शुनस्त्रीणि गर्दभात् । वायसात्पञ्च शिक्षेच्च चत्वारि कुक्कुटादपि ॥ ३९७ ॥ प्रभूतमल्पकार्यं वा यो नरः कर्तुमिच्छति । सर्वारम्भेण तत्कुर्यात्सिंहादेकं प्रकीर्तितम् ॥ ३९८ ॥ सर्वेन्द्रियाणि संयम्य बकवत्पतितो जनः । कालदेशोपपन्नानि सर्वकार्याणि साधयेत् ॥ ३९९ ॥ बह्वाशी स्वल्पसंतुष्टः सुनिद्रः शीघ्रचेतनः । प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ ४०० ॥ अविश्रामं वहेद्भारं शीतोष्णं च न विन्दति । ससंतोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ४०१ ॥ गूढमैथुनधार्ष्ट्यें च काले चालयसंग्रहम् । अप्रमादमनालस्यं पञ्च शिक्षेत वायसात् ॥ ४०२ ॥ युद्धं च प्रातरुत्थानं भोजनं सह बन्धुभिः । स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ ४०३ ॥ कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ४०४ ॥ आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥ ४०५ ॥ न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः । न चापत्यसमः स्नेहो न च दैवात्परं बलम् ॥ ४०६ ॥ समुद्रावरणा भूमिः प्राकारावरणं गृहम् । नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥ ४०७ ॥ घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् । तस्माद्घृतं च वह्निं च नैकत्र स्थापयेद्बुधः ॥ ४०८ ॥ आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा । षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ४०९ ॥ जीर्णमन्नं प्रशंसीयाद्भार्यां च गतयौवनाम् । रणात्प्रत्यागतं शूरं सस्यं च गृहमागतम् ॥ ४१० ॥ असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ४११ ॥ अवंशपतितो राजा मूर्खपुत्रश्च पण्डितः । अधनेन धनं प्राप्तं तृणवन्मन्यते जगत् ॥ ४१२ ॥ पुस्तकस्था तु या विद्या परहस्तगतं धनम् । कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ४१३ ॥ पादपानां भयं वातात्पद्मानां शिशिराद्भयम् । पर्वतानां भयं वज्रात्साधूनां दुर्जनाद्भयम् ॥ ४१४ ॥ यस्य क्षेत्रं नदीतीरे भार्या वापि परप्रिया । पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ४१५ ॥ असंभाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते । शिला तरति पानीयं गीतं गायति वानरः ॥ ४१६ ॥ सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि । भार्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम् ॥ ४१७ ॥ हेला स्यात्कार्यनाशाय बुद्धिनाशाय निर्धनम् । याचना माननाशाय कुलनाशाय भोजनम् ॥ ४१८ ॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् । तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥ ४१९ ॥ नदीकूले च ये वृक्षाः परहस्तगतं धनम् । कार्यं स्त्रीगोचरं यत्स्यात्सर्वं तद्विफलं भवेत् ॥ ४२० ॥ कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकालयम् । शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलम् ॥ ४२१ ॥ विषं चङ्क्रमणं रात्रौ विषं राज्ञोऽनुकूलता । विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः ॥ ४२२ ॥ दुरधीता विषं विद्या अजीर्णे भोजनं विषम् । विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ ४२३ ॥ प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः । अल्पबीजं हतं क्षेत्रं भृत्यदोषाद्धतः प्रभुः ॥ ४२४ ॥ हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः । हता रूपवती वन्ध्या हतं सैन्यमनायकम् ॥ ४२५ ॥ किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते । नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ४२६ ॥ अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् । गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ४२७ ॥ आयुः कर्म च वित्तं च विद्या निधनमेव च । पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ४२८ ॥ यदभावि न तद्भावि भावि चेन्न तदन्यथा । इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ४२९ ॥ नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत् । न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ ४३० ॥ शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ४३१ ॥ उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् । मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ ४३२ ॥ अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा । यत्रास्ते विषसंसर्गो-

१ दिगम्बरसाधुव्याप्ते प्रदेशे. २ वस्त्रनिर्णेजकः, रजको वा.

मृतं तदपि मृत्यवे ॥ ४३३ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ४३४ ॥ गतानुगतिको लोकः कुट्टनीमुपदेशिनीम् । प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ॥ ४३५ ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ४३६ ॥ प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये । आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ४३७ ॥ अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया । दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥ ४३८ ॥ शङ्काभिः सर्वमाक्रान्तमन्नं पानं च भूतले । प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ ४३९ ॥ सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः । छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः ॥ ४४० ॥ षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता । निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ४४१ ॥ माता मित्रं पिताचेति स्वभावात्त्रितयं हितम् । कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ४४२ ॥ जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥ ४४३ ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ४४४ ॥ आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् । भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ४४५ ॥ सुहृदां हितकामानां यः शृणोति न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥ ४४६ ॥ अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् । विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ ४४७ ॥ दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् । न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ ४४८ ॥ मार्जारो महिषो मेषः काकः कापुरुषस्तथा । विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नो हितः ॥ ४४९ ॥ यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् । नोदके शकटं याति न च नौर्गच्छति स्थले ॥ ४५० ॥ द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ ४५१ ॥ पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते । अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते ॥ ४५२ ॥ लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता । पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ ४५३ ॥ अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च । मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥ ४५४ ॥ परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः । अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥ ४५५ ॥ पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् । विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ४५६ ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किंचिदासाद्य देही प्राणान्विमुञ्चति ॥ ४५७ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ४५८ ॥ सुखमापतितं सेव्यं दुःखमापतितं तथा । चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥ ४५९ ॥ वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता । गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥ ४६० ॥ येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ ४६१ ॥ धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ४६२ ॥ जन्मनि क्लेशबहुले किं नु दुःखमतः परम् । इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥ ४६३ ॥ यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते । प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ ४६४ ॥ अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम् । स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम् ॥ ४६५ ॥ कायः संनिहितापायः संपदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ४६६ ॥ अधोऽधः पश्यतः कस्य महिमा नोपचीयते । उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ४६७ ॥ अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया । रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ४६८ ॥ शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः । तदंशेनापि मेधावी तपस्त्यक्त्वा सुखी भवेत् ॥ ४६९ ॥ एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता । ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ ४७० ॥ आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने । पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः ॥ ४७१ ॥ पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् । स्वामिनं सर्वभावेन परलोकममायया ॥ ४७२ ॥ पञ्चभिर्याति दासत्वं पुराणैः[1] कोऽपि मानवः । कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥ ४७३ ॥ वाजिवारणलोहानां काष्ठपाषाणवाससाम् । नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ४७४ ॥ आरोप्यते शिला शैले यत्नेन महता यथा । निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ४७५ ॥ अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते । आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥ ४७६ ॥ किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम् । यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥ ४७७ ॥ यस्य यस्य हि

१ नाणकविशेषैः, रूप्यकैरिति यावत्. २ पुनः पुनदर्शनेन.

यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ४७८ ॥ दोषभीतेरनारम्भस्त्वकापुरुषलक्षणम् । कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ ४७९ ॥ स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च । नहि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ ४८० ॥ मुकुटे रोपितः काचश्चरणाभरणे मणिः । नहि दोषो मणेरस्ति किंतु साधोरविज्ञता ॥ ४८१ ॥ बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः । रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥ ४८२ ॥ बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः । आपन्निकषपाषाणे नरो जानाति सारताम् ॥ ४८३ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ ४८४ ॥ कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः । अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥ ४८५ ॥ अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः । दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥ ४८६ ॥ अप्रियस्यापि पथ्यस्य परिणामः सुखावहः । वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ४८७ ॥ न परस्यापराधेन परेषां दण्डमाचरेत् । आत्मनावगतं कृत्वा बध्नीयात्पूजयेच्च वा ॥ ४८८ ॥ गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे । स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः ॥ ४८९ ॥ पराभवं परिच्छेत्तुं योग्यायोग्यं न वेत्ति यः । अस्तीह यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥ ४९० ॥ ययोरेव समं वित्तं ययोरेव समं बलम् । तयोर्विवादो मैत्री वा नोत्तमाधमयोः क्वचित् ॥ ४९१ ॥ बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् । निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ ४९२ ॥ बन्धुः को नाम दुष्टानां कुप्येत्को नातियाचितः । को न तृप्यति वित्तेन कुकृत्ये को न पण्डितः ॥ ४९३ ॥ धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत् । नहि हस्तस्थमप्यन्नं क्षमावान्भक्षितुं क्षमः ॥ ४९४ ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् । अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ४९५ ॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः । यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥ ४९६ ॥ हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः । पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ४९७ ॥ महानप्यल्पतां याति निर्गुणे गुणविस्तरः । आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ ४९८ ॥ वैद्यानामातुरः श्रेयान्व्यसनी मौनियोगिनाम् । विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम् ॥ ४९९ ॥ तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् । आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ ५०० ॥ सुपूरा स्यात्कुनदिका सुपूरो मूषकाञ्जलिः । सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ५०१ ॥ अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः । पैशुन्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः ॥ ५०२ ॥ अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति । जातुषाभरणस्येव रूपेणापि हि तस्य किम् ॥ ५०३ ॥ भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् । कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ ५०४ ॥ न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि । विश्वस्तास्त्वेव वध्यन्ते बलिनो दुर्बलैरपि ॥ ५०५ ॥ महामतिरपि प्राज्ञो न विश्वासं व्रजेद्रिपौ । विश्वासात्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ५०६ ॥ मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके । कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ५०७ ॥ अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् । अमृतं राजसंमानममृतं क्षीरभोजनम् ॥ ५०८ ॥ सर्पाणां च खलानां च परद्रव्यापहारिणाम् । अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ ५०९ ॥ नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः । निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः ॥ ५१० ॥ औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम् । असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥ ५११ ॥ न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् । न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रेय आत्मनः ॥ ५१२ ॥ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ ५१३ ॥ अशोच्यानीह भूतानि यो मूढस्तानि शोचति । स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ५१४ ॥ स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् । स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ५१५ ॥ यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः । तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ ५१६ ॥ येनाहंकारयुक्तेन चिरं विलसितं पुरा । दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ५१७ ॥ मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः । व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ५१८ ॥ मित्रद्रोही कृतघ्नश्च तथा विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ५१९ ॥ जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम् । अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥ ५२० ॥ व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते । स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ५२१ ॥ मित्रवान्साधयत्यर्थान्दुःसाध्यानपि वै यतः । तस्मा-

१ अप्रियाणि. २ सुराविक्रयं कुर्वत्या हस्ते.

१ लाक्षानिर्मितस्य. २ कर्तव्याकर्तव्यज्ञानवान्. ३ व्यभिचारिणीनाम्. ४ भक्षणलोलुपानाम्.

न्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ ५२२ ॥ अपि संपूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः । नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ ५२३ ॥ यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः । हीनं वाऽप्यधिकं वापि हास्यतां यात्यसौ जनः ॥ ५२४ ॥ कारणान्मित्रतां याति कारणाद्याति शत्रुताम् । तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ५२५ ॥ उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥ ५२६ ॥ यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् । न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः ॥ ५२७ ॥ शनैः-शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् । रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ५२८ ॥ मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् । मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ५२९ ॥ गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम् । यो गच्छति पुमाँल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ५३० ॥ अयशः प्राप्यते येन येन चापगतिर्भवेत् । स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत् ॥ ५३१ ॥ यः स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः । तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ ५३२ ॥ कृतनिश्चयिनो वन्द्यास्तुङ्गिमा नोपभुज्यते । चातकः को वराकोऽयं यस्येन्द्रो वारिवाहकः ॥ ५३३ ॥ तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः । स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो भ्रियते बलात् ॥ ५३४ ॥ अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् । अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ ५३५ ॥ अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् । रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ५३६ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः । न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ ५३७ ॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् । क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ ५३८ ॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः । तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ५३९ ॥ नदीनां च कुलानां च मुनीनां च महात्मनाम् । परीक्षा न प्रकर्तव्या स्त्रीणां दुश्चरितस्य च ॥ ५४० ॥ सद्भिः संबोध्यमानोऽपि दुरात्मा पापपूरुषः । घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ५४१ ॥ जनिता[1] चोपनेता[2] च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ५४२ ॥ कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥५४३॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वान्हितान्गुरून् । न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ५४४ ॥ कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् । कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ५४५ ॥ कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् । न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ५४६ ॥ सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये । सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ५४७ ॥ योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् । एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ ५४८ ॥ मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते । शक्यते नानुमानेन परेण परिवर्णितुम् ॥ ५४९ ॥ स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते । अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥ ५५० ॥ विद्यया विनयावाप्तिः सा चेदविनयावहा । किं कुर्मः कं प्रति ब्रूमो गरदायां[1] स्वमातरि ॥ ५५१ ॥ वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो[2] नराकृतिः ॥ ५५२ ॥ द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान् । द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते ॥ ५५३ ॥ मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । तत्रापि संभवन्त्येते मित्रोदासीनशत्रवः ॥ ५५४ ॥ पञ्चैतानि विलिख्यन्ते गर्भस्थस्यैव देहिनः । आयुः कर्म च विद्या च वित्तं निधनमेव च ॥ ५५५ ॥ नास्ति सत्यं द्यूतकारे न शौचं वृषलीपतौ । मद्यपे सौहृदं नास्ति धूर्तेषु त्रितयं न हि ॥ ५५६ ॥ सर्वसहा ये ऋजवः प्रतिज्ञातार्थपालकाः । परोपकारिणः सेव्या निर्धना अपि ते जनाः ॥ ५५७ ॥ शरणागतरक्षार्थं स्त्रीगोद्विजहिताय च । स्वाम्यर्थे यस्त्यजेत्प्राणांस्तस्य लोकाः सनातनाः ॥ ५५८ ॥ कृतघ्नस्य शिशुघ्नस्य स्त्रीघ्नस्य पिशुनस्य च । चतुर्णामपि चैतेषां निष्कृतिं[3] नैव शुश्रुमः ॥ ५५९ ॥ परं पलितकायेन कर्तव्यः श्रुतसंग्रहः । न तत्र धनिनो यान्ति यत्र यान्ति बहुश्रुताः ॥ ५६० ॥ विश्वासप्रतिपन्नानां वञ्चने का विदग्धता । अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम् ॥ ५६१ ॥ नाजारजः पितृद्वेषी नाजरा भर्तृवैरिणी । नालम्पटोऽधिकारी स्यान्नाकामी मण्डनप्रियः ॥ ५६२ ॥ अचला कमला कस्य कस्य मित्रं महीपतिः । शरीरं च स्थिरं कस्य कस्य वश्या वराङ्गना ॥ ५६३ ॥ गर्दभः पटहो[4] दासी ग्रामण्यः पशवः स्त्रियः । दण्डेनाक्रम्य भुञ्जीयान्न ते संमानभाजनम् ॥ ५६४ ॥ बहुभिर्न विरोद्धव्यं दुर्जनैः स्वजनैरपि । स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपी-

१ उत्पादकः. २ उपनयनकर्ता.

१ विषदायिन्याम्. २ शंकरः. ३ प्रायश्चित्तम्. ४ वाद्यविशेषः.

लिकाः ॥ ५६५ ॥ क्षन्तव्यो मन्दबुद्धीनामपराधो मनीषिणा । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ ५६६ ॥ राजा पश्यति कर्णाभ्यां युक्त्या पश्यन्ति पण्डिताः । पशुः पश्यति गन्धेन भूतैः पश्यन्ति बर्बराः ॥ ५६७ ॥ प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल । अतिशीतलमप्यम्भः किं भिनत्ति न भूभृतः ॥ ५६८ ॥ अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति । स तत्र निधनं याति कीलोत्पाटीव वानरः ॥ ५६९ ॥ हतं ज्ञानं क्रियाहीनं हताश्चाज्ञानिनो नराः । हतं चानायकं सैन्यमभर्तारो हताः स्त्रियः ॥ ५७० ॥ कन्या निष्कासिता श्रेष्ठा वधूः श्रेष्ठा प्रवेशिता । अन्नं संकलितं श्रेष्ठं धर्मः श्रेष्ठो दिने दिने ॥ ५७१ ॥ सत्यं सत्यं मुनेर्वाक्यं नादत्तमुपतिष्ठते । अम्बुभिः पूरिता पृथ्वी चातकस्य मरुस्थली ॥ ५७२ ॥ न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् । नेन्धनेन जयेद्वह्निं न पानेन सुरां जयेत् ॥ ५७३ ॥ तद्गृहं यत्र वसतिस्तद्भोग्यं येन जीवति । तन्मुक्तये यदेवोक्तं ज्ञानमज्ञानमन्यथा ॥ ५७४ ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ५७५ ॥ पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट्[1] ॥ ५७६ ॥ हन्तुं मेषोऽपसरति मृगेन्द्रः संकुचत्यपि । बुद्धिमन्तः सहन्ते च निधाय हृदि किंचन ॥ ५७७ ॥ यदपथ्यमतामायुर्यदनीतिमतां श्रियः । तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ॥ ५७८ ॥ वस्त्रं गां च बहुक्षीरां जलपात्रमुपानहौ । औषधं बीजमाहारं संक्रीणीत यथामुयात् ॥ ५७९ ॥ रागे द्वेषे च माने च द्रोहे पापे च कर्मणि । अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ५८० ॥ बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च । अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ५८१ ॥ चिरेण मित्रं संधीयाच्चिरेण न कृतं त्यजेत् । चिरेण विहितं मित्रं चिरं वारणमर्हति ॥ ५८२ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ ५८३ ॥ धनाशा जीविताशा च गुर्वी प्राणभृतां सदा । वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ॥ ५८४ ॥ चित्रास्वाती गतावर्षाः प्रसूता गतयौवना । प्रवासी गतसौख्यश्च याचना गतगौरवा ॥ ५८५ ॥ शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः । उल्लङ्घितो यदम्भोधिः प्रभावः प्रभवो हि सः ॥ ५८६ ॥ राः पुण्यं च कलत्राणि पुत्रोत्पत्तिर्निधिस्तथा । सुकृतादेव लभ्यन्ते नैव पार्थ पराक्रमात् ॥ ५८७ ॥ धर्महान्यर्जिते वित्तेऽनुभवन्ति सुखं परे । स्वयं पादस्य पात्रं स्यात्सिंहो गजवधादिव ॥ ५८८ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः । तथा वेदं विना विप्रस्त्रयस्ते नामधारकाः ॥ ५८९ ॥ वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् । प्रकृत्या ह्यगुणः श्रेयान्नालंकारश्च्युतोपलः ॥ ५९० ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः ॥ ५९१ ॥ मद्यपाः किं न जल्पन्ति किं न भक्षन्ति वायसाः । कवयः किं न पश्यन्ति किं न कुर्वन्ति योषितः ॥ ५९२ ॥ अशक्तः सततं साधुः कुरूपा च पतिव्रता । व्याधितो देवभक्तश्च निर्धना ब्रह्मचारिणः ॥ ५९३ ॥ तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता । यावज्ज्वलति नाङ्गेषु स्वतः पञ्चेषुपावकः ॥ ५९४ ॥ वाहितं चाश्ववाणिज्यं राजसेवा तपोवनम् । धीराश्चत्वारि कुर्वन्ति कृषिं कुर्वन्ति कातराः ॥ ५९५ ॥ न देवो विद्यते काष्ठे न पाषाणे न मृन्मये । भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ५९६ ॥ अन्यायोपार्जितं द्रव्यं दश वर्षाणि तिष्ठति । प्राप्ते चैकादशे वर्षे समूलं च विनश्यति ॥ ५९७ ॥ तृप्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम् । वाक्सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥ ५९८ ॥ नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् । विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ५९९ ॥ क्षमातुल्यं तपो नास्ति न संतोषात्परं सुखम् । न तृष्णायाः परो व्याधिर्न च धर्मो दयापरः ॥ ६०० ॥ दानेन भोगी भवति मेधावी वृद्धसेवया । अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ ६०१ ॥ यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत् । हितं च परिणामे स्यात्तत्कार्यं भूतिमिच्छता ॥ ६०२ ॥ बुद्धौ कलुषितायां च विकारे प्रत्युपस्थिते । अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ६०३ ॥ यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् । उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ ६०४ ॥ न क्रोधयातुधानस्य धीमान्गच्छेद्विधेयताम् । निपीतभ्रातृरुधिरः प्राप निन्दां वृकोदरः ॥ ६०५ ॥ न लोकायतवादेन नास्तिकः स्याददैवतः । हरिर्हिरण्यकशिपुं जघान स्तम्भनिर्गतः ॥ ६०६ ॥ संदेहो वैष्णवे मार्गे न कार्योऽन्यैः कुदर्शनैः । रामप्रभावमद्यापि पयोधौ पश्य सेतुना ॥ ६०७ ॥ गौर्गौः[1] कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः । दुःप्रयुक्ता पुनर्गोत्वं[2] प्रयोक्तुः सैव शंसति ॥ ६०८ ॥ न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ६०९ ॥ नापृष्टः कस्यचिद्ब्रू-

१ एते दूषणोत्पादकाः.

१ वाणी. २ पशुत्वम्.

याच्न चान्यायेन पृच्छतः। जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ६१० ॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ६११ ॥ विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना। आपद्यपि हि घोरायां न त्वेनामिरिणे[२] वपेत् ॥ ६१२ ॥ सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः। नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी ॥ ६१३ ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ६१४ ॥ नारुंतुदः स्यादार्तोऽपि न परद्रोहकर्मभिः। ययाऽस्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥ ६१५ ॥ यथा खनन्खनित्रेण नरो वार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ ६१६ ॥ यं मातापितरौ क्लेशं सहेते संभवे नृणाम्। न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ ६१७ ॥ पित्रोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा। तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ ६१८ ॥ श्रद्दधानः शुभां विद्यामाददीतावरादपि। अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ ६१९ ॥ यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत्। यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ ६२० ॥ यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः। तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ ६२१ ॥ न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहेत्। प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा ॥ ६२२ ॥ सर्वेषामेव शौचानामर्थशौचं परं स्मृतम्। योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ६२३ ॥ नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः। नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ६२४ ॥ नात्यर्थमर्थार्थितया लुब्धमुद्वेजयेज्जनम्। अब्धिर्दत्त्वाऽश्वरत्नं स्त्रीर्मथ्यमानोऽसृजद्विषम् ॥ ६२५ ॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह। पयोऽपि शौण्डिकीहस्ते मदिरां[३] मन्यते जनः ॥ ६२६ ॥ अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति। तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ६२७ ॥ अत्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः। अपरप्रेष्यभावाच्च भूय इच्छन्पतत्यधः ॥ ६२८ ॥ आपदामापतन्तीनां हितोऽप्यायाति हेतुताम्। मातृजङ्घैव वत्सस्य स्तम्भो भवति बन्धने ॥ ६२९ ॥ भवत्येकस्थले जन्म गन्धस्तेषां पृथक्पृथक्। उत्पलस्य मृणालस्य मत्स्यस्य कुमुदस्य च ॥ ६३० ॥ तत्र मित्र न वस्तव्यं यत्र नास्ति चतुष्टयम्। ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी ॥ ६३१ ॥ सच्छिद्रनिकटे वासो न कर्तव्यः कदाचन। घटी पिबति पानीयं ताड्यते झल्लरी यथा ॥ ६३२ ॥ तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम्। जिताक्षस्य तृणं नारी निःस्पृहस्य तृणं जगत् ॥ ६३३ ॥ गुरोरप्यवलिप्तस्य[१] कार्याकार्यमजानतः। उत्पथप्रतिपन्नस्य[२] न्याय्यं भवति शासनम् ॥ ६३४ ॥ मनसैव कृतं पापं न शरीरकृतं कृतम्। येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ ६३५ ॥ भिन्ने चित्ते कुतः प्रीतिः स्याद्वा प्रीतिः कुतः सुखम्। त्वं च स्मरसि तं पुत्रं पुच्छच्छेदं स्मराम्यहम् ॥ ६३६ ॥ मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः। नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥ ६३७ ॥ हस्ती चाङ्कुशहस्तेन कशाहस्तेन वाजिनः। शृङ्गी लगुडहस्तेन खड्गहस्तेन दुर्जनः ॥ ६३८ ॥ देशानुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः। तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ ६३९ ॥ वाग्वादमर्थसंबन्धं परोक्षे दारदर्शनम्। यदीच्छेद्विपुलां प्रीतिं त्रीणि तत्र न कारयेत् ॥ ६४० ॥ अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा। भक्ष्यमाणो निरादायः सुमेरुरपि हीयते ॥ ६४१ ॥ आपदर्थं धनं रक्षेन्महतां कुत आपदः। कदाचित्कुपितो देवः संचितं चापि नश्यति ॥ ६४२ ॥ युध्यन्ति पशवः सर्वे पठन्ति शुकसारिकाः। दातुं जानाति यो वित्तं स शूरः स च पण्डितः ॥ ६४३ ॥ नदीतीरेषु ये वृक्षा यस्य नारी निरङ्कुशा। मन्त्रिहीनो भवेद्राजा तस्य राज्यं विनश्यति ॥ ६४४ ॥ गुणं पृच्छस्व मा रूपं शीलं पृच्छस्व मा कुलम्। सिद्धिं पृच्छस्व मा विद्यां भोगं पृच्छस्व मा धनम् ॥ ६४५ ॥ गुणो भूषयते रूपं शीलं भूषयते कुलम्। सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ ६४६ ॥ यस्य न ज्ञायते शीलं कुलं विद्या नरस्य च। कस्तेन सह विश्वासं पुमान्कुर्याद्विचक्षणः ॥ ६४७ ॥ का प्रीतिः सह मार्जारैः का प्रीतिरवनीपतौ। गणिकाभिश्च का प्रीतिः का प्रीतिर्भिक्षुकैः सह ॥ ६४८ ॥ धीराणां भूषणं विद्या मन्त्रिणां भूषणं नृपः। भूषणं च पतिः स्त्रीणां शीलं सर्वस्य भूषणम् ॥ ६४९ ॥ महानदीप्रतरणं महापुरुषविग्रहम्। महाजनविरोधं च दूरतः परिवर्जयेत् ॥ ६५० ॥ नारुहेद्विषमं वृक्षं जीर्णां नावं न चारुहेत्। कूपे नालोकयेत्तोयं न चात्मानं विनाशयेत् ॥ ६५१ ॥ संकटे[३] न च गन्तव्यं विषमे न कदाचन। महापथे न गन्तव्यं गन्तव्यं चात्मनः पथम् ॥ ६५२ ॥ अनादायी व्ययं कुर्यादसहायी रणप्रियः। आतुरः सर्वभक्षी च नरः शीघ्रं विनश्यति ॥ ६५३ ॥

१ मरुभूमौ. २ अपात्रे. ३ मद्यविक्रयकर्त्री. ४ मद्यम्.

१ सगर्वस्य. २ उन्मार्गवर्तिनः. ३ 'परस्त्री संकटं प्रोक्तं रण्डा च विषमं पथम्। वेश्या महापथं प्रोक्तं स्वपर्यायः पिता श्रुतः॥'.

सुसंदिग्धस्य भक्तस्य दन्तस्य चलितस्य च । अमात्यस्य च दुष्टस्य मूलादुद्धरणं वरम् ॥ ६५४ ॥ दीर्घशृङ्गमनड्वाहं रण्डां च बहुभाषिणीम् । शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत् ॥ ६५५ ॥ सिद्धं मन्त्रौषधं धर्मं गृहच्छिद्रं च मैथुनम् । कुभुक्तिं कुश्रुतं चैव वचनं न प्रकाशयेत् ॥ ६५६ ॥ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु । अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥६५७॥ सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् । परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥ ६५८ ॥ परापकारनिरतैर्दुर्जनैः सह संगतिः । वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ ६५९ ॥ नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा । कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥ ६६० ॥ वारिजेनेव सरसी शशिनेव निशीथिनी । यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥ ६६१ ॥ दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः । परोपकरणं कायादसारात्सारमाहरेत् ॥ ६६२ ॥ श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् । लोकानुरागो विनयान्न किं लोकानुरागतः ॥ ६६३ ॥ किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः । को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम् ॥ ६६४ ॥ एकामिषाभिलाषो हि बीजं वैरमहातरोः । तिलोत्तमाभिलाषो हि यथा सुन्दोपसुन्दयोः ॥ ६६५ ॥ आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः । धूसरापि कला चान्द्री किं न बध्नाति लोचनम् ॥ ६६६ ॥ हेतुर्नैसर्गिकः कोऽपि प्रीतेर्यद्धि न वर्तते । मालती मधुराऽस्तीति मधुपः केन शिक्ष्यते ॥ ६६७ ॥ देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ । यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ६६८ ॥ न माता शपते पुत्रं न दोषं लभते मही । न हिंसां कुरुते साधुर्न देवः सृष्टिनाशकः ॥ ६६९ ॥ प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः । तिलाः कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥ ६७० ॥ संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् । दग्धस्यागुरुखण्डस्य स्फारीभवति सौरभम् ॥ ६७१ ॥ उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् । प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ ६७२ ॥ जडे प्रभवति प्रायो दुःखं बिभ्रति साधवः । शीतांशावुदिते पद्माः संकोचं यान्ति वारिणि ॥ ६७३ ॥ कश्चित्कस्यचिदेव स्यात्सुहृद्विस्रम्भभाजनम् । पद्मं विकासयत्यर्कः संकोचयति कैरवम् ॥ ६७४ ॥ ईश्वराः पिशुनान्शश्वद्बिभ्रतीति किमद्भुतम् । प्रायो निधय एवाहीन्द्विजिह्वान्दधतेतराम् ॥ ६७५ ॥ संपद्यास्ते परैः साकं विपदि स्वजनैर्जडः । जृम्भत्यम्भोरुहे भृङ्गः शुष्यत्युदकशैवलैः ॥ ६७६ ॥ नीचावमानमलिनां यो भुङ्क्ते संपदं पुमान् । लशुनाक्तां स कर्पूरचर्चां वितनुते तनौ ॥ ६७७ ॥ व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत् । काषायरसमास्वाद्य स्वाद्वतीवाम्बु विन्दते ॥ ६७८ ॥ गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः । मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ ६७९ ॥ प्रभूतवयसः पुंसो धियः पाकः प्रवर्तते । जीर्णस्य चन्दनतरोरामोद उपजायते ॥ ६८० ॥ धनागमेऽधिकं पुंसां लोभमभ्येति मानसम् । निदाघकाले प्रालेयः प्रायः शैत्यं वहत्यलम् ॥ ६८१ ॥ सहजोऽपि गुणः पुंसां साधुवादेन वर्धते । कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥ ६८२ ॥ निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ । खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥ ६८३ ॥ शुभं वाप्यशुभं कर्म फलकालमपेक्षते । शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥ ६८४ ॥ भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति । लवणेनान्तरालेन तृष्णा प्रत्युत जायते ॥ ६८५ ॥ दुर्लभोऽप्युत्तमः प्रायः स्वजातीयेन लभ्यते । कर्णकोटरगं वारि वारिणैवावकृष्यते ॥ ६८६ ॥ जन्तोर्निरुपभोगस्य दृश्यते भुवि रूक्षता । वाताशिनो द्विजिह्वत्वं विहितं पश्य वेधसा ॥ ६८७ ॥ आकारः कारणं जन्तोर्दौर्जन्यस्य न जायते । कालकूटः सुधासिन्धोः प्राणिनां प्राणहारकः ॥ ६८८ ॥ न व्याप्तिरेषा गुणिनो गुणवाञ्जायते ध्रुवम् । चन्दनोऽनलसंदग्धो न भस्म सुरभि क्वचित् ॥ ६८९ ॥ कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम् । लोभार्थी शौण्डिकः[१] शष्पैर्मेषं पुष्णाति पेशलैः ॥ ६९० ॥ दुर्जनो जीयते युक्त्या विग्रहेण न धीमता । निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥ ६९१ ॥ स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते । मुक्तारत्नस्य शाणाश्मघर्षणं नोपयुज्यते ॥ ६९२ ॥ येनात्मा पण्यतां नीतः स एवान्विष्यते जनैः । हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः ॥ ६९३ ॥ विक्रीतं निजमात्मानं वस्त्रैः संस्कुरुते जडः । परेभ्यः स्वशरीरस्य के वा भूषां वितन्वते ॥ ६९४ ॥ असंभवगुणस्तुत्या जायते स्वात्मनस्त्रपा । कर्णिकारं[२] सुगन्धीति वदन्को नोपहास्यते ॥ ६९५ ॥ तटस्थैः ख्यापिताश्चैतो विशन्ति गुणिनां गुणाः । उत्कोचितानां पद्मानां गन्धो वायुभिराहृतः ॥ ६९६ ॥ निजाशयवदा-

१ पराभिप्रायः.

१ सुराविक्रयकर्ता. २ 'पांगारा' इत्याख्यवृक्षविशेषस्य पुष्पम्.

# चतुर्थं चित्रप्रकरणम्

## समस्याख्यानम्

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। दलितश्चकितश्छन्नस्तव सैन्ये विसर्पति ॥ १ ॥ कामं कामदुघं धुङ्क्ष्व मित्राय वरुणाय च। वयं धीरेण दानेन सर्वान्कामानशीमहि ॥ २ ॥ असमाने समानत्वं भविता कलहे मम। इति मत्वा ध्रुवं मानी मृगात्सिंहः पलायते ॥ ३ ॥ हीनहत्या दधात्येव लाघवं महतामपि। इति मत्वा द्विपद्वेषी मृगात्सिंहः पलायते ॥ ४ ॥ तिष्ठार्जुनाद्य सङ्ग्रामे त्वां हनिष्याम्यहं शरैः। तिष्ठामि कर्ण किं मूढ मृगात्सिंहः पलायते ॥ ५ ॥ ऋषेरस्याश्रमे पुण्ये शापसंत्रस्तमानसः। सुद्बोधतोऽपि प्रायोऽयं मृगात्सिंहः पलायते ॥६॥ अयं मृगः समायाति त्वरितैस्त्वरितैः पदैः। ततो वेगात्पलायस्व मृगात्सिंहः पलायते ॥ ७ ॥ विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति। तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥ ८ ॥ सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वनः। राघवस्य शरा[१]ङ्गारैः समुद्रादग्निरुत्थितः ॥ ९ ॥ दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ १० ॥ चलत्तरङ्गरङ्गायां गङ्गायां प्रतिबिम्बितम्। सचन्द्रं शोभतेऽत्यर्थं शतचन्द्रं नभस्तलम् ॥ ११ ॥ विधे पिधेहि शीतांशुं यावन्नायाति मे प्रियः। आगते दयिते कुर्याः शतचन्द्रं नभस्तलम् ॥ १२ ॥ सुमेरुशिखरप्रान्तस्फुरद्दिव्यवधूमुखम्। परितः स्फुरितैः शङ्के शतचन्द्रं नभस्तलम् ॥ १३ ॥ घृतं न श्रूयते कर्णे दधि स्वप्नेऽपि दुर्लभम्। मुग्धे दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ १४ ॥ अ[२]कृत्वङ्गमतस्तक्रं न [३]शतक्रतुना हुतम्। नादत्तमिति वाक्यार्थात्तक्रं शक्रस्य दुर्लभम् ॥ १५ ॥ भी[४]ष्मग्रीष्मर्तुसंतप्तशून्यरथ्यान्तरस्थयोः। [१]अन्योन्यालापसुखिनोर्यूनोश्चन्द्रायते रविः ॥ १६ ॥ स्वस्ति क्षत्रियदेवाय जगद्देवाय भूभुजे। यद्यशःपुण्डरीकान्तर्गगनं भ्रमरायते ॥ १७ ॥ स्फुरिते जठरे विष्णोर्नवनीतभुजः शिशोः। मक्षिकापादघातेन कम्पितं भुवनत्रयम् ॥ १८ ॥ अतसीपुष्पसंकाशं खं वीक्ष्य जलदागमे। ये वियोगेऽपि जीवन्ति न तेषां विद्यते भयम् ॥ १९ ॥ वागर्थाविव संपृक्तौ शतकोटिप्रविस्तरम्। [२]तुरासाहं पुरोधाय नेमुः सर्वे सुराः [३]शिवौ ॥ २० ॥ [४]आषाढी कार्तिकी माघी वचा शुण्ठी हरीतकी। गयायां पिण्डदानेन पुण्या श्लेष्महरानृणी ॥ २१ ॥ जम्बूफलानि पक्वानि पतन्ति विमले जले। कपिकम्पितशाखाभ्यो गुलुगुग्गुलुगुग्गुलु ॥ २२ ॥ विदग्धे सुमुखे रक्ते नितम्बोपरि संस्थिते। कामिन्याश्लिष्टसुगले कूजितं रतिकूजितम् ॥ २३ ॥ प्रलयसहायकरा इति गोलानाचम्य सकलभूमिरुहाम्। विलसति दवदहनावलिरिह जलवाहः परं शरणम् ॥ २४ ॥ निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि। शृणु सखि पाणिनिसूत्रं विप्रतिषेधे परं कार्यम् ॥ २५ ॥ दैत्यानां मनसि दया जाता कृष्णं हि रक्षितुं कस्मात्। द्रष्टुं देवमजस्रं दैत्यस्त्रीणामपि प्रीतिः ॥ २६ ॥ श्रीनाथ नः श्रुतमिति बहुधा भ्रमता मया नृलोकेषु। शीलं वारवधूनां दैत्यस्त्रीणामपि प्रीतिः ॥ २७ ॥ रामाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्याः। सोपानमासाद्य करोति शब्दं ठंठंठंठंठठंठंठंठः

(१) 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इति समस्या. (२) 'कामं कामदुघं धुङ्क्ष्व', 'मित्राय वरुणाय च', 'सर्वान्कामानशीमहि' इति च समस्या. (३, ४, ५, ६, ७,) 'मृगात्सिंहः पलायते' इति समस्या. (८) 'सलिलादग्निरुत्थितः' इति समस्या. (९) 'समुद्रादग्निरुत्थितः' इति समस्या. (१०, ११, १२, १३,) 'शतचन्द्रं नभस्तलम्' इति समस्या. (१४, १५) 'तक्रं शक्रस्य दुर्लभम्' इति समस्या.

(१६) 'यूनोश्चन्द्रायते रविः' इति समस्या. (१७) 'गगनं भ्रमरायते' इति समस्या. (१८) 'मक्षिकापादघातेन कम्पितं भुवनत्रयम्' इति च समस्या. (१९) 'अतसीपुष्पसंकाशम्', 'न तेषां विद्यते भयम्' इति च समस्या. (२०) 'वागर्थाविव संपृक्तौ', 'शतकोटिप्रविस्तरम्' इति च समस्या. (२१) 'पुण्या श्लेष्महरानृणी' इति समस्या. (२२) 'गुलुगुग्गुलुगुग्गुलु' इति समस्या. (२३) 'कूजितं रतिकूजितम्' इति समस्या. (२४) 'प्रलयसहायकरा इति गोलानाचम्य' इति समस्या. (२५) 'विप्रतिषेधे परं कार्यम्' इति समस्या. (२६, २७) 'दैत्यस्त्रीणामपि प्रीतिः' इति समस्या.

१ शरा एवाङ्गाराः. २ अयज्ञाङ्गम्. ३ इन्द्रेण. ४ दारुणः.

१ अन्योन्यभाषणेन जाताह्लादयोः. २ इन्द्रम्. ३ पार्वतीशंकरौ. ४ आषाढी कार्तिकी माघी एकादशी पुण्या. वचा शुण्ठी हरीतकी श्लेष्महरा. गयायां पिण्डदानेनानृणी पित्रृणोन्मुक्त इति योजना.

॥ २८ ॥ कर्पूरपूरच्छविवादविद्यासंवावदूकद्यतिशुक्तिताम्रे । इन्दौ नृपद्वेषि तमोवितानं सूर्योदये रोदिति चक्रवाकी ॥ २९ ॥ विलोक्य बालामुखचन्द्रबिम्बं कण्ठे च मुक्तावलिहारताराः । पुनर्निशाया भयभीतभीता सूर्योदये रोदिति चक्रवाकी ॥ ३० ॥ सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने । तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥ ३१ ॥ न क्वापि रामाहितसंशयाया विना नमात्वं(?) जनकात्मजायाः । पुरः सुराणाङ्कपुरःसराणामङ्गारपूर्णं कमलं प्रफुल्लम् ॥ ३२ ॥ पुञ्जायमानारुणरत्नहारे कान्तोरसि स्नावदनङ्ग भाति । सिध्येदसुष्योपमितिर्यदि स्यादङ्गारपूर्णं कमलं प्रफुल्लम् ॥ ३३ ॥ रे पुत्र सत्सङ्गमवाप्नुहि त्वमसत्प्रसङ्गं त्वरया विहाय । धन्योऽपि निन्दां लभते कुसङ्गात्सिन्दूरबिन्दुर्विधवाललाटे ॥ ३४ ॥ श्रुत्वा प्रदग्धं तनयं सशोका पुनर्निशम्याप्तशरीरभावम् । पश्यत्सु देवेषु च धावमाना रमा मुदा [1]शंकरमालिलिङ्ग ॥ ३५ ॥ सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता । तदा ह्यसौ तद्व्रतशक्तिपीडितो हुताशनश्चन्दनपङ्कशीतलः ॥ ३६ ॥ उन्नमय्य [2]सकचग्रह[3]मास्यं चु[4]म्बति प्रिय[5]तमे हठवृत्त्या[6] । कूँजिता[7] जयति [8]मानधनाया हूंहुहूंहुहुहुहूंहुहुहूंहूं ॥ ३७ ॥ मम करग्रहणाय पणीकृतं न यदि राघवतोऽप्यधिरोहति । सखि तदैवमभून्मम जीविते शशकशृङ्गमयं कठिनं धनुः ॥ ३८ ॥ नीलाब्जद्युतिनिन्दनं नितान्तवृत्तमास्यश्रीपरिचितचन्द्रिकाविलासम् । स्नातायाः सरसि विलोक्य वक्रचन्द्रं मध्याह्ने मुकुलितमम्बुजं वनान्ते ॥ ३९ ॥ कांचिद्दि[9]नार्धसमये [10]रविरश्मितप्तां [11]नीलांशुकाञ्चलनिलीनसुखेन्दुबिम्बाम् । तां तादृशीं समनुवीक्ष्य कविर्जगाद [12]राहुर्दिवा ग्रसति पर्व विना किलेन्दुम् ॥ ४० ॥ बहलबलसमर्था मेघनादादयो मे सपदि युधि विशन्तः कीटहस्ते निपेतुः । इति वदति दशास्यो हस्ततालं वितत्य मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥ ४१ ॥ मृगशिशुनयनाया अक्षिपक्ष्मप्रकोणे विलसति तरला या तारका तारकेव । प्रतिफलित इहोष्ठे भ्रान्तिरास्ते जनानां तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता ॥ ४२ ॥ मधौ मन्दं मन्दं मरुति शिशिरे वाति रुचिरे कुलस्त्रीभिः कृष्णे विहरति तथा वृष्णिनिकरे । उषा योषा तोषाद्वदनमलिरुद्धस्य मिषतो पुरः पत्युः कामाच्छ्व[1]शुरमियमालिङ्गति सती ॥ ४३ ॥ स्वयं संराध्येशं पुरभिदमनल्पेन तपसा महेन्द्रं संतोष्य त्रिदशरिपुनाशादसुकरात् । समायाते पार्थे द्रुपदतनया क्लेशविकला पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४४ ॥ कदाचित्पाञ्चाली विपिनभुवि भीमेन बहुशः कृशाङ्गि श्रान्तासि क्षणमिह निषीदेति गदिता । शनैः शीतच्छायं तटविटपिनं प्राप्य मुदिता पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४५ ॥ तपापाये गोदापरतटभुवि स्थातुमनसि प्रविष्टे तत्पूरं भगवति मुनौ कुम्भजनुषि । द्रुतं लोपामुद्रा स्वयमविकलं गन्तुमुदिता पुरः पत्युः कामाच्छ्व[2]शुरमियमालिङ्गति सती ॥ ४६ ॥ सर्वस्य द्वे सुमतिकुमती संपदापत्तिहेतू एको गोत्रे प्रभवति पुमान्यः कुटुम्बं बिभर्ति । वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥ ४७ ॥ [3]ये पापं शमयन्ति संगतिभृतां ये दानशृङ्गारिणो येषां चित्तमतीव निर्मलतरं येषां न भग्नं व्रतम् । ये सर्वान्सुखयन्ति हि प्रतिदिनं ते साधवो दुर्लभा गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ ४८ ॥ हारो भाति कुचद्वयं तव शुभे मध्यं वपुः सद्वचः केशा नासिकमौक्तिकं सुवदनं [4]दर्पाङ्गरागो दृशः । गङ्गावजद्गगण्डवद्गगनवद्गाङ्गेयवद्गेयवजम्बूवजलबिन्दुवज्जलजवज्ज[5]म्बालवज्जालवत् ॥ ४९ ॥ यत्कण्ठे गरलं विराजतितरां शीर्षे च मन्दाकिनी उत्सङ्गे च शिवामुखं

(२८) 'ठंठंठंठंठंठ०ठंठंठंठः' इति समस्या. (२९, ३०) 'सूर्योदये रोदिति चक्रवाकी' इति समस्या. (३१) 'चन्द्रोदये नृत्यति चक्रवाकी' इति समस्या. (३२, ३३) 'अङ्गारपूर्णं कमलं प्रफुल्लम्' इति समस्या. (३४) 'सिन्दूरबिन्दुर्विधवाललाटे' इति समस्या. (३५) 'रमा मुदा शंकरमालिलिङ्ग' इति समस्या. (३६) 'हुताशनश्चन्दनपङ्कशीतलः' इति समस्या. (३७) 'हूंहुहूंहुहुहुहूंहुहुहूंहूं' इति समस्या. (३८) 'शशकशृङ्गमयं कठिनं धनुः' इति समस्या. (३९) 'मध्याह्ने मुकुलितमम्बुजं वनान्ते' इति समस्या. (४०) 'राहुर्दिवा ग्रसति पर्व विना किलेन्दुम्' इति समस्या.

१ श्रेष्ठचन्दनम्. २ केशग्रहसहितम्. ३ मुखम्. ४ चुम्बनं कुर्वति सति. ५ कान्ते. ६ बलात्कारेण. ७ कण्ठेऽव्यक्तशब्दः. ८ मान एव धनं यस्याः. मानिन्या इत्यर्थः. ९ मध्याह्ने. १० सूर्यकिरणसंतप्ताम्. ११ नीलव[illegible] १२ [illegible]

(४१) 'मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्' इति समस्या. (४२) 'तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता' इति समस्या. (४३, ४४, ४५, ४६) 'पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती' इति समस्या. (४७)'सर्वस्य द्वे', 'एको गोत्रे', 'वृद्धो यूना', 'स्त्रीपुंवच्च' इति चत्वारि पाणिनेः सूत्राणि समस्या. (४८) 'गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत्' इति समस्या. (४९) 'गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत्', 'जम्बूवज्जलबिंदुवज्जलजवज्जम्बालवज्जालवत्' इति च समस्या.

१ द्रौपद्याः श्वशुरो वायुः. २ लोपामुद्रायाः श्वशुरः पूरतरणसाधनं कुम्भः. ३ ये गङ्गावत्संगतिभृतां पापं क्षमयन्ति. ये गजगण्डवद्दानशृङ्गारिणः, येषां चित्तं गगनवदतीव निर्मलतरम्, येषां व्रतं गाङ्गेयवन्न भग्नम्, ये गेयवत्सर्वान्सुखयन्ति इति योजना. ४ कस्तूरिकाकृतोऽङ्गरागः. ५ कर्दमवत्.

कटितटे शार्दूलचर्माम्बरम् । माया यस्य रुणद्धि विश्वमखिलं तस्मै नमः शंभवे जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५० ॥ ख्यातस्त्वं फलवृष्टिपुष्टिसुमनःस्वाधीनजाम्बूनदः शीर्णास्ते रिपुसंपदः प्रतिदिनं मित्रोदये मोदसे । पान्थानां कुरुषे विलम्बनमहो दत्तान्तरस्तेजसा जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५१ ॥ सङ्ग्रामे रिपुभूभुजां मुखरुचिर्जीवश्च देवाङ्गणाचक्षुः प्रोल्लसदस्रमांसनिवहैस्तन्मेदिनीमण्डनम् । त्वच्चापोद्गतबाणसंहतिरभूच्छ्रीराम भूमीपते जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५२ ॥ वैदेहीं समवाप्य दाशरथिनारब्धे प्रयाणेऽग्रतो दृष्टाः पुष्पकसंस्थितेन रभसादाकाशमारोहता । लङ्कासागरजानकीवनरणक्षोण्यश्रमतकारिका जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५३ ॥ यो द्रोणाचलमादधौ करतले योऽतीतरत्सागरं यश्चोत्खातितवांस्तरूनुदवहत्पुच्छेन दावानलम् । यो रक्षान्समरेऽरुणत्कपिवरः पायाद्धनूमानसौ जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५४ ॥ कस्तूरीतिलकं ललाटरचितं नासामणिं निस्तलं वक्रं कुञ्चितकेशपाशमनिशं दृष्टिं निसृष्टां पुरः । पुंसां मानसमत्स्यबन्धनविधौ धत्सेऽत्र वत्से स्वयं जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५५ ॥ विद्धि श्रीहृदयं सदान्तमलिनं भीमं भवाम्भोनिधिं विज्ञाने सुरतं महीशभवनं गूढं दृढं कण्टकैः । दारागारसमागमं सुविषमं मोहं परं दुस्तरं जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५६ ॥ शुण्ठीगोक्षुरयोर्विचार्य मनसा कल्कांशनं यन्मया प्रोक्तं तद्विपरीतकं कृतमहो गोः खूरमात्रं ददौ । नार्थो मूर्खजनालये न च सुखं नो वा यशो लभ्यते सद्वैद्ये कविभूपतौ हरिहरे लाभः परं गोवधः ॥ ५७ ॥ पञ्चास्यस्य पराभवाय मेषको मांसेन गोर्भूयसा दध्यन्नैरपि पायसैः प्रतिदिनं संवर्धितो यो मया । सोऽयं सिंहरवाद्गुहान्तरगमद्भीत्याकुलः संभ्रमाद्धन्ताशा विलयं गता हतविधे लाभः परं गोवधः ॥ ५८ ॥ पारीन्द्रस्य पराभवाय सुरभीमांसेन दुर्मेधसा पोष्यन्ते किल पीवराः कटुगिरः श्वानः प्रयत्नादमी । न त्वेभिर्मदमत्तवारणचमूविद्रावणः केसरी जेतव्यो भवता किरातनृपते लाभः परं गोवधः ॥ ५९ ॥ अस्माकं जलजीविनां जलमिदं सद्वाजिराजित्रजैः पातव्यं पररक्तसक्तमनसां तृप्तिः

(५०, ५१, ५२, ५३, ५४, ५५, ५६) 'जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्' इति समस्या. (५७, ५८, ५९) 'लाभः परं गोवधः' इति समस्या.

१ सिंहस्य. २ श्वानस्य. ३ जलैकजीवितानाम्. ४ तुरंगपङ्क्तिसमूहैः.

पतीनां क्षयः । मत्वैवं किल राजदेव नृपते त्वज्जैत्रयात्रोत्सवे मत्सी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः ॥ ६० ॥ श्रुत्वा सागरबन्धनं दशशिराः सर्वैर्मुखैरेकदा तूर्णं पृच्छति वार्तिकान्सचकितो भीत्या परं संभ्रमात् । बद्धः सत्यमपांनिधिर्जलनिधिः कीलालधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६१ ॥ पाषाणाः पयसि प्रबद्धवपुषस्तिष्ठन्ति सेतुं गताः श्रुत्वैवं वदतां दशाननधरः क्रुद्धः समुद्रं प्रति । धिक्त्वां नाम तवाम्बुधिः सलिलधिः पानीयधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६२ ॥ अम्बा कुप्यति तात मूर्ध्नि विधृता गङ्गेयमुत्सृज्यतां विद्वन्षण्मुख का गतिर्मम चिरं मूर्ध्नि स्थिताया वद । कोपावेशवशादशेषवदनैः प्रत्युत्तरं दत्तवान्पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६३ ॥ माध्वीके विधुमण्डले वरवधूवक्त्रे च गीतान्तरे सक्ते वक्त्रचतुष्टये दशमुखो विज्ञापितस्तच्चरैः । बद्धोऽसाविति चेतरैर्भयवशादूचे वचःसंभ्रमात्पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६४ ॥ पीतस्त्वं कलशोद्भवेन मुनिना ध्वस्तोऽसि देवासुरैरावद्धोऽसि च राघवेण मृदुना शाखामृगैर्लङ्घितः । नाम्नामारभटी वृथैव भवतो लोकैरियं घुष्यते पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६५ ॥ तत्तु पर्वतसंनिभेन कपिनालाबू कृतां वक्षसि क्षिप्रं वीक्ष्य निमज्जतीमथ तव स्पृष्टास्तरन्तीः शिलाः । लोके नृत्यपरे विभीषणजने सीताह सेतूद्यमे तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति ॥ ६६ ॥ त्वं नो गोत्रपतिस्त्वेन्दुरधिपस्तत्साम्प्रतं त्वत्करे तेन व्याधशराहतां प्रणयिनीमेनां पुनर्जीवय । इत्यूर्ध्वं गगने निशापतिमृगे कारुण्यमातन्वतः शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले ॥ ६७ ॥ उन्नादाम्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले काले यामिकजाग्रदुग्रसुभटव्याकीर्णकोलाहले । कर्णस्यासुहृदर्णवाम्बुवडवावह्नेर्यदन्तःपुरादायातासि तदम्बु-

(६०) 'मत्सी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः' इति समस्या. (६१) 'अपांनिधिर्जलनिधिः कीलालधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः' इति समस्या. (६२) 'अम्बुधिः सलिलधिः पानीयधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः' इति समस्या. (६३, ६४, ६५) 'पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः' इति समस्या. (६६) 'तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति' इति समस्या. (६७) शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले' इति समस्या.

१ विजयात्रोत्सवे. २ चिन्तयन्ति. ३ सेतुबन्धम्. ४ रावणः. ५ झटिति. ६ वृत्तान्तज्ञापकान्. ७ माता. ८ मस्तके. ९ त्यज्यताम्. १० क्रोधपरत्वेन. ११ षड्भिर्मुखैरित्यर्थः. १२ मर्कटैः. १३ अलाबुस्तुम्बी

जाक्षि कृतकं मन्ये भयं योषिताम् ॥ ६८ ॥ उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने व्योम्नि भ्राम्यति दुर्गमक्षितिभृतां मूर्धानमारोहति । व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी कीर्तिस्ते मदनाभिराम कृतकं मन्ये भयं योषिताम् ॥ ६९ ॥ चित्रं नर्तनमम्बरे शिखरिणौ शीतांशुबिम्बे तमः संचारं जलजं कपोतरणितं कामागमप्रक्रियाः । मीनौ विद्युति तारका विहरणं ज्योत्स्ना विकोशाम्बुजे कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलंकुर्वते ॥ ७० ॥ यस्य द्वारि सदा समीरवरुणौ संमार्जनं हव्यवाट् पाकं शीतगुरातपत्रकरणं दस्रौ प्रतीहारताम् । देवा लास्यविधिं च दास्यममरा वर्ण्यो दशास्यः कथं कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलंकुर्वते ॥ ७१ ॥ कश्चित्पान्थस्तृषार्तः पथि तपनऋतौ[1] गम्यमानोऽन्यपान्थं पप्रच्छानन्दलीनो वद पथिक कुतो जह्नुकन्याप्रवाहः । तेनासौ शीघ्रवाचा प्रचलितमनसा विप्रवर्येण चोचे सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ७२ ॥ राम त्वत्कीर्तिवृक्षाद्बहुतरममलादुत्थिताः कोरका ये तन्मध्ये रुद्ररूपोऽप्यजनि खलु यशःकोरकस्तस्य चाग्रे । अस्य श्रोत्राक्षिकूपास्तदुपरि च शिरस्तत्र चास्ति स्रवन्ती सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥७३॥ उद्दामार्कांशुदीप्यद्दिनमणिमणिभिर्भस्मितान्ते समन्ताद्वायुव्याधूयमानज्वलनकणगणाकीर्णधूलिप्रकीर्णे । कान्तारेऽस्मिन्नृपार्ते पथि पथिकभवे कापि पाथोदसेना(?)सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ७४ ॥ मां साक्षीकृत्य मुग्धे विजयमभिलषँल्लेखयामास शंभुर्भूत्वा मन्मौलिमालां सदर्शनवशतीमक्षपातान्विजित्य[2] । गौर्यप्यानङ्गदृष्टीर्जितनखनवभूर्स्तन्वि शेषा तदित्थं शीर्षाणां सैव वन्ध्या[3] मम नवतिरभूल्लोचनानामशीतिः ॥ ७५ ॥ प्रत्येकं दिक्पतीशानिलतपनवसून्सन्नतस्त्वं यथा भूरश्रौषीस्त्वं यथा च स्वरसहितलसन्मूर्च्छनाग्रामतालात् । कृष्णन्यस्तान्यमौलीक्षणवदवसरे सा च सा च प्रसादाच्छीर्षाणां शेष वन्ध्या नवनवतिरभूल्लोचनानामशीतिः ॥ ७६ ॥ इन्द्राद्या लोकपाला हरिविधुतपना नागविद्याधराद्या द्वेष्याः सर्वेऽपि देवाः प्रिय तव वरदः कोऽस्ति वन्द्यो गरीयान् । श्रुत्वा वाचं प्रियाया इति दशमुखतः प्राह वाक्यं दशास्यः शूली शंभुः पिनाकी शिवभवपशुपः शर्व ईशश्च भर्गः ॥ ७७ ॥

(६८, ६९) 'कृतकं मन्ये भयं योषिताम्' इति समस्या. (७०, ७१) 'कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलंकुर्वते' इति समस्या. (७०, ७३, ७४) 'सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः' इति समस्या. (७५ 'शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः' इति समस्या. (७६) 'शीर्षाणां शेष वन्ध्या नव नवतिरभूल्लोचनानामशीतिः' इति समस्या.

(७७) 'शूली शंभुः पिनाकी शिवभवपशुपाः शर्व ईशश्च भर्गः' इति समस्या.

१ निदाघे. २ १९२० इति संख्या. ३ सहस्रशिरसो द्विसहस्राक्षस्य स्वभार्यां प्रति गौरीगिरीशद्यूतक्रीडोपन्यासः.

## प्रहेलिकाः

अपदो दूरगामी च साक्षरो न च पण्डितः । अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ १ ॥ वने[1] जाता वने[2] त्यक्ता वने तिष्ठति नित्यशः । पण्यस्त्री[3] न तु सा वेश्या यो जानाति स पण्डितः ॥ २ ॥ गोपालो[4] नैव गोपालस्त्रिशूली[5] नैव शंकरः । चक्रपाणिः[6] स नो विष्णुर्यो जानाति स पण्डितः ॥ ३ ॥ उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् । काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः ॥ ४ ॥ अनेकसुषिरं[7] वाद्यं[8] कान्तं[9] च ऋषिसंज्ञितम् । चक्रिणा[10] च सदाराध्यं यो जानाति स पण्डितः ॥ ५ ॥ वने वसति को वीरो योऽस्थिमांसविवर्जितः । असिवत्कुरुते कार्यं कार्यं कृत्वा वनं गतः ॥ ६ ॥ रविजा[11] शशिकुन्दाभा तापहारी जगत्प्रिया । वर्धते वनसङ्गेन न तापि यमुनापि न ॥ ७ ॥ तरुण्यालिङ्गितः[12] कण्ठे नितम्ब[13]स्थलमाश्रितः । गुरूणां[14] संनिधानेऽपि कः कूजति[15] मुहुर्मुहुः ॥ ८ ॥ अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ । निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥ ९ ॥

१ लेखपत्रम्. (२) नौका. (३) महोक्षः. (४) दुग्धं गङ्गा मधु पट्टाम्बरं पिप्पलश्च. (५) वल्मीकम्. (६) कुलालदोरकः. (७) तक्रम्. (८) कलशः. (९) शबरस्त्री पुत्रजायायाः स्तनौ गुञ्जाफलालंकृतौ दृष्ट्वा कुतो निःश्वस्य रुरोद. यतो मत्पुत्र एतामनुरक्तस्तथा क्षीणतां गतो यथा गजान्विनिहत्य तद्गण्डस्थलमुक्ताफलहारैः स्तनौ विभूषयितुं नालम्, अतोऽतिप्रयासलभ्यैर्गुञ्जाफलैर्विभूषयति क्षीणे च सति पुत्रे तदर्जितधननिर्वाह्यवृत्तिकस्य सर्वस्यापि कुटुम्बस्य जीवितसंदेहः. अतो व्याधकुटुम्बिनी दुःखान्निःश्वस्य रोदितुं लग्ना.

१ अरण्ये काष्ठरूपेणोत्पन्ना. २ उदके. ३ मूल्यं दत्वा भोग्या स्त्री. गणिका यथा द्रव्यदानेन भोग्या तथेयमपीत्यर्थः. ४ धेनूनां पतित्वात्पालकः. ५ तप्तत्रिशूलाङ्कितत्वात्तच्चिह्नवान्. ६ बाहौ तप्तचक्राङ्कितत्वात्तच्चिह्नवान्. ७ बिलम्. ८ वकार आद्यो यस्य. ९ ककारोऽन्ते यस्य. १० सर्पेण. ११ रविरिति महाराष्ट्रभाषायां मन्थानदण्डस्य नाम. १२ कुम्भः कूपसरोवरादौ जलेन भृत्वा शिरस्यारोपणसमये तरुण्या हस्ताभ्यामालिङ्ग्यते. भर्तापि तरुण्या सोत्कण्ठमालिङ्ग्यते. १३ कुम्भो नितम्बस्थाने गृह्यते. भर्तापि नितम्बस्थाने गुह्यप्रदेशे तिष्ठेत्. १४ कुम्भो गुरूणां वृद्धघटानामुपर्युपविश्य कूजति बडबडायते. भर्तापि गुरूणां मातृपितृश्वश्रूश्वशुरजनानामग्रे स्त्रियं कामयते. १५ शब्दं करोति.

आपाण्डु पीनकठिनं वर्तुलं सुमनोहरम् । कैरा[1]कृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ १० ॥ एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः । क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः ॥ ११ ॥ छत्रधारी न राजासौ जटाधारी न चेश्वरः । सृष्टिकर्ता न स ब्रह्मा छिद्रकर्ता न तस्करः ॥ १२ ॥ अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलिः । नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम् ॥ १३ ॥ अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ । सीताहरणसामर्थ्यो न रामो न च रावणः ॥ १४ ॥ नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता । अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ १५ ॥ दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः । गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ॥ १६ ॥ न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति । तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ॥ १७ ॥ य एवादिः स एवान्तो मध्ये भवति मध्यमः । य एतन्नाभिजानीयात्तृणमात्रं न वेत्ति सः ॥ १८ ॥ पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः । चलते वायुवेगेन पदमेकं न गच्छति ॥ १९ ॥ श्यामं च वर्तुलाकारं पुंनाम चतुरक्षरम् । शकारादि मकारान्तं यो जानाति स पण्डितः ॥ २० ॥ अर्धचन्द्रवदाकारं स्त्रीनामाथ च त्र्यक्षरम् । नकारादि रिकारान्तं यो जानाति स पण्डितः ॥ २१ ॥ अष्टपादश्चतुःकर्णो द्विमुखी द्विमुखस्तथा । राजद्वारे पठेद्धोरो न च देवो न राक्षसः ॥ २२ ॥ वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च । अकारादि सकारान्तं यो जानाति स पण्डितः ॥ २३ ॥ चतुर्मुखो न च ब्रह्मा वृषारूढो न शंकरः । निर्जीवी च निराहारी अजस्रं धान्यभक्षणम् ॥ २४ ॥ कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी । पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ॥ २५ ॥ अपूर्वोऽयं मया दृष्टः कान्तः कमललोचने । शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः ॥ २६ ॥ पर्वताग्रे रथारूढो भूमौ तिष्ठति सारथिः । चक्रवद्भ्रमते पृथ्वी तस्याहं कुलबालिका ॥ २७ ॥ अर्धचन्द्रसमायुक्तं पुंनाम चतुरक्षरम् । ककारादि लकारान्तमिह जानाति पण्डितः ॥२८॥ अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः । यावत्पतितः स तया तत्क्षणमवधीरितः कस्मात् ॥ २९ ॥ गीत्वा किमपि व्याधः शृङ्गं जग्राह तरुणहरिणस्य । तमथ समीक्ष्योद्यतकरमेणीमपि लज्जिता व्याधी ॥ ३० ॥ काचिन्मृगाक्षी प्रियविप्रयोगे निशीथिनीपारमपारयन्ती । आगातुमादाय करेण वीणामुद्वीक्ष्यमालोक्य शनैरहासीत् ॥ ३१ ॥ सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् । यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु ॥ ३२ ॥ वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणिः । त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः ॥ ३३ ॥ वृक्षाग्रवासी न च पक्षिजातिस्तृणं च शय्या न च राजयोगी । सुवर्णकायो न च हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः ॥ ३४ ॥ चक्री त्रिशूली न हरिर्न शंभुर्महान्बलिष्ठो न च भीमसेनः । स्वच्छन्दचारी नृपतिर्न योगी सीतावियोगी न च रामचन्द्रः ॥ ३५ ॥ आद्येन हीना जलधावदृश्यं मध्येन हीनं भुवि वर्णनीयम् । अन्तेन हीनं ध्वनते शरीरं हेमाभिधः स श्रियमातनोतु ॥ ३६ ॥ सर्वस्वापहरो न दस्युकुलजः खट्वाङ्ग-

(१०) पक्वबिल्वफलं कुचयुगलं च. (११) सूचिका. (१२) पुंध्वजः. (१३) विषयदण्डः. (१४) कञ्चुकः. (१५) छोटिका. (१६) उपानत्. (१७) नयनम्. (१८) यवसम्. (१९) कुलालचक्रदण्डौ. (२०) शालिग्रामः. (२१) 'नेवरी' इति लोके. (२२) वाद्यचतुर्घटः 'चौघडा' इति भाषायाम्. (२३) अननस. (२४) वृषभस्थो गोणः. (२५) लेखनी. (२६) अशोकः. (२७) कुम्भकारस्य.

(२८) करतालः. वाद्यविशेषः. वा करवालः (२९) रजस्वला यतः. (३०) व्याधः किमप्यद्भुतं गीतं गीत्वा गीतमूर्च्छितविलीनचित्तस्य तरुणहरिणस्य शृङ्गं जग्राह. किमर्थम्? यतो मद्गीतसुखितस्त्वं याचकस्य म इदं शिरो दानं देहीति. अथ तं च हरिणं शिरोदानायोद्यतकरं समीक्ष्य तज्जायां हरिणीमपि पत्युर्भक्त्या निजशिरोदानायोद्यतकरां समीक्ष्य धर्मार्थचारिणी व्याधी लज्जिता. केन हेतुना? यतोऽयं हरिणो दाता, एवं च हरिणी पतिभक्ता दातृजाया, मत्कान्तस्तु याचकः. अहं च याचकजाया. वरमेते पशवो न वयं मनुष्याः इत्यभिप्रेत्य लज्जितेति प्रथमोऽर्थः ॥ अथवा व्याधजायायाः पूर्वपरिणीतपुरुषो मृतः, स च विद्यमानः संगृहीतो द्वितीयः पुरुषः; तं च विलोक्य चिन्तितवती. यतो निजकान्तवियोगासहिष्णु शिरोदानायोद्यतकरा पतिभक्ता वरमियं हरिणी. अहं च परिणीतप्रियमरणेऽपि जीविता संगृहीतभर्तृका चासती मानुषी. इति लज्जितेति द्वितीयोऽर्थः ॥ अथवा इति चिन्तितं तया यतो येन कर्णेन गीतं श्रुतं तस्य दातुः कर्णस्य पुरो याच्ञायै करो न प्रसारितो व्याधेन. नीरसस्य कठिनकुटिलस्य शृङ्गस्य तु पुरः प्रसारित इत्यनुचितं कृतं मूढेन. कृतेऽप्यनौचित्ये स्वयं मृगयूथपतिगीतरसज्ञोऽकृतपात्रविचारः स्वभावकृपणं याचकं जानन्निजशिरोदानायोद्यतकरो जातः, अतो व्याधी तं हरिणं चतुरं ज्ञात्वा तं च व्याधं मूर्खं ज्ञात्वैणीं चैतादृशचतुरपतिपत्नीत्वेन सुभगां संभाव्य लज्जितेति तृतीयोऽर्थः. (३१) यतोऽयं गीतप्रियो मृगाङ्के मृगो मद्प्रयुक्तं गीतमाकर्णयितुं चन्द्राच्चेदवतरेत्तदा चन्द्रो निष्कलङ्कः स्यात्; तेन मन्मुखसाम्यं च लभेत. प्रियविप्रयोगे च संतापकरो मे हिमांशुः. अतोऽस्य शत्रोश्चन्द्रमसो मन्मुखसाम्यं मा भूदित्याशयेन वीणामहासीदित्यर्थः. (३२) सारिका. (३३) नारिकेरफलम्. (३४) आम्रः. (३५) वृषभः. (३६) करजः.

१ नासिकाचूर्णनिक्षेपणार्थं वृद्धैरपि ध्रियत इति प्रसिद्धिः. २ अङ्गुष्ठमध्यमाङ्गुली. ३ अद्भुतम्.

१ रिकारो मध्ये यस्याः. २ सकारेणेता युक्ता. ३ ककारोऽन्तो यस्याः.

भृन्नेश्वरो दोषानिष्टकरो न धर्मनिरतः कीलालपो नासुरः । नृणां पृष्ठपलाशनो न पिशुनः शीघ्रंगमो नो हयः शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखि ब्रूहि मे ॥ ३७ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुतस्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥३८॥ जाता शुद्धकुले जघान पितरं हत्वापि शुद्धा पुनः स्त्री चैषा वनिता पितैव सततं विश्वस्य या जीवनम् । सङ्गं प्राप्य पितामहेन जनकं प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥३९॥

## अपह्नुतयः

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत् ॥१॥ रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति । तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ २ ॥ सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिकः किं मिलितो नहि नहि सखि हैमनः[1] पवनः ॥ ३ ॥ काले पयोधराणामपतितया[2] नैव शक्यते स्थातुम् । उत्कण्ठितासि बाले नहि नहि सखि पिच्छिलः[3] पन्थाः ॥ ४ ॥ प्रहरति न पञ्चबाणः केवलमबले निमेषोऽपि । वर्षति परं न देवः क्षणदायी विप्रयोगं ते ॥ ५ ॥ मधुरस्वना धृतोर्णा[4] मण्याभरणा सुशोभना सुदती[5] । मत्स्कन्धोचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ रागी[6] भिनत्ति निद्रां तल्पं न जहाति निष्ठुरं दशति । चतुरे किं प्राणेशो नहि नहि सखि मत्कुणव्रातः ॥ ७ ॥ आदौ गृहीतपाणिः पश्चादारूढजघनकटिभागा । नखमुखलालनसुखदा सा किं रामास्ति नैव भोः पामा[7] ॥ ८ ॥ नाथ विलोकय मेघं[8] नहि नहि पापं तवातिपुण्यायाः । नहि कथयामि पयोधरमपसारय[9] कञ्चुकीमुरसः ॥ ९ ॥ पञ्चदशीरजनिसमा तारामणिभूषणापि कोकिलवाक् । चन्द्रसमा गतवसना हस्तगता स्त्री न मे वीणा

(३७, ३८) मत्कुणः. (३९) जलवृष्टिः. यतः सा शुद्धजलसमुदायभूतमेघादुद्भूय स्वजन्मना स्वोत्पादकं मेघं विनाशयति, तथापि स्वयं शुद्धा स्वच्छजलास्ति. पितुरिव समस्तस्य जगतो जीवनं च भवति. सूर्यकिरणैः समुद्रोदके शोषिते सति तस्मान्मेघोत्पत्तिर्भवतीति समुद्रो मेघपिता. सा पूर्वोक्ता जलवृष्टिर्मेघस्य पित्रा स्वपितामहीभूतेन सागरेण सह नद्यादिद्वारा संगमं प्राप्य तेन तज्जलं वर्धयित्वा पुनर्मेघोत्पत्तय एव हेतुर्भवतीति जनकं प्रासूतेत्यस्याभिप्रायः.

१ हेमन्तसंबन्धी. २ पतिं विना; पक्षे,—पतनाभावेन. ३ पङ्किलः. ४ धृतोर्णादिदशा; पक्षे,—धृतोर्णावस्त्रा. ५ शोभना दन्ता यस्याः सा; पक्षे,—हस्तिदन्तनिर्मितालंकारवती. ६ अनुरक्तः; पक्षे,—रक्तवर्णः. ७ कण्डूरोगः. ८ अम्बुदम्; पक्षे,—मेऽघं पापम्. ९ मेघम्; पक्षे,—स्तनम्.

॥ १० ॥ नाथ मयूरो[1] नृत्यति तुरगाननवक्षसः कथं नृत्यम् नहि कथयामि कलापिनमिह सुखलापी प्रिये कोऽस्ति ॥११॥ अक्षरमैत्रीभाजः सालंकारस्य चारुवृत्तस्य । किं ब्रूमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता ॥ १३ ॥ तन्वी चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्सङ्गोचितया[2] तया रहितया किं जीवनं प्रेक्षसे भिक्षो ते दयितास्ति किं नहि नहि प्राणप्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रह[3]लालिता सुसरला तन्वी सुवंशोद्भवा[4] गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी । सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥ १५ ॥

## कूटानि

[5]केशवं[6] पतितं दृष्ट्वा [7]द्रोणो हर्षमुपागतः । रुदन्ति कौरवाः[8] सर्वे हा केशव कथं गतः ॥१॥ पानीयं पातुमिच्छामि त्वत्तः कमललोचने । यदि दाससि[9] नेच्छामि नो दाससि पिबाम्यहम् ॥ २ ॥ विषं[10] भुङ्क्ष्व महाराज स्वजनैः परिवारितः । विना केन[11] विना नाभ्यां[12] कृष्णाजिन[13]मर्कण्टकम्[14] ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः । सीदन्ति मम गात्राणि माघमा[15] सेगवा इव ॥ ४ ॥ यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । अहं कथं द्वितीया स्याद्वितीया[16] स्यामहं कथम् ॥ ५ ॥ समरे हेमरेखाङ्कं बाणं मुञ्चति राघवे । सरावणोऽपि मुमुचे मध्येरीतिधरं[17] शरम् ॥ ६ ॥ शिला[18]र्पितपदद्वन्द्वा नासा[19]र्पितकरद्वया । अभूद्व्यक्तस्तनी नारी कथमेतद्भविष्यति ॥ ७ ॥ सुवर्णस्य[20] सुवर्[21]-

१ 'मे उरः' इति पदच्छेदः. २ समीपे स्थातुं योग्यया; पक्षे,—अङ्कमारोढुं योग्यया. ३ विवाहः; पक्षे,—पाणौ धारणम्. ४ कुलम्; पक्षे,—वेणुः. ५ जले. ६ मृतकम्. ७ कृष्णकाकः. ८ शृगालाः. ९ यदि दासी असि नेच्छामि. नो दासी असि तदा पिबाम्यहमिति पदच्छेदः. १० विगतः षकारो यस्मात्. ११ ककारेण विना. १२ नकारद्वयरहितम्. १३ कृष्णाजिनम्. अत्र ककार-षकार-नकाराणां निष्कासने 'ऋ आजि अम्' इति स्थिते संधौ कृते 'राज्यम्'. १४ शत्रुरहितम्. १५ 'माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवाः' इत्युक्तेः कर्कट्या अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थः. १६ सहधर्मिणी. १७ मध्यभागे रीतिः पित्तलं तद्विशिष्टम्; पक्षे,—मध्ये रीकारविशिष्टं शरम्. शरीरमित्यर्थः. १८ 'अधस्ताद्दारुणि शिला'. १९ 'नासा दारूपरि स्थितम्'. २० उज्ज्वलवर्णस्य. २१ शोभना वर्णा नामाक्षराणि यत्र तस्य.

र्णस्य[1] सुवर्णस्य[2] च जानकि । प्रेषिता तव रामेण सुवर्णस्य च मुद्रिका ॥ ८ ॥ निश्चितं ससुरः[3] कोऽपि न कुलीनः[4] समेऽमतिः[5] । सर्वथा सुरसंबद्धं[6] काव्यं[7] यो नाभिनन्दति ॥ ९ ॥ येनाकारि पराभूतिर्[8]दिननायकसूनवे[9] । यद्गोत्रात्मभवाकान्तं[10] तन्महः[11] श्रेयसेऽस्तु वः ॥ १० ॥ विजितात्मभवद्वेषिगुरुपादहतो[12] जनः । हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ ११ ॥ [13]शंकरं पतितं दृष्ट्वा पार्वती[14] हर्षनिर्भरा । रुरुदुः पन्नगाः सर्वे हा हा शंकर शंकर ॥ १२ ॥ हनूमति हते[15] रामे वानरा हर्षनिर्भराः । रुदन्ति राक्षसाः सर्वे हा हा राम हता हताः ॥ १३ ॥ विराजराजपुत्रारेर्[16]यन्नाम चतुरक्षरम् । पूर्वार्धं तव शत्रूणां परार्धं तव संगरे ॥ १४ ॥ अट्टशूला[17] जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ १५ ॥ कुन्दकुञ्जमसुं पश्य सरसीरुहलोचने । अमुना[18] कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥ १६ ॥ राजन्कमलपत्राक्ष तत्ते भवतु चाक्षयम् । आसादयति यद्रूपं करेणुः[19] करणैर्विना ॥ १७ ॥ स्तनमण्डल[20]माश्रित्य नखस्य वरयोषिताम् । कदाकर्णयते गीतं रमया सह रङ्गराट् ॥ १८ ॥ एकोना[21] विंशतिः स्त्रीणां स्नानार्थं

१ अशीतिरक्तिकापरिमितस्य. २ काञ्चनस्य. ३ सुरया सहितः. मद्यप इत्यर्थः; पक्षे,-ससुरः इति पदच्छेदे सुरो देवः ४ सत्कुलप्रसूतः; पक्षे,-कौलीनः. ५ समे साधौ अमतिः. श्रद्धारहित इति यावत्; पक्षे,-समे विष्णौ मतिर्यस्य सः. ६ शोभनरसविशिष्टं बद्धं रचितम्; पक्षे,-असुरैः संबद्धं युक्तम्. ७ कविकृतिम्; पक्षे,-शुक्रम्. ८ पराजयः; पक्षे,-परा उत्कृष्टा भूतिरैश्वर्यम्. ९ कर्णाय सुग्रीवाय यमाय च. १० गाम्नायन्ते ते गोपास्तेषामात्मभवा गोपिकास्तासां कान्तं मनोहरम्. अथ च गोत्रायाः पृथ्व्या आत्मभवा सीता. सा कान्ता यस्य तत्. अथ च गोत्रस्य हिमालयस्यात्मभवा पार्वती सा कान्ता यस्य तत्. ११ कृष्णाख्यं रामाख्यं शिवाख्यं च. १२ विना गरुडेनामृताहरणसमये जित इन्द्रस्तदात्मभवोऽर्जुनस्तद्वेषी कर्णस्तद्गुरुः पिता सूर्यस्तत्पादहस्ततत्किरणसंतप्तः. हिमापहोऽग्निस्तदमित्रं पानीयं तद्धरो मेघः. सूर्यकिरणसंतप्तो जनो मेघाच्छन्नमाकाशमभिनन्दतीति तात्पर्यार्थः. १३ श्रेष्ठचन्दनम्. १४ पर्वतवासिनी स्त्री भिल्ली. १५ हते आरामे. रावणस्योद्याने दाहिते सतीत्यर्थः. १६ वयः पक्षिणस्तेषां राजा गरुडस्तद्राजा विष्णुस्तत्पुत्रो मदनस्तदरिः शिवस्तस्य चतुरक्षरं नाम 'मृत्युंजयः' इति. तत्पूर्वार्धं मृत्युरिति संगरे तव शत्रूणाम्. उत्तरार्धं जय इति तव. १७ 'अट्टमन्नं शिवो वेदो ब्राह्मणश्च चतुष्पथः । केशो भग इति प्रोक्तः शूलो विक्रय उच्यते ॥' इति. १८ मुकाररहितेन. मुकुन्दकुञ्जेनेति यावत्. १९ करेणुः करणैर्विना ककार-रेफ-णकारैर्विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षयं भवत्वित्यन्वयः. उक्तव्यञ्जनत्रयरहितम् 'अ ए उः' इति स्वरत्रयम्. तत्र अ ए इत्यत्र वृद्धौ ऐ उः इत्यत्र आयादेशे 'आयुः' इति सिद्धम्. २० खस्याकाशस्य मण्डलमाश्रित्य हे कद मेघ! मा स्तन गर्जितं मा कुरु. यतो रङ्गराडङ्गनाथो रमया सह वरयोषितां गीतमाकर्णयत इत्यन्वयः. २१ एकोना इति विंशतेर्विशेषणेन विरोधः. एको ना नरः इति पदच्छेदेन परिहारः.

सरयूं गता । विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥ १९ ॥ [1]त्रैलोक्ये नोपमैतस्याः सखे किमिति भाषसे । अनन्तरा सा नादिर्वा न तृतीयेति मे मतिः ॥ २० ॥ सुवर्णालंकृता[2] कन्या हेमालंकारवर्जिता[3] । सा कन्या विधवा[4] जाता गृहे रोदिति तत्पतिः ॥ २१ ॥ अहं च त्वं च राजेन्द्र लोकनाथावुभावपि[5] । बहुव्रीहिरहं राजन्षष्ठीतत्पुरुषो भवान् ॥ २२ ॥ [6]अपः पिबन्प्रपापालीमनुरक्तो विलोकयन् । अगस्त्यं चिन्तयामास चतुरः सापि सागरान् ॥ २३ ॥ ब्रह्म नान्तमपि[7] क्लीबं मनः सान्तं[8] न पश्यति । किं चित्रं लोकजनकं वाक्कान्ता[9] नैत्यकान्तकम्[10] ॥ २४ ॥ [11]अर्धरात्रे दिनस्यार्धे अर्धचन्द्रेऽर्धभास्करे । रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥ २५ ॥ [12]शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः । रिपुगर्भस्य यो भर्ता स मे विष्णुः प्रसीदतु ॥ २६ ॥ कहमस्मि[13] गुहावक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् । कथमुक्तं न जानासि कदर्थयसि यत्सखि ॥ २७ ॥ विहंगा[14] वाहनं येषां त्रिकंचधरपाणयः[15] । पासालसहिता[16] देवाः सदा तिष्ठन्तु ते गृहे ॥ २८ ॥ शस्त्रं [17]न खलु कर्तव्य-

१ कश्चित्स्वनायिकां स्तौति. तं प्रति अन्या प्रतिभाषते. हे सखे! एतस्यास्त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे. यतः सा उपमैव अनन्तरा मध्यवर्णरहिता उमेति यावत्. अथवा सैव उमा अनादिः आद्यवर्णरहिता मा लक्ष्मीरिति यावत्. उपमा उपमानमस्तीति भावः. तृतीया नास्तीति मे बुद्धिः. २ सुष्ठुवर्णेन कान्त्यालंकृता. ३ विद्युदित्यर्थः. ४ विविधा धवाः पतयो यस्याः सा. कुलटेत्यर्थः. ५ बहुव्रीहिपक्षे,-लोका जना नाथाः स्वामिनो यस्यैवंविधोऽहम् याचकत्वात्. षष्ठीतत्पुरुषपक्षे,-लोकानां जनानां नाथ एवंविधस्त्वम्. राजत्वेन पालकत्वात्. ६ समुद्रमपि करे चुलुकयतो मुनेः सामर्थ्यं मम चेत्स्यात्तर्हि झटिति तृट्शान्त्यभावाच्चिरमेनां पश्यामीति पान्थाभिप्रायः. यदि चतुरः सागराः संनिहिताः स्युस्तदानवरतं जलधारां विसृजन्ती चिरमेतद्दर्शनसुखमनुभवेयमिति प्रपापाल्यभिप्रायः. ७ न विद्यतेऽन्तो यस्य तत्; पक्षे,-नकारान्तम्. ८ अन्तेन सहितम्; पक्षे,-सकारान्तम्. ९ ककारोऽन्ते यस्याः; पक्षे,-कान्ता रमणी. १० अकस्य दुःखस्यान्तकं नाशकम्; पक्षे,-ककारान्तं न भवतीति तत् सान्तं मनो नान्तं ब्रह्म न पश्यतीति युक्तमेव. परं स्वयं कान्ता वाक् अकान्तकमपि लोकजनकत्वात्कान्तं ब्रह्म नैतीति चित्रमिति भावः. ११ कृष्णपक्षे,- याष्टमी तस्य दिनस्यार्धे रावणेन सीता हृता. किंलक्षणाष्टमी? अर्धरात्रे सिता. पु० किं० अर्धचन्द्रे. किंभूतेऽर्धचन्द्रे. अर्धं भाः करोति अर्धभास्करस्तस्मिन्. १२ शम्याः शमीवृक्षस्य गर्भोऽन्तःसारस्तस्य गर्भोऽग्निस्तन्मन्थनेनोद्भूयमानत्वात्, तस्याग्ने रिपुजलं तद्गर्भो लक्ष्मीस्तस्याः सागरमथनेन जलजात्वात् तस्या भर्तेत्यादि. शमीगर्भपदेन अश्वत्थ इत्यपि केचित् तदापि सुवचं अश्वत्थस्यापि वह्नियोनित्वात्. १३ कहमित्यत्र कथं 'खघथधभाम्.' इति कात्यायनसूत्रेण प्राकृते थकारस्थाने हकारः. १४ विः गरुडः, हंसः, गौः वृषभः १५ त्रिशूलः, कम्बुः, चक्रम्. १६ पार्वती, सावित्री, लक्ष्मीः. १७ नखान् लुनातीति नखलु नखच्छेदकम्.

मिति पित्रा नियोजितः । तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता ॥ २९ ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । न[1] तया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३० ॥ देव[2]राजो मया दृष्टो वारि[3]वारणमस्तके । भक्षयित्वार्कपर्णानि विषं[4] पीत्वा क्षयं[5] गतः ॥ ३१ ॥ कुमार[6]संभवं दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ ३२ ॥ विना[7] यौवनमार्गेण गच्छन्तौ लपितं मया । हरेः कृत्यं दर्शयतां पश्येत्युक्ते न दृश्यते ॥ ३३ ॥ वि[8]नायकपतेः शत्रुस्तस्य नाम[9] षडक्षरम् । पूर्वार्धं[10] तव राजेन्द्र उत्तरार्धं[11] तु वैरिणाम् ॥ ३४ ॥ कोला[12]कृतिरपारेवो मोरोहंसो जलोदरी । कंसारिरात्तलीलो वो वाघलो भूकलोऽवतु ॥ ३५ ॥ राम[13]रा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ३६ ॥ यथा[14] नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती ॥ ३७ ॥ भोमा[15]राममभादंद्धे हयागदलनंभषः । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥ ३८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । न[1] तेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ३९ ॥ वासना[2]वासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासीनां वासुदेव नमोऽस्तु ते ॥ ४० ॥ अत्रि[3]लोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ ४१ ॥ मुद्गदाली धृतव्याली कवीन्द्र वितुषा कथम् । भक्तवल्लभसंयोगाजाता विगतकञ्चुकी ॥ ४२ ॥ अभ्र[4]भ्राड्[5]विष्णुधामाप्य विषमाश्वः[6] करोत्ययम् । निद्रां[7] सहस्रपर्णानां[8] पलायनपरायणाम् ॥ ४३ ॥ केति[9] ते कबरीभारः सुमनः[10]सङ्गात्प्रियेऽति[11] नीलत्वात् । भवति[12] च कलापवत्त्वा[13]न्निर्जरसेव्यः[14] कथं न स्यात् ॥ ४४ ॥ यामि विधा[15]वभ्युदिते पुनरेष्यामीति यदुदितं भवता । जाना[16]त्युदन्तमेतं नेदं तत्त्वेन[17] मुग्धवधूः ॥ ४५ ॥ अधुना[18] मधुकर[19]पतिना गिलितोऽप्ययं[20] पकारदंपती येन । त्रातः स पालयेत्त्वां

१ नतया नम्रीभूतया. २ हे देवर! अजश्छागः. ३ सेतुः. ४ पानीयम्. ५ वासः. ६ रघुवंशे कुलश्रेष्ठो राजीवलोचनो रामो राक्षसानां कुं पृथिवीं मारयति पीडयतीति कुमारः पृथ्वीपीडक इति यावत् तादृशं संभवमुद्भवं दृष्ट्वा तत्र तेषां नाशे मनोऽदधत् निश्चिकायेत्यर्थः. ७ यौ विना पक्षिणा गरुडेन वाहनेन वनमार्गेण जलमार्गेण क्षीराब्धाविति यावत् गच्छन्तौ स्तः,अत्र वाक्ये मया लक्ष्म्या सहितस्य हरेर्विष्णोः कृत्यं लपितं प्रोक्तमस्ति, परं दर्शयतां दर्शनं कारयन्ति तेषामत्र पश्येत्युक्ते सत्यपि अविमृशद्भिस्तत्कृत्यं न दृश्यते न ज्ञायते. ८ वीनां पक्षिणां नायको गरुडस्तस्य पतिर्विष्णुस्तस्य. ९ 'हिरण्यकशिपुः' इत्यर्थः. १० हिरण्यं सुवर्णम्. ११ कशिपुस्तल्पम्. तव शत्रवो निद्रिता भवन्त्विति भावः. १२ कंसारिः श्रीकृष्णो वो युष्मानवतु रक्षतु. कथंभूतः कंसारिः? कोलाकृतिः, कोलकस्य सूकरस्य रूपं यस्य सः. पु० क०, अपारेवः अपारे संसारे अवति रक्षति तथा. यद्वा,–अपारे समुद्रे वसतीति क्षीरसः; समुद्रशायीत्यर्थः. पु० क०, मोरोहंसः मायाः लक्ष्म्याः उरो वक्षस्तत्र हंस इव हंसः. पु० क०, जलोदरी. जले उदके उदरं गृहं यस्यास्तीति सः. पु० क०, आत्तलीलः. आत्ता अङ्गीकृता लीला विलासो येन सः. पु० क०, वाघलः वा निश्चयेन अघं लुनातीति सः. पु० क०, भूकलः. भुवं कलयति उद्धरतीति सः. १३ हे वरानने ! अहं रामे अतिरमे. कथंभूते रामे. अतिरामे अतिक्रान्ता रामा येनासौ तस्मिञ्शुद्धे ब्रह्मणि. पु० क०, मनोरमे मनो रमयतीति तस्मिन्. कथंभूतः अहम्? रामराः राम एव रा द्रव्यं यस्य सः यतः कारणान्मे मम सहस्रनामभिस्तुल्यं रामनाम अत इति कारणात् । अथवा अहं रामे अतिरमे. कथंभूते रामे? वरानने वरमाननं यस्यासौ तस्मिन्. उत पार्वत्याः संबोधनं वा. कथंभूतं रामनाम? सहस्रनामतत्. सहस्रनाम तनोतीति सहस्रनामतत्. 'रमन्ते योगिनो यत्र परानन्दे चिदात्मनि । अतो रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति. १४ गानसरस्वती यथा कैलासं नगं नयति तथा न गङ्गा न सरस्वती प्रापयति. १५ मोहः माया रागः मदः मलः मानं दम्भः द्वेषः इति प्रथमाद्यक्षरानुक्रमेण ग्रहणम्.

१ नतेन नम्रीभूतेन. २ हे वासन वासयतीति वासनस्तस्य संबुद्धौ. त्वं भुवनत्रयं अव रक्ष पालय. कथंभूतं भुवनत्रयम्. सर्वभूतनिवासि. सर्वाणि भूतानि निवसन्त्यस्मिंस्तत्. हे असुदेव प्राणेश्वर ! इनां कामादीनां वासितं स्य अन्तं कुरु. हे वासुदेव ! ते तुभ्यं नमः अस्तु ॥ अथवा अस्तुते न स्तौतीति अस्तुत् तस्मै स्तोतुमशक्याय वसुभिर्दीव्यतीति वासुदेवः तस्य संबुद्धौ हे वासुदेव!. अथवा वसुदेवशब्दितं शुद्धं सत्वं तत्र भवो वासुदेवस्तस्य संबुद्धौ ते तुभ्यं नमः अस्तु. असून्ददातीति असुदेवः, यद्वा, असूनां देवः असुदेवः हे असुदेव ॥ गणेशपक्षे,—हे सर्वभूतनिवासीन सर्वभूतैः सह निवासकारी रुद्रः स इनः पितृत्वात्स्वामी यस्येति तथोक्तस्तथा. हे अम्बासुद ! अम्बा पार्वती माता तस्यै सुखं ददाति तथोक्तः. हे पार्वतीनन्दनेत्यर्थः. तथा हे इव ई महीं वाति भक्ताननुग्रहीतुं प्राप्नोतीति तत्संबुद्धौ. ते तुभ्यं नमो नतिरस्तु. त्वं भुवनत्रयं त्रिलोकीं अवसि पालयसि. कथंभूतं भुवनत्रयम्? अवासितम्. वास आश्रयो जातो यस्येति वासितम्, न वासितं अवासितम्. निराश्रयमित्यर्थः. कया अवसि? वास एवाश्रय एव नौः दुःखसागरतरणाय हेतुभूता तरी तया. किं०, सुदे शोभनप्रदे वरदानपरायणे वरदसमूहे श्रेष्ठे इति शेषः ॥ हरिपक्षे,—हे इन स्वामिन् ! तथा हे अम्बासुद अम्बावन्मातृवत् सु शोभनं ददातीति हे तथोक्त. तथा हे इव ई लक्ष्मीं वाति प्राप्नोति स इवः तत्संबुद्धौ. यद्वा,–हे अम्बासुदेव इत्येकं संबोधनपदम्. अम्बा माता असुदः प्राणदाता पिता कथ्यते तयैव लक्ष्मीं वाति प्राप्नोतीति हे तथोक्त. जगतां मातृत्वं पितृत्वं वेति संबोधनाभिप्रायः. ते नमोऽस्तु. ३ चन्द्रविकासिभिः कुमुदैरित्यर्थः. ४ जलदे भ्राजमानः. ५ आकाशम्. ६ सप्ताश्वः, सूर्यः इत्यर्थः. ७ संकोचम्. ८ पद्मानाम्. ९ क इव ब्रह्मेव आचरति. १० पुष्पाणाम्; पक्षे,–देवानाम्. ११ अ इव विष्णुरिवाचरति. १२ भव इव शिव इवाचरति. १३ कलापो भूषणं तद्वत्त्वात्; पक्षे,–कलापश्चन्द्रस्तद्वत्त्वात्. १४ जरारहितैस्तरुणैः सेव्यः; पक्षे,–निर्जरैर्देवैः सेव्यः. १५ दैवे; पक्षे,–चन्द्रे. १६ वृत्तान्तम्; पक्षे,–उकारान्तम्. १७ इदं तत्त्वेन सत्यत्वेन. पक्षे,–इदन्तत्वेन इकारान्तत्वेन. १८ अपगतो धुकारो यस्मात्तेन. १९ मधुकरपतिर्मकरपतिस्तेन. २० पकारशून्यो दंपती दन्तीत्यर्थः.

वि[1]गतविकारो विनायको लक्ष्म्याः ॥ ४६ ॥ उ[2]परिगतं हि सवर्णं हृत्वा करतो ददासि रन्तुं मे । धन्यः सरोजयुगलं त्यक्त्वा स्तनयुगमथास्पृशत्कृष्णः ॥ ४७ ॥ अ[3]च्युतभक्तिवशादिह समभावस्तत्प्रसङ्गेन । सारमतेरभ्युदयति रतिरिति नैवाद्भुतं किंचित् ॥ ४८ ॥ मं[4]ञ्जुलघौ संभावितगुणे क्वचिन्नापदाधारे । अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ४९ ॥ अ[5]यि सखि शस्तः सखिवत्पतिरिति किं त्वं न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथं त्वयापि नावोधि ॥ ५० ॥ द्व[6]न्द्वो द्वि[7]गुरपि चाहं मद्गेहे नित्यम[8]व्ययीभावः । त[9]त्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥ ५१ ॥ त्वं[10] द्विरहमसहमाना निन्दति बाला दिवानिशं शंभुम् । राहुमपि रामचन्द्रं रामानुजमपि च पन्नगारातिम् ॥ ५२ ॥ स जयति चित्रचरित्रो यस्य हि वे[1]रचरणपुष्करकरेणुः । म[2]हिषीमृषिसिंहस्य प्राजीजनदपि वृ[3]षोदये हे[4]तुः ॥ ५३ ॥ रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरो वनात्मधरः । नरकशिरा जगदखिलं चिरमव्याद[5]समरुक्पाणिः ॥ ५४ ॥ सा[6]यकसहायबाहो म[7]करध्वजनियमितक्षमाधिपते । अ[8]ब्जरुचिभास्वरस्ते भातितरामवनिपश्लो[9]कः ॥ ५५ ॥ वा[10]ताच्छीतिररिध्रोऽरं वो हरतान्महासुरीदयितः । व्रीडव्राज्यानौका वार्वाहामोऽसमस्तानाः ॥ ५६ ॥ लम्बोदर तव चरणावादरतो यो न पूजयति । स भवति वि[11]श्वामित्रो दु[12]र्वासा गौ[13]तमश्चेति ॥ ५७ ॥ अ[14]म्बरमम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह । यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः ॥ ५८ ॥ वा[15]युमित्रसुतबन्धुवाहनारातिभूषणशिरोवलम्बिनी । तज्जवैरिभगिनीपतेः सखा पातु मां कमललोचनो हरिः ॥ ५९ ॥ अ[16]तनुज्वरपीडितासि बाले तव सौख्याय मतो ममोप[17]वासः । र[18]समर्पय वैद्यनाथ नाहं भवदावेदितल[19]ङ्घने समर्था ॥ ६० ॥ अं[20]कुबेरपुरीविलोकनं न ध[21]रासूनुकरं कदाचन । अथ तत्प्रतिकारहेतवेऽ[22]दमयन्तीपतिलोचनं भज ॥ ६१ ॥ रा[23]मं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च

१ विगतो विकारो यस्मात्स विनायकः, नायक इत्यर्थः. २ कृष्णो राधिकां पृच्छति. उपरिगतं सवर्णं समानवर्णं सरोजयुगलं करतो हृत्वा स्वहस्तेन आहृत्य मे रन्तुं ददासि ततो राधया तस्मिन्दातुं गृहीते सति उवर्णेन परिगतं युक्तं सवर्णरहितं एतादृशं सरोजयुगलं उरोजयुगलमेव इति धिया कमलयुगं त्यक्त्वा स्तनयुगलमेव कृष्णोऽस्पृशत्. ३ इह संसारे अच्युतभक्तिवशात्समभावः समत्वं शत्रुमित्रादिपु. तत्प्रसङ्गेन भक्तिप्रसङ्गेन सारमतेः श्रेष्ठबुद्धेः पुंसः रतिः प्रीतिः अभ्युदयति इति न किंचिदत्राद्भुतम् ॥ व्याकरणपक्षे,–भो अच्युतभ! अच्युता अहीना भा प्रतिभा यस्य. क्तिवशात् क्तिप्रत्ययवशात् स प्रसिद्धो मभावः मकारस्याभावो लोपः. भवतीति शेषः सत्प्रसङ्गेन क्तिप्रत्ययप्रसङ्गेन रमतेर्धातोः सा रतिः अभ्युदयतीत्यपि नाद्भुतम्. रमु क्रीडायामित्यस्माद्धातोः क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूपं सिध्यति. ४ कापि विदुषितरा नायिका सखीं प्रति वदति. अयि सखि! तत्र तस्मिन्नुपपतौ मम चेतः. अस्तीति शेषः. कीदृशे? मञ्जुलघौ. मञ्जुः सुन्दरः स चासौ लघुरिष्टश्च. पु० की०. संभावितगुणे. संभाविता गुणाः सौन्दर्यादयो यत्र. पु० की०. क्वचित्कदाचिदपि न आपदाधारे आपद्रहिते इत्यर्थः. अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ॥ व्याकरणपक्षे,—उपपतौ उपपतिशब्दे मम मनोऽस्ति, की०. मञ्जुला घिसंज्ञा यस्मिन्. संभावितः 'घेर्ङिति' इति गुणो यस्य. ना इति पदस्य 'आङो नास्त्रियाम्' इति सूत्रविहितस्याधारे आश्रये. अनीदृशघिसंज्ञागुणनादेशरहिते केवले पतिशब्दे. ५ अयि सखि! पतिः सखिवत् शस्तः मित्रवद्विश्वसनीय इति त्वं किं न जानासि? सखी प्रत्याह—हे आलि! उपपतिर्जारः अतिसखिवत् अतिशयितमित्रवत् शस्तः इति त्वयापि कथं नाबोधि ॥ व्याकरणपक्षे—पतिशब्दः शस्तः शस इसि शस्तः पञ्चम्यन्तात्तसिः. द्वितीयाबहुवचनात्परं सखिवत्सखितुल्यरूपो ज्ञेयः. नादेशभावेन कार्यैक्यात्. उपपतिशब्दः शस्तः द्वितीयाबहुवचनात्परं अतिसखिशब्दवत् नादेशभाक्. ६ यतः स्त्रीपुरुषरूपव्यक्तिद्वयात्मकः. ७ द्वौ गावौ यस्य. ८ भावो वस्तुमात्रम्. अव्ययी व्ययाभाववान्. मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थः. यद्वा अव्ययीभवनं अव्ययीभावः. ९ तत्तस्माद्धे पुरुष! येनाहं बहुव्रीहिर्बहुधान्यविशिष्टः स्यां तत्कर्म धारयेत्यन्वयः. समासषट्कप्रतिपादनमत्र चित्रम्. १० मन्मथावशेषणाच्छंभुम्, चन्द्रावशेषणाद्राहुम्, मलयाद्यविशेषणाद्रामचन्द्रम् । मन्मथजनकत्वाद्धलरामानुजम्, वायुभक्षिसर्पहननात्पन्नगारातिं गरुडं निन्दितवतीति भावः.

१ वरः श्रेष्ठो यश्चरणकमलसंबन्धी रेणुः. २ ऋषिश्रेष्ठस्य गौतमस्य पत्नीम्. ३ वृषः सुकृतम्. ४ उत्कृष्टचरणशुण्डाग्रो गजः सिंहस्य महिषीं जनयामास. वृषो वृषभस्तस्योदये हेतुरिति चित्रम्. ५ न समोऽसमो विषमः स चासौ रुक् च समरुक् शूलरोगः त्रिशूलमित्यायुधविशेषः स पाणौ हस्ते यस्य सः शूलपाणिः शिव इत्यर्थः. ६ खड्गः. ७ समुद्रः. ८ चन्द्रः. ९ यशः. १० वाताच्छीतिः वातं अत्ति स वातात् शेषस्तस्मिन्शीतिः शयनं यस्य सः. अरिध्रः अरि चक्रं धरति सः. वार्वाहाभः वार्वाहो मेघस्तस्येवाभाति सः. असमस्तानाः असमस्तं खण्डितं अनः शकटं येन सः. नौकाः नः सूर्यः ओकः निवासस्थानं यस्य सः. ईदयितः ईः लक्ष्मीस्तत्पतिर्विष्णुररं द्रुतं वो युष्माकं. व्रीडव्राज्याः व्रीडयन्ति ता व्रीडास्त्रपावहाश्च ता व्राज्याः अज्ञानकृतसंसारभ्रमणानि ताः संसृतीर्हरतादिति. ११ जगतः शत्रुः. १२ मलिनवस्त्रः. १३ पशुः. १४ स कृष्णो वो युष्मान्पातु. यस्याम्बरं पीतम्. यस्य गृहमम्बुनि. यस्य पत्रं वाहनं अहीनगणस्यारातिर्गरुडः. यस्य वधूरब्जा कमला. यस्य तनयं हरलोचनवह्निः ददाह. १५ वायुमित्रमग्निस्तत्सुतः षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहनं मूषकस्तदरातिः सर्पस्तद्भूषणः शिवस्तच्छिरोवलम्बिनी गङ्गा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्याः पतिरर्जुनस्तत्सखा कृष्णः. १६ महान्; पक्षे,–कामः. १७ लङ्घनम्; पक्षे,–समीपस्थितिः. १८ भेषजम्; पक्षे,–प्रीतिम्. १९ उपवासे; पक्षे,–उल्लङ्घने. २० अनलका विधवेत्यर्थः. २१ मङ्गलकारकम्. २२ अनललोचनं शिवम्. २३ 'जीविकार्थे चापण्ये' इत्यत्र अपण्ये इत्युक्तत्वाद्धस्तिकान्विक्रीणीते इत्यत्रेव रामकं सीतकां लक्ष्मणकं इति प्रयोगा एव साधवः.

धिग्धिक् ॥ ६२ ॥ [1]गोगजवाहनभोजनभक्ष्योद्भतपमित्रसपत्नजशत्रोः । वाहनवैरिकृतासनतुष्टा मामिह पातु जगत्त्रयजुष्टा ॥ ६३ ॥ [2]नदीज लङ्केशवनारिकेतुर्नगाह्वयोनाम नगारिसूनुः । एषोऽङ्गनावेषधरः प्रमाथी जित्वाद्य यं नेष्यति चाद्य गा वः ॥ ६४ ॥ [3]गोकर्णराडाभरणं यदीयं यद्धव्यहव्यादजमाददाह । कुं भेनचूडामणिरादिगन्तात्पायादपायादुरगात्मजार्धः ॥ ६५ ॥ विलासिनी काञ्चनपङ्क्तिकायां [4]पाटीरपङ्कैर्विरही विलिख्य । तस्याः [5]कपोले व्यलिखत्[6]पवर्गं [7]तवर्गमोष्ठे चरणे [8]टवर्गम् ॥ ६६ ॥ [9]काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितुं लिलेख । बाह्वोर्भुजंगं हृदि राहुबिम्बं नाभौ च कर्पूरमयं महेशम् ॥ ६७ ॥ नेतः प्रयाणोन्मुखता समीक्ष्य [10]नक्षत्रमुक्तावलिमस्य कण्ठे । अधारयत्सा स तु वासराणां संख्यापरोऽभूत्सखि कोऽत्र भावः ॥ ६८ ॥ [11]गौरीक्षणं भूधरजाहिनाथः पत्रं तृतीयं दयितोपवीतम् । यस्याम्बरं द्वादशलोचनाख्यः काष्ठा सुतः पातु सदाशिवो वः ॥ ६९ ॥ [1]पुष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य । नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म चित्रम् ॥ ७० ॥ [2]मृगत्रयं भाति वपुष्यवेशे फलानि चत्वारि सुमानि पञ्च । कपोलपट्टके प्रमदालतायाः पृच्छन्ति मध्यं विदुषः कवीन्द्राः ॥ ७१ ॥ इन्दीवराक्ष्याः स्फुटविद्रुमोष्ठ्याः संकेतमुद्दिश्य वने चरन्त्याः । चौरैः समस्ताभरणानि हृत्वा [3]नासामणिर्नोऽपहृतः किमेतत् ॥ ७२ ॥ [4]नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूतैः क्रियते भरेण । कण्ठे कुठारः कमठे ठकारः शेषे ढकारस्तपने चकारः ॥ ७३ ॥ [5]कुध्रेनसुप्रीनयनाश्रयाशदग्धोन्मदा [6]दर्दुरहर्षकाले । [7]स्वंजन्मभक्षप्रियभोजनाशा नृत्यन्ति [8]भीमानुजगोजभाजः ॥ ७४ ॥ शिरसि देवनदीं पुरवैरिणः सपदि वीक्ष्य धराधरकन्यका । निबिडमानवती [9]रमणाङ्कके क्वचन चुम्बनमारभते स्म सा ॥ ७५ ॥ काचिद्विलोलनयना रमणे स्वकीये दूरं गते सति मनोभवबाणखिन्ना । त्यक्तुं शरीरमचिरान्[10]मलयाद्रिवायुं सौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ ७६ ॥ [11]कान्ता रुचिं

१ गवागच्छतीति गोगः शिवस्तज्जः कार्तिकेयस्तस्य वाहनं मयूरस्तस्य भोजनं भक्ष्यं सर्पस्तस्य भक्ष्यं वायुस्तज्जूतो हनूमांस्तं पातीति स तत्पः सुग्रीवस्तस्य मित्रं रामस्तस्य सपत्नो रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहनं ऐरावतस्तस्य वैरी सिंहस्तत्रोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मां पातु रक्षतु. २ भो नदीज गङ्गातनय भीष्म! एष दृश्यमानः अङ्गनावेषधरः स्त्रीरूपधारी लङ्केशवनारिकेतुः रावणवनभञ्जकहनूमद्ध्वजः नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्रः. भो भोः कौरवाः! अयं प्रमाथी हन्ता अद्य वो युष्मान्जित्वा गाश्च नेष्यतीत्यर्थः. ३ उः शिवः कुं धरणिं अपायान्नाशात्पायाद्रक्षतु. सः कः. गोकर्णाः सर्पास्तेषां राट् वासुकिः यदीयं आभरणम्. हूयते तद्धव्यम्. गोरिदं गव्यं, गव्यं च तद्धव्यं च गव्यहव्यम्. गव्यहव्यमत्तीति गव्यहव्याद् वह्निः यस्य शिवस्य. गव्यहव्याद्वह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थः. सः अजं अनङ्गं आददाह. यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्निः मदनं भस्मीचकारेत्यर्थः. किंभूतः. भानां ऋक्षाणां इनः स्वामी चन्द्रः स एव चूडामणिर्मुकुटरत्नं यस्य सः. पु० क०. अगात्मजा पार्वती अर्धे अर्धं वा यस्य सः. आदिगन्तादिगन्तेभ्य आ इति दिशामन्तं मर्यादीकृत्य आदिगन्तं तस्मात्. ४ चन्दनद्रवैः. ५ गल्ले. ६ पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्यां तव चुम्बनं करिष्यामीति सूचितम्. ७ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम्. ८ टवर्गस्य मूर्धस्थानत्वाद्यदि त्वं रुष्टासि तर्हि त्वां शिरसा नमामीति सूचितम्. ९ सर्पग्रासभीत्या प्राणाः स्वतो न निर्गमिष्यन्तीत्याशयेन बाह्वोर्भुजंगं लिलेख. चन्द्रश्च स्वभागतया श्रुतिसिद्धं मृतानां मनो ग्रहीतुमागच्छेदित्याशयेन हृदि राहुम्, मन्मथत्रासाय शिवं च लिलेखेति भावः. १० नक्षत्रमालाधारणेन नक्षत्रोदयवेलायामागमनं कर्तव्यमिति तया सूच्यते. वासरसंख्याकरणेन सप्तदिनमध्य एव मया गम्यत इति तेन सूचितम्. ११ स सदाशिवो वो युष्मान्पातु. सः कः? यस्य गौः वृषभः पत्रं रथः तथा ईक्षणं तृतीयं यस्य. भूधरजा पार्वती दयिता यस्य. अहिनाथः शेषः उपवीतं यस्य. अम्बरं वस्त्रं काष्ठा दिशो यस्य. द्वादशलोचनाख्यः कुमारः सुतो यस्य इत्यन्वयः.

१ पुष्पेषोर्मदनस्य माता लक्ष्मीः पुरुषायमाणा पुरुषवदाचरन्ती, विपरीतरतं कुर्वतीत्यर्थः; विश्वसृजं भगवन्नाभिसरोजस्थं ब्रह्माणं विलोक्य लज्जावती सती मुरारेर्दक्षिणं नयनं वारयति स्म. यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके, तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्वारणेन सरोजं मुकुलितं भवेत्. ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत्. इति मनसि कृत्वा तद्वारयामासेति भावः. २–३ उपरि अक्ष्णोः नीलच्छाया. अधस्तात् ओष्ठस्य रक्तवर्णच्छाया. तयोः प्रतिबिम्बितं नासामौक्तिकं गुञ्जाफलमिति मनसि कृत्वा चोरैर्न हृतम् इत्यभिप्रायः. ४ नृसिंहदेवे सेनाभरेण सह यात्रार्थं चलति प्रत्यर्थिभूतैः शत्रुभूपतिभिः सेनाभिः सह पलायमानैर्भरेण साध्वसाधिक्येन कण्ठे कुठारः क्रियते कुठारघाततुल्या पीडानुभूयते. तथा च भरेण सेनासमूहगुरुत्वेन कमठे ठकारः क्रियते भूभरधरः कूर्मावतारोऽङ्गसंमर्दभीत्या पाणिपादमुखमन्तः संकोच्य ठकारतुल्योऽभूत्. तथा केवलं मण्डलाकृतिस्तस्थौ तथा शेषोऽपि एकस्मिन्नेव भुवः प्रदेशेऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलिकोऽभूत्. तपने सूर्ये च. चकारः समुच्चयः क्रियते. अतिभीत्या तेषां शत्रूणां शतसूर्यं नभस्तलं पश्यता इत्यर्थः. ५ कुं पृथ्वी धरन्ति ते कुध्राः पर्वतास्तेषामिनः स्वामी हिमाचलस्तस्य सूः पुत्री पार्वती तां प्रीणातीति प्रीर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रवह्निस्तेन दग्धो यः कामस्तेन उन्मदा उन्मत्ताः. ६ दर्दुराणां मण्डूकानां हर्षकालो वर्षाकालस्तस्मिन्. ७ स्वस्माज्जन्म येषां तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षाः सर्पास्त एव प्रिया भोजनस्य आशा येषां त ईदृशाः मयूरा इत्यर्थः. ८ अत्र भीमानुजगोजभाजः इत्यस्य भीमानुजोऽर्जुनस्तत्संज्ञका ये गोजाः गोः पृथिव्या जायन्ते ते गोजा वृक्षास्तत्सेविनः स्फुटितार्जुनवृक्षा येनाधितिष्ठन्त इति यावदित्यर्थः एषा टीका विदग्धमुखमण्डनेऽपि न्यूनैव. ९ सविषे गले. १० मलयस्थचन्दनेष्वनिशं सर्पनिवासात्तच्छ्वाससंपृक्तस्य वायोः सविषत्वात्तत्पानेन झटिति मे मरणं स्यादिति बुद्ध्या तं पपाविति गूढाशयः. ११ कान्ता हारे रुचिं धत्ते, मुनिजनो हरे रुचिं धत्ते, अवियोगी तरुणो हिमकरे रुचिं धत्ते. कामो मकरे निजचिह्नभूते रुचिं धत्ते, रत्नमणिरुज्ज्वलकङ्कणेन सह करे कुचभूषणेन सह पयोधरयुगे च रुचिं धत्ते.

कौन्दे मधुनि विधुरो बालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते । प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि रमते स्मरँल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ ९४ ॥ श्रियो वासाम्भोजे त्रिदिवसरिदम्भोजकुहरे हरेर्नाभीपद्मे मधु मधुकरो यः किल पपौ । स दैवादुन्मीलत्तपनकरतापव्यतिकरव्यथाकम्पः संप्रत्यतरुमरुभूमौ विचरति ॥ ९५ ॥ लतास्तास्तास्ताद्दङ्मधुरसवतीः पङ्कजवनीः समालिङ्ग्य श्रुम्बन्नयमगमयद्धरिसमयम् । इदानीं चेन्नीचे विचरति रुचेरेष लकुचे कुचेष्टेयं धातुर्भवति नहि वाच्यो मधुकरः ॥ ९६ ॥ मधूके माध्वीकं पिबसि शतपत्रेऽभिरमसे मधूलीभिश्रान्तर्मधुप सहकारेऽपि रमसे । वसन्ते वासन्तीमधु मधुरमश्नासि बहुशो दुरावेशोऽयं ते तदपि कुटजे यद्विचरसि ॥ ९७ ॥ भ्रमन्स्वैरं भ्रातर्भ्रमर नवयूथेषु बहुशो मधूलीमन्विष्यन्कुमुदवनवीथीषु विचर । वसन्तप्रारम्भस्फुरितमधुसंभारसुभगो न ते विस्मर्तव्यः क्वचन सहकारव्यतिकरः ॥ ९८ ॥ अये मधुप मा कृथा बत वृथा मनोदीनतां तुषारसमये लताशतनिषेवणव्याकुलः । इयं पुरत एव ते सरसपुष्पमासोदये रसालनवमञ्जरी मधुझरी जरीजृम्भते ॥ ९९ ॥ नो मल्लीमयमीहते न भजते मत्तेभकुम्भस्थलीं[१] वासन्तीं सहते न चन्दनवनीमालम्बते न क्वचित् । जातीमेव हृदीश्वरीमिव महानन्दैककन्दाङ्कुरां ध्यायन्निर्वृतिमेति षट्पदयुवा योगीव वीतभ्रमः[३] ॥ १०० ॥ किं क्वापि प्रलयानलैर्विटपिनो निर्दह्य भस्मीकृताः किंस्विद्देवगजेन पङ्कजवनं निष्कन्दमुन्मूलितम् । किंवा हन्त कृ[४]तान्तकेसरिभयात्त्यक्तो मदः कुञ्जरैर्येनास्मिन्विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥ १०१ ॥ यस्याः संगमवाञ्छया न गणिता वाप्यो विनिद्रोत्पला यामालिङ्ग्य समुत्सुकेन मनसा यातः परां निर्वृतिम् । भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते धैर्यं नाम तदस्तु तस्य न पुनः स्नेहानुरूपं कृतम् ॥ १०२ ॥ दग्धा सा बकुलावली कवलितास्ते ते रसालद्रुमाः पृष्टास्तेऽपि विनिद्रपुष्पपटलीपीतातपाः पादपाः । भ्रातर्भृङ्ग दवाग्निना वनमिदं वल्मीकशेषं कृतं किं त्वं संप्रति काननान्तरपरिस्पन्दाय मन्दायसे ॥ १०३ ॥ दूरादुज्झति चम्पकं न च भजत्यम्भोजराजीरजो नो जिघ्रत्यपि पाटलापरिमलं धत्ते न चूते रतिम् । मन्दारे यदनादरो विचकिलोपान्ते न संतृप्यते तन्मन्ये क्वचिदङ्ग भृङ्गतरुणेनास्वादिता मालती ॥ १०४ ॥ येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया नीता येन निशा शशाङ्कधवला पद्मोदरे शारदी[६] । भ्रान्तं येन मदप्रवाहमलिने गण्डस्थले दन्तिनां सोऽयं भृङ्गयुवा करीरविटपे बध्नाति तुष्टिं कुतः ॥ १०५ ॥ भ्रातर्भ्राम्य लवङ्गवल्लीषु पिब स्वैरं नवाम्भोरुहं माध्वीमाधविकामधूनि मधुराण्याकण्ठमास्वादय । कस्मादापतितोऽसि केतकमिदं यस्मिन्नुदीर्णे रजो दृष्टिं लुम्पति सूचयः प्रविचिताः कृन्तन्ति मर्माण्यपि ॥ १०६ ॥ आस्वाद्यात्र मधूनि षट्पद मदं मा गाः कषायाङ्कुरैर्माकन्दस्य पिकान्प्रतारितवतो मूर्धानमध्यासितः । प्रत्यासन्नतमे पिकेऽपि भवते येनार्पिता तादृशी माध्वी तस्य विवेकविच्युतिरियं साद्गुण्यमेतन्न ते ॥ १०७ ॥ नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया मालत्याः कुसुमेषु येन सततं केली कृता हेलया । तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः ॥ १०८ ॥ प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरीपुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् । तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामञ्चति त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥ १०९ ॥ सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं[२] दृष्टिः सा मदविस्मृतस्वपरदिक्किं[३][४] भूयसोक्तेन वा । सर्वं विस्मृतवानसि भ्रमर हे यद्वारणो[५]ऽद्याप्यसावन्तः[६] शून्यकरो[७] निषेव्यत इति भ्रातः क एष ग्रहः ॥ ११० ॥ केतक्यः कटुकण्टकाः कुमुदिनी दोषोदयान्मोदते जायन्ते विकलाः कलावति पुनः पङ्केरुहां पङ्क्तयः । अन्यानि प्रसवानि षट्पदपदन्यासैरवाञ्चि क्वचिद्भृङ्गो भ्राम्यति कल्पवृक्ष विपदामन्तर्भवन्तं विना ॥ १११ ॥ यद्यप्याम्रतरोरमुष्य वनिताकर्णावतंसोचितामाजिघ्रन्नवमञ्जरीं मधुप हे जातोऽसि पूर्णोत्सवः । विस्मर्तुं भवतस्तथाप्यनुचितं तद्वन्धमिन्दीवरं यस्यास्वाद्य मधूलि चानतशिरो मञ्जु त्वयोद्गुञ्जितम् ॥ ११२ ॥ माकन्दे मधुपानमम्बु बकुले क्रीडा कदम्बद्रुमे दोलाखेलनकौतुकं कुवलये कः को न वा विभ्रमः । येनाकारि मधुव्रतेन सहसा सोऽयं मधूके मधौ माध्वीकं परिपीय पीवरतनुर्जीवत्यहो जीवनम् ॥ ११३ ॥ पीतं पङ्कजकानने मधु मया नीपेऽपनीतं वयो बन्धूके वरबन्धुता विरचिता रक्ते रसालद्रुमे । किं चाकारि कुमुद्वतीपरिकरे क्रीडाकलाकौशलं कस्तद्वेत्तु विधीयतेऽद्य बदरीवृन्दस्य यद्वन्दनम् ॥ ११४ ॥

१ इच्छां करोति. २ माधवीलताम्. ३ गतभ्रमः. ४ कृतान्तः कालः स एव केसरी सिंहः. ५ विचकिलः पुष्पभेदः. ६ शरत्संबन्धिनी.

१ अग्निशापात्करिणां जिह्वापरिवृत्तिः; पक्षे,–पूर्वविपरीताभिधानम्. २ कर्णचापलं प्रसिद्धम्; पक्षे,–पिशुनप्रतार्यत्वं च. ३ मदः प्रसिद्धः; पक्षे,–गर्वः. ४ स्वपरयोर्दिङ्मार्गः; पक्षे,–आप्तानाप्तविभागः. ५ गजः; पक्षे,–वारकः. ६ संरन्ध्रः; पक्षे,–धनरहितः. ७ शुण्डाः; पक्षे,–हस्तः.

## कोकिलः

समुद्गिरसि किं वाचः पुंस्कोकिल सुकोमलाः । श्वभ्रेऽस्मिञ्जडपाषाणगुरुनिर्घोषभैरवे ॥ ११५ ॥ तवैतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् । प्रपोषितो यैस्तानेव जातपक्षो जहासि[1] यत् ॥ ११६ ॥ रसालशिखरासीनाः शतं सन्तु पतत्रिणः । तन्मञ्जरीरसामोदं विदुरेव कुहूमुखाः ॥ ११७ ॥ भद्रं भद्रं कृतं मौनं कोकिलैर्जलदागमे[2] । वक्तारो दर्दुरा[3] यत्र तत्र मौनं हि शोभते ॥ ११८ ॥ शृगालशशशार्दूलदूषितं दण्डकावनम् । पञ्चमं गायतानेन कोकिलेन प्रतिष्ठितम् ॥ ११९ ॥ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥ १२० ॥ तावन्मौनेन नीयन्ते कोकिलैश्चैव वासराः । यावत्सर्वजनानन्ददायिनी वाक्प्रवर्तते ॥ १२१ ॥ कोकिलोऽहं भवान् काकः समानः कालिमावयोः । अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥ १२२ ॥ सहकारे[4] चिरं स्थित्वा सलीलं बालकोकिल । तं हित्वाऽद्यान्यवृक्षेषु विचरन्न विलज्जसे ॥ १२३ ॥ कलकण्ठ यथा शोभा सहकारे भवद्गिरः । खदिरे वा पलाशे वा किं तथा स्याद्विचारय ॥ १२४ ॥ कोकिल कलमालापैरलमलमालोकसे रसालं किम् । शरनिकरभरितशरधिः शबरः संरतीह[5] परिसरे[6] सधनुः ॥ १२५ ॥ तत्किं स्मरसि न भुक्तं यत्पिक[7] रे काकमन्दिरे पूर्वम् । सहकारकुसुमकाले हठेन कुरुषेऽधुना रावम् ॥ १२६ ॥ तावत्कोकिल विरसान्यापय[8] दिवसान्वनान्तरे निवसन् । यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ १२७ ॥ एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः । साजात्यशङ्कया[9]मी न त्वां निघ्नन्तु निर्दयाः काकाः ॥ १२८ ॥ अथ कोकिल कुरु मौनं जलधरसमयेऽपि पिच्छिला भूमिः । विकसति कुटजकदम्बे वक्तरि भेके कुतस्तवावसरः ॥ १२९ ॥ मलिनात्मना विरागः प्रकटीकृत एव कोकिलकलेन । जीवनदानामुन्नतिसमये वाचंयमीभवता ॥ १३० ॥ रे रे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम् । नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ १३१ ॥ अस्यां सखे बधिरलोकनिवासभूमौ किं कूजितेन खलु कोकिल कोमलेन । एते हि दैवहतकास्तद[10]भिन्नवर्णं त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥१३२॥ रे बालकोकिल करीरमरुस्थलीषु किं दुर्विदग्धमधुरध्वनिमातनोषि । अन्यः स कोऽपि सहकार[11]तरुप्रदेशो राजन्ति यत्र तव विभ्रमभाषितानि ॥ १३३ ॥ किं कोमलैः कलरवैः पिक तिष्ठ तूष्णीमेते तु पामरनराः स्वरमाकलय्य । को वा रटत्ययमये निकटे कटूनि रे बध्यतामिति वदन्ति गृहीतदण्डाः ॥ १३४ ॥ तावच्चकोरचरणायुधचक्रवाकपारावतादिविहगाः कलमालपन्तु । यावद्वसन्तरजनीघटिकावसानमासाद्य कोकिलयुवा न कुहूकरोति ॥ १३५ ॥ येनोषितं रुचिरपल्लवमञ्जरीषु श्रीखण्डमण्डलरसालवने सदैव । दैवात्स कोकिलयुवा निपपात निम्बे तत्रापि रुष्टबलिपुष्टकुलैर्विवादः ॥ १३६ ॥ हे कोकिलाखिललतासु फलानि सन्ति संत्यज्य तानि ननु चूतलतां सपुष्पाम् । किं काङ्क्षसीह रमितुं फलभोक्तुकामो न ज्ञायसे नृपतिसेवकभीषणीयाम् ॥ १३७ ॥ परभृतशिशो मौनं तावद्विधेहि नभस्तलोत्पतनविधये पक्षौ स्यातां न यावदिमौ क्षमौ । ध्रुवमपरथा द्रष्टव्योऽसि स्वजातिविलक्षणध्वनितकुपितध्वाङ्क्षत्रोटीपुटाहतिजर्जरः ॥ १३८ ॥ अहंयुवरवर्णिनीजनमदायतोदन्नतस्फुरच्चतुरपञ्चमस्वरजितान्यपक्षिव्रजः । रसालतरुणा कृतामसमतुल्यतामात्मनो विहन्तुमिह कोकिलः फलिनमन्यमुद्वीक्षते ॥ १३९ ॥ क्वचिज्झिल्लीनादः क्वचिदतुलकाकोल[1]कलहः क्वचित्कङ्कारावः क्वचिदपि कपीनां कलकलः । क्वचिद्घोरः फेरु[2]ध्वनिरयमहो दैवघटनात्कथंकारं तारं[3] रसति[4] चकितः कोकिलयुवा ॥ १४० ॥ मूकीभूय तमेव कोकिल मधुं बन्धुं प्रतीक्षस्व हे हेलोल्लासितमल्लिकापरिमलामोदानुकूलानिलम् । यत्रैतास्तव सूक्तयः सफलतामायान्त्यमी तूलसत्पांशूत्तंससूतो निदाघदिवसाः संतापसंदायिनः ॥ १४१ ॥ येनानन्दमये वसन्तसमये सौरभ्यहेलामिलद्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः । आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशः खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥ १४२ ॥ दात्यूहाः[5] सरसं रसन्तु सुभगं गायन्तु केकाभृतः[6] कादम्बाः[7] कलम्[8]आलपन्तु मधुरं कूजन्तु कोयष्टयः[9] । दैवाद्यावदसौ रसालविटपिच्छायामनासादयन्निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ १४३ ॥ भ्रातः कोकिल कूजितेन किमलं नाद्याप्यनर्घ्यो गुणस्तूष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः क्वचित्कोटरे । प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलः कालोऽयं शिशिरस्य संप्रति सखे नायं वसन्तोत्सवः ॥ १४४ ॥ अम्भोज[10]प्रकरोऽथ केतककुलं कुन्दोत्करः कैरवव्रातो मल्लिगणोऽथ चम्पकचयो जातीसमूहोऽथवा । नो चेदादरमातनोति पिक ते खेदं वृथा मा कृथा यस्मात्कापि कदापि कोऽपि भविता यस्त्वद्गुणाञ्ज्ञास्यति ॥ १४५ ॥ आसाद्याम्रवनीमिमां प्रति नवामास्वाद्य

---

१ त्यजसि. २ वर्षाकाले. ३ भेकाः. ४ आम्रे. ५ संचरति. ६ आसमन्ताद्भागे. ७ कोकिल. ८ अतिवाहय. ९ समानजातीयत्वशङ्कया. १० काकसमानवर्णम्. ११ आम्रः.

१ द्रोणकाकः. २ जम्बुकध्वनिः. ३ अत्युच्चं यथा तथा. ४ कूजति. ५ कालकण्ठकः; जलकाक इति प्रसिद्धः. ६ मयूराः. ७ कलहंसाः. ८ अव्यक्तमधुरम्. ९ टिट्टिभाः. १० पद्मसमूहः.

तन्मञ्जरीं मैवं पञ्चममञ्च नन्दनवनभ्रान्त्या तया कोकिल । एषा वायसमण्डली घनशिरःशूलाहतिव्याकुला कुध्वानैर्बधिरीकरिष्यति वृथा श्रोत्राणि सत्पत्रिणाम् ॥ १४६ ॥ उत्कूजन्तु वटे वटे बत बकाः काका वराका अपि क्राङ्कुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले । सोऽन्यः कोऽपि रसालपल्लवलवग्रासोल्लसत्पाटवक्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥ १४७ ॥

**चातकः**

एक एव खगो मानी वने वसति चातकः । पिपासितो वा म्रियते याचते वा पुरंदरम् ॥ १४८ ॥ पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा । नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥ १४९ ॥ शक्यते येन केनापि जीवनेनैव जीवितुम् । किंतु कौलव्रतोद्भङ्गप्रसङ्गः परदुःसहः ॥ १५० ॥ अवश्यकारणैः प्राणान्धारयत्येव चातकः । प्रार्थनाभङ्गभीतोऽपि शक्रादपि न याचते ॥१५१॥ चातक धूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या । इह हि भविष्यति भवतो नयनयुगादेव वारिणां पूरः ॥ १५२ ॥ यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् । तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य ॥ १५३ ॥ दीनोन्नतचलपक्षतया बह्वपि लब्धमवस्तु । चातक सत्संभावनया किमपि यदस्ति तदस्तु ॥ १५४ ॥ विश्वोपजीव्ये न पिबत्यपोऽयं पद्माकरे यद्यपि चातकश्चेत् । स्वार्थक्षतिस्तस्य तृषातुरस्य लघुत्वमेवास्ति न किंचिदस्य ॥१५५॥ ऊर्ध्वीकृतग्रीव महो मुधैव किं याचसे चातकपोत मेघम् । अत्यूर्जितं गर्जितमात्रमस्खिन्नम्भोधरे विन्दुलवस्तु दूरे ॥१५६॥ वृथा गतं नृत्यसि चातक त्वं न नीलमेघोऽथ गजो मदान्धः । स त्वादृशेभ्यो न ददाति नूनं मातङ्गदानं मधुपेभ्य एव ॥ १५७ ॥ आत्मानमम्भोनिधिरेतु शोषं ब्रह्माण्डमासिञ्चतु वा तरङ्गैः । नास्ति क्षतिर्नोपचितिः कदापि पयोदवृत्तेः खलु चातकस्य ॥ १५८ ॥ रक्ताब्जपुञ्जरजसारुणितान्विमुच्य स्वच्छान्सुधासमरसानपि वारिराशीन् । यच्चातकः पिबति वारिधरोदबिन्दून् मन्ये तदानतिभयाच्छिरसोऽभिमानी ॥ १५९ ॥ अन्येऽपि सन्ति बत तामरसावतंसा हंसावलीवलयिनो जलसंनिवेशाः । कोऽप्याग्रहो गुरुरयं बत चातकस्य पौरंदरीं यदभिवाञ्छति वारिधाराम् ॥ १६० ॥ धिग्वारिदं पैरिहृतान्यजलाशयस्य यच्चातकस्य कुरुते न तृषाप्रशान्तिम् । धिक्चातकं तमपि योऽर्थितयास्तलज्जस्तं तादृशं च यदपैति पिपासितोऽपि ॥ १६१ ॥ अये वापीहंसा निजवसतिसंकोचपिशुनं कुरुध्वं मा चेतो वियति वहतो वीक्ष्य विहगान् । अमी सारङ्गास्ते भुवनमहनीयव्रतभृतो निरीहाणां येषां तृणमिव भवन्त्यम्बुनिधयः ॥ १६२ ॥ वीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं कन्दैः कन्दलितं जनैः प्रमुदितं धाराधरे वर्षति । भ्रातश्चातक पातकं किमपि ते सम्यङ् न जानीमहे येनास्खिन्न पतन्ति चञ्चुपुटके द्वित्राः पयोबिन्दवः ॥ १६३ ॥ अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नन्ति ये भ्रातश्चातक किं वृथा विरुदितैः खिन्नोऽसि विश्रम्यताम् । मेघः शारद एष कांशधवलः पानीयरिक्तोदरो गर्जत्येव हि केवलं भृशतरं नो विन्दुमप्युज्झति ॥ १६४ ॥ यः कृष्णं कुरुते मुखं जनयति त्रासं तडिद्भिस्तु यो यश्च प्रार्थयते परं दलयति श्रोत्रं निजैर्गर्जितैः । सत्यं चातक तं तथाविधमपि भ्रातस्त्वया याचता जीमूतं कृतमेव तुल्यमनयोरर्थित्वतिर्यक्त्वयोः ॥ १६५ ॥ रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतामम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः । केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ १६६ ॥ वापी स्वल्पजलाशयो विषमयो नीचावगाहो ह्रदः क्षुद्रात्क्षुद्रतरो महाजलनिधिर्गण्डूषमेकं मुनेः । गङ्गाद्याः सरितः पयोनिधिगताः संत्यज्य तस्मादिमान्संमानी खलु चातको जलमुचामुच्चैः पयो वाञ्छति ॥ १६७ ॥ अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णातुरा वापीकूपतडागसागरजले मज्जन्ति दत्तादराः । मामद्यापि न वेत्सि चातकशिशुं यच्छुष्ककण्ठोऽपि सन्नान्यं वाञ्छति नोपसर्पति न च प्रस्तौति न ध्यायति ॥ १६८ ॥

**मयूरः**

अहमस्मि नीलकण्ठस्तव खलु तुष्यामि शब्दमात्रेण । नाहं जलधर भवतश्चातक इव जीवनं याचे ॥ १६९ ॥ यत्नादपि कः पश्यति शिखिनामाहारनिर्गमस्थानम् । यदि जलदनिनदमुदितास्त एव मूढा न नृत्येयुः ॥ १७० ॥ वेगज्वलद्विटपिपुञ्जमहारयोऽयं गर्जिर्न तीव्रतरहेतिरियं न शम्पा । दावाग्निधूमनिवहोऽयमये न मेघः किं नृत्यसि द्रुतमितो व्रज तत्कलापिन् ॥ १७१ ॥ अस्मान्विचित्रवपुषस्तव पृष्ठलग्नान्कस्माद्विमुञ्चति भवान् यदि वा विमुञ्च । रे नीलकण्ठ गुरुहानिरियं तवैव मौलौ पुनः क्षितिभृतो भवति स्थितिर्नः ॥ १७२ ॥ अये नीलग्रीव क्व न खलु सखे तेऽद्य मुनयः परं तोषं येषां तव रवविलासो वितनुते । अमी दूरात्क्रूराः क्वणितमिदमाकर्ण्य सहसा त्वरन्ते हन्तुं त्वामहह शबराः पुङ्खितशराः ॥ १७३ ॥ समन्तादाक्रान्ता दवदहनसङ्घैः शिखरिणः किरातैराकीर्णाः कर-

१ नमनभयात्. २ ऐन्द्रीम्, मेघोत्पन्नामित्यर्थः. ३ परिहृतास्त्यक्ता अन्ये जलाशयाः समुद्रादयो येन. ४ गतलज्जः, निर्लज्ज इत्यर्थः.

१ काशपुष्पवत्पाण्डुरः. २ मेघानाम्. ३ गुदस्थानम्. ४ मेघनादेन संजातानन्दाः. ५ विद्युत्.

कलितकाण्डैर्वनभुवः । बिडालैरालीढाः सपदि सरसीनां परिसराः शिखण्डी पाण्डित्यं निजमहह कुत्र प्रकटयेत् ॥ १७४ ॥ एतस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः । [1]केकी कूजति चेत्तदा वि[2]घटितव्यालावलीबन्धनः सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ १७५ ॥ हारीताः सरसं रसन्तु मधुरं कूजन्तु पुंस्कोकिलाः सानन्दं गिरमुद्गिरन्तु च शुकाः किं तैः शिरःस्थैरपि । एकेनापि तलस्थितेन नदता श्रीखण्ड निस्तर्जनाद्व्यालानां च शिखण्डिना न तु महत्-पाण्डित्यमुद्दण्डितम् ॥ १७६ ॥ किं दूरेण पयोधरा उपरि किं नान्ये रटन्तः श्रुता निन्द्याः पापतया स्वपक्षिषु गताः किं नाम पक्षाः क्षयम् । रम्यं वा गगने न किं विहरणं किं तून्नकाकावलीपर्यायप्रतिपत्तिलाघवभयाद्भूमौ स्थिता बर्हिणः ॥ १७७ ॥ केका कर्णामृतं ते सकुसुमकबरीकान्तिहाराः कलापाः कण्ठच्छाया पुरारेर्गलरुचिरुचिरा सौहृदं मेघसङ्घैः । विश्वद्वेषिद्विजिह्वस्फुरदुरुपिशितैर्नित्यमाहारवृत्तिः कैः पुण्यैः प्राप्तमेतत्सकलमपि सखे चित्रवृत्तं मयूर ॥ १७८ ॥

## चक्रवाकः

त्यज चक्रवाकि शोकं बधान धैर्यं सहस्व समयममुम् । अयमेव वासरमणिर्हृरिष्यते शापमूर्च्छां ते ॥ १७९ ॥ अस्तंगतोऽयमरविन्दवनैकबन्धुर्भास्वान्न लङ्घ्यति कोऽपि विधिप्रणीतम् । हे चक्र धैर्यमवलम्ब्य विमुञ्च शोकं धीरास्तरन्ति विपदं न तु दीनचित्ताः ॥ १८० ॥

## शुकः

अखिलेषु विहंगेषु हन्त स्वच्छन्दचारिषु । शुक पञ्जर-बन्धस्ते मधुराणां गिरां फलम् ॥ १८१ ॥ किं[3]शुके शुक मा तिष्ठ चिरं भाविफलेच्छया । बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ॥ १८२ ॥ काकाः किं किं न कुर्वन्ति केङ्कारं यत्र यत्र वा । शुक एव परं वक्ति नृपहस्तोप-लालितः ॥ १८३ ॥ शुक तव पठनं [4]व्यसनं न गुणः स गुणाभासः । समजनि येनैमरणं शरणं पञ्जरवासः ॥ १८४ ॥ कीर नीरसकरीरपादपे किं स्थितोऽसि कथयामि धीरतः । मामकीनसहकारपादपा दुःसमीरलहरीभिराहताः ॥ १८५ ॥ सुभाषितस्वाध्ययनेऽनुषक्तं शुकं वराकाः प्रह-सन्ति काकाः । तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपयाऽऽनतास्याः ॥ १८६ ॥ द्राक्षां प्रदेहि मधु वा वदने निधेहि देहे विधेहि किमु वा करलालनानि । जातिस्वभाव-चपलः पुनरेष कीरस्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ १८७ ॥ हे कीर कैरवसुगीरिति संकलय्य मा मात्र संरससि सज्जनरञ्जनाय । बालोऽपि यत्र कलकण्ठसुकण्ठ-पीठः संलेढि कोमलकुहूकृतपूर्णकर्णः ॥ १८८ ॥ इदमपटु कपाटं जर्जरः पञ्जरोऽयं विरमति न गृहेऽस्मिन्क्रूरमार्जार-यात्रा । शुक मुकुलितजिह्वः स्थीयतां किं वचोभिस्तव वचनविनोदे नादरः पामराणाम् ॥ १८९ ॥ अमृतवचन-लीलाविभ्रमैरन्नपानं रचय चतुर कीर भ्रान्तचित्तेषु तेषु । अकलितपरसेवातापपापः पिकोऽसौ भजतु विपिनवाटीमेष पीयूषकण्ठः ॥ १९० ॥ अमुष्मिन्नुद्याने विहगखल एष प्रतिकलं विलोलः काकोलः क्वणति खलु यावत्कटुतरम् । सखे तावत्कीर द्रढय हृदि वाचंयमकलां न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥ १९१ ॥ इयं पल्ली भिल्लैरनु-चितसमारम्भरसिकैः समन्तादाक्रान्ता विषविषमबाणप्रण-यिभिः । तरोरस्य स्कन्धे गमय समयं कीर निभृतं न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥ १९२ ॥ अमु-ष्मिन्नारामे तरुभिरभिरामे विटपिनः स्फुटं नृत्यद्भृङ्गीविविध-नवसंगीतकलनात् । परानन्दैः पूर्णाः क इव तव वर्णावलिपदक्रमश्रोता वेत्ता द्विजवर शुक श्राम्यसि कुतः ॥ १९३ ॥ अये कीरश्रेणीपरिवृढ वृथा वासरशतं किमर्थं त्वं व्यर्थं क्षपयसि पलाशे रमसतः । यदा पुष्पारम्भे मुखमलिनिमा किंशुकतरोस्तदैवेदं ज्ञातं फलपरिचयो दुर्लभ-तरः ॥ १९४ ॥ अपारः पाथोधिः पुलिनपदवी योजन-शतं निरालम्बो मार्गो वियति किल शून्या दश दिशः । इतीवायं कीरः कतिपयपदान्येव गगने मुहुर्भ्राम्यन्भ्राम्य-न्पतति [3]गुणवृक्षे पुनरपि ॥ १९५ ॥ द्विजकुलपते मेधासिन्धो सुभाषितकोविद त्वयि गृहमुपायाते जातं बहूपकृतं मम । यदिह नियतं बाला वृद्धाः स्त्रियः परिचारकाः शुक भग-वतो नाम प्रीता गृणन्ति मुहुर्मुहुः ॥ १९६ ॥ वासः काञ्चनपञ्जरे नृपकराम्भोजैस्तनूमार्जनं भक्ष्यं स्वादुरसाल-दाडिमफलं पेयं सुधाभं पयः । पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे हा हा हन्त तथापि जन्मविटपिक्रोडं मनो धावति ॥ १९७ ॥ सत्सांगत्यमवाप्य यः पुरवने नाना-रसास्वादवत्कीरः शास्त्रविचारचारुवचनैरानन्दकारी जने । दैवेनास्फुटवाक्प्रपञ्चपिहितश्रोत्रस्य तस्याटवीं प्राप्तस्यात्म-सभाप्रगल्भकपिषु स्वान्मौनमेवोचितम् ॥ १९८ ॥ भ्रातः कीर कठोरचञ्चुकषणक्रोधायितैः कूजितैः किं माधुर्यनि-षिक्तसूक्तिविशदः कण्ठावटुः शोष्यते । सेयं दैववशाद्दशा परिणता राजन्यपात्रस्य ते भिल्लैश्छिद्रितभित्तिमुद्रितघटः प्राप्तो यतः पञ्जरः ॥ १९९ ॥ माणिक्यद्रवलिप्तमौक्तिकतुलां बिभ्रन्ति नो दाडिमीबीजान्येष निरीक्षते न रमते हैमेऽप्यहो पञ्जरे । तत्तादृग्वनवाससंमदमहामोदैकमेदस्विनी वृत्तिर्मे

१ मयूरः. २ विघटितं व्यालावलीनां बन्धनं यस्य. ३ पलाशवृक्षे. ४ दोषः. ५ मरणपर्यन्तम्.

१ द्रोणकाकः. २ वाचंयमो मौनी. ३ पोतमध्यस्थिते कूपके.

गलितानया हतगिरेत्येवं शुकः शोचति ॥ २०० ॥ याते यातमधःस्थिते स्थितमुपर्यालोकिते लोकितं यद्युवानशुकोऽयमाकलयते शुद्धान्तहस्तस्थितः। तत्सखे मणिभित्तिमेत्य भवता छायाशुकाङ्गीकृतं तस्मिन्कर्णसुधां वितन्वति गिरं तूष्णीं किमु स्थीयते ॥ २०१ ॥ स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने चञ्चूकोटिविघट्टितारपुटो यास्याम्यहं पञ्जरात्। इत्थं कीरवरे मनोरथमयं पीयूषमास्वादयत्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥ २०२ ॥ दृष्ट्वा शाखावकीर्णे फलभरनमितं भूमिभागावनद्धं त्यक्त्वा शालप्रकाण्डं पनसमुपगतश्चिन्तयित्वेति कीरः। हत्वा चञ्चुं प्रहर्षाद्विगलितपयसा संभृताशेषपक्षो भिन्नश्चोड्डीय गन्तुं गगनपरिचिता या गतिः सापि नष्टा ॥ २०३ ॥

काकः

वयं काका वयं काका जल्पन्तीति प्रगे[१] द्विकाः[२]। तिमिरारिस्तमो हन्यादिति शङ्कितमानसाः ॥ २०४ ॥ तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः। केन विज्ञायते काकः स्वयं यदि न भाषते ॥ २०५ ॥ अहो मोहो वराकस्य काकस्य यदसौ मुहुः। सरीसर्ति नरीनर्ति पुरतः शिखिहंसयोः ॥ २०६ ॥ आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः। किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ २०७ ॥ तत्काक त्वयि युक्ताः कटुवाग्वैवर्ण्यधूर्तताशुचिताः। यदि विष्ठाकृमिपुष्टे तत्र न दोषा हि तच्चित्रम् ॥ २०८ ॥ विधिरेव विशेषगर्हणीयः[३] करट त्वं रट[४] कस्तवापराधः। सहकारतरौ चकार यस्ते सह वासं सरलेन कोकिलेन ॥ २०९ ॥ काकस्य गात्रं यदि काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे। एकैकपक्षे ग्रथितं[५] मणीनां तथापि काको न तु राजहंसः ॥ २१० ॥ त्रोटीपुटं[६] करट कुड्मलयाद्य तात यावत्प्रतिव्रजति नाकमयं मरालः। नो चेदमङ्गलकठोररवा विहंगाः सर्वे भुवीति निजसंसदि शंसिता नः ॥ २११ ॥ प्रत्यङ्गणं प्रतितरुं प्रतिवारितीरं काकाश्चरन्ति चलचञ्चुपुटा रटन्तः। नो यान्ति तृप्तिमथ मण्डितपुण्डरीकखण्डे वसन्निह तृप्यति राजहंसः ॥ २१२ ॥ कृष्णं वपुर्वहतु चुम्बतु सत्फलानि रम्येषु संचरतु चूतवनान्तरेषु। पुंस्कोकिलस्य चरितानि करोतु नाम काकः किल ध्वनिविधौ ननु काक एव ॥ २१३ ॥ पथि निपतितां शून्ये दृष्ट्वा निरावरणाननां दधिभृतघटीं गर्वोन्नद्धः समुद्धतकंधरः। निजसमुचितास्तास्ताश्चेष्टा विकारशताकुला यदि न कुरुते काणः काकः कदा नु करिष्यति ॥ २१४ ॥ गात्रं ते मलिनं तथा श्रवणयोरुद्वेगकृत्केङ्कृतं भक्ष्यं सर्वमपि स्वभावचपलं दुश्चेष्टितं ते सदा। एतैर्वायस संगतोऽस्यविनयैर्दोषैरमीभिः परं यत्सर्वत्र कुटुम्बवत्सलमतिस्तेनैव धन्यो भवान् ॥ २१५ ॥ रूक्षस्यामधुरस्य चातिमलिनच्छायस्य धृष्टस्य च क्षुद्रस्य क्षतकारिणोऽतिचपलस्याह्लादविच्छेदिनः। येयं निम्बफलेषु काक भवतस्तित्केषु नैसर्गिकी प्रीतिस्तत्सदृशं विधेर्विलसितं निष्पन्नमेतच्चिरात् ॥ २१६ ॥ कर्णारुंतुद[१]मन्तरेण रणितं[३] गाहस्व काक स्वयं माकन्दं[४] मकरन्दशालिनमिह त्वां मन्महे कोकिलम्। धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां नेपालक्षितिपालफालपतिते पङ्के न शङ्केत कः ॥ २१७ ॥ काक त्वं फलनम्रमाम्रविपिनं दैवात्समासादयन् किं कर्णौ बधिरीकरोषि पुरुषकेङ्कारकोलाहलैः। मौनं चेदवलम्बसे रतभरप्रक्रान्तपुंस्कोकिलभ्रान्त्यापि त्वयि संचरन्ति न कथं मुग्धाकटाक्षच्छटाः ॥ २१८ ॥ नो चारू चरणौ न चापि चतुरा चञ्चूर्न वाच्यं वचो नो लीलाचतुरा गतिर्न च शुचिः पक्षग्रहोऽयं तव। क्रूरकेङ्कृतिनिर्भरां गिरमिह स्थाने वृथैवोद्गिरन्मूर्ख ध्वाङ्क्ष न लज्जसेऽप्यसदृशं पाण्डित्यमुन्नाटयन् ॥ २१९ ॥ यस्याकर्ण्य वचः सुधाकवलितं वाचंयमानामपि व्यग्राणि व्यथयन्ति मन्मथकथाश्चेतांसि चैत्रोत्सवे। रे रे काक वराक साक[६]ममुना पुंस्कोकिलेनाधुना स्पर्धाबन्धमुपेयुषस्तव तु किं लज्जापि नोज्जागरा ॥ २२० ॥ आलापं कलकण्ठिका न कुरुते कीरा न धीरध्वनिं व्याहारं कलयन्ति कोमलगिरः कूजन्ति नो बर्हिणः। नीराडम्बरदुर्दिनाम्बरतले दूरे द्विरेफध्वनिः काकाः केवलमेव केङ्कृतरवैः कुर्वन्ति कर्णज्वरम् ॥ २२१ ॥ बन्धं लब्धवतः परस्य वदनं भिक्षाशया पश्यतः स्वावासच्युतिवेदनां विदधतः कान्तां विना सीदतः। भ्राम्यन्तः सह भार्यया प्रतिदिशं प्रत्यापगं प्रत्यगं कीरस्याध्ययनं हसन्ति विविधक्रीडालसा वायसाः ॥ २२२ ॥ किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः किंवा हंस इवाङ्गनागतिगुरुः सारीव किं सुस्वरः। किं वा हन्त शकुन्तबालपिकवत्कर्णामृतं स्यन्दते काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ २२३ ॥ अत्रस्थः सखि लक्षयोजनगतस्यापि प्रियस्यागमं वेत्त्याख्याति च धिक्शुकादय इमे सर्वे पठन्तः स्थिताः। मत्कान्तस्य वियोगतापदहनज्वालावलीवारिदः काकस्तेन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ २२४ ॥ अस्मिन्नम्भोदवृन्दध्वनिजनितरुषि प्रेक्षमाणेऽन्तरिक्षे मा काक व्याकुलो

१ राजमहिषीकराग्रस्थितः. २ प्रातःकाले. ३ द्वौ ककारौ नाम्नि विद्येते येषां ते. ४ निन्द्यः. ५ काक. ६ शब्दं कुरु. ७ ग्रथनम्. ८ चञ्चुपुटम्.

१ पीडाजनकम्. २ विना. ३ शब्दितम्. ४ आम्रवृक्षम्. ५ मौनिनाम्. ६ सह. ७ पक्षिविशेषः.

भूस्तरुशिखरशवक्रव्यलेशानशान । धत्ते मत्तेभकुम्भव्यतिकरकरजग्रामवज्राग्रजाग्रद्रासव्यासक्तमुक्ताधवलितकवलो न स्पृहामत्र सिंहः ॥ २२५ ॥

बकः

एष बकः सहसैव विपन्नः शाठ्यमहो क्व नु तद्गतमस्य । साधु कृतान्तक कश्चिदपि त्वां वञ्चयितुं न कुतोऽपि समर्थः ॥२२६॥ न कोकिलानामिव मञ्जु कूजितं न लब्धलास्यानि गतानि हंसवत् । न बर्हिणानामिव चित्रपक्षता गुणस्तथाप्यस्ति बके बकव्रतम् ॥ २२७ ॥ बकोट ब्रूमस्त्वां लघुनि सरसि क्वापि शफरैस्तव न्याय्या वृत्तिर्न पुनरवगाढुं समुचितः । इतश्चेतश्चाभ्रंलिहलहरिहेलातरलितक्षितिभ्रग्रासैकग्रहिलतिमिपोतः पतिरपाम् ॥ २२८ ॥ नैर्मल्यं वपुषस्तवास्ति वसतिः पद्माकरे जायते मन्दं याहि मनोरमां वद गिरं मौनं च संपादय । धन्यस्त्वं बक राजहंसपदवीं प्राप्तोऽसि किं तैर्गुणैर्नीरक्षीरविभागकर्मनिपुणा शक्तिः कथं लभ्यते ॥२२९॥ जातिस्तस्य न मानसे न शुचिभिर्वृत्तिर्मृणालाङ्कुरैर्न ब्रह्मोद्वहनेन निर्मलयशः प्राप्ता न वाचः कलाः । जीवन्सत्त्ववधेन बाह्यधवलो भ्राम्यन्सगर्वं पुनर्मिथ्यैवोन्नतकंधरः शठबको हंसैः सह स्पर्धते ॥ २३० ॥ रे रे शिष्टबकोट नाकतटिनीतीरे तपस्विव्रतं ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् । एवं यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि तन्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य सा ॥२३१॥ न भ्रूणां स्फुरणं न चञ्चुचलनं नो चूलिकाकम्पनं न ग्रीवाचलनं मनागपि न यत्पक्षद्वयोत्क्षेपणम् । नासाग्रेक्षणमेकपाददमनं कष्टैकनिष्ठं परं यावत्तिष्ठति हीनमीनवदनस्तावद्बकस्तापसः ॥ २३२ ॥

घूकः

यद्यपि तरणेः किरणैः सकलमिदं विश्वमुज्ज्वलं विदधे । तदपि न पश्यति घूकः पुराकृतं भुज्यते कर्म ॥ २३३ ॥

खद्योतः

जर्जरतृणाग्रमदहन्सर्षपकणमप्रकाशयन्नूनम् । कीटत्वमात्मतत्त्वात्खद्योतः ख्यापयन्नटति ॥ २३४ ॥ घनसन्तमसमलीमस दशदिशि निशि यद्विराजसि तदन्यत् । कीटमणे दिनमधुना तरणिकरान्तरितसितकिरणम् ॥ २३५ ॥ क्वापि गतः पतिरह्नां जलदान्तरितः शशी सनक्षत्रः । शून्ये तमसि भवानपि खद्योत द्योततां नाम ॥ २३६ ॥ इन्दुः प्रयास्यति विनङ्क्ष्यति तारकश्रीः स्थास्यन्ति लीढतिमिरा न मणिप्रदीपाः । अन्धं समग्रमपि कीटमणे भविष्यत्युन्मेषमेष्यति भवानपि दूरमेतत् ॥ २३७ ॥ भ्राजिष्णवो नभसि मेघकृतान्तराले स्वल्पप्रभा अपि परैरनिरस्तभासः । खद्योतकाः प्रकटितोरुतरप्रभावास्तावन्न संसतुरगः समुदेति यावत् ॥ २३८ ॥ अदृष्टव्यापारं गतवति दिनानामधिपतौ यशःशेषीभूते शशिनि गतधाम्नि ग्रहगणे । तथा ध्वान्तं जातं जगदुपनते मेघसमये यथामी गण्यन्ते तमसि पटवः कीटमणयः ॥२३९॥

---

## स्थलचरान्योक्तयः

### सिंहः

एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ १ ॥ मृगेन्द्रं वा मृगारिं वा सुखं व्याहरतां जनः । तस्योभयमपि व्रीडा क्रीडादलितदन्तिनः ॥२॥ मृगेभ्यो रक्ष्यते क्षेत्रं नरैस्तृणमयैरपि । सिंहाक्रान्तं पुनर्मूढ न हयैर्न च दन्तिभिः ॥३॥ मृगैर्नष्टं शशैर्लीनं वराहैश्चलितं स्थलात् । हयानां हेषितं श्रुत्वा सिंहैः पूर्ववदासितम् ॥४॥ खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ ५ ॥ जीर्णोऽपि क्रमहीनोऽपि कृशोऽपि यदि केसरी । तथापि यूथनाथस्य शङ्कातङ्काय कल्पते ॥६॥ नाभिषेको न संस्कारः सिंहस्य क्रियते वने । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ ७ ॥ वेतण्डगण्डकण्डूतिपाण्डित्यपरिपन्थिना । हरिणा हरिणालीषु कथ्यतां कः पराक्रमः ॥ ८ ॥ उत्तुङ्गमत्तमातङ्गमस्तकन्यस्तलोचनः । आसन्नेऽपि च सारङ्गे न वाञ्छां कुरुते हरिः ॥ ९ ॥ जातः स्तन्यं न जग्राह कण्ठीरवकिशोरकः । चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥ १० ॥ वरमुन्नतलाङ्गूलात्सटाधूननभीषणात् । सिंहात्पादप्रहारोऽपि न शृगालाधिरोहणम् ॥ ११ ॥ शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक । कुले तस्मिन्प्रजातोऽसि गजो यत्र न हन्यते ॥१२॥ यस्मिञ्जीवति सिंहे वनमिदमासीद्दुरासदं द्विरदैः । घटयन्ते कटिसूत्रं तस्य सटाभिः शबरशिशवः ॥ १३ ॥ एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । सत्त्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमन्ति ॥ १४ ॥ अनिशं मतङ्गजानां बृंहितमाकर्ण्यते यथा विपिने । मन्ये तथा न जीवति गजेन्द्रकटपलकवलनः सिंहः ॥ १५ ॥ यद्यपि च दैवयोगात्सिंहः पतितोऽतिदुस्तरे कूपे । तदपि च वाञ्छति सततं करिकुम्भविदारणं मनसि ॥ १६ ॥ यद्यपि रटति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः । तदपि न कुप्यति सिंहोऽप्यसदृशपुरुषेषु कः कोपः ॥ १७ ॥ जठरज्वलनज्वलता-

---

१ जन्म. २ शुभ्रैः. ३ जीवनम्. ४ ब्रह्मण उद्वहनेन वाहनतया पृष्ठे धारणेन. ५ सूर्यः.

१ दर्शनव्यापाररहितं यथा स्यात्तथा. २ यशोमात्रावशिष्टे. ३ गततेजसि. ४ परिवारहीनः. ५ आक्रमणबलरहितः. ६ मत्तगजानाम्. ७ वैरिणा. ८ मृगपङ्क्तिषु. ९ मृगे. १० सिंहः. ११ सिंहशावकः. १२ पुच्छम्. १३ कम्पनम्. १४ राजचिह्नरहिते. १५ बलोन्नते. १६ गर्जितम्. १७ हस्तिगण्डस्थलमांसग्रासकरः.

प्यपगतशङ्कं समागतापि पुरः । करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम् ॥ १८ ॥ हेलाविदलितकरिकुल कण्ठीरव कीदृशः प्रकोपोऽयम् । लोले बालशृगाले केवलकोलाहलाधारे ॥ १९ ॥ गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि । हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम् ॥ २० ॥ वयोभिमानादपमानता चेद्विधीयते फेरुजरत्तरेण । हेलाहतानेककरीन्द्रयूनो हरीन्द्रसूनोर्नहि कापि हानिः ॥ २१ ॥ भिनत्ति भीमं करिराजकुम्भं बिभर्ति वेगं पवनादतीव । करोति वासं गिरिगह्वरेषु तथापि सिंहः पशुरेव नान्यः ॥ २२ ॥ गम्यते यदि मृगेन्द्रमन्दिरे लभ्यते करिकपोलमौक्तिकम् । जम्बुकालयगतेन लभ्यते वत्सपुच्छखुरचर्मखण्डनम् ॥ २३ ॥ येन भिन्नकरिकुम्भविस्खलन्मौक्तिकावलिभिरञ्चिता मही । अद्य तेन हरिणान्तिके कथं कथ्यतां नु हरिणा पराक्रमः ॥ २४ ॥ हरिरलसविलोचनः सहेलं बेलमवलोक्य पुनर्जगाम निद्राम् । अधिगतपतिविक्रमास्तभीतिर्न तु वनितास्य विलोकयांचकार ॥ २५ ॥ उत्तुङ्गशैलशिखरस्थितपादपस्य काकोऽपि पक्वफलमालभते सपक्षः । सिंहो बली गजविदारणदारुणोऽपि सीदत्यहो तरुतले खलु हीनपक्षः ॥ २६ ॥ अन्तर्बलान्यहममुष्य मृगाधिपस्य वाचा निवेद्य कथमद्य लघूकरोमि । जानन्ति किं तु करजक्षतकुम्भिकुम्भनिर्मुक्तमौक्तिकमयानि वनान्तराणि ॥ २७ ॥ आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा । मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥ २८ ॥ भिन्ना महागिरिशिलाः करजाग्रजाग्रदुद्दामशौर्यनिकरैः करटिभ्रमेण । दैवे पराञ्चि करिणामरिणा तथापि कुत्रापि नापि खलु हा पिशितस्य लेशः ॥२९॥ पारीन्द्रशावक न तावकरीतिरेषा वेशान्तरैर्विहरसि श्वशृगालशावैः । कुम्भीन्द्रकुम्भदलनोत्पतनाक्रमेच्छां वंशोचितां न खलु रीतिमुरीकरोषि ॥ ३० ॥ उत्प्लुत्य यः शिखरिणं मदकुम्भिकुम्भमुद्भिद्य सानुशतमायतमुल्ललङ्घे । पञ्चाननो नियतया जरयाभिभूतः सोऽयं करौ लिहति बृंहितलोहिताक्षः ॥ ३१ ॥ दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः । इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ ३२ ॥ न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः । लुठन्मुक्ताभारे भवति परलोकं गतवतो हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ ३३ ॥ कुरङ्गीणां यूथं निभृतमिदमङ्गीकृतमयं निरातङ्को यन्निर्दयहृदयभावोऽदयतु तत् । निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा हठान्मत्तेभानां युवतिषु विधत्ते नखपदम् ॥ ३४ ॥ स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि । असौ कुम्भिभ्रान्त्या खरनखरनिर्दारितमहागुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ ३५ ॥ पिब स्तन्यं पोत त्वमिह मददन्तावलधिया दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान् । त्रयाणां लोकानामपि हृदयतापं परिहरन्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥३६॥ क्षुद्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धतास्तस्यैकस्य पुनः स्तवीमहि महः सिंहस्य विश्वोत्तरम् । केलिः कोलकुलैर्मदो मदकलैः कोलाहलो नाहलैः संहर्षो महिषैश्च यस्य मुमुचे साहंकृते हुंकृते ॥ ३७ ॥ कोलः केलिमलंकरोतु करिणः क्रीडन्तु कान्तासखाः कासारे वनकासराः सरभसं मज्जन्त्विह स्वेच्छया । अभ्यस्यन्त्विभयोषितश्च हरिणा भूयोऽनुरूपां गतिं कान्तारान्तरसंचरिष्णुरधुना पञ्चाननो वर्तते ॥ ३८ ॥ नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः करः सत्यं वारण नैष केसरिशिशुस्त्वाडम्बरैः स्पर्धते । तेजोबीजमसह्यमस्य हृदये न्यस्तं पुनर्वेधसा तादृक्त्वादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥ ३९ ॥ क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टां दशामापन्नोऽपि विपन्नधीधृतिरपि प्राणेषु नश्यत्स्वपि । मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ ४० ॥ येनानर्गलकालकेलिकलितप्रत्यग्रकादम्बिनीधाराधोरणिधौतधातुषु पुरा शैलेषु लीलायितम् । सोऽयं शृङ्गनिपातभग्नचरणः स्फारस्फुरत्फेरवीफूत्कारैः कुपितोऽद्य खादति मुहुः पाणी मृगग्रामणीः ॥ ४१ ॥ ग्रामाणामुपशल्यसीमनि मदोद्रेकस्फुरत्सौष्ठवाः फेत्कारध्वनिमुद्गिरन्ति बहवः संभूय गोमायवः । सोऽन्यः कोऽपि घनाघनध्वनिघनः पारीन्द्रगुञ्जारवः शुष्यद्गण्डमलोलशुण्डमचलत्कर्णं गजैर्यः श्रुतः ॥ ४२ ॥ एणः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्वरुर्धावति । निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया हंहो सिंह विना त्वयाद्य विपिने कीदृग्दशा वर्तते ॥ ४३ ॥ हे मातङ्ग मदाम्बुडम्बरतया रोलम्बरोलं वहद्वन्यानामवलम्बनं वनमिदं भङ्क्तुं यदुत्कण्ठसे । दृप्यस्त-

१ वृद्धजम्बूकेन. २ मृगयार्थमागतां सेनाम्. ३ गजभ्रमेण. ४ हे सिंहशिशो. ५ गजाः. ६ स्थितिम्. ७ सिंहस्य.

१ क्रोष्ट्रीणाम्. २ दिगन्तेषु. ३ अहंकारकारवत्त्वम्. ४ नीचाः. ५ 'नाहलो म्लेच्छजात्यन्तरे' इति हैमः. ६ शुण्डादण्डः. ७ क्षुधया खिन्नः. ८ नूतनमेघमाला. ९ जम्बुकी.

त्किमहो महोन्नतधराधौरेयधात्रीधरप्रस्थप्रस्थितमेवयूथमथनोत्कण्ठी न कण्ठीरवः ॥४४॥ यस्यावन्ध्यरुषः प्रतापवसतेर्नादेन धैर्यद्रुहः शुष्यन्ति स्म मदप्रवाहसरितः सद्योऽपि दिग्दन्तिनाम् । दैवात्कष्टदशावशं गतवतः सिंहस्य तस्याधुना कर्षन्त्येव करेण केसरसटाभारं जरत्कुञ्जराः ॥ ४५ ॥ यः शौर्यावधिरेव यस्य सहसा दिग्दन्तिनोऽप्यन्तिकं नायाताः किल येन विन्ध्यवसुधा गम्या न कस्याप्यभूत् । तस्मिन्कौतुकिना त्वया करिपतौ लुप्ते कपोलस्थलीभृङ्गाः केसरिवीर संप्रति पुनः कुत्रैष विश्राम्यतु ॥ ४६ ॥ यूना येन विभिन्नवारणघटाकुम्भोच्छलन्मौक्तिकश्रेणीभिः परिपूरितास्तटभुवो भूमीभृतां कोटिशः । तस्यैवाद्य निवाससीम्नि कलभाः क्रीडन्ति निःसाध्वसं पारीन्द्रस्य जरातुरस्य तदहो जीर्णो जिगीषारसः ॥ ४७ ॥ कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः कः कः कं कमलाकरं विमलकं कर्तुं करी नोद्यतः । के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ ४८ ॥ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारङ्गा महिषामदं व्रजत किं शून्येषु शूरा न के । कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुनः सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥ ४९ ॥ काकः पक्षबलेन भूपतिगृहे ग्रासं यदि प्राप्तवान्किं वा तस्य महत्त्वमस्य लघुता पञ्चाननस्यागता । येनाक्रम्य करीन्द्रगण्डयुगलं निर्भिद्य हेलालवाल्लब्ध्वा ग्रासवरं वराटकधिया मुक्तागणस्त्यज्यते ॥ ५० ॥ निद्रामीलितलोचनो मृगपतिर्यावद्गुहां सेवते तावत्स्वैरममी चरन्तु हरिणाः स्वच्छन्दसंचारिणः । उन्निद्रस्य विधूतकेसरसटाभारस्य निर्गच्छतो नादे श्रोत्रपथं गते गतधियः सन्त्वेव दीर्घायुषः ॥ ५१ ॥ स्मेराः सन्तु सभासदः करिचमूदर्पज्वरोत्सारिणो हर्यक्षेण समं च जम्बुकयुवा युद्धाय बद्धादरः । तत्रापि प्रथयन्ति तुल्यबलतामेके तयोरुच्चकैरन्ये संशयशंसिनस्तदपरे बाढं विपर्यासिनः ॥ ५२ ॥ हे हर्यक्ष सहस्व संप्रति लघुर्गोमायुरग्रे सतां मत्साधारणवन्यजन्तुमनसा गुञ्जारवं संव्यधात् । नीचानां प्रकृतिर्भ्रमो मुखरता चातः कथं खिद्यसे शार्दूले द्विरदे मृगे शशकुले कस्ते विपक्षग्रहः ॥ ५३ ॥ दिङ्नागाः प्रतिपेदिरे प्रथमतो जात्यैव जेतव्यतां संभाव्य स्फुटविक्रमोऽथ वृषभो गौरेव गौरीपतेः । विक्रान्तेर्निकषं करोतु कतमं नाम त्रिलोकीतले कण्ठेकालकुटुम्बिनीकरुणया सिक्तः स कण्ठीरवः ॥ ५४ ॥

१ सफलकोपस्य. २ वृद्धगजाः. ३ सिंहस्य. ४ कपर्दकबुद्ध्या. ५ कण्ठेकालः शिवस्तत्कुटुम्बिनी पार्वती.

### गजः

गजस्य पङ्कमग्नस्य त्रपाकरमिदं महत् । पादमुद्धृत्य यद्गच्छन्हरिणोऽपि हसत्यसौ ॥ ५५ ॥ मलोत्सर्गं गजेन्द्रस्य मूर्ध्नि काकः करोति चेत् । कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥ ५६ ॥ ग्रासाद्गलितसिक्थस्य किं गतं करिणो भवेत् । पिपीलिकस्तु तेनैव सकुटुम्बोऽपि जीवति ॥ ५७ ॥ बन्धनस्थो हि मातङ्गः सहस्रभरणक्षमः । अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥ ५८ ॥ अन्तर्वसति मार्जारी शुनी वा राजवेश्मनि । बहिर्बद्धोऽपि मातङ्गस्ततः किं लघुतां गतः ॥ ५९ ॥ रवितप्तो गजः पद्मांस्तद्बद्ध्यान्बाधितुं ध्रुवम् । सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ॥ ६० ॥ कौपे पयसि लघीयसि तापेन करः प्रसारितः करिणा । सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ ६१ ॥ यदि मत्तोऽसि मतङ्गज किममीभिरसारसरलतरुदलनैः । हरिमनुसर खरनखरं व्यपनेष्यति ते स करटकण्डूतिम् ॥ ६२ ॥ कलभ तवान्तिकमागतमलिमेनं मा कदाप्यवज्ञासीः । अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥ ६३ ॥ लीलामुकुलितनयनं किं सुखशयनं समातनुषे । परिणामविषमहरिणा करिनायक वर्धते वैरम् ॥ ६४ ॥ आपातालगभीरे मज्जति नीरे निदाघसंतप्तः । न स्पृशति पल्वलाम्भः पञ्जरशेषोऽपि कुञ्जरः क्वापि ॥ ६५ ॥ सूते सूकरगृहिणी सुतशतमतिदुर्भगं झटिति । करिणी चिराय सूते कमपि महीपाललालितं कलभम् ॥ ६६ ॥ गिरिगह्वरेषु गुरुगर्वगुम्फितो गजराजपोत न कदापि संचर । यदि बुध्यते हरिशिशुः स्तनंधयो भविता करेणुपरिशेषिता मही ॥ ६७ ॥ केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि गाहस्व शैलतटनिर्झरिणीपयांसि । भावानुरक्तकरिणीकरलालिताङ्ग मातङ्ग मुञ्च मृगराजरणाभिलाषम् ॥ ६८ ॥ भो भोः करीन्द्र दिवसानि कियन्ति तावदस्मिन्मरौ समतिवाहय कुत्रचित्त्वम् । रेवाजलैर्निजकरेणुकरप्रयुक्तैर्भूयः शमं गमयितासि निदाघकाले ॥ ६९ ॥ दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ ७० ॥ लाङ्गूलचालनमधश्चरणावपातं भूमौ निपत्य वदनोदरदर्शनं च । श्वा पिण्डदस्य कुरुते गजपुंगवस्तु धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ७१ ॥ गण्डस्थले हि मदवारिजलौघलुब्धमत्तभ्रमद्भ्रमरपादतलाहतोऽपि । कोपं न गच्छति नितान्तबलोऽपि नागस्तुल्ये बले हि बलवान्परिकोपमेति ॥ ७२ ॥

१ सिंहम्. २ क्रीडाम्. ३ मज्जनं कुरु. ४ मरुदेशे. ५ यापय. ६ दानोदकार्थिनः. ७ प्रफुल्लकमलवने. ८ पुच्छविक्षेपणम्. ९ गजश्रेष्ठः.

न स्वां करेणुमपि नापि निजान्किशोरान्नात्मानमेष परिशोचति वारणेन्द्रः । दावाग्निमग्नतनुरत्र यथोपसन्नान्दानार्थितो मधुकरानधिरूढभावान् ॥ ७३ ॥ दानं[१] ददत्यपि जलैः[२] सहसाधिरूढे[३] को विद्यमानगतिरासितुमुत्सहेत[४] । यद्दन्तिनः कटकटाहतटान्मिमङ्क्षोर्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥ ७४ ॥ न गृह्णाति ग्रासं नवकमलकिञ्जल्किनि जले न पङ्कैराह्लादं व्रजति बिसभङ्गार्धशकलैः । ललन्तीं प्रेमार्द्रामपि विषहते नान्यकरिणीं स्मरन्दावभ्रष्टां हृदयदयितां वारणपतिः ॥ ७५ ॥ गले पाशस्तीव्रश्चरणयुगले गाढनिगडो दृढं स्कन्धे बन्धः शिरसि सृणिपातः खरतरः । नरः स्कन्धारूढो बत मरणयोग्येऽपि विषये न जानीमोऽस्त्यर्थे द्विरद वद कस्मात्तव मदः ॥ ७६ ॥ निषेवन्तामेते वृषमहिषमेषाश्च हरिणा गृहा क्षुद्राणांणि कतिपयतृणैरेव सुखिनः । गजानामास्थानं मदसलिलजम्बालितभुवां तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥ ७७ ॥ न कुर्याः प्राखर्यं किमपि करिपोत प्रतिभिया हरीणां हेलेयं यदिह बहुवेलं विहरसि । अकस्मादेतेषां कुटिलदृशि रोषस्पृशि मनाङ्निरर्थं भाविन्यो मदकरिदरिद्रा वनभुवः ॥ ७८ ॥ जहीहि गुरुगर्जितं विजहि शुण्डया सीत्कृतं परिश्रम शनैर्वनं किमु गजेन्द्र गर्वायसे । यथा न किल केसरी गिरिदरीषु निद्रां त्यजन्विमूर्च्छयति जृम्भया सुभग तावकीनं मनः ॥ ७९ ॥ रे चाञ्चल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुलामेताम्बुधिगामिनीं व्यवसिताः संगाहितुं वा कथम् । अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो यद्वावेव रसातलं पुनरसौ यातो गजग्रामणीः ॥ ८० ॥ नीवार[११]प्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे पीतं येन सरोजपत्रपुटके होमावशेषं पयः । तं दृष्ट्वा मदमन्थरालिवलयव्यालुप्तगण्डं गजं सोत्कण्ठं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥ ८१ ॥ कर्णे चामरचारुकम्बुकलिकाः कण्ठे मणीनां गणाः सिन्दूरप्रकरः शिरःपरिसरे पार्श्वान्तिके किङ्किणी । लब्धश्चेन्नृपवाहनेन करिणा बद्धेन भूषाविधिस्तत्किं भूधरधूलिधूसरतनुर्मान्यो न वन्यः करी ॥८२॥ पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालाङ्कुरास्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः । धिक्तस्यैव जलानि पङ्किलयतः पाथोजिनीं मश्नतो मूलान्युत्खनतः करीन्द्र भवतो लज्जापि नो जायते ॥ ८३ ॥ तापो नापगतस्तृषा न च कृशा धौता न धूली तनोर्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा । दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी प्रारब्धो मधुपैरकारणमहो झाङ्कारकोलाहलः ॥ ८४ ॥ नाभूवन्भुवि यस्य कुत्रचिदपि स्पर्धाकराः कुञ्जराः सिंहेनापि न लङ्घिता किमपरं यस्योद्धता पद्धतिः । कष्टं सोऽपि कदर्थ्यते[१] करिवरः स्फारारवैः फेरवैरापातालगभीरपङ्कपटलीमग्नोऽद्य भग्नोद्यमः[२] ॥ ८५ ॥ पादाघातविघूर्णिता वसुमती त्रासाकुलाः पक्षिणः पङ्काङ्कानि सरांसि गण्डकषणक्षोददक्षताः शाखिनः । प्राप्येदं करिपोतकैर्विधिवशाच्छार्दूलशून्यं वनं तत्तन्नाम कृतं विशृङ्खलतया वक्तुं न यत्पार्यते ॥ ८६ ॥ आरामोऽयमनर्गलेन बलिना भग्नः समग्रो मयेत्यन्तः संभृतहर्षवर्धितमदोदग्रः किमुन्माद्यसि । मातङ्ग प्रतिवर्षमेव भवतो भावी निदाघज्वरस्तत्रापि प्रतिकारमर्हसि सखे सम्यक्समालोचितुम् ॥ ८७ ॥ कौपं वारि विलोक्य वारणपते किं विस्मितेनास्यते प्रायो भाजन[३]मस्य संप्रति भवांस्तत्पीयतामादरात् । उन्मज्जच्छफरीपुलिन्द[४]ललनापीनस्तनास्फालनस्फारीभूतमहोर्मिनिर्मलजला दूरेऽधुना नर्मदा ॥ ८८ ॥ नो मन्ये दृढबन्धनात्क्षतमिदं नैवाङ्कुशाघातनं स्कन्धारोहणताडनात्परिभवं नैवान्यदेशागमम् । चिन्तां मे जनयन्ति चेतसि यथा स्मृत्वा स्वयूथ्यान्वने सिंहत्रासितभीतभीरुकलभा[५] यास्यन्ति कस्याश्रयम् ॥ ८९ ॥ पत्युर्यत्पतितावशेषकवलग्रासेन वृत्तिः कृता पीतं यच्च करावगाहकलुषं तत्पीतशेषं पयः । प्राणान्पूर्वतरं विहाय तदिदं प्रासं करिण्या फलं यद्वन्धव्रणकातरस्य करिणः क्लिष्टं न दृष्टं मुखम् ॥ ९० ॥ क्रीडाकारि तडागवारिणि गतातङ्कं न पङ्केरुहैर्वल्ली काचन शल्लकीतरुगता नाकर्षिता हर्षतः । नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना दंष्ट्राभिर्विकटाननः शिव शिव व्यालोकि पञ्चाननः ॥ ९१ ॥ सान्द्रामोदवतीः स्वकीयवसतीः पङ्केरुहाणां ततीस्त्यक्त्वायं भ्रमरः करीन्द्र भवतामभ्याशमभ्यागतः । एतच्चेतसि संप्रधार्य जगतीविख्यातदानैस्तथा युष्माभिः क्रियतां यथोपरमते हास्याय नास्यागमः ॥ ९२ ॥ त्यक्तो विन्ध्यगिरिः पिता भगवती माता च रेवोज्झिता त्यक्ताः स्नेहनिबद्धबन्धुरधियस्तुल्योदया दन्तिनः । त्वल्लोभान्ननु हस्तिनि प्रतिदिनं बन्धाय दत्तं वपुस्त्वं दूरीक्रियसे लुठन्ति च शिरःपीठे कठोराङ्कुशाः ॥ ९३ ॥ स्पर्धन्तां मुखमेव कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा ग्राम्या वा वनवासिनो मदजलप्र-

१ वितरणम्; पक्षे,-मदजलम्. २ उदकैः; पक्षे,-डलयोरभेदात् जडैः. ३ आक्रान्ते. ४ सगतिकः; पक्षे,-बुद्धिमान्. ५ स्थातुम्. ६ शक्नुयात्. ७ गण्ड. ८ मज्जनं कर्तुमिच्छोः. ९ शीघ्रम्. १० अङ्कुशपातः. ११ तृणधान्यानि.

१ धिक्क्रियते. २ हतप्रयत्नः. ३ पात्रम्. ४ शबरस्त्री. ५ करिशावकाः.

स्निग्धगण्डस्थलाः । आः कालस्य कुतूहलं शृणु सखे प्राचीनपालीमलैः प्रायः स्निग्धकपोलपालिरधमः कोलोऽपि संस्पर्धते ॥ ९४ ॥ यत्प्रत्यग्रदलावलीकवलनैर्जातोऽसि शैलोपमो यच्छायासु कदर्थितोऽसि न कदाप्यर्कांशुभिः कर्कशैः । घोराघातकिरातपत्रिपतने यैर्वारबाणायितं तन्मातङ्ग मदान्ध पाटयसि किं विन्ध्याटवीपादपान् ॥ ९५ ॥ ऊर्णा नैष दधाति नापि विषयो वाहस्य दोहस्य वा तृप्तिर्नास्य महोदरस्य बहुशो घासैः पलालैरपि । हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते को गृह्णाति कपर्दकैरमुमिति ग्राम्यैर्गजो हस्यते ॥ ९६ ॥ घासग्रासं गृहाण त्यज करिकलभ प्रीतिबन्धं करिण्याः पाशग्रन्थिव्रणानामविरलमधुना देहि पङ्कानुलेपम् । दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तदृश्या रेवातीरोपकण्ठच्युतकुसुमरजोधूसरा विन्ध्यपादाः ॥ ९७ ॥ यूथान्यग्रे गतानि प्रबलबलभृतो बद्धवैरा मृगेन्द्रा मूलादाकृष्यमाणाः सपदि तटरुहो भूरुहा निष्पतन्ति । दृष्ट्वा हृष्यन्ति हन्त प्रतिदिनमखिला भिल्लपल्लया अधीशा हस्तालम्बाय केषां कलयतु वदनं पङ्कमग्नः करीन्द्रः ॥ ९८ ॥

## मृगः

इह किं कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि । तृणधन्वा तृणबाणस्तृणघटितः कपटपुरुषोऽयम् ॥ ९९ ॥ तृणमुखमपि न खलु त्वां त्यजन्ति हे हरिण वैरिणः शबराः । यशसैव जीवितमिदं त्यज योजितशृङ्गसङ्ग्रामः ॥ १०० ॥ विद्धा मृगी व्याधशिलीमुखेन मृगस्तु तत्कातरवीक्षितेन । विहाय देहं विगतव्यथैका परस्य जीवावधिराधिरासीत् ॥ १०१ ॥ कति कति न मदोद्धताश्चरन्ति प्रतिशिखरं प्रतिकाननं कुरङ्गाः । क्वचिदपि पुनरुत्तमा मृगास्ते मदयति यन्मद एव मेदिनीशान् ॥ १०२ ॥ अयि कुरङ्गि[1] तपोवनविभ्रमादुपगतासि किरातपुरीमिमाम् । इह न पश्यसि दारय मारय ग्रस पिबेति शुकानपि जल्पतः ॥ १०३ ॥ अयि कुरङ्गि तुरङ्गमविक्रमे त्यज वनं जवनं गमनं कुरु । इह वने विचरन्ति हि नायकाः सुरभिलोहितलोहितसायकाः ॥ १०४ ॥ सेयं स्थली वनतृणाङ्कुरजालमेतत्सेयं मृगीति हृदि जातमुदः कुरङ्गः । नैवं तु वेत्ति यदिहान्तरितो लताभिरायाति सज्जितकठोरशरः किरातः ॥ १०५ ॥ रोमन्थमारचय मन्थरमेत्य निद्रां मुञ्च श्रमं तदनु संचर रे यथेच्छम् । दूरे स पामरजनो मुनयः किलैते निष्कारणं हरिणपोत बिभेषि कस्मात् ॥ १०६ ॥ एणीगणेषु गुरुगर्वनिमीलिताक्षः किं कृष्णसार खलु खेलसि काननेऽस्मिन् । सीमामिमां कलय भिन्नकरीन्द्रकुम्भमुक्तामयीं हरिविहारवसुंधरायाः[1] ॥ १०७ ॥ कस्तूरिकां हरिण मुञ्च वनोपकण्ठं मा सौरभेण ककुभः सुरभीकुरुष्व । आस्तां यशो ननु किरातशराभिघातात्त्रातापि हन्त भविता भवतो दुरापः ॥ १०८ ॥ द्रुततरमितो गच्छ प्राणैः कुरङ्ग वियुज्यसे किमिति वलितग्रीवं स्थित्वा मुहुर्मुहुरीक्षसे । विदधति हतव्याधानां ते मनागपि नार्द्रतां कठिनमनसामेषामेते विलोचनविभ्रमाः ॥ १०९ ॥ स्थलीनां दग्धानामनुरि मृगतृष्णामनुसरंस्तृषार्तः सारङ्गो विरमति न खिन्नेऽपि मनसि । अजानानस्तत्त्वं न स मृगयतेऽन्यत्र सरसीमभूमौ प्रत्याशा न च फलति विघ्नं च कुरुते ॥ ११० ॥ पुरो रेवापारे गिरिरतिदुरारोहशिखरः सरः सव्ये वामे दवदहनदाहव्यतिकरः । धनुष्पाणिः पश्चाच्छबरहतको धावतितरां न यातुं न स्थातुं हरिणशिशुरेष प्रभवति ॥ १११ ॥ अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला पृष्ठे वह्निर्दहति नितरां संनिधौ सारमेयाः[2] । एणी गर्भादलसगमना बालकै रुद्धपादा चिन्ताविष्टा वदति हि मृगं किं करोमि क्व यामि ॥ ११२ ॥ सौरभ्येण त्रिभुवनमनोहारिणा काननेऽस्मिन्सत्कस्तूरीहरिण भवता वासितो दिग्विभागः । तस्यैतत्ते फलमुपगतं पत्रिभिर्लुब्धकानां विद्धः प्राणांस्त्यजसि न गुणः श्रेयसे निर्गुणेषु ॥ ११३ ॥ अल्पीयःस्खलनेन यत्र पतनं कृच्छ्रेण यत्रोन्नतिर्द्वारे वेत्रलतावितानगहने कष्टः प्रवेशक्रमः । हे सारङ्ग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना किं भूभृत्कटकस्थितिव्यसनिना व्यर्थं खुराः शातिताः ॥ ११४ ॥ सारङ्गो न लतागृहेषु रमते नो पांसुले भूतले नो रम्यासु वनोपकण्ठहरितच्छायासु शीतास्वपि । तामेवायतलोचनामनुदिनं ध्यायन्मुहुः प्रेयसीं शैलेन्द्रोदरकन्दरेषु गतधीः शृङ्गारिवेषः स्थितः ॥ ११५ ॥ आः कष्टं वनवाससाम्यकृतया सिद्धाश्रमश्रद्धया पल्लीं बालकुरङ्ग संप्रति कुतः प्राप्तोऽसि मृत्योर्मुखम् । यत्रानेककुरङ्गकोटिकदनक्रीडोल्लसल्लोहितस्रोतोभिः परिपूरयन्ति परिखासुद्दामराः पामराः ॥ ११६ ॥ स्वच्छन्दं हरिणेन या विहरता दैवात्समासादिता भङ्गप्रस्रुतदुग्धबिन्दुमधुरा शालेर्नवा मञ्जरी । निःश्वासानलदग्धकोमलतृणप्रख्यापितान्तर्व्यथस्तामेव प्रतिवासरं मुनिरिव ध्यायन्वने शुष्यति ॥ ११७ ॥ त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली विश्रान्तिस्थितिहेतवो न गणिता बन्धूपमाः पादपाः । बालापत्यवियोगकातरसुखी त्यक्तार्धमार्गे मृगी मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ ११८ ॥ यद्वक्रं मुहुरीक्षसे न धनिनां ब्रूषे न

१ धान्यतरुभिः. २ हे हरिणि. ३ तपोवनभ्रान्त्या. ४ चर्वितस्य पुनश्चर्वणम्. ५ हरिणीसंघेषु. ६ जानीहि.

१ सिंहविहारस्थानस्य. २ श्वानः.

चाटून्[1]मृषा नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि । का[2]ले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ ११९ ॥ नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलो नाप्युच्चावचभीतिरस्ति कुहचिन्नो वागुरा भङ्गुराः । पर्यालोच्य कुरङ्गकेण विहितो नक्षत्रनाथाश्रयो नो जानाति यदत्र दास्यति विधिः स्वर्भानुदन्तव्रणम् ॥ १२० ॥ व्योमार्धे ज्वलितो रविः कवलितं दावानलैः काननं धूम्याभिर्न दिशः स्फुरन्ति परितः पन्थाः शिलादन्तुरः । इत्थं लोहितसिक्तसृक्कणि यथाप्राणं मृगे धावति व्याधेनापि शरासने करुणया नारोपितः सायकः ॥ १२१ ॥ भुक्त्वा भव्यतृणानि नव्यसलिलान्यापीय वापीतलान्निःशङ्कं परिशील्य शीतलतरून्रोमन्थमभ्यस्यति । या सैवाद्य मृगी मृगादनमुखप्राप्ता शिशुं शोचते तद्वेधा बहुधा विपद्भिरचने बीजानि नापेक्षते ॥ १२२ ॥ पाशक्षुण्णखुरस्य बाणपतनप्रव्यक्तरक्तच्छटाच्छन्नाङ्गस्य दवाग्निदाहविकलस्यासेदुषोऽप्याश्रमम् । धिग्दैवं विषमा मृगस्य दिवसाः सर्गानुकम्पामयो मा भैषीरिति भाषणेऽपि यदभूद्वाचंयमोऽयं मुनिः ॥ १२३ ॥

### करभः

वपुर्विषमसंस्थानं कर्णज्वरकरो रवः । क[3]रभस्याशुगत्यैव छादिता दोषसंहतिः ॥ १२४ ॥ दासेरको रसत्येष युक्तं भारेऽधिरोहति । उत्तार्यमाणोऽपि पुनर्यत्तत्र किमु कुर्महे ॥ १२५ ॥ तुभ्यं दासेर दासीयं बदरी यदि रोचते । एतावता हि किं द्राक्षा न साक्षादमृतप्रिया ॥ १२६ ॥ दुःप्रापमम्बु पवनः परुषोऽतितापी छायाभृतो न तरवः फलभारनम्राः । इत्थं सखे करभ वच्मि भवन्तमुच्चैः का संगतिः खलु मरौ रमणीयतायाः ॥ १२७ ॥ अस्याननस्य भवतः खलु कोटिरेषा कण्टारिका यदि भवेदविशीर्णपर्णा । योग्या कथं करभ कल्पतरोर्लतायास्ते पल्लवा विमलविद्रुमभङ्गभाजः ॥ १२८ ॥ रूक्षं वपुर्न च विलोचनहारि रूपं न श्रोत्रयोः सुखदमारटितं कदापि । इत्थं न साधु तव किंचिदिदं च साधु तुच्छे रतिः करभ कण्टकिनि द्रुमे यत् ॥ १२९ ॥ कुमुदशबलैः फुल्लाम्भोजैः सरोभिरलंकृतां मरकतमणिश्यामां शष्पैर्विहाय वनस्थलीम् । स्मरति करभो यद्वृक्षाणां चरन्मरुधन्वनां परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥ १३० ॥ करभदयिते योऽसौ पीलु[6]स्त्वया मधुलुब्धया व्यपगतघनच्छायस्त्यक्तो न सादरमीक्षितः । चलकिसलयैः सोऽपीदानीं प्ररूढनवाङ्कुरः करमदयि तावृन्दैरन्यैः सुखं परिभुज्यते ॥ १३१ ॥ करभदयिते यत्तत्पीतं सुदुर्लभमेकदा मधु वनगतं तस्यालाभे विरौषि किमुत्सुका । कुरु परिचितैः पीलोः पत्रैर्धृतिं मरुगोचरे जगति सकले कस्यावासिः सुखस्य निरन्तरा ॥ १३२ ॥ यस्मिन्नुच्चैर्विषमगहनान्तर्गता स्वादुवल्ली स्वेच्छं भुक्ता सरलितगलेनात्मचेतोनुलग्ना । तत्तारुण्यं करभ गलितं कुत्र ते प्राग्विलासा यत्स्वाधीनं यदपि सुलभं तेन तुष्टिं विधेहि ॥ १३३ ॥ चिन्तां मुञ्च गृहाण पल्लवमिदं प्लक्षस्य शालस्य वा गाङ्गस्यास्य जलस्य चन्द्रवपुषो गण्डूषमेकं पिब । जीवन्द्रक्ष्यसि ताः पुनः करभ हे दासेरकीया भुवो रम्याः पीलुशमीकरीरबदरीकूजत्कपोताकुलाः ॥ १३४ ॥ यस्यासीन्नवपीलुपत्रबदरग्रासोऽपि संतुष्टये दीर्घाध्वन्यनुगम्यते न पदवी यस्य स्वयूथ्यैरपि । सोऽयं संप्रति याति बालकरभः क्षीणोद्यमः क्षामतां मन्ये नूनमनेन दैवहतकेनास्वादितं भ्रामरम् ॥ १३५ ॥ पीलूनां हि फलं कषायरहितं रोमन्थयित्वा मरौ शाखाग्रं यदखादि चारु करभीवक्त्रार्पितं प्रेमतः । तत्स्मृत्वा करभेण खेदविधुरं दीर्घं तथा कूजितं प्राणानामभवत्तदेव सहसा प्रस्थानतूर्यं यथा ॥ १३६ ॥ यस्याः संभृतमालवालवलयं भूपालशृङ्गारिणीभृङ्गारोदरविप्रलम्भविधुरैर्नीरैः सुधाबन्धुभिः । तामेतां मृदुलप्रवाललिलितां द्राक्षालतामारटन्नुद्ग्रीवः प्रकटीकृतार्धदशनो दासेरकः कृन्तति ॥ १३७ ॥

### रासभः

रे रे रास[1]भ वस्त्रभारवहनात्कुग्रासमश्नासि किं राजाश्वावसथं प्रयाहि च[3]णकाभ्यूषान्सुखं भक्षय । सर्वान्पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिता राजा तैरुपदिष्टमेव मनुते सत्यं त[4]टस्थाः परे ॥ १३८ ॥

### वृषभः

नास्य भारग्रहे शक्तिर्न च वाहगुणः क्वचित् । देवागारे बलीवर्दस्तथाप्यश्नाति भोजनम् ॥ १३९ ॥ गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते । असंजातकिणस्कन्धः सुखं स्वपिति गौर्बली ॥ १४० ॥ जाल्मो गुरुः सुधृष्टो वामेतरचरणभेद उपदेशः । ख्यातिर्गुणधवल इति भ्रमसि सुखं वृषभ रथ्यासु ॥ १४१ ॥ अ[5]नसि सीदति सै[6]कतवर्त्मनि प्रचुरभारभरक्षपितोक्षके । गुरुभरोद्धरणोद्धुरकन्धरं स्मरति सारथिरेष धुरंधरम् ॥ १४२ ॥ एतानि बालधवल प्रविहाय कामं गोष्ठाङ्गणे तरलतर्णकचेष्टितानि । स्कन्धं निधेहि धुरि पूर्वधुरीणमुक्ते नेतव्यतामुपगतोऽस्ति तवैव भारः ॥ १४३ ॥ गुरुर्नायं भारः क्वचिदपि न पन्थाः स्थपुटितो न ते कुण्ठा शक्तिर्वहनमपि तेऽङ्गे न विकलम् । इह त्वङ्गे नान्यस्तव गुणसमानस्तदधुना धुनानेन स्कन्धं धवल किमु मुक्तः पथि भरः ॥ १४४ ॥ मार्गे

१ मिथ्या. २ क्षुधासमये. ३ उष्ट्रस्य. ४ शीघ्रगमनेन. ५ बालतृणैः. ६ पीलुर्वृक्षः. ७ पल्लवः.

१ गर्दभ. २ अश्वशालाम्. ३ अपक्वचणकान्. ४ उदासीनाः. ५ शकटे. ६ बालुकामयमार्गे.

कर्दमदुर्गमे जलभृते गर्ताशतैराकुले खिन्ने शाकटिके भरेऽतिविषमे दूरं गते रोधसि। शब्दे नैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनीमीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को धुरम् ॥ १४५ ॥ दन्ताः सप्त चलं विषाणयुगलं पुच्छाञ्चलः कर्बुरः कुक्षिश्चन्द्रकितो वपुः कुसुमितं संघूर्णितं चेष्टितम्। अस्मिन्दुष्टवृषे मृषामितगुणग्रामानभिज्ञात्मनो ग्रामीणस्य तथापि चेतसि चिरं धुर्यभ्रमः स्फूर्जति ॥ १४६ ॥ केषांचिद्धवलाश्चिरं निवसिताश्चित्ते परेषां पुनर्नीलो वा कपिलोऽथवा वरवृषो रक्तोऽथवा मेचकः। ग्रामीणैरवधीरितोऽपि शिथिलस्कन्धोऽप्यनुच्चैःश्रवाः स्वान्ते मे परतन्त्रतुन्दिलतनुर्जागर्त्ययं कर्बुरः ॥ १४७ ॥ न ध्वानं कुरुषे न यासि विकटं नोच्चैर्वहस्याननं दर्पाच्चोल्लिखसि क्षितिं खुरपुटैर्नावज्ञया वीक्षसे। किंतु त्वं वसुधातलैकधवलः स्कन्धाधिरूढे भरे तीराण्युच्चतटीविटङ्कविषमाण्युल्लङ्घयन् क्षीयसे ॥ १४८ ॥ यस्यादौ व्रजमण्डनस्य वहतो गुर्वीं धुरं धैर्यतो धौरेयैः प्रगुणीकृतो न युगपत्स्कन्धः समस्तैरपि। तस्यैवं श्लथकम्बलस्य धवलस्योत्थापने सांप्रतं द्वैङ्गेऽत्रैव जरावसादिततनोर्गोः पुण्यमुद्घोष्यते ॥ १४९ ॥

**कपिः**

हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः। लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम् ॥ १५० ॥ कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः। अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥१५१॥ वृक्षान्दोलनमद्य ते क्व नु गतं नर्म स्वयूथस्य वा यूकान्वेषणरोषसौख्यबहुलाश्चेष्टा मुखोत्थाः क्व ताः। क्वारण्ये फलपूर्णगह्वकुहरस्थान्येषु ता भीषिका भीतः संप्रति कौशिकाद्गलवलद्व्यालः कपे नृत्यसि ॥ १५२ ॥

**वराहः**

सर्वलोकपरितोषकारिणि स्वर्धुनीविमलवारिणि स्थिते। पूतिगन्धवति पल्वलोदके सूकरः सुखमतीव मन्यते ॥१५३॥ आकर्ण्य गर्जितरवं घनगर्जतुल्यं सिंहस्य यान्ति वनमन्यदिशा भयार्ताः। तत्रैव पौरुषनिधिः स्वकुलेन सार्धं दर्पोद्धुरो वसति वीतभयो वराहः ॥ १५४ ॥

**आदिवराहः**

निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां कसेरुस्थलीं जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान्। दंष्ट्रायां प्रलयार्णवोर्मिसलिलैराप्लावितायामियं यस्या एव शिशोः स्थिता विपदि भूः सा पोत्रिणी पुत्रिणी ॥ १५५ ॥

**श्वा**

पिब पयः प्रसर क्षितिपान्तिकं कलय कांचन काञ्चनशृङ्खलाम्। इदमवद्यतमं हि यदीहसे भषक संप्रति केसरिणस्तुलाम् ॥ १५६ ॥

**वृश्चिकः**

विषभारसहस्रेण गर्वं नायाति वासुकिः। वृश्चिको बिन्दुमात्रेणाप्यूर्ध्वं वहति कण्टकम् ॥ १५७ ॥

**भेकः**

दिव्यं चूतरसं पीत्वा गर्वं नो याति कोकिलः। पीत्वा कर्दमपानीयं भेको रटरटायते ॥ १५८ ॥ गङ्गादीनां सकलसरितां प्राप्य तोयं समुद्रः किंचिद्गर्वी न भवति वपुर्दिव्यरत्नाकरोऽपि। एको भेकः परममुदितः प्राप्य गोष्पादनीरं को मे को मे रटति बहुधा स्पर्धया विश्वमुच्चैः ॥ १५९ ॥

**जम्बुकः**

उदस्योच्चैः पुच्छं शिरसि निहितं जीर्णजटिलं यदृच्छाव्यापन्नद्विपपिशितलेशाः कवलिताः। गुहागर्ते शून्ये सुचिरमुषितं जम्बुक सखे किमेतस्मिन्कुर्मो यदसि न गतः सिंहसमताम् ॥ १६० ॥

**सर्पः**

तावद्गर्जन्ति मण्डूकाः कूपमाश्रित्य निर्भयाः। यावत्करिकराकारः कृष्णसर्पो न विद्यते ॥१६१॥ यस्मै ददाति विवरं भूमिः फूत्कारमात्रभीतेव। आशीविषः स दैवाद्गौम्बिकरण्डे स्थितिं सहते ॥१६२॥ मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलात्मत्वचो निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्रचर्येदृशी। अन्यत्रानृजुवर्त्मता द्विरसना वक्त्रे विषं वीक्षणं सर्वामङ्गलसूचकं कथय भो भोगिन्सखे किं न्विदम् ॥ १६३ ॥

**शेषः**

अनेके फणिनः सन्ति भेकभक्षणतत्पराः। एक एव हि शेषोऽयं धरणीधरणक्षमः ॥ १६४ ॥ युक्तोऽसि भुवनभारे मा वक्रां वितनु कन्धरां शेष। त्वय्येकस्मिन्दुःखिनि सुखितानि भवन्ति भुवनानि ॥ १६५ ॥

---

## जलचरान्योक्तयः

**मत्स्यः**

क्षारं वारि न चिन्तितं न गणिताः क्रूराश्च नक्रादयश्चञ्चद्वीचि कदम्बडम्बरमिलत्त्रासोऽपि दूरीकृतः। मध्येऽम्भोनिधि मत्स्यरङ्क भवता झम्पः कृतो लीलया संपत्तिर्मकरार्जनं विपदिह प्राणप्रयाणावधिः ॥ १ ॥

**रोहितः**

अगाधजलसंचारी न गर्वं याति रोहितः। अङ्गुष्ठोदकमात्रेण शफरी फर्फरायते ॥ २ ॥

**राघवः**

यस्मिन्वेल्लति सर्वतः परिचलत्कल्लोलकोलाहलैर्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे। सोऽयं तुङ्गतिमिंगिलाङ्गकवलीकारक्रियाकोविदः क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥ ३ ॥

---

१ श्वभ्रम्. २ शकटस्वामिनि. ३ नगरे. ४ दुर्गन्धवति. ५ अल्पजलाशयोदके. ६ विषमोन्नतदेशाम्. ७ कन्दविशेषवतीम्. ८ पङ्कसंमिश्रम्.

१ सर्पः. २ गारुडिककरण्डे. ३ आत्मभोगकञ्चुकस्य. ४ वर्तनम्. ५ वक्रमार्गता. ६ द्विरावृत्ता रसना-रसनाद्वयमित्यर्थः.

### कूर्मः

भ्रमति गिरिराट् पृष्ठे गर्जत्युपर्यपि सागरो दहति विततज्वालाजालो जगन्ति विषानलः। स तु विनिहितग्रीवाकाण्डः कटाहकुटोदरे स्वपिति भगवान्कूर्मो निद्राभरालसलोचनः ॥ ४ ॥ पुत्रिण्यः कति नात्र सन्ति भुवनेऽभूवन्किय-न्त्योऽथवा सौभाग्यैकमठी तथादिकमठी स्त्रीषु प्रशंसास्पदम्। भग्ने भोगिनि भङ्गुरेषु करिषु भ्रष्टोत्सवे दंष्ट्रिणि क्षोणीं साहसिकाग्रणीस्तुलयितुं जागर्ति यस्याः सुतः ॥ ५ ॥

---

### वृक्षान्योक्तयः

अहो एषां वरं जन्म सर्वप्राण्युपजीवनम्। धन्या महीरुहा येभ्यो निराशा यान्ति नार्थिनः ॥ १ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः। गन्धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥ २ ॥ प्रेत्यग्रैः पत्रनिचयैस्तरुर्यैरेव शोभितः। जहाति जीर्णांस्तानेव किं वा चित्रं कुजन्मनः ॥३॥ छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे। फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ४ ॥ परोपसर्पणानन्तचिन्तानलशिखाशतैः। अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥ ५ ॥ मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी। फलसंदोहगुरुणा तरुणा किं प्रयोजनम् ॥ ६ ॥ शाखाशतचितवियतः सन्ति कियन्तो न कानने तरवः। परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः ॥ ७ ॥ तीव्रो निदाघसमयो बहुपथिकजनश्च मारवः पन्थाः। मार्गस्थिततरुरेकः कियतां संतापमपहरति ॥ ८ ॥ हिमसमयो वनवह्निर्जवनः पवनस्तडिल्लताविभवः। हन्त सहन्ते यावत्तावद्द्रुम कुरु परोपकृतिम् ॥ ९ ॥ अध्वन्यध्वनि तरवः पथि पथि पथिकैरुपास्यते छाया। विरलः स कोऽपि विटपी यमध्वगो गृहगतः स्मरति ॥ १० ॥ कश्चिन्नवं पल्लवमाददाति कश्चित्प्रसूनानि फलानि कश्चित्। परं करालेऽस्य निदाघकाले मूले न दाता सलिलस्य कश्चित् ॥ ११ ॥ व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतान्याकर्ण्य श्रुतिमदजाल्ययातिरेकात्। आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥ १२ ॥ भुक्तानि यैस्तव फलानि पचेलिमानि क्रोडस्थितैरहह वीतभयैः प्रसुप्तम्। ते पक्षिणो जलरयेण विकृष्यमाणं पश्यन्ति पादप भवन्तममी तटस्थाः ॥ १३ ॥ धत्ते भरं कुसुमपत्रफलावलीनां धर्मव्यथां वहति शीतभवां रुजं च। यो देहमर्पयति चान्यमुखस्य हेतोस्तस्मै वदान्यगुरवे तरवे नमस्ते ॥ १४ ॥ इहोद्याने संप्रत्यहह परिशिष्टाः क्रमवशादमी वल्मीकास्ते भुजगकुललीलावसतयः। गतास्ते विस्तीर्णस्तबकभरसौरभ्यलहरीपरीतव्योमानः प्रकृतिगुरवः केऽपि तरवः ॥ १५ ॥ विपन्नं पद्मिन्या मृतमनिमिषैर्यातमलिभिः खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः। दशां दीनां नीते सरसि विषमग्रीष्मदिवसैः कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ १६ ॥ इयं बाला वल्ली मृदुकिसलयं तापविलयं घनच्छायं शालं वनमतिविशालं परिगताः। परं त्वस्याभ्यन्तर्गरललवभक्षीकृतवनं भुजंगं प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥ १७ ॥ यज्जातोऽसि चतुष्पथे घनलसच्छायोऽसि किं छायया संयुक्तः फलितोऽसि किं यदि फलैः पूर्णोऽसि किं संनतः। हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षणक्षोभामोट्टनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ १८ ॥ छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः। विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एकस्तरुर्यत्राङ्गीकृतसत्त्वसंप्लवभरे भग्नापदोऽन्ये द्रुमाः ॥ १९ ॥ भुक्तं स्वादुफलं कृतं च शयनं शाखाग्रजैः पल्लवैस्त्वच्छायापरिशीतलं सुसलिलं पीतं व्यपेतश्रमैः। विश्रान्ताः सुचिरं परं सुमनसः प्रीतिः किमत्रोच्यते त्वं सन्मार्गतरुर्वयं च पथिका यामः पुनर्दर्शनम् ॥ २० ॥ पान्थाधार इति द्विजाश्रय इति श्लाघ्यस्तरूणामिति स्निग्धच्छाय इति प्रियो दश इति स्थानं गुणानामिति। पर्यालोच्य महातरो तव घनच्छायां वयं संश्रितास्त्वत्कोटरवासिनो द्विरसना दूरीकरिष्यन्ति नः ॥ २१ ॥ मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव। एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥ २२ ॥ ये पूर्वं परिपालिताः फलभरच्छायादिभिः प्राणिनो विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते सांप्रतम्। एताः संगतिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो यासां छेदनमन्तरेण पतितो नायं कुठारस्त्वयि ॥ २३ ॥ वृद्धिर्यस्य तरोर्मनोरथशतैराशावता प्रार्थिता जातोऽसौ सरसप्रकामफलदः सर्वाश्रितोपाश्रयः। नानादेशसमागतैरविदितैराक्रान्तमन्यैः खगैस्तं लब्धावसरोऽपि वृद्धशकुनिर्दूरे स्थितो वीक्षते ॥ २४ ॥ छायाभिः प्रथमं ततस्तु कुसुमैः पश्चात्फलैः स्वादुभिः प्रीणात्येव तरुः पथीति पथिकैः श्रान्तैः सुखं स्थीयते। को जानाति यदत्र कोटरगतः प्रत्यग्रहालाहलज्वालाजालकरालवक्त्रकुहरः कृष्णः फणी वर्तते ॥ २५ ॥ आमोदैर्मरुतो मृगाः किसलयैर्लम्बैस्त्वचा तापसाः पुष्पैः षट्चरणाः फलैः शकुनयो धर्मार्दिताश्छायया। स्कन्धैर्गन्धगजाश्च विश्रमरुजाः शश्वद्विभक्तास्त्वया प्राप्तस्त्वं द्रुम बोधिसत्त्वपदवीं सत्यं कुजाताः परे ॥ २६ ॥ रोलम्बै-

१ दिग्गजेषु. २ नूतनैः. ३ कुः पृथ्वी तस्या जन्म यस्य; पक्षे,—कुत्सितं जन्म यस्य. ४ समूहः. ५ मरुदेशसंबन्धी. ६ पक्वानि. ७ दानशौण्डानां गुरवे. ८ व्याप्तम्. ९ स्वभावतो महान्तः.

१ सर्पाः; राजपक्षे,—पिशुनाः सन्निवादयः. २ पुष्टाः.

र्निमितं गृहं विघटितं धूमाकुलैः कोकिलैर्मायूरैश्चलितं पुरैव रभसा कीरैरधीरैर्गतम् । एकेनापि सपल्लवेन तरुणा दावानलोपप्लवः सोढः को न विपत्सु मुञ्चति जनो मूर्धापि यो लालितः ॥ २७ ॥ एकस्त्वं मरुभूरुहेन्द्र विततैः शाखाशतैरञ्चितः पुष्प्यत्पुष्पफलान्वितैरमृदितैर्जीव्याः सहस्रं समाः । अश्रान्तं श्रमरुग्णपान्थजनतासर्वार्थनिर्वाहणं कस्त्वां सात्त्विकमन्तरेण भुवनं निर्मातु धर्माशयः ॥ २८ ॥ धत्से मूर्धनि दुःसहा दिनमणेरुद्दामधामच्छटाश्छायाभिः पथिकान्निदाघमथितान्पुष्णासि पुष्पैः फलैः । धैर्यं मुञ्चसि नैव येन भवता शाखाः सुविस्तारितास्तेनाशासु वनस्पते तव यशस्तोमः समुज्जृम्भते ॥२९॥ तीव्रोऽयं नितरां निदाघसमयः प्रोद्यत्प्रचण्डद्युतिर्मार्गो मारव एष तत्र पथिकाः संचारिणः कोटिशः । तेषां कश्चिदिहाश्रयस्तरुवरो दैवेन संपादितः सोऽप्येकः सुकृती करोतु कियतां संतापनिर्वापणम् ॥ ३० ॥

### कल्पद्रुमः

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः । को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ ३१ ॥ न मया रचितं तवालवालं पयसा वा विहितस्तवाभिषेकः । अयि कल्पतरो परोपकारे भवतो विश्वविलक्षणः प्रकारः ॥ ३२ ॥ किं न द्रुमा जगति जाग्रति लक्षसंख्यास्तुल्योपनीतपिककाकफलोपभोगाः । धन्यस्तु कल्पविटपी फलसंप्रदानं कुर्वन्सदैव विबुधानमृतैकवृत्तीन् ॥ ३३ ॥ स्वर्णैः स्कन्धपरिग्रहो मरकतैरुल्लासिताः पल्लवा मुक्ताभिः स्तबकश्रियो मधुलिहां वृन्दानि नीलोत्पलैः । संकल्पानुविधायि यस्य फलितं कस्तस्य धत्ते तुलां धिग्जातु द्रुमसंकथासु यदयं कल्पद्रुमोऽपि द्रुमः ॥ ३४ ॥ औदार्यं भुवनत्रयेऽपि विदितं [1]संभूतिरम्भोनिधे[2]र्वासो [3]नन्दनकानने [4]परिमलो गीर्वाणचेतोहरः । एवं दातृगुणोत्करः सुरतरोः सर्वोऽपि लोकोत्तरः स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥ ३५ ॥ न द्वारि द्विरदावली न परितो वानायुजश्रेणयः किंवा शौक्तिकमौक्तिकैर्मृगदृशां तारा न हारावलिः । हे कल्पद्रुम दूरतोऽस्तु भवतः सेवाभवं वैभवं तुष्यामि त्वयि तावतापि यदि न स्मेरा भवन्ति द्विषः ॥ ३६ ॥ जन्माभूदुदधौ विधौ सहजता वृन्दारकैर्वन्द्यता तत्तत्कामफलाय शक्तिरतुला यस्यास्ति वश्यानिशम् । विश्रामाय चिराय कल्पलतिका भूयोऽयमालम्बते कस्त्वां स्तोतुमपि क्षमोऽस्ति तदपि त्वं जल्प कल्पद्रुम ॥ ३७ ॥

### पारिजातः

पारिजाततरुं यावन्न लभेत मधुव्रतः । भ्रमणं तावदेवास्य कुञ्जे कुञ्जे तरौ तरौ ॥ ३८ ॥ परिमलसुरभितनभसो बहवः कनकाद्रिपरिसरे तरवः । तदपि सुराणां चेतसि निवसितमिव पारिजातेन ॥ ३९ ॥

१ संभवः. २ वसतिः. ३ इन्द्रवने. ४ आमोदः.

### चन्दनः

सन्त्येव लिखिताकाशा महीयांसो महीरुहः । तथापि [1]जनताचित्तानन्दनश्चन्दनद्रुमः ॥ ४० ॥ यद्यपि चन्दनविटपी विधिना फलकुसुमविवर्जितो विहितः । निजवपुषैव परेषां तथापि संतापमपहरति ॥ ४१ ॥ अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते । उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ ४२ ॥ [2]पाटीर तव [3]पटीयान्कः [4]परिपाटीमिमामु[5]रीकर्तुम् । यत्पिं[6]षतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ ४३ ॥ यैस्त्वं गुणगणवानपि सतां [7]द्विजिह्वै[8]रसेव्यतां नीतः । तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥ ४४ ॥ जनकः सानुविशेषो जातिः काष्ठं भुजंगमैः सङ्गः । स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम् ॥ ४५ ॥ मूलं भुजंगैः शिखरं [9]प्लवङ्गैः शाखा विहंगैः कुसुमानि भृङ्गैः । नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं सत्त्वभरैः समन्तात् ॥ ४६ ॥ कति न सन्ति महीषु महीरुहः सुरभिपुष्परसालफलालयः । सुरभयन्ति न केऽपि च भूरुहानिति यशोऽस्ति परं तव चन्दन ॥ ४७ ॥ धिक्चेष्टितानि परशो परिशोचनीयवालप्रवालमलयाद्रिरुहद्रुहस्ते । निर्भिद्यमानहृदयोऽपि महानुभावः स त्वन्मुखं पुनरभीः सुरभीकरोति ॥ ४८ ॥ कालागुरौ सुरभितातिशयेऽपि सङ्गादारभ्यते सुरभिताऽपरपादपेऽपि । पाटीर पाटवमिदं तव सङ्गिवातैस्तादात्म्यमेति कतरो न तरोः समूहः ॥ ४९ ॥ उपानीतं दूरात्परिमलमुपाघ्राय मरुता समायासीदक्षिन्मधुरमधुलोभान्मधुकरः । परो दूरे लाभः कुपितफणिनश्चन्दनतरोः पुनर्जीवन् यायाद्यदि तदिह लाभोऽयमतुलः ॥ ५० ॥ कान्ताकेलिं कलयतु तरुः कोऽपि कश्चित्प्रभूणामत्यानन्दं जनयतु फलैः कोऽपि लोकान्धिनोतु । धन्यं मन्ये मलयजमहो यः प्रभूतोपतापं [10]संसारस्य द्रुतमपनयत्यात्मदेहव्ययेन ॥ ५१ ॥ आमोदैस्ते दिशि दिशि गतैर्दूरमाकृष्यमाणा साक्षाल्लक्ष्मीं तव मलयज द्रष्टुमभ्यागताः स्मः । किं पश्यामः सुभग भवतः क्रीडति क्रोड एव व्यालस्तुभ्यं भवतु कुशलं मुञ्च नः साधु यामः ॥ ५२ ॥ केचिल्लोचनहारिणः कतिपये सौरभ्यसंभारिणः केऽप्यन्ये फलधारिणः प्रतिदिनं ते सन्तु हन्त द्रुमाः । धन्योऽयं हरिचन्दनः परिसरे यस्य स्थितैः शाखिभिः शाखोटादिभिरप्यहो मृगदृशामङ्गेषु लीलायितम् ॥ ५३ ॥ भ्रातश्चन्दन किं ब्रवीमि विटपस्फूर्जत्फणाभीषणा गन्धस्यापि महाविषाः फणभृतो गुप्त्यै यदेते कृताः । दैवात्पुष्पफला-

१ जनसमूहः. २ चन्दन. ३ अतिशयेन पटुः समर्थः. ४ रीतिम्. ५ अङ्गीकर्तुम्. ६ पेषणं कुर्वताम्. ७ सर्पैः. ८ वानरैः. ९ प्रीणयतु. १० संसारे स्थितस्य जनस्य.

न्वितो यदि भवानत्राभविष्यत्तदा नो जाने किमकल्पयिष्यदधिकं रक्षार्थमस्यात्मनः ॥ ५४ ॥ एतैर्दक्षिणगन्धवाहचलनैः श्रीखण्ड किं सौरभं ब्रूमस्ते परितो मधुव्रतयुवा येनायमानीयते । माकन्दादपहृत्य पङ्कजवनादुद्धूय कुन्दोदरादुद्भ्राम्य द्विपगण्डमण्डलदलादाकृष्य हृष्यन्मनाः ॥ ५५ ॥ वासः शैलशिलान्तरेषु सहजः सङ्गो भुजंगैः सह प्रेङ्खत्क्षारपयोधिवीचिभिरभूदुद्धूतसेकक्रिया । जानीमो न वयं प्रसीदतु भवाञ्श्रीखण्ड तत्कथ्यतां कस्मात्ते परतापखण्डनमहो पाण्डित्यमप्यागतम् ॥ ५६ ॥ लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् । ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ ५७ ॥ सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं कीर्तिः किं च दिगङ्गनाङ्गनगता किं त्वेतदेकं शृणु । सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरानुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली ॥ ५८ ॥ श्रीमच्चन्दनवृक्ष सन्ति बहवस्ते शाखिनः कानने येषां सौरभमात्रकं निवसति प्रायेण पुष्पश्रिया । प्रत्यङ्गं सुकृतेन तेन शुचिना ख्यातः प्रसिद्धात्मना योऽसौ गन्धगुणस्त्वया प्रकटितः क्वासाविह प्रेक्ष्यते ॥ ५९ ॥ जातः केलिकलावतीकुचतटीसौभाग्यमासादितुं त्रैलोक्याधिपतेर्यशः कथयितुं भाले विपद्यापितुम् । किं वाच्यं गुणगौरवस्य महिमा ख्यातोऽखिले भूतले धिग्दैवं कलये यदत्र मलये भग्नः पटीरद्रुमः ॥ ६० ॥ एकस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः । केकी कूजति चेत्तदा विघटितव्यालावलीबन्धनः सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ ६१ ॥

**अगुरुः**

अगुरुरिति वदतु लोको गौरवमत्रैव पुनरहं मन्ये । दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥ ६२ ॥ एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी संचारोऽस्ति न नागरस्य विषयोच्छिन्नं मुनीनां मनः । धूमेनातिसुगन्धिनात्र विपिने दिक्चक्रमामोदयन्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥ ६३ ॥

**चम्पकः**

साधारणतरुबुद्ध्या न मया बद्धस्त्वालवालोऽपि । लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥ ६४ ॥ यद्यपि खदिरारण्ये गुप्तो वस्ते हि चम्पको वृक्षः । तदपि च परिमलमतुलं दिशि दिशि कथयेत्समीरणस्तस्य ॥ ६५ ॥ रूपसौरभसमृद्धिसमेतं चम्पकं प्रति ययुर्न मिलिन्दाः । कामिनस्तु जगृहुस्तदशेषा ग्राहका हि गुणिनां कति न स्युः ॥ ६६ ॥ केनात्र चम्पकतरो बत रोपितोऽसि कुग्रामपामरजनान्तिकवाटिकायाम् । यत्र प्रवृद्धवनशाकविवृद्धिलोभाद्गो भग्नवाटघटनोचितपल्लवोऽसि ॥ ६७ ॥ उद्यानपालकलशाम्बुनिषेचनानामेतस्य चम्पकतरोरयमेव कालः । अस्मिन्निदाघनिहते घनवारिणा वा संवर्धिते तव वृथोभयथोपयोगः ॥ ६८ ॥ यन्नादृतस्त्वमलिना मलिनाशयेन किं तेन चम्पक विषादमुरीकरोषि । विश्वाभिरामनवनीरदनीलवेषाः केशाः कुशेशयदृशः कुशलीभवन्तु ॥ ६९ ॥ कोपं चम्पक मुञ्च याचकजनैरायासितस्त्वं सखे मा म्लासीः परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् । कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तथा कुप्यतां येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥ ७० ॥ सन्त्येकेऽपि महीरुहाः प्रतिदिनं संसक्तमत्तालयस्तत्तादृग्गुणिनो लवङ्गलवलीमाकन्दकुन्दादयः । आशास्य जनुरस्य चम्पकतरोर्यत्कोरकान्तर्दलं स्वैरङ्गैरुपमीय राजरमणी सासूयमालोकते ॥ ७१ ॥

**बकुलः**

निसर्गादारामे तरुकुलसमारोपसुकृती कृती मालाकारो बकुलमपि कुत्रापि निदधे । इदं को जानीते यदयमिह कोणान्तरगतो जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥ ७२ ॥ दधानः प्रेमाणं तरुषु समभावेन विपुलं न मालाकारोऽसावकृत करुणां बालबकुले । अयं तु द्रागुद्यत्कुसुमनिकराणां परिमलैर्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥ ७३ ॥

**अशोकः**

गर्वायसे विकचकोरकमञ्जुगुञ्जदुद्भ्रान्तषट्पदघटाविभवेन किं नु । वामभ्रुवां चरणताडनदोहदानि किं नाम न स्मरसि तावदशोक तानि ॥ ७४ ॥ उन्मीलयन्ति कुसुमानि मनोरमाणि के नाम नात्र तरवः समयोचितानि । कस्येदृशं कथय दोहदमस्ति तस्य यादृग्विनिर्मितमशोकमहीरुहस्य ॥ ७५ ॥ मृदूनां स्वादूनां लघुरपि फलानां न विभवस्तवाशोक स्तोकः स्तबकमहिमा सोऽप्यसुरभिः । यदेतन्नो तन्वीकरचरणलावण्यसुभगं प्रवालं बालं स्यात्तरुषु स कलङ्कः किमपरः ॥ ७६ ॥ किं ते नम्रतया किमुन्नततया किं वा घनच्छायया किं वा पल्लवलीलया किमनया वाऽशोक पुष्पश्रिया । यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमैः स्तुवन्नन्वहं न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ ७७ ॥

**यूथी**

यूथि यथोचितविधिना विधेयमातिथ्यमेतस्मिन् । मालतिकाप्राणेशः प्राघुणिकस्ते घुणाक्षरन्यायात् ॥ ७८ ॥

**मालती**

कुसुमस्तबकानम्राः सन्त्येव परितो लताः । तथापि भ्रमरभ्रान्तिं हरत्येकैव मालती ॥ ७९ ॥ मालतीकुसुमे भाति गुञ्जन्मत्तमधुव्रतः । प्रयाणे पञ्चबाणस्य शङ्ख-

१ दुष्टवेणुभिः; पक्षे,–दुष्टकुलैः. २ यूथानि. ३ नाम्ना; पक्षे,–लघुः.

१ कुशलः. २ अल्पः. ३ सुगन्धरहितः. ४ समूहः. ५ अर्थाद्भ्रमरे. ६ अतिथिः. ७ मदनस्य.

मापूरयन्निव ॥ ८० ॥ गुञ्जति मञ्जु मिलिन्दे मालति मा मौनमुपयासीः । शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ ८१ ॥ अयि किं गुणवति मालति जीवति भवतीं विना मधुपः । अथ यदि जीवति जीवतु जीवितमपि तस्य जीवनाभासः ॥ ८२ ॥ मा मालति म्लायसि[1] यद्यविद्यश्चुचुम्ब[2] तुम्बीकुसुमं[3] षडङ्घ्रिः[4] । पदैश्चतुर्भिर्हि युतः पशुश्चेत्स षड्भिरध्यर्धपशुः कथं नो ॥ ८३ ॥ कति सन्ति लवङ्गलता ललिता नवकोरकिता धरणीसुतले । कति बन्धुरगन्धभृतस्तरवो गुरवो निवसन्ति गिरौ मलये ॥ ८४ ॥ अयि मालति सौरभसारविनिर्जितसंविकसत्कमलानिलये । मधुपानविधौ मधुपस्य पुनर्भुवने भवतीमहमाकलये ॥ ८५ ॥ किं मालतीकुसुम ताम्यसि[5] निष्ठुरेण केनापि यत्किल विलूनमितो[6] लताग्रात् । लोकोत्तरेण विलसद्गुणगौरवेण को नामुना शिरसि नाम करिष्यति त्वाम् ॥ ८६ ॥ म्रदीयस्त्वाधिक्यान्न[7] भवति विमर्दक्षममिदं न चान्येभ्यो रूपं भवति कुसुमेभ्योऽधिकतरम् । प्रसूनं मालत्यास्तदपि हृदयाह्लादकरणं प्रवीणैरामोदैर्भवति जगतो मौलिनिलयम् ॥ ८७ ॥ अस्मिन्केलिवने सुगन्धपवने क्रीडत्पुरंध्रीजने गुञ्जद्भृङ्गकुले विशालबकुले कूजत्पिकीसंकुले । उन्मीलन्नवपाटलापरिमले मल्लीप्रसूनाकुले यद्येकापि न मालती विकसिता तत्किं न रम्यो मधुः ॥ ८८ ॥

### मल्लिका

न च गन्धवहेन[8] चुम्बिता न च पीता मधुपेन मल्लिका । पिहितैव[9] कठोरशाखया परिणामस्य[10] जगाम गोचरम् ॥ ८९ ॥

### दमनकः

वद प्रादुर्भावावधि परिमलावस्थितदृशा जगत्या विख्याता दमनक प्रतीपास्तव गुणाः । तथाप्यस्मिन्भृङ्गे मधुलवपिपासापरवशे दृढप्रेमाबद्धे कथय कथमौदास्यमकरोः ॥ ९० ॥

### केतकी

कालक्रमकमनीयक्रोडेयं केतकीति का शङ्का । वृद्धिर्यथा यथा स्यात्तथा तथा कण्टकोत्कर्षः ॥ ९१ ॥ पत्राणि कण्टकशतैः परिवेष्टितानि वार्तापि नास्ति मधुनो रजसान्धकारः । आमोदमात्ररसिकेन मधुव्रतेन नालोकितानि तव केतकि दूषणानि ॥ ९२ ॥ एतासु केतकिलतासु विकासिनीषु सौभाग्यमद्भुततरं भवती बिभर्ति । यत्कण्ठकैर्व्यथितमात्मवपुर्न जानंस्त्वामेव सेवितुमुपक्रमते द्विरेफः ॥ ९३ ॥ एकेन चेत्परिहृतोऽसि महेश्वरेण किं तेन केतक विषादमुरीकरोषि । अन्ये न किं जगति सन्ति महागुणज्ञा ये त्वां वहन्ति शिरसा नरदेवदेवाः ॥ ९४ ॥ हे हेमकेतकि कथं बहु गर्वितासि संसेव्यसे मधुकरैरखिलैरितीव । नैषा रसातिशयता नलिनीवियोगात्तैर्दीयते विकटकण्टकशूलझम्पः ॥ ९५ ॥ रोलम्बस्य चिराय केतकपरिष्वङ्गेष्वभङ्गो रसः सुज्ञातं बत केतकस्य च मनो भृङ्गप्रसङ्गोत्सुकम् । जानात्येव मिथोऽनुरागमनयोः सर्वोऽपि नैसर्गिकं प्रत्यूहाय दलेषु धिक्समभवन्मर्माविधः कण्टकाः ॥ ९६ ॥

### पाटला

पाटलया वनमध्ये कुसुमितया मोहितस्तथा भ्रमरः । सैवेयमिति यथाभूत्प्रतीतिरस्यान्यपुष्पेऽपि ॥ ९७ ॥

### सहकारः

अरविन्देषु कुन्देषु रमितं कालयोगतः । अये माकन्द जानीहि तवैवायं मधुव्रतः ॥ ९८ ॥ यद्यपि दिशि दिशि तरवः परिमलबहुलाश्च पारिजाताद्याः । तदपि रसालोऽप्येकः कोकिलहृदये सदा वसति ॥ ९९ ॥ वेत्ता कोकिल एव ज्ञाता च रसाल एव नियतमिदम् । यः पञ्चममुद्गायति यस्यास्थिषु पुलकमुकुलानि ॥ १०० ॥ लोडितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे । सहकार न प्रपेदे मधुपेन तवोपमा जगति ॥ १०१ ॥ कुन्दे कदम्बे कुमुदेऽरविन्दे यथाकथंचित्समयं नयन्ति । प्राप्ते वसन्ते पुनरुत्तरङ्गा रसाल जानीहि तवैव भृङ्गाः ॥ १०२ ॥ भूरिशोऽपि च वसन्ति कानने शाखिनः फलविशेषशालिनः । कोकिलस्य तदपीह मानसं नो रसालमपहाय तुष्यति ॥ १०३ ॥ आम्र यद्यपि गता दिवसास्ते पुष्पसौरभफलप्रचुरा ये । हन्त संप्रति तथापि जनानां छाययैव दलयस्यतितापम् ॥ १०४ ॥ फलितस्य रसालशाखिनः फलदानव्यसनैकशालिनः । विनिपत्य ददातु कः फलं श्रमसुप्ताध्वगपाणिपल्लवे ॥ १०५ ॥ कति पल्लविता न पुष्पिता वा तरवः सन्ति समन्ततो वसन्ते । जगतीविजये तु पुष्पकेतोः सहकारी सहकार एक एव ॥ १०६ ॥ वहसि बलिभुजां कुलानि मौलौ यदि सहकार तदत्र किं निषिद्धा । परमुदयति पल्लवाञ्चलेषु स्फुरदलिभिस्तव सौरभप्रसिद्धिः ॥ १०७ ॥ दिङ्मण्डलं परिमलैः सुरभीकरोषि सौन्दर्यमावहसि लोचनलोभनीयम् । हंहो रसाल फलवर्य तथापि दूये यद्ग्रन्थिलं च कठिनं हृदयं बिभर्षि ॥ १०८ ॥ उत्तंसकौतुकरसेन[1] विलासिनीभिर्लूनानि यस्य न नखैरपि पल्लवानि । उद्यानमण्डनतरो सहकार स त्वमङ्गारकारकरगोचरतां गतोऽसि ॥ १०९ ॥ यावत्फलोदकसुखः सहकार जातः प्रागेव कण्टकचयेन वृतोऽसि तावत् । छायापि ते न सुलभा फलमस्तु दूरे तन्निष्फलोऽपि हि वरं सुखसेवनीयः ॥ ११० ॥ उत्फुल्लरम्य सहकार रसाल-

१ खिद्यसि. २ मूढः. ३ इक्ष्वाकुकुसुमम्. ४ षट्पदः. ५ संतापं कुरुषे. ६ छिन्नम्. ७ मार्दवाधिक्यात्. ८ वायुना. ९ छादिता. १० परिणतिं प्राप्तेत्यर्थः.

१ कर्णभूषणम्.

बन्धो कूजत्पिकावलिनिवास तथा विधेहि । गुञ्जद्भ्रमद्भ्रमरकस्त्वयि बद्धतृष्णो नान्यान्प्रयाति पिचुमन्दकरीरवृक्षान् ॥ १११ ॥ शश्वन्निसर्गमलिनाः सहकार कामं लुण्ठन्ति तान्यपि मधूनि तव द्विरेफाः । युक्तं न तत्तव कषायरसप्ररोहैरेतान्प्रतारयसि किं कलकण्ठयूनः ॥ ११२ ॥ रे रे रसाल तरुसार वचो विधेहि वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीम् । तावद्विकस्वरपिकद्विजसात्कुरु द्राङ् न व्यग्रितोऽसि कलभैः शलभैश्च यावत् ॥ ११३ ॥ यद्यध्वनीनचिरमध्वनि घर्मखिन्नः कासारतीररुहमाश्रय नम्रमाम्रम् । छायां न केवलमितः श्रमिता लभन्ते कामं पचेलिमफलं विमलं जलं च ॥ ११४ ॥ सौरभ्यगर्भमकरन्दकरम्बितानि पङ्केरुहाण्यपि विहाय समागतस्त्वाम् । संसारसार सहकार तथा विधेहि येनोपहासविषयो न भवेद्द्विरेफः ॥ ११५ ॥ कति कति न वसन्ते वल्लयः शाखिनो वा किसलयसुमनोभिः शोभमाना बभूवुः । तदपि युवजनानां प्रीतये केवलोऽभूदभिनवकलिकालीभारशाली रसालः ॥ ११६ ॥ यदेकस्मिन्वर्षे न फलति रसालस्तरुरयं पिकः किं काकेष्टं फलितमपि निम्बं व्रजति किम् । व्रजन्ग्लानिं ग्लानिं न वदति च कस्यापि पुरतः स्मरन्वारंवारं पुनरपि रसालं मृगयते ॥ ११७ ॥ अधिश्रीरुद्याने त्वमसि भवतः पल्लवचयो धुरीणः कल्याणे तव जगति शाखा श्रमहरा । मुदे पुष्पोल्लेखः फलमपि च तुष्ट्यै तनुभृतां रसाल त्वां तस्माच्छ्रयति शतशः कोकिलकुलम् ॥ ११८ ॥ न तादृक्कर्पूरे[१] न च मलयजे नो मृगमदे[२] फले वा पुष्पे वा तव मिलति यादृक्परिमलः । परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः पिके वा काके वा लघुगुरुविशेषं न मनुषे ॥ ११९ ॥ चिरश्रान्तो दूरादहमुपगतो हन्त मलयात्तदेकं त्वद्गेहे तरुणि परिणेष्यामि दिवसम् । समीरेणोक्त्वैवं नवकुसुमिता चूतलतिका धुनाना मूर्धानं नहि नहि नहीत्येव वदति ॥ १२० ॥ वियुक्ता वासन्ती बकुलमुकुले नापि मिलितं व्यलोकि व्याकोशः क्षणमपि न कोऽपि क्षितिरुहः । यमालोक्योत्कण्ठातरलमिह भृङ्गेन चलितं विदूरान्माकन्दः स खलु दलितो यूथपतिना ॥ १२१ ॥ येऽभिज्ञाः कुसुमोद्गमादनुदिनं त्वामाश्रिताः षट्पदास्ते भ्राम्यन्ति फलाद्बहिर्बहिरहो दृष्ट्वा न संभाषसे । ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे धिक्त्वां चूततरो परावरपरिज्ञानानभिज्ञो भवान् ॥ १२२ ॥ आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलान्तरं प्रायः कण्टकितं तथैव पनसं जातं द्विधोर्वारुकम् । आस्तेऽधोमुखमेव कादलमलं द्राक्षाफलं क्षुद्रतां श्यामत्वं बत जाम्बवं गतमहो मात्सर्यदोषादिह ॥ १२३ ॥ यो दृष्टः स्फुरदस्थिसंपुटवशात्तिर्यक्प्रवालाङ्कुरो दैवात्स द्विदलादिकक्रमवशादारूढशाखाशतः । स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छदं पुष्पितः सोत्कर्षं फलितो भृशं च विनतः कोऽप्येष चूतद्रुमः ॥ १२४ ॥ एतस्मिन्वनमार्गभूपरिसरे सौन्दर्यमुद्राङ्कितः प्रोद्यद्भिः फलपुष्पपत्रनिचयैश्चूतः स एकः परम् । यं वीक्ष्य स्मितवक्त्रमुद्रितमहासंतोषमुल्लासितस्फारोत्कण्ठमकुण्ठितक्रममी धावन्ति पान्थव्रजाः ॥ १२५ ॥ कूष्माण्डीफलवत्फलं न यदपि न्यग्रोधवन्नोच्चता रम्भापत्रनिभं दलं न कुसुमं नो केतकीपुष्पवत् । सौरभ्यं कुसुमे फले तदपि तत्किंचित्समुज्जृम्भते लोको येन रसाल शालनिकरांस्त्यक्त्वा गुणान्स्तौति ते ॥ १२६ ॥ गर्वं मा कुरु शर्करे तव गुणाञ्जानन्ति राज्ञां गृहे ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो । आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जना हे रण्डे तव किं गुणा मम फलैस्तुल्यं न किंचित्फलम् ॥ १२७ ॥ उन्मीलद्रसबिन्दुगन्धकुसुमावल्ल्यो वसन्तोदये कान्ताः कोमलपल्लवाः कति कति क्रीडावने सन्ति न । सौभाग्यैकनिधे रसाल तदपि श्रीमञ्जरीशालिनस्त्वत्तोऽन्यत्र च कुत्रचिन्मधुकरश्रेणी न विश्राम्यति ॥ १२८ ॥ स्निग्धाग्राः फलिनो वृताः परिमलैः पौष्पैर्मधुस्यन्दिनो नानन्दाय भवन्ति किं वनभुवां भूमीरुहो भूरिशः । माधुर्यं मधुनस्तवैव परमं माकन्द मन्यामहे माध्वीमर्मविदो दृढं मधुलिहः स्यूता यतो मर्मणि ॥ १२९ ॥ आस्तां गाढतरानुशीलनविधिः संस्पर्शनं दूरतः संभाषाविषयीकृतोऽसि न मनागक्ष्णोः पदं प्रापितः । किं ब्रूमः सहकार तावकगुणानन्यादृशैर्दुर्लभान्सौरभ्येण यदध्वगानपि मुहुः प्रीणासि दूरादपि ॥ १३० ॥ त्वं सामान्यतरुभ्रमेण सकलक्षोणीरुहक्ष्मापतौ माकन्देऽपि किरात पातय मुधा मास्मिन्कुठारं हठात् । एष श्लाघ्यजनस्य जीवितमलिव्यूहस्य बन्धुर्मधोः सर्वस्वं कुसुमायुधस्य विजयामात्यः पिकानां गुरुः ॥ १३१ ॥ शान्ता घर्मकणाः श्रमः शिथिलितस्तीर्णस्तृषासुद्गमो वारंवारमुदारकोकिलरवैरानन्दितं मानसम् । सर्वं प्राप्तमभीप्सितं तव तले चूत प्रसन्ना द्विजश्रेणीकूजितरञ्जिताखिलमनो यामो वयं स्वस्ति ते ॥ १३२ ॥

**पनसः**

गरीयः सौरभ्यं रसपरिचये नार्हति सुधा सिता मृद्वीकापि प्रथिमनि[१] निमग्नः फलभरः । परार्थे कोशश्रीरिति पुलकितं कण्टकमिषादहो ते चारित्रं पनस मनसः कस्य न मुदे ॥ १३३ ॥

१ चन्दने. २ कस्तूरिकायाम्.

१ स्थूलत्वे.

### तमालः

पास्यन्ति कस्य कुसुमे मधुपा मधूनि स्थास्यन्ति कस्य शिखरेषु विहंगमालाः । इत्येव शोचति परं परितो विसारिदावाग्निमग्नवपुरेष तरुस्तमालः ॥ १३४ ॥

### कदली

तालीतरोरनुपकारि फलं फलित्वा लज्जावशादुचित एव विनाशयोगः । एत चित्रमुपकृत्य फलैः परेभ्यः प्राणान्निजाञ्झटिति यत्कदली जहाति ॥ १३५ ॥

### द्राक्षा

दासेरकस्य दासीयं बदरी यदि रोचते । एतावतैव किं द्राक्षा न साक्षादमृतप्रदा ॥ १३६ ॥ यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम् । असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेतः ॥ १३७ ॥

### दाडिमः

मयि जीवति बीजाढ्ये किमन्ये बीजपूरकाः । इति संचिन्त्य मनसा विदद्रे दाडिमीफलम् ॥ १३८ ॥ आ पुष्पप्रसवान्मनोहरतया विश्वास्य विश्वं जनं हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह । यावन्नैति परोपभोगसहतामेषा ततस्तां तथा ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनातिवन्द्यो भवान् ॥ १३९ ॥

### नालिकेरः

उच्चैरेष तरुः फलं च विपुलं दृष्ट्वैव हृष्टः शुकः पक्वं शालिवनं विहाय जडधीस्तं नालिकेरं गतः । तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने वाञ्छा तस्य न केवलं विगलिता चञ्चूर्गता चूर्णताम् ॥ १४० ॥

### तालः

अये ताल व्रीडां व्रज गुरुतया भाति न भवान् फले न च्छाया नो कठिणपरिवारो हि भवतः । इयं धन्या धन्या सरलकदली सुन्दरदला परात्मानं मन्ये सुखयति फलेनामृतवता ॥ १४१ ॥ अध्वन्यध्वनि भूरुहः फलभृतो नम्रानुपेक्ष्यादराद्दूरादुन्नतिसंश्रयव्यसनिनः पान्थस्य मूढात्मनः । यन्मूलं समुपागतस्य मधुरच्छायाफलैः का कथा शीर्णेनापि हि नोपयोगमगमत्पर्णेन तालद्रुमः ॥ १४२ ॥

### भूर्जः

दौर्जन्यमात्मनि परं प्रथितं विधात्रा भूर्जद्रुमस्य विफलत्वसमर्पणेन । किं चर्मभिर्निशितशस्त्रशतावकृत्तैराशां न पूरयति सोऽर्थिपरम्पराणाम् ॥ १४३ ॥ कुर्वन्तु नाम जनतोपकृतिं प्रसूनच्छायाफलैरविकलैः सुलभैर्द्रुमास्ते । सोढास्तु कर्तनरुजः पररक्षणार्थमेकेन भूर्जतरुणा करुणापरेण ॥ १४४ ॥

### अश्वत्थः

वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः । वर्धितो नरकाद्रक्षेत्स्पृष्टोऽरिष्टानि हन्ति यः ॥ १४५ ॥

### न्यग्रोधः

महातरुर्वा भवति समूलो वा विनश्यति । नाङ्कुरप्रक्रियामेति न्यग्रोधकणिकाङ्कुरः ॥ १४६ ॥ न्यग्रोधे फलशालिनि स्फुटतरं किंचित्फलं पच्यते बीजान्यङ्कुरगोचराणि कतिचित्सिध्यन्ति तस्मिन्नपि । एकस्तेष्वपि कश्चिदङ्कुरवरः प्राप्नोति तामुन्नतिं यामासाद्य निदाघपीडिततनुर्लोकनिच्छिदे धावति ॥ १४७ ॥ विस्तीर्णो दीर्घशाखाश्रितशकुनिशतः शाखिनामग्रणीस्त्वं न्यग्रोध क्रोधमन्तः प्रकटयसि न चेद्ब्रूम्मि किंचित्तदल्पम् । जल्पोऽप्येष त्रपाकृत्प्रलघुपरिकरा कापि कूष्माण्डवल्ली पल्लीपृष्ठप्रतिष्ठा हसति हि फलने त्वत्फलानां किमन्यत् ॥ १४८ ॥

### मधूकः

तत्तेजस्तरणेर्निदाघसमये तद्वारि मेघागमे तज्जाड्यं शिशिरे यदेकशरणैः सोढं पुरा यैर्दलैः । आयातोऽप्यधुना फलस्य समयः कोऽयं विना तैरिति स्मृत्वा तानि शुचेव रोदिति गलत्पुष्पैर्मधूकद्रुमः ॥ १४९ ॥ मूलादेव यदस्य विस्तृतिभरश्छायाप्यनन्यादृशी ते यस्य प्रसवाः सुमञ्जुलरसैरानन्दयन्तः प्रजाः । स्नेहं च प्रकटीकरोति परमं भूयः फलानां गुणैर्हित्वैकैकगुणांस्तरूनभज सखे तस्मान्मधूकद्रुमम् ॥ १५० ॥

### शाल्मलिः

विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं शुकस्यासीद्बुद्धिः फलमपि भवेत्तादृशमिति । चिरं तत्र स्थित्वा फलमपि च काले परिणतं विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १५१ ॥ दूरे मार्गान्निवससि पुनः कण्टकैरावृतोऽसि छायाशून्यः फलमपि च ते वानरैरप्यभक्ष्यम् । निर्गन्धस्त्वं मधुपरहितः शाल्मले सारशून्यः सेवास्माकं भवति विफला तिष्ठ निःश्वस्य यामः ॥ १५२ ॥ हंसाः पद्मवनाशया बलिभुजो गृध्राश्च मांसाशया पान्थाः स्वादुफलाशया मधुलिहः सौरभ्यगन्धाशया । दूरान्निष्फलरक्तपुष्पनिचयैर्निःसार रथ्योन्नते रे रे शाल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः ॥ १५३ ॥ कायः कण्टकभूषितो न च घनच्छायीकृताः पल्लवाः पुष्पाणि च्युतसौरभाणि न दलश्रेणी मनोहारिणी । किं ब्रूमः फलपाकमस्य यदुपन्यासेऽपि लज्जामहे तद्ब्रो: केन गुणेन शाल्मलितरो जातोऽसि सीमद्रुमः ॥ १५४ ॥

### निम्बः

निम्ब किं बहुनोक्तेन निष्फलानि फलानि ते । यानि संजातपाकानि काका निःशेषयन्त्यमी ॥ १५५ ॥ यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥ १५६ ॥ पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः । अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥ १५७ ॥ चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितघटनासंविधाता विधाता । यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ १५८ ॥ यस्मादर्थिजनो मनोभिलषितं लब्ध्वा मुदा मेदुरः सार्धं

१ उच्चस्य. २ पुष्पोदयादारभ्य. ३ सकलम्. ४ दुर्जनत्वम्.

१ श्रेष्ठः. २ लज्जाकृत्. ३ शोकेन. ४ काकाः. ५ व्यर्थानि. ६ अत्र वृश्चति सिञ्चति अर्चति इत्यध्याहारेण वाक्यानि पूरणीयानि. ७ भ्रमरेण. ८ काककुलम्. ९ समृद्धिः. १० भक्षणचातुर्यम्.

बन्धुजनैश्चकार विविधान्भोगान्विलासोद्धुरः । तं दैवेन विवेकशून्यमनसा निर्मूल्य चूतद्रुमं स्थाने तस्य तु काकलोकवसतिर्निम्बः समारोपितः ॥ १५९ ॥

**बब्बुलः**

पत्रफलपुष्पलक्ष्म्या कदाप्यदृष्टं वृतं च खलु शूकैः । उपसर्पेम भवन्तं बब्बुल वद कस्य लोभेन ॥ १६० ॥ गात्रं कण्टकसंकटं प्रविरलच्छाया न चायासहृन्निर्गन्धः कुसुमोत्करस्तव फलं न क्षुद्विनाशक्षमम् । बब्बूलद्रुम मूलमेति न जनस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥ १६१ ॥ आमूलाग्रनिबद्धकण्टकतनुर्निर्गन्धपुष्पोद्गमश्छाया न श्रमहारिणी न च फलं क्षुत्क्षामसंतोषकृत् । रे रे बब्बुल साधुसङ्गरहितस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥ १६२ ॥ शाखाः कण्टककोटिभिः परिवृता वक्रं फलं कुत्सितं पत्रं क्षुद्रतरं न चास्ति गहना छायापि पान्थप्रिया । अन्येषामपि शाखिनां फलभृतां रक्षार्थमानीयसे बब्बूलद्रुम कैर्गुणैर्गुरुतरैर्वृक्षेषु संभाव्यसे ॥ १६३ ॥

**खदिरः**

विना खदिरसारेण हारेण हरिणीदृशाम् । नाधरे जायते रागो नानुरागः पयोधरे ॥ १६४ ॥ चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः । रक्षितुं वद किमात्मसौष्ठवं संचिताः खदिर कण्टकास्त्वया ॥ १६५ ॥ परं तदिह नास्ति यन्न खदिरैः खैरावृतं न तेऽपि खदिरा न ये कुटिलकण्टकैरावृताः । न ते कुटिलकण्टकाः किमपि ये न मर्मच्छिदः समुज्झत वृथास्थितिं बत सहध्वमध्वश्रमम् ॥ १६६ ॥

**किंशुकः**

किंशुक किं शुकमुखवत् कुसुमानि विकासयस्यनिशम् । यस्यां जनोऽनुरागी सा गीरेतैः कदापि नोच्चार्या ॥ १६७ ॥ त्यज किंशुक पुष्पिताभिमानं निजशिरसि भ्रमरोपसेवनेन । विकसन्नवमालिकावियोगात्कुरुते वह्निधिया त्वयि प्रवेशम् ॥ १६८ ॥ उपनदिपुलिने महापलाशः पवनसमुच्छलदेकपत्रपाणिः । दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम् ॥ १६९ ॥

**शाखोटः**

शाखोट शाल्मलिपलाशकरीरकाद्याः शृण्वन्तु पुण्यनिलयो यदसौ वसन्तः । युष्मभ्यमर्पयति पल्लवपुष्पलक्ष्मीं सौरभ्यसंभवविधिस्तु विधेरधीनः ॥ १७० ॥ कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते । वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे ॥ १७१ ॥

**पीलुः**

धन्याः सूक्ष्मफला अपि प्रियतमास्ते पीलुवृक्षाः क्षितौ क्षुत्क्षीणेन जनेन हि प्रतिदिनं येषां फलं भुज्यते । किं तैस्तत्र महाफलैरपि पुनः कल्पद्रुमाद्यैर्द्रुमैर्येषां नाम मनागपि श्रमनुदे छायापि न प्राप्यते ॥ १७२ ॥

**करीरः**

फलं दूरतरेऽप्यास्तां पुष्णासि कुसुमैर्जनान् । इतरे तरवो मन्ये करीर तव किंकराः ॥ १७३ ॥ किं पुष्पैः किं फलैस्तस्य करीरस्य दुरात्मनः । येन वृद्धिं समासाद्य न कृतः पत्रसंग्रहः ॥ १७४ ॥

**बिल्वः**

आमोदीनि सुमेदुराणि च मृदुस्वादूनि च क्ष्मारुहासूद्यानेषु वनेषु लब्धजनुषां सन्तीतरेषामपि । किं तु श्रीफलता तवैव जयिनी मालूर दिङ्मण्डले यस्यैतानि फलानि यौवनवतीवक्षोजलक्ष्मीगृहाः ॥ १७५ ॥

**शालिः**

शाखासंततिसंनिरुद्धनभसो भूयांस एवावनौ विद्यन्ते तरवः फलैरविकलैरार्तिच्छिदः प्राणिनाम् । किंतु द्वित्रदलैरलंकृततनोः शालेः स्तुमस्तुङ्गतां दत्त्वा येन निजं शिरः सुकृतिनां को नाम न प्रीणितः ॥ १७६ ॥

**कुटजः**

समुपागतवति दैवादवलेहां कुटज मधुकरे मा गाः । मकरन्दतुन्दिलानामरविन्दानामयं यतो मान्यः ॥ १७७ ॥

**इक्षुः**

कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि किं चासि पञ्चशरकार्मुकमद्वितीयम् । इक्षो तवास्ति सकलं परमेकमूनं यत्सेवितो भजसि नीरसतां क्रमेण ॥ १७८ ॥ परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः । न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ १७९ ॥ मुखे यद्वैरस्यं वपुरपि पुनर्ग्रन्थिनिचितं न संतप्तः कोऽपि क्षणमपि भजेन्मूलमभितः । फलं चैवाप्राप्यं वितथरसलिप्सोर्हि भवतस्तदिक्षोर्नायुक्तं विहितमितरैर्यत्तु दलनम् ॥ १८० ॥

**लवङ्गी**

अयि दुष्कृतकेन केन वत्से हलिकद्वारि लवङ्गि पुष्पितासि । स्तबकास्तव पांसुभिः परीताः परितः प्राङ्गणसीम्नि यल्लुठन्ति ॥ १८१ ॥ लूनं मत्तमतंगजैः कियदपि च्छिन्नं तुषारार्दितैः शिष्टं ग्रीष्मजतीक्ष्णभानुकिरणैर्भस्मीकृतं काननम् । एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥ १८२ ॥ सौरभ्येण समावृणोषि ककुभः पुष्णासि पुष्पन्धयाँल्लूतातन्तु वृथा तथापि कियतीस्त्वं यापयेर्यामिनीः । अस्मिन्दासपुरे परस्तत इतो विन्यस्तविस्रामिषे मालाकारमृते लवङ्गि ललितान्कस्ते गुणान् ज्ञास्यति ॥ १८३ ॥

१ निवासः. २ पुष्पप्रकरः. ३ प्राचीरम्. ४ सर्पान्. ५ रक्षारहितम्. ६ पलाशवृक्ष. ७ समितपत्रच्छायादिभिः.

१ फलानीति शेषः. २ गुडशर्करादिः. ३ अग्रे. ४ पर्वव्याप्तम्. ५ वितथा दलनातिरिक्तसाधनाभावेन विफला रसस्य लिप्सा लब्धुमिच्छा यस्मिंस्तस्य.

### कार्पासः

नीरसान्यपि[1] रोचन्ते कार्पासस्य फलानि मे । येषां गुणमयं[2] जन्म परेषां गुह्यगुप्तये ॥ १८४ ॥ श्लाघ्यं कार्पासफलं यस्य गुणै रन्ध्रवन्ति पिहितानि । मुक्ताफलानि तरुणीकुचकलशतटेषु विलसन्ति ॥ १८५ ॥ निष्पेषोऽस्थिचयस्य दुःसहतरः प्राप्तस्तुलारोहणं ग्राम्यस्त्रीनखचुम्बनव्यतिकरस्तन्त्रीप्रहारव्यथा। मातङ्गोक्षितमण्डवारिकणिकापानं[3] च कूर्चाहतिः कार्पासेन परार्थसाधनविधौ किं किं न चाङ्गीकृतम् ॥ १८६ ॥

### शणः

भूर्जः परोपकृतये निजकवचविकर्तनं सहते । परबन्धनाय तु शणः प्रेक्षध्वमिहान्तरं कीदृक् ॥ १८७ ॥

### कण्टकारिका

उचितं नाम नारङ्ग्यां केतक्यामपि कण्टकाः । रसगन्धोज्झिते किं ते कण्टकाः कण्टकारिके ॥ १८८ ॥

### धत्तूरः

माधुर्यसाराधरितामृतस्य[4] तत्कण्टकित्वं पनसस्य सह्यम् । उन्मादिनो[5] मातुलपुत्रकस्य कथं सहामो बत कण्टकित्वम् ॥ १८९ ॥ धत्तूर धूर्त तरुणेन्दुनिवासयोग्ये स्थाने पिशाचपतिना[6] विनिवेशितोऽसि । किं कैरवाणि विकसन्ति तमः प्रयाति चन्द्रोपले[7] द्रवति वार्धिरुपैति वृद्धिम् ॥ १९० ॥ धत्तूरकण्टक फलप्रतिरोधबुद्ध्या वैरं वृथैव कुरुषे पनसेन सार्धम् । सन्तो हसन्ति न भजन्ति च चेतसा त्वां श्रान्ता भवन्ति पुरुषास्तव सेवनेन ॥ १९१ ॥ महेशस्त्वां धत्ते शिरसि रसराजस्य[8] जयिनी विशुद्धिस्त्वत्सङ्गात्कनकमयमेतत्त्रिभुवनम् । तनोति त्वत्सेवां ननु कनकवृक्ष त्वदपरः परः को नु स्यात्तद्यदि न सुलभीभावमभजः ॥ १९२ ॥

### पलाण्डुः

कर्पूरधूलीरचितालवालः कस्तूरिकाकुङ्कुमलिप्तदेहः। सुवर्णकुम्भैः परिषिच्यमानो निजं गुणं मुञ्चति किं पलाण्डुः ॥१९३॥

### तृणानि

रूढस्य सिन्धुतटमनु तस्य तृणस्यापि जन्म कल्याणम् । यत्सलिलमज्जदाकुलजनस्य हस्तावलम्बनं भवति ॥ १९४ ॥ उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्शिभिर्धन्योऽसौ नितरासुलूपविटपी नद्यास्तटेऽवस्थितः । एवं यः कृतबुद्धिरुज्झितजलव्यालोलवीचीवशान्मज्जन्तं जनमुद्धरामि सहसा तेनैव मज्जामि वा ॥ १९५ ॥

### कलमाः

कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः । पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ १९६ ॥ अस्मानवेहि कलमानलमाहतानां[11][12] येषां प्रचण्डमुसलैरवदातितैव[1] । स्नेहं[2] विमुच्य सहसा खलतां[3] प्रयान्ति ये स्वल्पपीडनवशान्न वयं तिलास्ते ॥ १९७ ॥

### ताम्बूलम्

किं वीरुधो[4] भुवि न सन्ति सहस्रशोऽन्या यासां दलानि न परोपकृतिं भजन्ते । एकैव वल्लिषु विराजति नागवल्ली या नागरीवदनचन्द्रमलंकरोति ॥ १९८ ॥ वल्लीनां कति न स्फुरन्ति परितः पत्राणि किं तैरिह स्निग्धैरप्यतिकोमलैरपि निजामेवाश्रयद्भिः श्रियम् । तानेव स्तुमहे महाजनमुखश्रीकारिजन्मव्रतान्यान्सूते नवनागरीप्रियतमांस्ताम्बूलवल्लीदलान् ॥ १९९ ॥

### तुम्बी

सर्वास्तुम्ब्यः[5] समकटुरसास्तुम्बिवल्लीप्रसूतास्ताः संबद्धा अपि कतिपया दुस्तरं तारयन्ति । शब्दायन्ते[6] सरसमपराः शुष्ककाष्ठे निषण्णास्तन्मध्येऽन्या ज्वलितहृदयाः शोणितं[7] संपिबन्ति ॥ २०० ॥ एके तुम्बा व्रतिकरगताः पात्रतामानयन्ति गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः । एके तावद्ग्रथितसगुणा दुस्तरं तारयन्ति तेषां मध्ये ज्वलितहृदया रक्तमेके पिबन्ति ॥ २०१ ॥

### वंशः

छिन्नः सनिशितैः शस्त्रैर्विद्धश्च नवसप्तधा । तथापि हि सुवंशेन विरसं नापजल्पितम् ॥ २०२ ॥

### कुन्दः

एष षट्पदयुवा मदायतः कुन्द यापयति यामिनीस्त्वयि । दुर्वहा तदपि नापचीयते पद्मिनीविरहवेदना हृदि ॥ २०३ ॥ संदर्शयस्य मधुवैभवमस्ति यत्ते रे कुन्द किं दुरभिमानमुरीकरोषि । एतन्न चेतसि करोषि सरोजबन्धुः पुष्पंधयोऽपि मम सौरभमातनोति ॥ २०४ ॥

### कमलानि

वरमश्रीकतैवास्तु नेतरश्रीसमानता । इति कैरवकोद्भेदे कमलं मुकुलायते ॥ २०५ ॥ प्रसारितकरे मित्रे जगदुद्द्योतकारिणि । किं न कैरव लज्जा ते कुर्वतः कोशसंवृतिम्[8] ॥ २०६ ॥ लक्ष्मीसंपर्करूपोऽयं दोषः पद्मस्य निश्चितम् । यदयं गुणसंदोहधामनीन्दौ पराङ्मुखः ॥ २०७ ॥ अन्तश्छिद्राणि[9] भूयांसि कण्टका[10] बहवो बहिः । कथं कमलनालस्य नाभूवन्भङ्गुरा गुणाः[11] ॥ २०८ ॥ मालतीमुकुला याताः कुन्दा मन्दायितास्तथा । पङ्कज त्वामिदं ब्रूमः कुत्र यातु मधुव्रतः ॥२०९॥ पङ्कज जलेषु[12] वासः प्रीतिर्मधुपेषु[13] कण्टकैः[14] सङ्गः । यद्यपि तदपि तवैतच्चित्रं मित्रोदये[15] हर्षः ॥ २१० ॥ कुसुमं कोशातक्या

---

१ शुष्काणि. २ सूत्रमयम्. ३ मातङ्गेनान्त्यजेनोक्षितं सिक्तं यन्मण्डवारि सिक्थद्रवोदकं तत्कणिकायाः पानम्. अतीवाशुचीति भावः. ४ माधुर्यसारेण तुच्छीकृतममृतं येन. ५ धत्तूरफलस्य. ६ शंकरेण. ७ चन्द्रकान्तः. ८ जयिनी उत्कर्षवती रसराजस्य पारदस्य विशुद्धिः एतत्त्रिभुवनं कनकमयं सुवर्णमयं तनोतीत्यन्वयः. ९ जातेति शेषः. १० कंदर्पः. ११ शालिविशेषान्. १२ कण्डितानाम्.

१ शुभ्रत्वम्. २ तैलम्; पक्षे,-प्रीतिम्. ३ दुर्जनत्वम्; पक्षे,-खलरूपत्वम्. ४ लताः. ५ तुम्बीफलानि. ६ शब्दं कुर्वन्ति. ७ रक्तम्. ८ कोशसंवरणम्. ९ रन्ध्राणि; पक्षे,-दोषस्थानानि. १० शूकाः; पक्षे,-खलाः. ११ सौभाग्यादयः; पक्षे,-तन्तवः. १२ उदकेषु; पक्षे,-डलयोः सावर्ण्यात् जडेषु मूर्खेषु. १३ भ्रमरेषु, पक्षे,-मद्यपेषु. १४ स्वाङ्करुहैः; पक्षे,-दुष्टैः. १५ सूर्योदये; पक्षे,-सुहृदभ्युदये.

विकसति रात्रौ दिवा च कूष्माण्ड्याः । अलिकुलनिचयै रुचिरं किं तु यशः कुमुदकमलयोरेव ॥ २११ ॥ उदितवति द्विजराजे कस्य न हृदये मुदः पदं दधति । संकुचसि कमल यदयं हर हर वामो विधिर्भवतः ॥ २१२ ॥ एते हि गुणाः पङ्कज सन्तोऽपि न ते प्रकाशमायान्ति । यल्लक्ष्मीवसतेस्तव मधुपैरुपजीव्यते कोशः ॥ २१३ ॥ पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि किं ते । हर हर विस्मृत्योक्तं क्व नु लज्जा [1]सवितृरक्तायाः ॥ २१४ ॥ किं कुप्यसि कस्मैचन सौरभसाराय कुप्य निजमधुने । यस्य कृते शतपत्र प्रतिपत्रं तेऽद्य मृग्यते भ्रमरैः ॥ २१५ ॥ अयि मकरन्दस्यन्दिनि पद्मिनि मन्ये तवैव सुभगत्वम् । [2]पुष्पवतीमपि भवतीं त्यजति न वृद्धः [3]शुचिर्[4]हंसैः ॥ २१६ ॥ मधुप इव मारुतेऽस्मिन्मा सौरभलोभमम्बुजिनि मंस्थाः । लोकानामेव मुदे महितोऽप्यात्मामुनाऽर्थितां नीतः ॥ २१७॥ न कुले वापि न शीले न वास्ति रूपेऽपि कश्चिदुत्कर्षः । यत्पुष्णाति मिलिन्दानरविन्द महत्त्वमेतत्ते ॥ २१८ ॥ रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किंचित् । त्वं पङ्कजन्मापि यदच्छभावादपि स्पृशस्यम्बु न पङ्कसङ्गि ॥ २१९ ॥ जनिः सरोङ्कादतिपङ्किनो यद्यल्लोलुपैर्वा मधुपैर्विहारः । कलङ्क एवैष कुमुद्वतीनां [5]कलङ्किनः किं तु कलावतीनाम् ॥ २२० ॥ अपि त्वया कैरविणि व्यधायि मुधा सुधाबन्धुनि बन्धुभावः । जनापवादः परितः प्रयातः समागमो हन्त न जातु जातः ॥ २२१ ॥ कमलिनि [6]मलिनीकरोषि चेतः किमिति बकै[7]रवहेलितान[8]भिज्ञैः । परिणतमकरन्द[9]मार्मिकास्ते जगति भवन्तु चिरायुषो [10]मिलिन्दाः ॥ २२२ ॥ रुचिरतिरुचिरा शुचित्वमुच्चैः शिरसि धृतः स्वयमेव शंकरेण । कमलिनि मलिनीकरोषि कस्मान्मुखमिदमिन्दुमुदीक्ष्य लोककान्तम् ॥ २२३ ॥ नलिनि निपुणतां वदामि किं ते भ्रमरविलासिनि लास्यलालसायाः । त्रिभुवननयनोत्सवं यदिन्दुं नयसि न हन्त दृगन्तवर्त्मसीमाम् ॥ २२४ ॥ स्वच्छन्दं दलदरविन्द ते मरन्दं विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः । आमोदानथ [11]हरिदन्तराणि नेतुं नैवान्यो जगति [12]समीरणात्प्रवीणः ॥२२५॥ यावत्त्वां न खलु हसन्ति कैरविण्यो यावत्त्वां तरणि[13]कराः परामृशन्ति । यावत्ते मधुविभवो नवोऽस्ति तावन्माध्वीकं वितर सरोज षट्पदेभ्यः ॥२२६॥ रे पद्मिनीदल तवात्र मया चरित्रं दृष्टं विचित्रमिव यद्विदितं ध्रुवं तत् । यैरेव शुद्धसलिलैः परिपालितस्त्वं तेभ्यः पृथग्भवसि [1]पङ्कभवोऽसि यस्मात् ॥२२७॥ कामं भवन्तु मधुलम्पटषट्पदौघसंघट्टघर्घरघनध्वनयोऽब्जखण्डाः । गायन्नपि श्रुतिसुखं विधिरेष यत्र भृङ्गः स कोऽपि धरणीधरनाभिपद्मः ॥ २२८ ॥ विभ्रम्य काननमसौ दिवसावसाने त्वय्येव षट्पदयुवा हृदयं बबन्ध । राजीव चेन्मलिनिमानमुरीकरोषि कः स्वादहो मधुलिहामधुनावलम्बः ॥ २२९ ॥

स्वामोदवासितसमग्रदिगन्तराला रक्ता मनोहरशिखा सुकुमारमूर्तिः । सेव्या सरोजकलिका तु यदैव जाता नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥ २३० ॥ किं बान्धवेन रविणा हरिणाथ किं वा लक्ष्म्या च किं च [2]जलजोदरजेन किं वा । एतस्य शुद्धचरितस्य सरोरुहस्य नैषा तुषारजनिता शमिता विपत्तिः ॥ २३१ ॥ लक्ष्मीनिवास इति वारिरुहां प्रसिद्धिरन्वेषिताः कतिपया [3]वरटास्तु सन्ति । राज्ञि प्रसारितकरे किमहं ददामि संकोचितं वदनमम्बुरुहैरितीव ॥ २३२ ॥ लक्ष्मीः स्वयं निवसति त्वयि लोकधात्रि मित्रेण चापि विहितोऽस्ति दृढोऽनुरागः । बन्दीव गायति गुणांस्तव चञ्चरीकः कः पुण्डरीक तव साम्यमुरीकरोति ॥ २३३ ॥ अयि दलदरविन्द स्यन्दमानं मरन्दं तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः । दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्परिमलमयमन्यो बान्धवो गन्धवाहः ॥ २३४ ॥ समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं निवासः [4]पद्मायाः सुरहृदयहारी परिमलः । गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव [5]द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥ २३५ ॥ नालस्य प्रसरो जलेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखेऽतिमृदुता मित्रे महान्प्रश्रयः । आमूलं गुणसंग्रहव्यसनिता द्वेषश्च [6]दोषाकरे यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ २३६ ॥ नीरान्निर्मलतो जनिर्मधुरता वामामुखस्पर्धिनी वासो यस्य हरेः करे परिमलो [7]गीर्वाणचेतोहरः । सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह त्वं चेत्प्रीति[8]मुरीकरोषि मधुपे किं त्वां प्रति ब्रूमहे ॥ २३७ ॥ एकस्मिन्ननिरावयोः समजनि स्वच्छे सरोवारिणि भ्रातः काचिदिहैव कानिचिदहान्यत्र व्यतीतानि नौ । लब्धं तामरसं त्वया मृगदृशां लीलावतंसास्पदं शैवालं विलुठामि पामरवधूपादाहते पाथसि ॥ २३८ ॥ वैमुख्यं मृगलाञ्छनस्य

१ सूर्यानुरक्तायाः; पक्षे,–सविता पिता तस्मिन्रक्तायाः पितृगामिन्या इत्यभिप्रायः. २ पुष्पयुक्ताम्; पक्षे,–रजस्वलाम्. ३ श्वेतः; पक्षे,–पवित्रः. ४ राजहंसः; पक्षे,–परमहंसः. ५ चन्द्रस्य. ६ कलुषीकरोपि. ७ अवहेलां नीता, तिरस्कृतेति यावत्. ८ अपण्डितैः. ९ मर्मज्ञाः. १० भ्रमराः. ११ दिगन्तराणि. १२ वायोः. १३ सूर्यकिरणाः.

१ कर्दमोत्पन्नः. २ ब्रह्मणा. ३ हंस्यः; पक्षे,–कपर्दकाः. ४ लक्ष्म्याः. ५ पक्षिश्रेष्ठे. ६ दोषाणामाकरे; पक्षे,–चन्द्रे. ७ देवमनोहारी. ८ अङ्गीकरोषि.

मनसो निर्माति मे न व्यथां नो दूये चिरलालिता मधुलिहः सर्पन्ति यन्नान्तिकम् । जल्पन्तीव दुरक्षराणि मधुपश्रेणीरवच्छद्मना यत्कादम्ब कुमुद्वती हसति मां तन्मे मनस्ताम्यति ॥ २३९ ॥ संभूतिस्तव मानसे सरसिज त्वत्सौरभैर्वासिताः सर्वास्ताः ककुभस्तवास्ति परमो बन्धुर्विवस्वानिति । त्वं चेदद्य गुणानवद्य शिशिरे शीतानिलैः शीर्यसि प्रायः प्राप्तमिदं तदत्र परमं दिष्टेऽव्ददृष्टं बलम् ॥ २४० ॥ खद्योतास्तरला भवन्ति भगवानस्तंगतो भानुमान् कोकः शोकमुपैति मत्तमनसः क्रेङ्कुर्वते कौशिकाः । इत्थं चेत्सदसद्विवेकधुरो धाता तदेतादृशं न द्रष्टव्यमितीव मुद्रितवती पद्मेक्षणं पद्मिनी ॥ २४१ ॥ पौलोमीपतिकानने विलसतां गीर्वाणभूमीरुहां येन घ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरैः । तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति त्वं चेदच्छसि लोभमम्बुज तदा किं त्वां प्रति ब्रूमहे ॥ २४२ ॥

**लताः**

लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् । लतास्त्वध्वन्यानामहह दृशमादाय सहसा ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ २४३ ॥

---

## संकीर्णान्योक्तयः

**शिवः**

भस्मनि स्मररिपोरनुरागो हीयते न घनसारपरागः । भूषणं यदि फणी न मणीनां काचिदप्यपचितिर्न च हेम्नः ॥ १ ॥ उरसि फणिपतिः शिखी ललाटे शिरसि विधुः सुरवाहिनी जटायाम् । प्रियसखि कथयामि किं रहस्यं पुरमथनस्य रहोऽपि संसदेव ॥ २ ॥ इयं तावल्लीला यदधिरुरुहे वृद्धवृषभो यदुन्नेहे रुण्डं यदिह चितिभस्मापि लिलिपे । अयं को व्यापारो यदतिलकि भाले हुतवहो यदग्रैवि व्यालो यदकवलि हालाहलमपि ॥ ३ ॥ विश्राणे त्वयि भस्म कः समभवन्मन्दादरश्चन्दने कः क्षौमं कलयांचकार न कृती कृत्तिं वसाने त्वयि । धत्तूरस्पृहयालुतां त्वयि गते तत्याज कः केतकीं स्वातन्त्र्याज्जहिहि त्वमीश्वर गुणाँल्लोकोऽस्ति तद्ग्राहकः ॥ ४ ॥ त्वं चेत्संचरसे [१]वृषेण लघुता का नाम [२]दिग्दन्तिनां व्यालैः काञ्चनकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः । मूर्ध्ना चेद्वहसे [३]जलांशुमयशः किं नाम लोकत्रयीदीप[४]स्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥ ५ ॥ छेत्सि ब्रह्मशिरो यदि [५]प्रथयसि प्रेतेषु सख्यं यदि क्षीबैः[६] क्रीडसि [७]मातृभिर्यदि रतिं धत्से श्मशाने यदि । सृष्ट्वा संहरसि प्रजा यदि तथाप्याधाय भक्त्या मनः कं सेवे करवाणि किं त्रिजगती शून्या त्वमेवेश्वरः ॥ ६ ॥

**परशुरामः**

त्वं जामदग्न्य जननीवधपातकेन संदूषितः क्रतुविदां धुरि नाभविष्यः । गीर्वाणवन्द्यचरणस्तव चन्द्रमौलिराचार्यकं स भगवान् यदि नाकरिष्यत् ॥ ७ ॥

**रामचन्द्रः**

सङ्ग्रामाङ्गणमागते दशमुखे सौमित्रिणा विक्षितं सुग्रीवेण विवर्तितं हनुमता व्यालोलमालोकितम् । श्रीरामेण परंतु पीनपुलकस्फूर्जत्कपोलश्रिया सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥ ८ ॥

**सीता**

वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या । अहो सेयं सीता दशवदननीता हलरदैः परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ॥ ९ ॥

**इन्द्रः**

जम्भारिरेव जानाति रम्भासंयोगविभ्रमम् । घटीचेटीविटः[१] किंस्विज्जानात्य[२]मरकामिनीम् ॥ १० ॥

**स्मरः**

पुरो गीर्वाणानां निजभुजबलाहोपुरुषिकामहो कारं कारं पुरभिदि शरं संमुखयतः । स्मरस्य स्वर्बालानयनशुभमालार्चनपदं वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥ ११ ॥

**आकाशम्**

यः पीयूषसहोदरैः स्नपयति ज्योत्स्नाजलैः सर्वतो यश्च त्वामधिकाधिकं ज्वलयति प्रोद्दामतापैः करैः । भ्रातर्व्योम तयोरपि स्थितिमिह व्यातन्वतो विक्रियानिर्मुक्तस्य महत्त्वमेतदसमं दूरेऽधिरूढं तव ॥ १२ ॥

**पृथ्वी**

विश्वास्य मधुरवचनैः साधून् ये वञ्चयन्ति नम्रतमाः । तानपि दधासि मातः [४]काश्यपि [५]यातस्तवापि च विवेकः ॥ १३ ॥

**जलम्**

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे । किं वाऽतः परमुच्यते स्तुतिपदं यज्जीवनं देहिनां त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ १४ ॥ अब्जं त्वज्जमथाब्जभूस्तत इदं ब्रह्माण्डमण्डात्पुनर्विश्वं स्थावरजंगमं तदितरत्वन्मूलमित्थं पयः । धिक्त्वां चोर इव प्रयासि निभृतं निर्गत्य जालान्तरैर्बध्यन्ते विवशास्त्वदेकशरणास्त्वामाश्रिता जन्तवः ॥ १५ ॥

**मारुतः**

[६]सन्ना नाविकधोरणी निपतिता [७]मध्येजलं क्षेपणी पन्थाः पर्वतदुर्गमो [८]घनघनच्छन्नश्च [९]तारापथः । हंहो मारुत दुस्तरो जलनिधिः [१०]शीर्णा च नौः सांप्रतं मध्ये मज्जय वा तटं गमय वा हस्ते तवास्ते द्वयम् ॥ १६ ॥

**मृगतृष्णिका**

जलभ्रमोत्पत्तिकृतो गुणौघान्प्रकाशयन्त्यां मृगतृष्णिकायाम् । जलाशयभ्रान्तिरभून्मैषा प्रभूतसंतापकरी पिपासा ॥ १७ ॥

---

१ नन्दिना. २ दिग्गजानाम्. ३ जलांशुं चन्द्रम्; पक्षे,–जडांशुम्. ४ सूर्यस्य. ५ ख्यापयसि. ६ मत्तैः. ७ ब्राह्म्यादिभिः.

१ इन्द्रः. २ घटवाहिका दासी, तस्या जारः. ३ देवाङ्गनाम्. ४ भूमे. ५ गतः. ६ गलिता. ७ जलमध्ये. ८ निबिडघनाच्छादितः. ९ अंतरिक्षम्. १० भिन्ना.

### सुवर्णम्

अग्निदाहे न मे दुःखं छेदे न निकषे न वा । यत्तदेव महद्दुःखं गुञ्जया सह तोलनम् ॥ १८ ॥ न वै ताडनात्तापना- द्वह्निमध्ये न वै विक्रयात्क्लिश्यमानोऽहमस्मि । सुवर्णस्य मे मुख्यदुःखं तदेकं यतो मां जना गुञ्जया तोलयन्ति ॥ १९ ॥

### मौक्तिकम्

अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा । अन्तर्भिन्नेन संप्राप्तं मौक्तिकेन निबन्धनम् ॥२०॥ हृदये कुरु संचयं गुणानां यदि रे वाञ्छसि नासिके निवासम् । इति मौक्तिक ते वदामि नूनं गुणहीनो नहि नासिके विभाति ॥२१॥ रत्नाकरे परिहृता वसतिः किमन्यदङ्गीकृतः कठिनवेधनदुःखभारः । वक्षोजकुम्भ- परिरम्भणलोलुपेन किं किं न तेन विहितं बत मौक्तिकेन ॥२२॥

### सुवर्णकारः

हे हेमकार परदुःखविचारमूढ किं मां मुहुः क्षिपसि वारशतानि वह्नौ । संदीप्यते मयि सुवर्णगुणातिरेको लाभः परं तव मुखे खलु भस्मपातः ॥ २३ ॥

### हारः

मुक्ताहार गुणीभूय नोपसर्प्यः स्तनस्त्वया । विभवे यस्य काठिन्यं व्यर्थं तदुपसर्पणम् ॥ २४ ॥ गुणवतस्तव हार न युज्यते परकलत्रकुचेषु विलुण्ठनम् । स्पृशति शीतकरो जघनस्थलीमुचितमस्ति तदेव कलङ्किनः ॥ २५ ॥ सद्वृत्त- सद्गुणविचित्रमहार्हकान्ते कान्ताघनस्तनतटाञ्चितचारुमूर्ते । आः पामरीकठिनकण्ठविलग्नभङ्गो हा हार हारितमहो भवता गुणित्वम् ॥ २६ ॥ दीर्णोऽसि चेत्कनकसूत्रनिवेशनाय मुक्ता- कलाप किमतो भवतो विषादः । यत्पञ्चबाणजयमङ्गलहेमकुम्भ- कुम्भस्तनीस्तनतटे भवितानुषङ्गः ॥२७॥ अन्येऽपि सन्ति कति नो गुणिनो जगत्यां हार त्वमेव गुणिनामुपरि स्थितोऽसि । एणीदृशामुरसि नित्यमवस्थितस्य सद्वृत्तता च शुचिता च न खण्डिता यत् ॥ २८ ॥ येनाकारि महीभृतामविरलं कण्ठेषु लीलायितं येन प्रापि सरोजसुन्दरदृशां तुङ्गस्तनालिङ्गनम् । जातं येन गजेन्द्रगण्डपुलिने साधारणं गुञ्जया मुक्तादाम तदेव पामरपुरे नावाप कां कां दशाम् ॥ २९ ॥

### कञ्चुकः

श्रीमता कथय कञ्चुक पूर्वं कानि कानि सुकृतानि कृतानि । जन्म यापयसि येन समस्तं हारहृद्यहृदये हरिणाक्ष्याः ॥ ३० ॥

### कुण्डलम्

यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुष्करं तस्यैतत्फल- मीदृशं परिणतं यज्जातरूपं वपुः । मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः प्राप्तं कुण्डल वाञ्छसे किमपरं यन्मूढ दोलायसे ॥ ३१ ॥

### नासाभूषणम्

हारस्यातिदुरापमस्ति भुवने हे नासिकाभूषण त्व- त्सौभाग्यमिति प्रतीहि वनितावक्त्रेन्दुकान्तिप्रद । यत्कान्तातनु- संगमाय सहते सोऽन्तर्विभेदव्यथां सा नासा पुटभेदनादपि भवत्सङ्गं यतो वाञ्छति ॥ ३२ ॥

### वलयः

गुणानामज्ञानादनुभवतु तावत्प्रतिपदं मुहुर्बाहुच्छेद- व्यतिकरमसौ स्वर्णवलयः । अपि ज्ञाते तत्त्वे तव गुणसमुद्रस्य पुरतः समं गुञ्जापुञ्जैस्तुलनमतिलज्जाकरमिदम् ॥ ३३ ॥

### रङ्गः

हे रङ्ग हेमतुलया तुलितोऽसि नित्यं मानं जहीहि किमु पश्यसि नो विशेषम् । स्वर्णं सरत्नघटितं नृपशेखरेषु त्वं पाप पामरवधूचरणेषु लीनः ॥ ३४ ॥

### वीणादण्डः

यदेतत्कामिन्याः सुरतविरतौ पल्लवरुचा करेणानीतस्त्वं वससि सह हारेण गुणिना । मुहुः कुर्वन्गीतं कुचकलश- पीठोपरि लुठन्नये वीणादण्ड प्रकटय फलं कस्य तपसः ॥३५॥

### मुरली

माधवस्य मुरली मुखलग्ना रागमावहतु किंतु वयस्ये । वंशजाहमिति मास्तु सगर्वा या बिभर्षि बहुशो विवराणि ॥३६॥ परिपीड्य करद्वयेन गाढं परपुंसा परिचुम्बिताननापि । मुरली महनीयवंशजाता मुहुराक्रन्दममन्दमातनोति ॥ ३७ ॥

### कुविन्दः

भ्रातर्ग्राम्यकुविन्द कन्दलयता वस्त्राण्यमूनि त्वया गोणी- विभ्रमभाजनानि सुबहून्यात्मा किमायास्यते । किं त्वेकं रुचिरं चिरादभिनवं वासस्तदासूत्र्यतां यन्नोज्झन्ति कुचस्थलात्क्षणमपि क्षोणीभुजां वल्लभाः ॥ ३८ ॥

### लाङ्गलिकः

रे लाङ्गलिक निषद्याक्रोडे लोहं पुरा यदद्राक्षीः । स्पर्शस्पर्शविशेषात्तदखिलमजनिष्ट हेम नृपयोग्यम् ॥ ३९ ॥

### कर्णधारः

दुर्गा नदी शिथिलबन्धविडम्बिनी नौरभ्युन्नता जलमुचो विषमः समीरः । आरूढवान्निजकुटुम्बयुतोऽध्वनीनस्तत्कर्ण- धार कुरु यत्सदृशं कुलस्य ॥४०॥ जीर्णा तरिः सरिदियं च गभीरनीरा नक्राकुला वहति वायुरतिप्रचण्डः । तार्याः स्त्रियश्च शिशवश्च तथैव वृद्धास्तत्कर्णधारभुजयोर्बलमाश्रयामः ॥४१॥

### तैलिकः

अमी तिलास्तैलिक नूनमेतां स्नेहादवस्थां भवतो- पनीताः । द्वेष्योऽभविष्यद्यदमीषु नूनं तदा न जाने किमिवाकरिष्यः ॥ ४२ ॥

### पञ्जरलावकः

भ्रातः पञ्जरलावक मा कुरु संतोषमन्यनिधनेन । प्रातस्त्वेव धातुः स्वामित्वं किं न जानासि ॥ ४३ ॥

### व्याधः

एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिनामित्येवं परिचिन्त्य मा स्वमनसि व्याधानुतापं कृथाः ।

१ सूत्रवतः; पक्षे,—गुणयुक्तस्य. २ चन्द्रः. ३ कलङ्कयुक्तस्य. ४ सौवर्णं च.

१ गुणयुक्तेन. २ स्पर्शो मणिविशेषः. ३ निष्करुणः.

भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः साधूनामरयो वसन्ति कति नो त्वत्तुल्यकक्षाः खलाः ॥ ४४ ॥ सर्वोद्वेगकरं मृगादनममुं संत्यज्य हा धिक्त्वया लोकस्यानपकारिणं गिरिनदीतीराटवीनिर्वृतम् । अश्नन्तं तृणमेणशावमदयं व्याध घ्नतामुं वृथा देवो दुर्बलघातकोऽयमिति सा गाथा यथार्थीकृता ॥ ४५ ॥

### विषमन्त्री

भेकेन[1] क्वणता सरोषपरुषं यत्कृष्णसर्पानने दातुं कर्णचपेटमुज्झितभिया[2] हस्तः समुल्लासितः । यच्चाधोमुखमक्षिणी विदधता नागेन तूर्ष्णीं स्थितं तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥ ४६ ॥

### मालाकारः

तोयैरल्पैरपि करुणया भीमभानौ निदाघे मालाकार व्यरचि भवता या तरोरस्य पुष्टिः । सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां धारासारानपि विकिरता विश्वतो वारिदेन ॥ ४७ ॥

### कायस्थः

विप्रेभ्यः साधुदानं रिपुजनसुहृदां चोपकारान्कुरु त्वं सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्ये यथार्थम् । श्रोत्रे ते तथ्यमेतत्कथयति सततं लेखनी भाग्यशालिन्नो चेन्नष्टेऽधिकारे मम मुखसदृशं तावकास्यं भवेद्धि ॥ ४८ ॥

### कविः

कस्त्वं भोः कविरस्मि तत्किमु सखे क्षीणोऽस्यनाहारतो धिग्देशं गुणिनोऽपि दुर्मतिरियं देशं न मामेव धिक् । पाकार्थी क्षुधितो यदैव विदधे पाकाय बुद्धिं तदा विन्ध्ये नेन्धनमम्बुधौ न सलिलं नान्नं धरित्रीतले ॥ ४९ ॥

### बालाः

ये शिरसा निहिता अपि न भवन्ति सखे समानसुखदुःखाः । चिकुरा इव ते बाला एव जरापाण्डुभावेऽपि ॥ ५० ॥

### शैलूषः

वंशः प्रांशुरसौ घुण[3]व्रणमयो जीर्णा वरत्रा इमाः कीलाः कुण्ठतया विशन्ति न महीमाहन्यमाना अपि । आरोहव्यवसायसाहसमिदं शैलूष संत्यज्यतां दूरे श्रीर्निकटे कृतान्तमहिषग्रैवेयघण्टारवः ॥ ५१ ॥

### कुशीलवाः

मौलिः स्वर्णकिरीटकान्तिरुचिरः केयूरभव्यौ भुजौ त्वद्भृत्याः किल कञ्चुकिप्रभृतयो देवेति विज्ञाप्यसे । इत्थं कल्पनया कुशीलव नृपाहंकारदार्ढ्ये वृथा नृत्यान्ते भवतो भविष्यति मसीमात्रावशेषं वपुः ॥ ५२ ॥

१ मण्डूकेन. २ निर्भयेन. ३ काष्ठकीटः. ४ हस्तिकक्षस्थरज्जुः, गजमञ्जूषा वा.

### बाला

स्रग्दाम मूर्धनि निधेहि गवेधुकानां गुञ्जामयीमुरसि धारय हारयष्टिम् । बाले कलावति चिरं पतितासि पल्लौ तल्लौहमन्यदपि भूषणमेषणीयम् ॥ ५३ ॥

### पल्लीपतिपुत्री

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुरप्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते । तात्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थनादीनं त्वामनुनाथते कुचयुगं पत्त्रावृतं मा कृथाः ॥ ५४ ॥

### पान्थः

न यत्र गुणवत्पात्रमेकमप्यस्ति संनिधौ । कस्तत्र भवतः पान्थ कूपाम्बुग्रहणाग्रहः ॥ ५५ ॥ वापी कापि कदापि न श्रुतचरी को वेद कीदृक्सरो व्योमाम्भोजवनीव चात्र तटिनी कैर्नाम विज्ञायते । हंहो पान्थ दुरन्तसाहसभरैरत्रागतं चेन्मरौ मण्डूकाकुलपङ्कसंकुलजलादन्धोः[1] कबन्धं[2] पिब ॥ ५६ ॥

### कस्तूरिका

अयि त्यक्तासि कस्तूरि पामरैः पङ्कशङ्कया । अलं खेदेन भूपालाः किं न सन्ति महीतले ॥ ५७ ॥ यद्यपि दैवाल्लब्धा कस्तूरीभूमिरत्र भूरितरम् । नेया किमसौ तदपि हि शौचार्थं[3] जानता पुंसा ॥ ५८ ॥ दुर्भीलपल्लीपतिपुत्रहस्ते कस्तूरि कस्ते वद दुर्विपाकः । आरभ्य सौरभ्यकथासु मौनं मालिन्यमात्रे वचसोऽवकाशः ॥ ५९ ॥ अयि बत गुरुगर्वं मा स्म कस्तूरि यासीरखिलपरिमलानां मौलिना सौरभेण । गिरिगहनगुहायां लीनमत्यन्तदीनं स्वजनकममुनैव प्राणहीनं करोषि ॥ ६० ॥ जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो दूरे पुंसां वपुषि रचना पङ्कशङ्कां करोति । यद्यप्येवं सकलसुरभिद्रव्यगर्वापहारी को जानीते परिमलगुणः कोऽपि कस्तूरिकायाः ॥ ६१ ॥

### दीपः

रक्ष पात्रगतं स्नेहं प्रदीप श्रीविवर्धनम्[4] । प्रयास्यन्ति विना तेन भस्मत्वं यद्भवद्गुणाः ॥ ६२ ॥ बहिरतिनिर्मलरूपं वहतस्ते दीप दैवतो जगति । अवगतमचिरादान्तरमौज्ज्वल्यं कज्जलद्वारा ॥ ६३ ॥ न मणेरितोऽधिका भा नो मृदुता न प्रकाशसमता वा । अचिरस्थितिरिति दीपो न हि बहुमूल्योऽभवत्प्रायः ॥ ६४ ॥ यां कान्तिं वहसि परां प्रदीप भद्र स्वीयासाविति हृदि मा स्म मन्यथास्त्वम् । सस्नेहे त्वयि निशि भानुनाहितासौ नैवं चेदहनि सति क्व वा गता सा ॥ ६५ ॥ प्रदीप किमु कुप्यसि प्रलयमारुतप्रज्वलत्प्रभापटलपाटलप्रकटपावकव्यक्तये । त्वमङ्ग किमु कामिनी-

१ कूपात्. २ जलम्. ३ हस्तपादादिक्षालनार्थम्. ४ श्रीः शोभा.

श्रुती दध्रतुरर्धमर्धम्। कर्णान्तरुत्कीर्णगभीररेखः किं तस्य संख्यैव न वा नवाङ्कः॥ १२८॥ मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिद्रुरेतरेण। एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासतती रतीशः॥ १२९॥ आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोऽपि। तच्चापयोः कर्णलते भ्रुवोर्ज्ये वंशत्वगंशौ चिपिटे किमस्याः॥ १३०॥

कर्णभूषणम्

मुक्ताताटङ्कयुगं प्रतिमुक्तं कर्णपार्श्वयोरस्याः। मुखकमलमिव निषेवितुमागतममृतांशुबिम्बयुगम्॥ १३१॥ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचिं विधत्ते। मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृतं तारकचक्रवालम्॥ १३२॥ शशी हर्तुं लोभान्मुखकमलशोभां श्रुतिफलं सिषेवे सातङ्कस्तव तरुणि ताटङ्ककपटात्। तदन्तःपीयूषं निखिलमथ निक्षेप्तुमधरे मनोजन्मा मुष्णन्मुहुरहह तुच्छं तमकरोत्॥ १३३॥

कपोलौ

कपोलपालीं तव तन्वि मन्ये लावण्यधन्ये दिशमुत्तराख्याम्। विभाति यस्यां ललिताल[1]कायां मनोहरा वैश्रवणस्य[2] लक्ष्मीः॥ १३४॥ स्वर्णच्छवीनामसितेक्षणानां कर्णान्ततो गण्डलतातलानि। भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि॥ १३५॥ आबध्नन्परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद्बहिः कुर्वत्पङ्कजजृम्भमाणकलिकाकर्णावतंसक्रियाम्। तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्बणं लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले॥ १३६॥

अधरः

तवैष विद्रु[3]मच्छायो मरुमार्ग[4] इवाधरः। करोति कस्य नो मुग्धे पिपासाकुलितं मनः॥ १३७॥ अल्पेनापि सुरक्तेन साधनेन प्रयोजनम्। ओष्ठद्वयसहायेन कान्तास्येन जगज्जितम्॥ १३८॥ सर्वस्यैव हि रत्नस्य व्रणे[5]ऽर्धः[6] परिहीयते। दयिताधररत्नं तु व्र[7]णितं यात्यनर्घताम्[8]॥ १३९॥ अधरोऽयमधीराक्ष्या बन्धुजीव[9]प्रभाहरः। अन्यजीवप्रभां हन्त हरतीति किमद्भुतम्॥ १४०॥ मुखारविन्ददत्तश्रीः सुतनोररुणोऽधरः। कुरुते हारमाणिक्यप्रदीपान्पाण्डुरत्विषः॥ १४१॥ संततोदयसंध्येव वदनेन्दोरनिन्दिता। तदोष्ठमुद्रा लावण्यसमुद्रस्येव विद्रुमः॥ १४२॥ अधरोऽसौ कुरङ्गाक्ष्याः शोभते नासिकातले। सुवर्णनलिकामध्यान्माणिक्यमिव विच्युतम्॥ १४३॥ अधरं खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम्। लभतेऽधरबिम्ब इत्यदः पदमस्या रदनच्छदे वदत्॥ १४४॥ उत्थितो निशि कलानिधिर्भवेदेतदीयमुखतुल्यतास्पये। प्रापितो मलिनभावमेतया लज्जया नभसि यात्यदृश्यताम्॥ १४५॥ अपि मृगाक्षि तवाधरपल्लवे दयितदन्तपदं न भवत्यदः। भुवनमोहनमन्त्रपदाङ्कितं किमुत यन्त्रमिदं स्मरयन्त्रिणः॥ १४६॥ अभिलषन्ति तवाधरमाधुरीं तदिह किं हरिणाक्षि मुधा बुधाः। सुरसुधामधरीकुरुते यतस्त्वदधरोऽधरतामगमत्ततः॥ १४७॥ पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्। ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥ १४८॥ बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहानम्। रागश्रिया शैशवयौवनीयां स्वमाह संध्यामधरोष्ठलेखा॥ १४९॥ अस्या मुखेन्दावधरः सुधाभूर्बिम्बस्य युक्तः प्रतिबिम्ब एषः। तस्याथवा श्रीर्द्रुमभाजि देशे संभाव्यमानास्य तु विद्रुमेऽसौ॥ १५०॥ जानेऽतिरा[1]गादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम्[2]। द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम्॥ १५१॥ प्रियामुखीभूय सुखी सुधांशुर्वसत्यसौ राहुभयव्ययेन। इमां दधाराधरबिम्बलीलां तस्यैव बालं करचक्रवालम्॥ १५२॥ अधरममृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं द्राक्षायाश्च प्रसन्नरसं फलम्। सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात्॥ १५३॥ त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को माधुर्यं तव विश्वतोऽपि विदितं माध्वीक माध्वीकता। एतत्किं तु मना[3]गरुंतुदमिव ब्रूमो न चेत्कुप्यसि यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः॥ १५४॥

दन्ताः

द्विधा विधाय शीतांशुं कपोलौ कृतवान्विधिः। तन्व्यास्तद्रसनिष्यन्दबिन्दवो रदनावलिः॥ १५५॥ चन्द्राधिकैतन्मुखचन्द्रिकाणां दरायतं तत्किरणाद्धनानाम्। पुरःपरिस्रस्तपृषद्द्वितीयं रदावलीद्वन्द्वति बिन्दुवृन्दम्॥ १५६॥ राजौ द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत्। उद्वेगरागादिमृजावदाताश्चत्वार एते तदवैमि मुक्ताः॥ १५७॥ यावद्यावत्कुवलयदृशा मृज्यते दन्तपालिस्तावत्तावद्द्विगुणमधरच्छायया शोणशोचिः। काचित्त्वस्याः परिमलकलाहूतमात्रालिकान्त्या वक्त्राश्वासे प्रसरति मुहुः श्यामिकाप्याविरासीत्॥ १५८॥

चिबुकः

विलोकितास्या मुखमुन्नमय्य किं वेधसेयं सुषमासमा[4]सौ। धृत्युद्भवा यच्चिबुके चकास्ति निम्ने मनागङ्गुलियन्त्रणेव॥ १५९॥

१ अलकाः केशाः; पक्षे,—कुबेरनगरी. २ वैश्रवणस्य कुबेरस्य. पक्षे,—वै इति पदच्छेदः श्रवणस्य कर्णस्य. ३ प्रवालकान्तिः; पक्षे,—विगता द्रुमच्छाया यस्मात्. ४ मरुदेशस्थमार्गः. ५ छिद्रे जाते सतीत्यध्याहार्यम्. ६ मूल्यम्. ७ संजातव्रणम्. ८ अमूल्यताम्. ९ बन्धूकपुष्पम्; पक्षे,—बन्धुभूता जीवाः.

१ लौहित्यात्. २ निकृष्टत्वम्. ३ तारतम्यम्. ४ मर्मस्पृक्.

## मुखम्

जितेन्दुपद्मलावण्यं कः कान्तावदनं जयेत्। मुक्त्वा तदेव सुरतश्रमजिह्मितलोचनम् ॥ १६० ॥ चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् । तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥ १६१ ॥ विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम् । आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥ १६२ ॥ मुखं वहति बन्धूकबन्धुरेणाधरेण सा। पूर्णेन्दुमिव सौन्दर्यादङ्कलालितकौस्तुभम् ॥ १६३ ॥ विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम्। धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ १६४ ॥ शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् । करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥ १६५ ॥ राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ १६६ ॥ आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् । भ्रमद्भ्रमरसंकीर्णं स्मरामि सरसीरुहम् ॥१६७॥ इयं सुनयना दासीकृततामरसश्रिया। आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ १६८ ॥ लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्। लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ॥ १६९ ॥ ननु नीलाञ्चलसंवृतमाननमाभाति हरिणनयनायाः। प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥ १७० ॥ अम्बुजमम्बुनि मग्नं त्रासादाकाशमाश्रितश्चन्द्रः । संप्रति कः परिपन्थी यं प्रति कोपारुणं वदनम् ॥ १७१ ॥ आसायं[1] सलिलभरे सवितारमुपास्य सादरं तपसा। अधुनाब्जेन मनाक्तव मानिनि तुलना मुखस्याप्ता ॥ १७२ ॥ सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे। वदनपरिपूर्णचन्द्रे सुन्दरि राकास्ति नात्र संदेहः ॥ १७३ ॥ पुंसां दर्शय सुन्दरि मुखेन्दुमीषत्त्रपामपाकृत्य। जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥ १७४ ॥ अबले सलिले व्यवसता ते मुखभावो[2] गमितो न पङ्कजेन। कथमादिमवर्णतान्त्यजस्य[3] द्विजराजेन[4][5] कृतोरुनिग्रहस्य[6] ॥ १७५ ॥ सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात्। अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ १७६ ॥ यः ससर्ज कमलं रमागृहं विश्वलोचनमहोत्सवं विधिः। एष तादृगसृजन्मृगीदृशो मीनकेतननिकेतनं मुखम् ॥ १७७ ॥ साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ १७८ ॥ तस्या मुखस्यातिमनोहरस्य कर्तुं न शक्तः सदृशं प्रियायाः। अद्यापि शीतद्युतिरात्मबिम्बं निर्माय निर्माय पुनर्भिनत्ति ॥ १७९ ॥ अनेन रम्भोरु तवाननेन पीयूषभानोस्तुलया धृतस्य। ऊनस्य नूनं परिपूरणाय तारा स्फुरन्ति प्रतिमानखण्डाः ॥ १८० ॥ अस्या मुखस्यास्तु न पूर्णिमास्य पूर्णस्य जित्वा महिमा हिमांशुम्। भ्रूलक्ष्मखण्डं दधदर्धमिन्दुर्भालस्तृतीयः खलु यस्य भागः ॥ १८१ ॥ व्यधत्त धाता मुखपद्ममस्याः सम्राजमम्भोजकुलेऽखिलेऽपि। सरोजराजौ सृजतोऽदसीयां नेत्राभिधेयावत एव सेवाम् ॥ १८२ ॥ दिवारजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम्। अस्या यदास्ये न तदा तयोः श्रीरेकश्रियेदं तु कदा न कान्तम् ॥ १८३ ॥ अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात्। अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित् ॥ १८४ ॥ अस्या मुखेनैव विजित्य नित्यस्पर्धी मिलत्कुङ्कुमरोपभासा। प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठन्परिवेषपाशः ॥ १८५ ॥ विधोर्विधिर्बिम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि। अभङ्गुरश्रीकममुं किमस्या मुखेन्दुमस्थापयदेकशेषम् ॥ १८६ ॥ कपोलपत्त्रान्मकरात्सकेतुर्भ्रूभ्यां जिगीषुर्धनुषा जगन्ति। इहावलम्ब्यास्ति रतिं मनोभू रज्यद्द्वयस्यो मधुनाधरेण ॥ १८७ ॥ धिक्तस्य मन्दमनसः कुकवेः कवित्वं यः स्त्रीमुखं च शशिनं च समं करोति। भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि कोपप्रसादहसितानि कुतः शशाङ्के ॥ १८८ ॥ चन्द्रं कलङ्करहितं शफरद्वयं च निस्तोयमन्धतमसं च सुगन्धि तन्व्याः। वक्त्रच्छलेन भुवि सृष्टवतो विधातुर्वर्ण्येत केन करकौशलमद्भुतं तत् ॥ १८९ ॥ अस्यामपूर्व इव कोऽपि कलङ्करिक्तश्चन्द्रोऽपरः किमुत तन्मकरध्वजेन। रोमावलीगुणमिलत्कुचमन्दरेण निर्मथ्य नाभिजलधिं ध्रुवमुद्धृतः स्यात् ॥ १९० ॥ लोके कलङ्कमपहातुमयं शशाङ्को जातो यतस्तव मुखं तरलायताक्षि। तत्रापि कल्पयसि तन्वि कलङ्कलेखां नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥ १९१ ॥ यन्मञ्जुसिञ्जितमितो रसनामणीनां यच्छ्वाससौरभबलादलयो वदन्ति। यद्गीतयः स्खलदलंकृतयश्च लीला दोलाविलासतरलस्तदयं मुखेन्दुः ॥ १९२ ॥ प्रविश झटिति गेहं मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्तते शीतरश्मेः। तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥ १९३ ॥ यदमरशतैः सिन्धोरन्तः कथंचिदुपार्जितं सकल-

१ सायंकालपर्यन्तम्. २ मुखत्वम्; मुखसाम्यमित्यर्थः. ३ आदौ मवर्णो यस्य तस्य भावस्तत्ता; पकारादेः पङ्कजस्य मकारादित्वं कथमित्यर्थः; पक्षे,—ब्राह्मणत्वम्. ४ अन्ते जकारो यस्यैतादृशस्य पङ्कजस्य; पक्षे,—अतिशूद्रस्य. ५ चन्द्रेण; पक्षे,—ब्राह्मणश्रेष्ठेन. ६ कृत उरुर्महान्निग्रहो दण्डो यस्य.

१ तुलनम्.

मपि तद्धात्रा कान्तामुखे विनिवेशितम् । सुरसुमनसः श्वासामोदे शशी च कपोलयोरमृतमधरे तिर्यग्भूते विषं च विलोचने ॥१९४॥ असावन्तश्चञ्चद्बिकचनवलीलाब्ज-युगलस्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि । विना दोषा-सङ्गं सततपरिपूर्णाखिलकलः कुतः प्राप्तश्चन्द्रो विगलित-कलङ्कः सुमुखि ते॥ १९५ ॥ जगन्नेत्रानन्दं वदनमतुलं पक्ष्मलदृशः कथंकारं पङ्केरुहमनुविधातुं प्रभवति । अयं चेदाकाङ्क्षी सह मदनकोदण्डलतया वराको राकेन्दुः कुवलययुगं किं न वहति ॥ १९६ ॥ अनाकाशे चन्द्रः सरसिजदलद्वन्द्वसहितो गृहीतः पश्चार्धे कुटिलकुटिलैः सोऽपि तिमिरैः । सुधां मुञ्चत्युच्चैरशनिमथ संमोहजननी किमुत्पातालीयं वदत जगतः कर्तुरुदिता ॥ १९७ ॥ सुधा-बद्धग्रासैरुपवनचकोरैरनुसृतां किरंज्योत्स्नामच्छां नवलवलि-पाकप्रणयिनीम् । उपप्राकाराग्रं प्रेहिणु नयने तर्कय मनाग-नाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥ १९८ ॥ विना सायं कोऽयं समुदयति सौरभ्यसुभगः किरंज्योत्स्नाधारा-मधिधरणि तारापरिवृढः । धनुर्धत्ते स्मारं तिरयति विहारं न तमसां निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥ १९९ ॥ अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता । कुहूभिर्नो लुप्तो न च युवति-वक्रेण विजितः कलानाथः कोऽयं कनकलतिकायामुदयते ॥ २०० ॥ स्मितज्योत्स्नागङ्गा तपनतनया श्यामलरुचिः सरस्वत्योष्ठाभारुणकिरणसौन्दर्यजयिनी । इमास्तिस्रस्तीर्था-धिप इव मुखे सुभ्रु मिलितास्तवेदं सेवन्को न लभत इहा-नन्दलहरीम् ॥ २०१ ॥ कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गे जलं मैत्रं मण्डलमुज्ज्वलं चिरमधो नीता-स्तथा कण्टकाः । इत्याकृष्टशिलीमुखेन रचनां कृत्वा तद-त्यद्भुतं यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम् ॥ २०२ ॥ आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि व्यक्तं जन्मसमानमेव मिलितामंशुच्छटां वर्षति । आत्म-द्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः संकोचादथ दुःस्थितस्य न विधेस्तच्छीलमुन्मीलितम् ॥ २०३ ॥ तानि प्राञ्चि दिनानि यत्र रजनी सेहे तमिस्रापदं सा सृष्टिर्विरराम यत्र भवति ज्योत्स्नामयो नातपः । अद्यान्यः समयस्तथा हि तिथ-योऽप्यस्या मुखसोदये हस्ताहस्तिकया हरन्ति परितो राकावराकीयशः ॥ २०४ ॥ अज्ञातेन्दुपराभवं परिलस-द्यालोलनेत्राञ्जनं भ्रान्तभ्रूलतमैणनाभितिलकं श्रीखण्डपत्राल-कम् । बन्धूकाधरसुन्दरं सुरमुनिव्यामोहि वाक्यामृतं त्रैलोक्याद्भुतपङ्कजं वरतनोरास्यं न कस्य प्रियम् ॥ २०५ ॥

१ प्रसारयन्. २ लताविशेषः. ३ सदृशीम्. ४ प्रेरय. ५ ईषत्.

चातुर्यस्यैकचिह्नं फलममलगिरां मूलमुत्तापशान्तेः पद्मायाः सप्रसादं स्थलमपि च रुचां कोशभूतं फलानाम् । शृङ्गार-स्याभिमानं शरदमृतकरस्पर्धि सौभाग्यसिन्धोरास्यं तस्याः सहास्यं मनसि न मृदुले कस्य लास्यं तनोति ॥ २०६ ॥

### स्मितम्

कामबाणप्रहारेण मूर्च्छितानि पदे पदे । जीवन्ति युवचेतांसि युवतीनां स्मितामृतैः ॥ २०७ ॥ स्मयमान-मायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् । असमग्र-लक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ २०८ ॥ धवलीकरोति हरितो मलिनीकुरुते मनः सपत्नीनाम् । अस्या हास्यविकासो मम तु मनो रक्तमाचरति ॥ २०९ ॥ यदि प्रसादीकुरुते सुधांशोरेषा सहस्रांशमपि स्मितस्य । तत्कौमुदीनां कुरुते तमेव निमित्त्यं देवः सफलं स्वजन्म ॥ २१० ॥

### कण्ठः

कण्ठस्य विदधे कान्तिं मुक्ताभरणता यथा । नास्याः स्वभावरम्यस्य मुक्ताभरणता तथा ॥ २११ ॥ असा-बुद्वेललावण्यरत्नाकरसमुद्भवः । जगद्विजयमाङ्गल्यशङ्खः कुसुमधन्वनः ॥ २१२ ॥ श्रोत्रपीयूषगण्डूषैः काकलीकल-गीतिभिः । कण्ठः कुण्ठितचातुर्यो विपञ्चीपञ्चमध्वनेः ॥ २१३ ॥ अयं त्रयाणां ग्रामाणां विधानं मधुरध्वनिः । रेखात्रयमितीवास्याः सूत्रितं कण्ठकन्दले ॥ २१४ ॥ कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्त-लस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्य-भावः ॥ २१५ ॥ कवित्वगानप्रियवादसत्यान्यस्या विधाता न्यधिताधिकण्ठम् । रेखात्रयन्यासमिषादमीषां वासाय सोऽयं विबभाज सीमाः ॥ २१६ ॥ मुक्तोत्करः संकटशुक्तिमध्या-द्विनिर्गतः सारसलोचनायाः । जानीमहेऽस्याः कमनीय-कम्बुग्रीवाधिवासाद्गुणवत्त्वमाप ॥ २१७ ॥

### वाणी

अमृतद्रवमाधुरीधुरीणां गिरमाकर्ण्य कुरङ्गलोचनायाः । मुहुरभ्यसनं कषायकण्ठी कलकण्ठी कुरुते कुहूरुतेन ॥ २१८ ॥ स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजात-वाचि । अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥२१९॥ शिरीषकोषादपि कोमलाया वेधा विधा-याङ्गमशेषमस्याः । प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदु-त्वमुद्राम् ॥२२०॥ प्रसूनबाणाद्वयवादिनी सा कापि द्विजे-नोपनिषत्पिकेन । अस्याः किमास्यद्विजराजतो वा नाधीयते भैक्षभुजा तरुण्यः ॥२२१॥ पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोः श्रयणात्सपत्नीम् । आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥२२२॥ कण्ठे वसन्ती चतुरा

१ प्रक्षिप्य.

यदस्याः सरस्वती वादयते विपञ्चीम् । तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम् ॥ २२३ ॥

### बाहू

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः । जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ २२४ ॥ शब्दवद्भिरलंकारैरुपेतमतिकोमलम् । सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम् ॥ २२५ ॥ सरले एव दोर्लेखे यदि चञ्चलचक्षुषः । असुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥ २२६ ॥ बाहू तस्याः कुचाभोगनिरुद्धान्योन्यदर्शनौ । मन्ये तं कथमेताभ्यां मृणालीकीर्तिलुण्ठनम् ॥ २२७ ॥ बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् । उच्चैस्तु तच्चित्रममुष्य भग्नस्यालोक्यते निर्व्यथनं यदन्तः ॥ २२८ ॥ अजीयतावर्तशुभंयु नाभ्यां दोर्भ्यां मृणालं किमु कोमलाभ्याम् । निःसूत्रमास्ते घनपङ्कमृत्सु मूर्तासु नाकीर्तिपु तन्निमग्नम् ॥ २२९ ॥

### करौ

कुसुमायुधकोदण्डे हस्तौ विस्तीर्णचक्षुषः । अशोकपल्लवास्त्राणां प्रतिहस्तत्वमागतौ ॥ २३० ॥ नाहं धार्यमधीराक्षि मुखेन्दोः संमुखं त्वया । इतीव लीलापद्मेन करेऽस्याः कान्तिरर्पिता ॥ २३१ ॥ स्पृष्टस्त्वयैव दयिते स्मरपूजाव्यापृतेन हस्तेन । उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ २३२ ॥ अस्याः करस्पर्शनगर्धनर्द्धिर्बालत्वमापत्खलु पल्लवो यः । भूयोऽपि नामाधरसाम्यगर्वं कुर्वन्कथं वास्तु न स प्रवालः ॥ २३३ ॥ अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः । इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तया स्याम् ॥२३४॥ मुग्धे प्रतारयसि किं कुसुमानि हर्तुमेतान्यशोकविटपस्य कुतूहलेन । अस्यैव तन्वि नवपल्लवडम्बरेषु त्वं हारयिष्यसि ननु स्वयमेव पाणी २३५

### कङ्कणम्

गौराङ्ग्या भुजलावण्यमीलितं हेमकङ्कणम् । कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत ॥ २३६ ॥ प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्याः काञ्चनकङ्कणम् । नालं वलयितं हस्ते हेमाब्जस्येव राजते ॥ २३७ ॥ सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली । तूणचम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥ २३८ ॥ सहेमकटकं धत्ते सा करं पद्मतस्करम् । पद्मिनीवल्लभस्येव मूले वेष्टितमंशुना ॥ २३९ ॥ हस्ते चकास्ति बालायास्तस्याः कङ्कणमालिका । मनःकुरङ्गबन्धाय पाशालीव मनोभुवः ॥ २४० ॥ कृशाङ्ग्याः कुचभारेण दूरमुत्सारितौ भुजौ । वहतः कलहायेव वाचालां वलयावलिम् ॥ २४१ ॥ न्यस्तानि दन्तवलयानि करे कदाचित्तानीन्दुखण्डघटितानि ममैष तर्कः । अस्या निसर्गमृदुपाणिसरोजमेषामामोचने झटिति यन्मुकुलीबभूव ॥ २४२ ॥

### हस्तरेखा

आयुरेखां चकारास्याः करे द्राघीयसीं विधिः । शौण्डीर्यगर्वनिर्वाहप्रत्याशां च मनोभुवः ॥ २४३ ॥

### अङ्गुल्यः

सुदीर्घा रागशालिन्यो बहुपर्वमनोहराः । तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥ २४४ ॥ रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपद्मतूणे । हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ॥ २४५ ॥

### मुद्रिका

अङ्गुलीषु कुरङ्गाक्ष्याः शोभते मुद्रिकावलिः । प्रोतेव बाणैः पुष्पेषोः सूक्ष्मलक्ष्यपरम्परा ॥ २४६ ॥

### स्तनौ

मृद्वङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ । अत एव बहिर्यातौ हृदयात्ते पयोधरौ ॥२४७॥ तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् । हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥ २४८ ॥ यन्न माति तदङ्गेषु लावण्यमतिसंभृतम् । पिण्डीकृतमुरोदेशे तत्पयोधरतां गतम् ॥२४९॥ स्वयंभूः शंभुरम्भोजलोचने त्वत्पयोधरः । नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ २५० ॥ अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् । श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥ २५१ ॥ प्रायश्चित्तं न गृह्णीतस्तन्वङ्ग्याः पतितौ स्तनौ । अत एव तयोः स्पर्शे लोकोऽयं शिथिलादरः ॥२५२॥ पयोधरघनीभावस्तावदम्बरमध्यगः । आश्लेषोपगमस्तत्र यावन्नैव प्रवर्तते ॥ २५३ ॥ भाति निर्विवरे तस्याश्चित्रं कुचयुगान्तरे । क्रीडाकुण्डलितोच्चण्डकोदण्डः कुसुमायुधः ॥ २५४ ॥ कुचद्वये चकोराक्षी चिम्बुकप्रान्तचुम्बिनि । मर्मौक्तिषु न शक्नोति स्थातुं लज्जानतानना ॥ २५५ ॥ शङ्के तच्चित्तमक्लेशसाध्यं कुसुमधन्वनः । काठिन्यं बहिरेवास्याः स्तनाभ्यां येन धारितम् ॥ २५६ ॥ सा स्तनाञ्जलिबन्धेन मन्मथं प्रथमागतम् । करोतीवोन्मुखं बाला बान्धवं यौवनश्रियः ॥ २५७ ॥ अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम् । स्फुटतां कञ्चुकानां यन्न्यायात्यावरणीयताम् ॥ २५८ ॥ कुम्भौ सदम्भौ करिणां कलशौ मन्दकौशलौ । चक्रवाकौ वराकौ च तदीयकुचयोः पुरः ॥ २५९ ॥ मुखेन्दुचन्द्रिकापूरप्लाव्यमानौ पुनः पुनः । शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ ॥ २६० ॥ तत्कुचौ चरतः किंचिन्नूनं मनसिजव्रतम् । नित्योन्मुखौ यदासाते मौलीरत्नस्य भास्वतः ॥ २६१ ॥ सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम् । गर्वपर्वतमारूढश्चित्रं कुसुमकार्मुकः ॥ २६२ ॥ तस्यास्तुङ्गस्तनच्छाया

१ लक्ष्मः.

१ विशेषदर्शनरहितम्; पक्षे,–विश्लेषशून्यम्. परस्परं संश्लिष्टत्वात्. २ वेदः; पक्षे,–कर्णः. ३ पापनिष्कृतिम्; पक्षे,–प्रायो बाहुल्येन चित्तं स्वान्तम्. ४ पातकिनौ; पक्षे,–गलितौ. ५ पयोधराणां मेघानां घनीभावः प्राचुर्यम्. ६ आकाशमध्यवर्ती च. ७ आश्लेषानक्षत्रस्योदयः; पक्षे,–सुगमम्.

चकास्ति त्रिवलीतटे । लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥ २६३ ॥ स्वकीयं हृदयं भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥ २६४ ॥ अल्पं निर्मितमाकाशमनालोच्यैव वेधसा । इदमेवंविधं भावि भवत्याः स्तनमण्डलम् ॥ २६५ ॥ उच्छ्वसन्मण्डलप्रान्तरेखमाबद्धकुड्मलम् । अपर्याप्तमुरो वृद्धेः शंसत्यस्याः स्तनद्वयम् ॥ २६६ ॥ मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् । इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥ २६७ ॥ पटविघटितमपि कुचतटमकपटमनसः कुरङ्गनयनायाः । मणिभवमयूखपटलीपटलीनतया न सम्यगालोचि ॥ २६८ ॥ प्रतिपक्षो यदि वक्षोरुहपरिणाहः कुरङ्गनयनायाः । आकाशवासतपसः श्रीफल विफलस्तवायासः ॥२६९॥ चञ्चत्काञ्चनशैलावस्था वक्षोरुहौ तन्व्याः । नो चेत्तावधिरूढा कथमनिमिषतां भजेत मे दृष्टिः ॥ २७० ॥ करतलयुगपरिणद्धे कुचकलशे कुङ्कुमारुणे तस्याः । सिन्दूरिते करिपतेः कुम्भे नक्षत्रमालेव ॥२७१॥ काठिन्यमङ्गैरखिलैर्निरस्तं कुचौ युवत्याः शरणं जगाम । अधः पतिष्याव इतीव भीत्या न शक्नुतस्तावपि हातुमेतत् ॥२७२॥ दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती । वक्षोजताश्यै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥ २७३ ॥ अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम् । मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥ २७४ ॥ किं नर्मदाया मम सेयमस्या दृश्यामितो बाहुलतामृणाली । कुचौ किमुत्तस्थतुरन्तरीपे स्मारोष्मशुष्यत्तरवाल्यवारः ॥ २७५ ॥ तालं प्रभु स्यादनुकर्तुमेतावुत्थानसुस्थौ पतितं न तावत् । परं च नाश्रित्य तरुं महान्तं कुचौ कृशाङ्ग्याः स्वत एव तुङ्गौ ॥ २७६ ॥ एतत्कुचस्पर्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम् । तस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः ॥ २७७ ॥ निःशङ्कसंकोचितपङ्कजोऽयमस्यामुदीतो मुखमिन्दुबिम्बः । चित्रं तथापि स्तनकोकयुग्मं न स्तोकमप्यञ्चति विप्रयोगम् ॥ २७८ ॥ आभ्यां कुचाभ्यामिभकुम्भयोः श्रीरादीयतेऽसावनयोः क ताभ्याम् । भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥ २७९ ॥ कराग्रजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत्कुचौ चेत् । सर्वं तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लुब्धम् ॥ २८० ॥ मध्यं तनूकृत्य यदीदमीयं वेधा न दध्यात्कमनीयमंशम् । केन स्तनौ संप्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गयष्टेः ॥ २८१ ॥ तवोपकण्ठस्थितताररदारस्फुरत्प्रभाशैवलिनीजलेषु । लीनो मनोजद्विप एव तस्य व्यक्तौ न गण्डौ किमुरोजपिण्डौ ॥ २८२ ॥ सतां समालोकयतां विवेकान्हृदीपि हुत्वा स्मरबाणवह्नौ । धत्ते स्तनः श्यामशिरोमिषेण तनूदरि त्र्यायुपभस्मबिन्दुम् ॥ २८३ ॥ नयननीरज किं भवता कृतं मुखशशी यदयं रिपुराश्रितः । इति वचो वितरीतुमिवोन्मुखं वरतनोः स्तनचक्रयुगं बभौ ॥ २८४ ॥ बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण । अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥ २८५ ॥ कनकक्रमुकायितं पुरस्तादथ पङ्केरुहकोरकायमाणम् । क्रमशः कलशायमानमास्ते सुदृशो वक्षसि कस्य भागधेयम् ॥ २८६ ॥ अपि तद्वपुषि प्रसर्पतोर्गमितः कान्तिझरेरगाधताम् । स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥ २८७ ॥ कलशे निजहेतुदण्डजः किमु चक्रभ्रमिकारिता गुणः । स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रमिमातनोति यत् ॥ २८८ ॥ जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाचलेन सार्धम् ॥ २८९ ॥ शुकीचञ्चूत्खातच्छवि फलयुगं यौवनतरोरयःशङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् । समुद्रं भोगायामृतकलशयुग्मं सुकृतिनः कुचद्वन्द्वं तन्व्या नवनखपदाङ्कं विजयते ॥ २९० ॥ कुचावस्याः कामद्विपकलभकुम्भाविति परे वदन्त्यन्ये वक्षःसरसि कमले काञ्चनघटौ । ममायं सिद्धान्तः स्फुरति मदनेन त्रिजगतीं विनिर्जित्य न्युब्जीकृतमिव निजं दुन्दुभियुगम् ॥ २९१ ॥ जम्बीरं वा कमलमुकुलं हेमगुच्छं यथेच्छं माङ्गल्यं वा कलयतु जनो भूपतेर्मन्मथस्य । एतद्द्वन्द्वं कलयति मतिर्मामकीना नवीना केनाप्यस्या हृदि विनिहितं मन्मथानन्दकन्दम् ॥ २९२ ॥ पुष्पेषोरभिषेकहेमकलशौ हारप्रभावाहिनीचक्राह्वौ मदनोन्मदद्विपपतेः कुम्भौ रतेः कन्दुकौ । कन्दौ बाहुमृणालिकायुगलयोर्लीलालतास्फले नव्यौ रत्नसमुद्रकौ वहति सा लावण्यपूर्णौ स्तनौ ॥ २९३ ॥ यूनां मोहमहाफलप्रसविनीं नाभ्यालवालोत्थितां सेक्तुं रोमलतां मुखामृतनिधेर्लावण्यनामामृतम् । नेष्यन्सारणिकां विभज्य कृतवान्कूटद्वयं पार्श्वयोः पञ्चेषुस्तदिदं पयोधरयुगं लोकाः समाचक्षते ॥ २९४ ॥ उद्भिन्नं किमिदं मनोभवनृपक्रीडारविन्दद्वयं सूते तत्कथमेकतः किल लसद्रोमावलीनालतः । चक्रद्वन्द्वमिदं क्षमं तदपि न स्थातुं मुखेन्दोः पुरो लावण्याम्बुनि

१ कण्ठप्रमाणे. २ सूर्याराधनम्. ३ लावण्यलेशं कपर्दिकां च.

१ चक्रवाकौ. २ संपुटौ. ३ पर्वतशिखरम्.

मग्नयौवनगजस्य वैमि कुम्भद्वयम् ॥ २९५ ॥ उद्भेदं प्रतिपद्य पक्वबदरीभावं समेत्य क्रमात्पुंनागाकृतिमाप्य पूगपदवीमारुह्य बिल्वश्रियम् । लब्ध्वा तालफलोपमां च ललितामासाद्य भूयोऽधुना चञ्चत्काञ्चनकुम्भजृम्भणमिभावस्याः स्तनौ बिभ्रतः ॥ २९६ ॥ रत्या[1]प्तप्रियलाञ्छने कठिनता[2]वासे रसा[3]लिङ्गिते प्रह्लादै[4]करसे क्रमा[5]दुपचिते भूभृ[6]द्गुरुत्वापहे । कोकस्प[7]र्धिनि भोग[8]भाजि जनिता[9]नङ्गे खेली[10]नोन्मुखे भाति श्रीर[11]मणावतारदशकं बाले भवत्याः स्तने ॥ २९७ ॥ मध्योऽयं बलिसद्म दृष्टिरधिकं पृथ्वी सुपर्वालयो बाहुस्तत्कमलेक्षणा त्रिजगतीमेकैव संरक्षति । इत्येवं स्तनयोर्मिषेण कनकक्षोणीभृता संधृतौ यस्यामात्मकिशोरकौ पविभयव्यग्रेण जम्भद्विषः ॥ २९८ ॥

### कञ्चुकी

उपरि पीनपयोधरपातिता पटकुटीव मनोभवभूपतेः । विजयिनस्त्रिपुरारिजिगीषया तव विराजति भामिनि कञ्चुकी ॥ २९९ ॥

### हारः

घटीयन्त्रायते हारो नाभिकूपे मृगीदृशः । संसेक्तुमिव लावण्यपयसा यौवनद्रुमम् ॥ ३०० ॥ हारः कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः । नाभिलावण्यपानीयघटीयन्त्रगुणोपमः ॥ ३०१ ॥ मात[12]ङ्गकुम्भसंसर्गजातपातकशङ्कया । स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिजले गले ॥ ३०२ ॥ प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः । मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ ३०३ ॥ हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले । मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥ ३०४ ॥ मणिहारलता विभाति तन्व्याः स्तनसिंहासनसीम्नि तस्थिवांसम् । अभिषेक्तुमनङ्गदेवराजं गलशङ्खाद्गलितेव दुग्धधारा ॥ ३०५ ॥ ग्रीवाद्भुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम् । आलिङ्गयतामप्यवलम्बमाना सुरूपताभागखिलोर्ध्वकाया ॥ ३०६ ॥ स्तनातटे चन्दनपङ्किलेऽस्या जातस्य यावद्युवमानसानाम् । हारावलीरत्नमयूखधाराकाराः स्फुरन्ति स्खलनस्य रेखाः ॥ ३०७ ॥ निविडानुषक्तकुचकोकदम्पती मुखतारकापरिवृढेन शासितुम् । अवतारितेव निजतारकावली हरिणीदृशः स्फुरति हारवल्लरी ॥ ३०८ ॥ एकावलीकलितमौक्तिककैतवेन तन्व्याः समुन्नतपयोधरयुग्मसेवाम् । चक्रुर्मनांसि यमिनामतिनिर्मलानि कंदर्पमुक्तशरपातकृतान्तराणि ॥ ३०९ ॥ सारङ्गाक्ष्याः कुचकलशयोरन्तराकाशदेशः प्रासच्छेदः क्वचिदपि चलन्प्रस्खलन्निःपपात । नाभीकूपः समजनि नतस्तस्य देहच्युतासौ नक्षत्राणां ततिरिव समालम्बते हारशोभाम् ॥ ३१० ॥ मुक्तावली स्मरविदाहविपाण्डुमूले नद्धा चकास्ति सितकम्बुनि कण्ठकाण्डे । निश्चिन्वती मृगदृशो वदनं मृगाङ्कं नक्षत्रपङ्क्तिरिव संपतिता नभस्तः ॥ ३११ ॥

### मध्यदेशः

युक्तं मध्ये कृशा तन्वी कार्मुकीकरणाय यत् । अत्रैव कुसुमास्त्रेण पीड्यते श्लिष्टमुष्टिना ॥ ३१२ ॥ स्तनौ भारार्पणव्यग्रौ काञ्ची कलकलोन्मुखी । कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥ ३१३ ॥ मध्यं तव सरोजाक्षि पयोधरभरार्दितम् । अस्ति नास्तीति संदेहः कस्य चित्ते न भासते ॥ ३१४ ॥ स्मरमानसिकसमस्याः स्यात्स्तनिमा निरवधिर्मध्यः । श्रीरेव पूरयति यां न गिरां देवी न चापि गुरुरस्याः ॥ ३१५ ॥ अस्मिन्प्रकृतिमनोज्ञे लग्ना प्रायेण मान्मथी दृष्टिः । सुन्दरि यतो भवत्याः प्रतिक्षणं क्षीयते मध्यः ॥ ३१६ ॥ वयःप्रकर्षादुपचीयमानस्तनद्वयस्योद्वहनश्रमेण । अत्यन्तकार्श्यं वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः ॥ ३१७ ॥ बद्ध्वा ह्रियोमा त्रिवली गुणेन गृह्णाति रोमावलिनेत्रवल्लीम् । इतीव चिन्ताकुलभङ्गुरोऽयं मध्यो मृगाक्ष्याः कृशतामुपैति ॥ ३१८ ॥ काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मीर्लब्धा स्थितिः स्तनतटेषु च रत्नहारैः । नो भूषिता वयमितीव नितम्बिनीनां कार्श्यं निरर्गलमधार्यत मध्यभागैः ॥ ३१९ ॥ स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते तदनुपलभमानास्तर्कयन्तोऽपि लोकाः । कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ ३२० ॥ तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे सीमादेशं हरति नृपतौ यौवने जृम्भमाणे । मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः शून्यं मध्यस्थलमिति ततः किंवदन्तीं वदन्ति ॥ ३२१ ॥ देहं हेमद्युति परिहृताम्भोजवृष्टिं च दृष्टिं राशीभूतभ्रमरपटलीचारुवेषं च केशम् ।

१ रतावाप्तं प्रियस्य लाञ्छनं चिह्नं नखक्षताङ्गरागादिकं येन तथाभूते; पक्षे,-रत्यां आप्तः प्रियः कामस्तस्य लाञ्छनं मत्स्यस्तद्रूपे. २ कठिनताया आवासे स्थानभूते; पक्षे,-कठिनताया आवासे कूर्मे. ३ रसेनालिङ्गिते; पक्षे,-रसया पृथिव्या स्वोद्धरणकाले आलिङ्गिते वराहे. ४ प्रकृष्टाह्लादे एकरसे तत्परे; पक्षे,-प्रह्लादे एको रसः प्रीतिर्यस्य तस्मिन्नृसिंहे. ५ क्रमाद्बदरामलकादिपरिमाणलाभेनोपचिते प्रवृद्धे; पक्षे,-क्रमः पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने. ६ भूभृतां पर्वतानां गुरुत्वमपहन्ति नाशयति तादृशे. ततोऽपि महत्त्वात्; पक्षे,-भूभृतां राज्ञां गौरवनाशके भार्गवे. ७ चक्रवाकस्पर्धाशीले. तत्सदृशत्वात्; पक्षे,-सीतावियोगातुरतया चक्रवाकशापदे रामे. ८ भोगः सुखं शरीरं तद्भाजि; पक्षे,-भोगः फणा तद्भाजि शेषावतारे बलभद्रे. ९ जनितमदने; पक्षे,-जनितमनङ्गमङ्गस्य शरीरस्य विरुद्धं मौनभोगत्यागसमाधिप्रभृति येन तस्मिन्बुद्धे. १० खेष्विन्द्रियेषु लीना आसक्ता उन्मुखा यस्मिंस्तादृशे; पक्षे,-खलीनमश्वस्य वल्गा तदुन्मुखे कल्किनीति. ११ विष्णोः. १२ अन्त्यजः; पक्षे,-गजः.

१ पुष्पमार्गणः. २ मध्यमम्.

दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा सारङ्गाक्ष्याः किमु रचयितुं विस्मृतो मध्यदेशः ॥ ३२२ ॥ आक्रान्ते शैशवेऽस्मिन्नभिनववयसा शासनान्मीनकेतोर्बालाया नेत्रयुग्मं श्रुतियुगमविशङ्कूयुगेनापि सार्धम् । वक्षोजद्वन्द्वमुच्चैर्बहिरिह निरगाच्छ्रोणिबिम्बेन साकं मध्यः संगृह्य बद्धस्त्रिवलिभिरमितः कार्श्यमङ्गीकरोति ॥ ३२३ ॥

## नाभिः

मन्ये समाप्तलावण्ये सारसर्गे मृगीदृशः । अपूरयित्वैव गतो नाभिरन्ध्रं चतुर्मुखः ॥ ३२४ ॥ कुचकुम्भौ समालम्ब्य तरन्ती कान्तिनिम्नगाम् । भ्रमादितस्ततो दृष्ट्वा दृष्टिर्नाभौ निमज्जति ॥३२५॥ स्तनौ तुङ्गौ समारूढे चापन्यस्तभरे स्मरे । कोदण्डाटनिमुद्रेव जाता नाभी नतभ्रुवः ॥३२६॥ उरोजवचक्रमनोज्ञरूपा केशावलीव भ्रमराजिता वा । संगीतवत्सतपुटभेदहृद्या विद्येव नाभीसरसी मृगाक्ष्याः ॥ ३२७ ॥

## वलित्रयम्

एकमेव वलिं[1] बध्वा जगाम हरिरुन्नतिम् । तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥ ३२८ ॥ स्तनभाराय मध्येन त्रिवलिव्याजतः कृता । तस्याः शङ्कितभङ्गेन भ्रूभङ्गानामिवावलिः ॥ ३२९ ॥ तदीयत्रिवलीमार्गसोपानारोहणश्रमः । अनङ्गत्वादनङ्गस्य जातो रत्येकगोचरः ॥ ३३० ॥ परिहृत्य दुरारोहं तस्याः स्तनतटं कृता । कंदर्परथसंचारमार्गालीव वलित्रयी ॥ ३३१ ॥ दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयोः । पन्थानं स्तनयोस्तस्यास्त्रिवलीविषमं विधिः ॥ ३३२ ॥ राजति त्रिवली तस्याः स्तनभारोन्नतिक्रमात् । उपर्युपरि जातेव हारमुद्रापरम्परा ॥ ३३३ ॥ मध्यत्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम् । छलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥३३४॥ मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला । आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥३३५॥ अनन्यसाधारणकान्तिकान्ततनोरमुष्याः किमु मध्यदेशः । जगत्रयीजन्मभृतां निषण्णा चित्तावलीयं त्रिवलीमिषेण ॥३३६॥ मध्यात्समानीय सुसारभागं वक्षोजमुत्पादयिता विधाता । अतिप्रयत्नात्त्रिवलीमिषेण सोपावनर्तमेत्रितयं चकार ॥३३७॥ मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा तन्वीमेनां तव तनुलतां मध्यदेशे बभार । यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारास्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसंधिरेखाः ॥३३८॥

## रोमावली

नाभिरन्ध्रं प्रविष्टास्याः श्यामला रोमवल्लरी । त्रस्ता तिमिरलेखेव मेखलामणिकान्तितः ॥ ३३९ ॥ भाति रोमावली तस्याः पयोधरभरोन्नतौ । जाता रत्नशलाकेव श्रोणिवैदूर्यभूमितः ॥ ३४० ॥ नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी । कंदर्पहेमकटकाल्लाक्षाधारेव निर्गता ॥ ३४१ ॥ नाभीवलयसंबद्धा रोमाली भाति सुभ्रुवः । सहिता निगडेनेव शृङ्खला स्मरदन्तिनः ॥ ३४२ ॥ रोमावली विलासिन्याः प्रविष्टा नाभिमण्डलम् । कियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रति ॥ ३४३ ॥ लिखन्त्याः कामसाम्राज्यशासनं यौवनश्रियः । गलितेव मषीधारा रोमाली नाभिगोलकात् ॥३४४॥ जाने रात्रिषु तन्मध्ये ददाति शनकैः पदम् । गम्भीरनाभिकुहरप्रवेशाशङ्कया स्मरः ॥ ३४५ ॥ कुचदुर्गराजधान्योर्मध्येमार्गे मृगीदृशो मदनः । किमकृत नाभीवापीमपि रोमालीतमालवनरेखाम् ॥ ३४६ ॥ वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी । विधिनापि न रोमरेखया कृतसीम्नि प्रविभज्य रज्यतः ॥ ३४७ ॥ तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः । नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ३४८ ॥ गौरीव पत्या सुभगा कदाचित्कर्त्रीयमप्यर्धतनूसमस्याम् । इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्याः ॥ ३४९ ॥ रोमावलीरज्जुसुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् । मद्दृष्टितृष्णा विरमेद्यदि स्यान्नैषां बतैषा सिचयेन गुप्तिः ॥ ३५० ॥ उन्मूलितालानविलाभनाभिरिछिन्नस्खलच्छृङ्खलरोमदामा । मत्तस्य सेयं मदनद्विपस्य प्रस्तापवप्रोच्चकुचास्तु वास्तु ॥ ३५१ ॥ रोमावलिभ्रूकुसुमैः स्वमौर्वीचापेषुभिर्मध्यललाटमूर्ध्नि । व्यस्तैरपि स्यास्त्रिभिरेतदीयैर्जैत्रः स चित्रं रतिजानिवीरः ॥ ३५२ ॥ गभीरनाभीह्रदसंनिधाने रराज तन्वी नवरोमराजिः । मुखेन्दुभीतस्तनचक्रवाकद्वन्द्वोज्झिता शैवलमञ्जरीव ॥ ३५३ ॥ स्वर्णावदातद्युतिकायकाण्डे संपूर्णपीयूषमयूखमुख्यः । एणीदृशः पृष्ठविलम्बिवेणीबिम्बः पुरो राजति रोमराजी ॥ ३५४ ॥ पयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति । अतः समुद्गच्छति नाभिरन्ध्रतो विसारि रोमालिपिपीलिकावलिः[1] ॥ ३५५ ॥ गभीरनाभीह्रदपार्श्ववर्तिनी विराजते लोमतती मृगीदृशः । मुखारविन्दस्य रसाभिलाषिणी द्विरेफपङ्क्तिश्चलितेव नीरवा ॥ ३५६ ॥ समुदितकुचकुम्भमङ्गनाया हृदयमनङ्गमतङ्गजोऽधिशेते । तदखिलपदबन्धनाय रोमावलिरिह शृङ्खलिका विलोक्यते यत् ॥ ३५७ ॥ दत्तं मया पदमिदं नवयौवनाय त्वं सत्वरं क्वचन शैशव साधयेति । कामस्य हस्तलिखिताक्षरमालिकेव रोमावली विजयते जलजेक्षणायाः ॥ ३५८ ॥ नाभीबिलान्तरविनिर्गतपन्नगीयं संप्रस्थिता नयनखञ्जनभक्षणाय । नासामुदीक्ष्य गरुडभ्रम-

१ बलिनामानं दैत्यम्; पक्षे,–वलिम्.

१ रोमावलिरेव पिपीलिकापङ्क्तिः

मुद्वहन्ती गुसेव पीनकुचपर्वतयोरधस्तात् ॥ ३५९ ॥ अतिबहुतरलज्जाशृङ्खलाबद्धपादो मदननृपतिवाहो यौवनोन्मत्तहस्ती । प्रकटितकुचकुम्भो लोमराजीकरेण पिबति सरसि नाभीमण्डलाख्ये पयांसि ॥ ३६० ॥ रचयति युवनेत्रक्षेत्रपीयूषवृष्टिं नवजलधररेखा रोमराजिच्छलेन । यदुदयति कलापिप्रक्रियेयं तदुच्चैः स्तनघनसमयोऽस्यामाविरस्तीति विद्मः ॥ ३६१ ॥ अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिमिषात् ॥ ३६२ ॥ इयं सृष्टा चञ्चत्कनकलतिका पङ्कजभुवा निषिक्ता लावण्यामृतरसभरेणानुदिवसम् । अकस्माद्रोमालीमधुपपटलीह स्फुरति यत्ततः शङ्के पुष्पोद्गमसमयमायातमधुना ॥ ३६३ ॥ हरक्रोधज्वालावलिभिरवलीढेन वपुषा गभीरे ते नाभीसरसि कृतझम्पो[1] मनसिजः । समुत्तस्थौ तस्मादचलतनये धूमलतिका जनस्तां जानीते तव जननि रोमावलिरिति ॥ ३६४ ॥ निर्णेतव्यो मनसिजकलातन्त्रसिद्धान्तसारो जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः । रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥ ३६५ ॥ उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली रोमाली नवनीलनीरजरुचिः सेयं कलिन्दात्मजा[2] । जातं तीर्थमिदं सुपुण्यजनकं यत्रानयोः संगमश्चन्द्रो मज्जति लाञ्छनापहृतये नूनं नखाङ्कच्छलात्[3] ॥ ३६६ ॥ उत्तुङ्गस्तनभार एष तरले नेत्रे चले भ्रूलते रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् । सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥ ३६७ ॥ यूनां धैर्यतृणाङ्कुरं कवलयन् व्रीडाम्बुपूरं पिबन् शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति । नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका रोमश्रेणिमहोत्सवं वितनुते कल्याणि जानीमहे ॥ ३६८ ॥ सौन्दर्यस्य मनोभवेन गणनारेखा किमेषा कृता लावण्यस्य विलोकितुं त्रिजगतामेषा किमुद्वीविका । आनन्दद्रुमकन्दली नयनयोः किं वा समुज्जृम्भते सुन्दर्याः किमु वा स्वभावसुभगा रोमालिरुन्मीलति ॥ ३६९ ॥

### पृष्ठभागः

अस्याः खलु ग्रन्थिनिबद्धकेशमल्लीकदम्बप्रतिबिम्बवेशात् । स्मरप्रशस्ती रजताक्षरेयं पृष्ठस्थलीहाटकपट्टिकायाम् ॥ ३७० ॥

### नितम्बः

तन्नितम्बस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः । काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः ॥ ३७१ ॥ नितम्बबिम्बं बिम्बोष्ठी चन्द्रकान्तशिलाघनम् । धत्ते कंदर्पदोःस्तम्भप्रशस्तिफलकोपमम् ॥ ३७२ ॥ विस्तारिणा मुहुस्तस्याः श्रोणीबिम्बेन पीडिता । त्रुटिता त्रुटितास्मीति पूत्करोतीव मेखला ॥ ३७३ ॥ अपर्याप्तभुजायामः सखेदोऽस्याः सखीजनः । श्रोण्यां कथंचित्कुरुते रशनादामबन्धनम् ॥ ३७४ ॥ नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् । हारयत्यपरिस्पन्दा कन्दुकं क्रीडितेषु यत् ॥ ३७५ ॥ स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः । शान्तात्मनापि[1] विहितं विश्वसृजा[2] गौरवं यत्र ॥ ३७६ ॥ पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । विधिरेककचक्रचारिणं किमु निर्भर्त्सति मान्मथं रथम् ॥ ३७७ ॥ चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन । जगज्जिगीषत्यमुना नितम्बद्वयेन किं दुर्लभदर्शनेन ॥ ३७८ ॥ रोमावलीदण्डनितम्बचक्रे गुणं च लावण्यजलं च बाला । तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्ति शङ्के सहकारिचक्रम् ॥ ३७९ ॥

### काञ्ची

बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे । पङ्क्तिरिव सारसानां सुरसरितः पुलिनमण्डलाभोगे ॥ ३८० ॥ स्रस्तां नितम्बादवरोपयन्ती पुनः पुनः केसरपुष्पकाञ्चीम् । न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ ३८१ ॥

### जघनम्

तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् । दृष्टं सखीभिर्याभिस्ताः पुम्भावं मनसा ययुः ॥ ३८२ ॥ अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः । लावण्यसारसंघातः सा घना जघनस्थली ॥ ३८३ ॥ तदीयजघनाभोगगरिमा विस्मयास्पदम् । दूरपाती पृषत्कोऽभूद्येनानङ्गस्य साङ्गना ॥ ३८४ ॥ वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो ललितललितैरङ्गन्यासैः[3] पुरा रभसादिव । तदनु सहसा खिन्नेनेव[4] प्रजापतिना भृशं पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥ ३८५ ॥

### मदनमन्दिरम्

अङ्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रपत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भयेन ॥ ३८६ ॥ गौरसुग्धवनितावराङ्गके रेजुरुत्थिततनूरुहाङ्कुराः । तर्पणाय मदनस्य वेधसा स्वर्णशुक्तिनिहितास्तिला इव ॥ ३८७ ॥

### ऊरू

मन्ये तदूरू संभाव्य हस्तसर्वस्वहारिणौ । वहन्त्यस्पृश्यताहेतोर्मातङ्गत्वं मतङ्गजाः ॥ ३८८ ॥ लम्भिताः कदलिस्तम्भास्तदूरुभ्यां पराभवम् । अत्यन्तमृदुभिर्लब्धो जडैः क जयडिण्डिमः ॥ ३८९ ॥ ऊरुः कुरङ्गकदृशश्चञ्च-

[1] कृतोन्मज्जनः. [2] यमुना. [3] नखव्रणच्छलेन.

[1] प्रशान्तमनसा. [2] ब्रह्मणा. [3] अत्यन्तसुन्दरैः. [4] श्रान्तेनेव.

ल्वेलाञ्चलो भाति । सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥ ३९० ॥ तरुमूरुयुगेण सुन्दरी किमु रम्भां परिणाहिना परम् । तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३९१ ॥ रम्भापि किं चिह्वयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू । स्वस्यैव येनोपरि सा ददाना पत्राणि जागर्त्यनयोर्भ्रमेण ॥ ३९२ ॥ विधाय मूर्धानमधश्वरं चेन्मुञ्चेत्तपोभिः स्वमसारभावम् । जाड्यं च नाश्वेत्कदली बलीयस्तदा यदि स्यादिदमूरुचारु ॥ ३९३ ॥ ऊरुप्रकाण्डद्वितयेन तस्याः करः पराजीयत वारणीयः । युक्तं ह्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः ॥ ३९४ ॥ अस्यां मुनीनामपि मोदमूहे भृगुर्महान् यत्कुचशैलशीली । नानारदाह्लादि मुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥ ३९५ ॥ पश्यन्हतो मन्मथबाणपातैः शक्तो विधातुं न निमीलय चक्षुः । ऊरू विधात्रा हि कथं कृतौ तौ विन्यासवत्याः सुमतेर्वितर्कः ॥३९६॥ नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः । लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥ ३९७ ॥ कदली कदली करभः करभः करिराजकरः करिराजकरः । भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥ ३९८ ॥

**जङ्घे**

जङ्घे तदीये संतापं यज्जनस्यानुरागिणः । जनयांचक्रतुस्तीव्रं तत्र हेतुर्विलोमता ॥ ३९९ ॥ हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम् । लावण्याय कृतास्थानं कुङ्कुमेनेव सुभ्रुवः ॥ ४०० ॥ वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥ ४०१ ॥ क्रमोद्गता पीवरताधिजङ्घं वृक्षाधिरूढं विदुषी किमस्याः । अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥ ४०२ ॥

**चरणौ**

अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं[३] कियत् । इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ४०३ ॥ जाग्रतः कमलाल्लक्ष्मीं यज्जग्राह तदद्भुतम् । पादद्वन्द्वस्य मत्तेभगतिस्तेये तु का स्तुतिः ॥ ४०४ ॥ स्तनभारोऽत्र वक्रेन्दुचन्द्रिकावरणं मम । इति तत्पादयोर्लग्ना वेद्मि प्राङ्गणपद्मिनी ॥ ४०५ ॥ अत्यपूर्वस्य रागस्य पूर्वपक्षाय पल्लवाः । पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥ ४०६ ॥ दृश्यन्ते मानसोत्तंसा राजहंसाः क्वचिद्यदि । गतौ चरणयोस्तस्याः प्रक्ष्यते यावदन्तरम् ॥ ४०७ ॥ नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुवः । कृता भ्रुकुटिभङ्गीव नीलनूपुरमालया ॥ ४०८ ॥ चरणकमलं तदीयं लाक्षाबालातपेन संवलितम् । अध्यास्त भृङ्गमालावलिभिर्मणिखचितनूपुरव्याजात् ॥४०९॥ अननुरणन्मणिमेखलमविरलसिञ्जानमञ्जुमञ्जीरम् । परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ ४१० ॥ दशकैरवबान्धवान्दधानौ जडसंसर्गविमुक्तिसावधानौ । चरणौ नलिनेन तोलयन्तः कथमस्याः कवयो न यान्ति लज्जाम् ॥ ४११ ॥ अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ । आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥४१२॥ अस्याः पदौ चारुतया महान्तावपेक्ष्य सौक्ष्म्याल्लवभावभाजः । जाता प्रवालस्य महीरुहाणां जानीमहे पल्लवशब्दलब्धिः ॥ ४१३ ॥ जगद्वधूमूर्धसु रूपदर्पाद्यदेतयाधायि पदारविन्दम् । तत्सान्द्रसिन्दूरपरागरागैर्ध्रुवं प्रवालप्रबलारुणं तत् ॥ ४१४ ॥ यानेन तन्व्या जितदन्तिनाथौ पदाब्जराजौ परिशुद्धपार्ष्णी । जाने न शुश्रूषयितुं स्वमिच्छू नतेन मूर्ध्ना कतरस्य राज्ञः ॥ ४१५ ॥ प्रियासखीभूतवतो मुदेदं व्यधाद्विधिः साधुदशत्वमिन्दोः । एतत्पदच्छद्मसरागपद्मसौभाग्यभाग्यं कथमन्यथा स्यात् ॥ ४१६ ॥

**गुल्फौ**

अरुन्धतीकामपुरंध्रिलक्ष्मीजम्भद्विषद्दारनवाम्बिकानाम् । चतुर्दशीयं तदिहोचितैव गुल्फद्वयाप्ता यदद्वयसिद्धिः ॥४१७॥

**पादाङ्गुल्यः**

एष्यन्ति यावद्गणनादिगन्तान्नृपाः स्मरार्ताः शरणे प्रवेष्टुम् । इमे पदाब्जे विधिनापि सृष्टास्तावत्य एवाङ्गुलयोऽत्र रेखाः ॥४१८॥

**नखाः**

तस्याः पादनखश्रेणी शोभते किल सुभ्रुवः । रत्नावलीव लावण्यरत्नाकरसमुद्गता ॥ ४१९ ॥ तत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ ४२० ॥ तद्वक्त्रं नेत्रपद्मं प्रकटितमसकृत्स्पर्धितं यन्मयैतज्ज्ञातं तस्मात्कुशलं ग्रहणमपि ततो जायमानः कलङ्कः । तत्सर्वं क्षम्यतां मे पुनरपि न करोम्येवमुक्त्वा तु तस्या गाढं लग्नः शशाङ्कश्चरणनखमणिच्छद्मना पादयुग्मम् ॥ ४२१ ॥

**गमनम्**

सलीलमियमायान्ती कामिनी गजगामिनी । उन्नतं हि नखज्योतिः पुष्पैर्भुवमिवार्चति ॥ ४२२ ॥ मारयन्त्या जनं सर्वं निरागसमिवाज्ञया । मातङ्गानां गतिर्यादृक्तादृगासीदसंशयम् ॥ ४२३ ॥ सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु । व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि ॥ ४२४ ॥ गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा । इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥ ४२५ ॥

**जृम्भा**

चक्रीकृतभुजलतिकं वक्रीकृतवक्त्रमुन्नमद्ग्रीवम् । नो हरति कस्य हृदयं हरिणदृशो जृम्भणारम्भः ॥ ४२६ ॥

१ शुण्डाः. २ नियमेन. ३ सुवर्णस्य विंशतिपलात्मकस्य तुलाकोटिद्वयम्; पक्षे,-पादाङ्गदद्वयम्.

आस्येन्दोः परिवेषवद्रतिपतेश्चाम्पेयकोदण्डवद्धम्मिल्लाम्बुमुचः क्षणद्युतिवदासज्जौ क्षिपन्ती भुजौ । विश्लिष्यद्वलि लक्ष्यनाभि विगलन्नीव्युन्नमन्मध्यमं किंचित्किंचिदुदञ्चदञ्चलमहो कुम्भस्तनी जृम्भते ॥ ४२७ ॥

निद्रा

सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् । निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥ ४२८ ॥ उत्तानामुपधाय बाहुलतिकामेकामपाङ्गश्रितामन्यामप्यलसां निधाय विपुलाभोगे नितम्बस्थले । नीवीं किंचिदिव श्लथां विदधती निश्वाससलोलालका तल्पोत्पीडनतिर्यगुन्नतकुचं निद्राति शातोदरी ॥ ४२९ ॥ आमीलन्नवनीलनीरजतुलामालम्बते लोचनं शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् । आलापादधरः स्फुरत्कलयति प्रेङ्खत्प्रवालोपमामानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥ ४३० ॥

कान्तिः

सुन्दरी सा भवत्येष विवेकः केन जायते । प्रभामात्रं हि तरलं दृश्यते नात्र नाश्रयः ॥ ४३१ ॥ अवयवेषु परस्परबिम्बितेष्वतुलकान्तिषु राजति यत्तनोः । अयमयं प्रविभाग इति स्फुटं जगति निश्चिनुते चतुरोऽपि कः ॥ ४३२ ॥

## समग्रस्त्रीस्वरूपवर्णनम्

सा दृष्टा यैर्न वा दृष्टा मुषिताः सममेव ते । हृदयं हृतमेकेषामन्येषां चक्षुषोः फलम् ॥ १ ॥ मुखेन चन्द्रकान्तेव महानीलैः शिरोरुहैः । पादाभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २ ॥ गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता । शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ३ ॥ फलायते कुचद्वन्द्वमियं हेमलतायते । अङ्गानि कुसुमायन्ते मनो मे भ्रमरायते ॥ ४ ॥ वक्रे गुरुत्वं यदि ते छन्दःशास्त्रविदो विदुः । कठिने कुचयुग्मेऽस्या वदतां किं नु हीयते ॥ ५ ॥ विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी । तव दत्तां सदा मोदं लसत्तरलहारिणी ॥ ६ ॥ दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥ ७ ॥ अकृशं नितम्बभागे क्षामं मध्ये समुन्नतं कुचयोः । अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ८ ॥ अव्याजसुन्दरीं तां विज्ञानेनाद्भुतेन योजयता । उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ ९ ॥ आलोक्य चिकुरनिकरं सततं सुमनोधिवासयोग्यं ते । कामो निजं निषङ्गं परिवृत्य पराचकर्ष साशङ्कः ॥ १० ॥ आलपति पिकवधूरिव पश्यति हरिणीव चलति हंसीव । स्फुरति तडिल्लतिकेव स्वदते तुहिनांशुलेखेव ॥ ११ ॥ वेणीबन्धमहीनं कृष्णं नेत्रान्तमचलरूपं तम् । कुचमस्याः स्वीकुर्वन्पुरुषो लीलां वहत्यहो शंभोः ॥ १२ ॥ अङ्गं भूषणनिकरो भूषयतीत्येष लौकिको वादः । अङ्गानि भूषणानां कामपि सुषमामजीजनंस्तस्याः ॥ १३ ॥ सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ । हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ॥ १४ ॥ मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः । चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥ १५ ॥ कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः । अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥ १६ ॥ तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे । अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥ १७ ॥ नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् । रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोत्यपि च ॥ १८ ॥ संन्यस्तभूषापि नवैव नित्यं विनापि हारं हसतीव कान्त्या । मदं विनापि स्खलतीव भावैर्वाचं विना व्याहरतीव दृष्ट्या ॥ १९ ॥ भ्रूयुग्ममुच्चैर्धनुरुज्झितज्यं बाणाः कटाक्षाः कुटिला नितान्तम् । तथापि यूनां हृदयं भिनत्ति कोऽयं विलासो वनिताजनस्य ॥ २० ॥ अलीकरूपो यदि मध्यभागः पयोधराकारभृतश्च केशाः । उत्सङ्गशोभापि सरोरुहाक्ष्याः करस्य शोभां कलयेन्न कस्मात् ॥ २१ ॥ सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन । सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ २२ ॥ प्रत्यङ्गमस्यामभिकेन रक्षां कर्तुं मघोनेव निजास्त्रमस्ति । वज्रं च भूषामणिमूर्तिधारि नियोजितं तद्द्युतिकार्मुकं च ॥ २३ ॥ भ्रूश्चित्ररेखा च तिलोत्तमास्या नासा च रम्भा च यदूरुसृष्टिः । दृष्टा ततः पूरयतीयमेकानेकाप्सरःप्रेक्षणकौतुकानि ॥ २४ ॥ कर्णाक्षिदन्तच्छदबाहुपाणिपदादिनः स्वाखिलतुल्यहेतुः । उद्वेगभागद्वयताभिमानादिहैव वेधा व्यधित द्वितीयम् ॥ २५ ॥ यशः पदाङ्गुष्ठनखौ मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या । कलाचतुःषष्टिरुपैति वासं तस्यां कथं सुभ्रुणि नाम नास्याम् ॥ २६ ॥ कार्त्स्न्येन निर्वर्णयितुं च रूपमिच्छन्ति तत्पूर्वसमागतानाम् । न तु प्रियेष्वायतलोचनानां समग्रपातीनि विलोचनानि ॥ २७ ॥ यतो यतोऽङ्गादपयाति कञ्चुकस्ततस्ततः स्वर्णमरीचिवीचयः । यतो यतोऽस्या निपतन्ति दृष्टयस्ततस्ततः श्यामसरोजवृष्टयः ॥ २८ ॥ तदा तदङ्गस्य बिभर्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः । दरस्फुरत्काञ्चनकेतकीदलात्सुवर्णमभ्यस्यति सौरभं यदि ॥ २९ ॥ अधरे मधुरा सरस्वतीयं ननु कर्णे मणिकर्णिकाप्रवाहः । शिरसि प्रतिभाति चारुवेणी कथमेणीनयना[1] न

[1] १ हरिणनयना.

तीर्थराजः ॥ ३० ॥ वेणी विडम्बयति मत्तमधुव्रतालीमङ्गीकरोति गुणमैन्दवमास्यमस्याः । बाहू मृणाललतिकाश्रियमाश्रयेते पुङ्खानुपुङ्खयति कामशरान्कटाक्षः ॥३१॥ बन्धूकबन्धुरधरः सितकेतकाभं चक्षुर्मधूककलिकामधुरः कपोलः । दन्तावली विजितदाडिमबीजराजिरास्यं पुनर्विकचपङ्कजदत्तदास्यम् ॥ ३२ ॥ येनोत्पलानि च शशी च मृणालिकाश्च रम्भालताश्च कमलानि च निर्मितानि । नूनं स एव मृगशावदृशोऽपि वेधाः सृष्टिक्रमो यदयमेकतया चकास्ति ॥ ३३ ॥ सा रामणीयकनिधेरधिदेवता वा सौन्दर्यसारसमुदायनिकेतनं वा । तस्याः सखे नियतमिन्दुसुधामृणालज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ ३४ ॥ राजीव जीवसि मुधा न सुधाकर त्वमस्याः समः पदनखस्य कुतो मुखस्य । अग्रे दृशोर्मृगदृशः कतमः कुरङ्गस्तत्खञ्जनत्वमपि किं जनरञ्जनाय ॥ ३५ ॥ सा दुग्धमुग्धमधुरच्छविरङ्गयष्टिस्ते लोचने तरुणकेतकपत्रदीर्घे । कम्बोर्विडम्बनकरश्च स एव कण्ठः सैवेयमिन्दुवदना मदनायुधं वा ॥ ३६ ॥ ऊरुद्वयं मृगदृशः कदलेश्च काण्डौ मध्यं च वेदिरतुलं स्तनयुग्ममस्याः । लावण्यवारिपरिपूरितशातकुम्भकुम्भौ मनोजनृपतेरभिषेचनाय ॥ ३७ ॥ तन्वी शरत्त्रिपथगापुलिने कपोलौ लोले दृशौ रुचिरचञ्चलखञ्जरीटौ । तद्बन्धनाय सुचिरार्पितसुभ्रुचापचाण्डालपाशयुगलाविव शून्यकर्णौ ॥ ३८ ॥ व्याकोशकोकनदशोककरः करोऽयं खेलचकोरमयचोरमिदं च चक्षुः । उद्भिन्नविद्रुमरहस्यहरोऽधरोऽयं तत्स्यादरण्यमपि वश्यमवश्यमस्याः ॥ ३९ ॥ मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवौ । किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः किमम्बुरुहडम्बरैर्यदि तनूरियं किं श्रिया ॥ ४० ॥ इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः सुधाधाराधारश्चिरपरिणतं विम्बमधरः । इमे नेत्रे रात्रिंदिवमधिकशोभे कुवलये तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥ ४१ ॥ विनैवाम्भोवाहं बहलरुचिदीप्ताम्बरतलात्तडिल्लेखा हेमद्युतिविततिरम्या विलसति । विनैव स्वर्गङ्गां लभसि रभसव्यग्रशफरीपरीवर्तैः सार्धं स्फुरति विकचेन्दीवरवनम् ॥४२॥ तमःस्तोमः पूर्वं तदनु सकलः शीतकिरणस्ततः कोकद्वन्द्वं तदनु च न किंचित्पुनरभूत् । अधस्तस्यावर्तस्तदनु कदलीकाण्डयुगलं ततोऽवाञ्चौ पद्मौ शिवशिव विधेः शिल्परचना ॥ ४३ ॥ पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं कराभ्यामादत्ते नवकिसलयानामरुणताम् । प्रवालस्य च्छायां दशनवसनाग्रेण पिबति स्मितज्योत्स्नापूरैरुपहसति कान्तिं हिमरुचेः ॥ ४४ ॥ वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुलामखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति । कुचौ किंचिन्मीलत्कमलतुलनां कन्दलयतस्तमःशोभां चित्रां चिकुरनिकुरम्बं हि कुरुते ॥ ४५ ॥ करे वेणीमेणीसदृशनयना स्नानविरतौ दधाना हर्म्याग्रे हरनयनतेजोहुतमपि । इयं मुग्धा दुग्धाम्बुधिबहलकल्लोलसदृशा दृशा वारंवारं मनसिजतरुं पल्लवयति ॥ ४६ ॥ दायादत्वं मनसिजधनुर्भ्रूविलासस्य धत्ते योगक्षेमौ वहति नयनद्वन्द्वमिन्दीवराणाम् । तद्गात्राणां पुनरिह जगज्जैत्रलावण्यभाजामाभात्यग्रे मलवदखिलं म्लानवर्णं सुवर्णम् ॥ ४७ ॥ नीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार । भ्रूविश्रान्तिर्मदनधनुषो विभ्रमानन्ववादीद्वक्त्रज्योत्स्ना शशधररुचं दूषयामास तस्याः ॥ ४८ ॥ तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः[1] । श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ ४९ ॥ वापी[2] कापि स्फुरति गगने[3] तत्परं सूक्ष्मपद्या[4] सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली । अग्रे[5] शैलौ[6] सुकृतिसुगमौ[7] चन्दनच्छन्नदेशौ तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः ॥ ५० ॥ तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु । धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ ५१ ॥ सौरभ्यं मृगलाञ्छने यदि भवेदिन्दीवरे वक्रता माधुर्यं यदि विद्रुमे तरलता कन्दर्पचापे यदि । रम्भायां यदि विप्रतीपगमनं प्राप्तोपमानं तदा तद्वक्त्रं च तदीक्षणं तदधरस्तद्भ्रूस्तदूरूयुगम् ॥ ५२ ॥ वेणीवेल्लनमङ्गणं किमु वलन्नेणीदृशो मध्यमं संव्यानं किमिदं विवृत्तिविषमाद्भासः स्तनात्स्रंसते । नृत्यन्तीव किमन्तिके वलितयोः स्निग्धा दृशोः कान्तयः साकूतस्मितगर्भितं किमु मुखं वक्तुं सखीं वाञ्छति ॥ ५३ ॥ बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं श्रोणीतीर्थशिला च नेत्रशफरी[8]धम्मिल्लशैवालकम् । कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलैर्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ५४ ॥ जिघ्रत्याननमिन्दुकान्तिरधरं बिम्बप्रभा चुम्बति स्प्रष्टुं वाञ्छति चारुपद्मसुकुलच्छायाविशेषः स्तनौ । लक्ष्मीः कोकनदस्य खेलति करावालम्ब्य किं चादरा-

१ तद्वद्गम्भीरा नाभिः. २ सूक्ष्मतया तद्दुर्लक्ष्ये मध्ये. ३ सरणिस्तच्छायारोमावली. ४ सोपानपङ्क्तिं तत्सदृशीं त्रिवलीम्. ५ कुचौ. ६ पुण्यकृतां सुगम्यौ; पक्षे,—सुखगमनौ. ७ चन्दनतरुभिः; पक्षे,—चन्दनपङ्केन. ८ बिसम्. ९ मत्स्यी.

देतस्याः सुदृशः करोति पदयोः सेवां प्रवालद्युतिः ॥ ५५ ॥ कर्णारुंतुदमेव कोकिलरुतं तस्याः श्रुते भाषिते चन्द्रे लोकरुचिस्तदाननरुचेः प्रागेव संदर्शनात् । चक्षुर्मीलनमेव तन्नयनयोरग्रे मृगीणां वरं हैमी वल्ल्यपि तावदेव ललिता यावन्न सा लक्ष्यते ॥ ५६ ॥ चक्षुर्मेचकमम्बुजं विजयते वक्रस्य मित्रं शशी भ्रूसूत्रस्य सनाभि मन्मथधनुर्लावण्यपण्यं वपुः । लेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनीमेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्यमभ्यस्यति ॥ ५७ ॥ स्निग्धस्मेरविलोलमुग्धमधुरा यन्नेत्रयोर्विभ्रमा यद्यामृष्टविलासपत्रलतिका घर्मोद्गमाद्गण्डयोः । यच्च प्रौढकदम्बकुड्मलसखी काप्यङ्गके विक्रिया तत्तस्यां किमपि स्फुटं रतिपतेः कोदण्डविस्फूर्जितम् ॥ ५८ ॥ स्निग्धेन्द्रोपलसुन्दरः कचभरो वक्त्रं सगोत्रं विधोर्वक्षोजौ मणिकुम्भडम्बरमुषौ मध्योऽस्ति वा नास्ति वा । श्रोणीमण्डलमूरुदुर्वहमहो शोणाब्जतुल्ये पदे मन्ये मञ्जुगिरो मरालमहिलाध्येयो गतेर्विभ्रमः ॥ ५९ ॥ नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं हासश्रीपरिकर्मिते स्तनतटे हारोऽन्यहारः कथम् । पिण्डालक्तकपातनं चरणयोः पीडाफलं ताम्रयोर्वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥ ६० ॥ एतस्याः स्तनपद्मकोरकयुगं यस्याननेन्दोः सितज्योत्स्नाभिर्न भजत्यदो मृगदृशः शङ्के विकासं पुनः । तस्मिँल्लोचनपङ्कजं विकसितं भ्रूभृङ्गसंसेवितं स्वान्ते संशयमातनोति सुतरामेतन्ममैवासकृत् ॥ ६१ ॥ पानायाधरतोऽमृतं बसतयेऽप्यस्या स्तनक्ष्माधरोऽधस्तात्संजघनान्तकन्दरधरः सख्याय चक्षुर्मृगः । जप्यो मन्त्रवरो मनोहरकथा ध्यानाय वक्त्राम्बुजं चेत्थं देहतपःस्थले सति कथं सन्तो वनान्तं गताः ॥ ६२ ॥ कर्णोत्सङ्गविसर्पिणी नयनयोः कान्तिर्वतंसोत्पलं लाक्षासंभ्रमनिर्व्यपेक्षमधरं लावण्यमेवाश्वति । हारोऽस्याः स्मितचन्द्रिकैव कुचयोरङ्गप्रभाकञ्चुकी तन्व्याः केवलमङ्गभारमधुना मन्ये परं भूषणम् ॥ ६३ ॥ अस्याश्चेदलकावली कृतमलिश्रेणीभिरेणीदृशः सौन्दर्यं यदि चक्षुषोस्तरलयोः किं मन्मथस्यायुधैः । का प्रीतिः कनकारविन्दमुकुले पीनौ स्तनौ चेद्तो मन्ये काचिदियं मनोभवकृता माया जगन्मोहिनी ॥ ६४ ॥ ऊर्ध्वे नीरदवृन्दमैन्दवमिदं बिम्बं त्वधो निर्मितं व्योम्नः पल्वलचित्रितस्य निहितौ शैलावुपर्युन्नतौ । किं चाधः पुलिनोच्चयस्य कदलीकाण्डाववारोपितौ तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः ॥ ६५ ॥ भृङ्गालीमुदरे क्षिपन्ति शतशः पद्मानि शश्वीमिव प्रत्यागच्छति लङ्घनार्थमसकृद्व्योमाङ्गणं चन्द्रमाः । वक्रेणापहृते कुरङ्गसुदृशस्त्रैलोक्यरूपोच्चये प्रत्यावर्तनवाञ्छयेव कति न क्लेशं समातन्वते ॥ ६६ ॥ वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम् । कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधिर्हर्षाद्गद्गदगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥ ६७ ॥ मध्यं विष्णुपदं कुचौ शिवपदं वक्त्रं विधातुः पदं धम्मिल्लः सुमनःपदं प्रविलसत्काञ्ची नितम्बस्थली । वाणी चेन्मधुराधरोऽरुणधरः श्रीरङ्गभूमिर्वपुस्तस्याः किं कथयामि पुण्यचरितं मान्या सदा निर्जरैः ॥ ६८ ॥ यत्तीर्थाम्बु मुखाम्बुजासवरसो नेत्रे नवेन्दीवरे दन्तश्रेणिरखण्डिताक्षतचयो दूर्वा च रोमावली । उत्तुङ्गं च कुचद्वयं फलयुगं पात्रं कराम्भोरुहं तन्मन्ये मदनार्चनाहितमतिः स्वाङ्गोपहारैरियम् ॥ ६९ ॥ दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव । मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥ ७० ॥ नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः । कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्धिनी स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटाः ॥ ७१ ॥ दृष्टिः कापि सुरा सुधा स्मितमिदं वक्त्रं कलानां निधिर्वक्षः कुम्भि झषौ दृशौ विजयते धन्वन्तरिः सत्कृपा । कान्तिः श्रीस्त्रिवलीतरङ्गलहरी नाभी गतावर्ततामेतस्यामचिरेण भाविकलने लावण्यवारांनिधौ ॥ ७२ ॥ किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः । उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥ ७३ ॥ जानीमो वदनं सरोरुहदृशो निर्माय पश्यन्मुहुर्हृष्यन्कामकठोरपावकशिखासंतापितः पद्मभूः । रम्भामूरुतटीं स्तनं रसघटीं पीयूषवीचीं वचो बाहू बालबिसं करं किसलयं नाभीं सरो निर्ममे ॥ ७४ ॥ जानीमो वयमासनस्य कमले तस्या मुखेन्दोस्त्विषा संकोचं समुपागते स भगवान्दुःस्थः सरोजासनः । भुग्नं भ्रूलतिकायुगं विहितवान्वक्रे दृशौ सृष्टवान् मध्यं विस्मृतवान्कचांश्च कुटिलान्वामभ्रुवः सृष्टवान् ॥ ७५ ॥ मुक्ता विद्रुममन्तरा मधुरसः पुष्पं परं धूर्वहं प्रालेयद्युतिमण्डले खलु तयोरेकासिका नार्णवे । तच्चोदञ्चति शङ्खमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे तानीमानि विकल्पयन्ति त इमे येषां न सा दृक्पथे ॥ ७६ ॥ इन्दुर्लिप्त इवाञ्जनेन

१ नीलम्. २ भ्रूलेखायाः. ३ सोदरम्. ४ हंसी. ५ सज्जवन; पक्षे,–सत्-जघन.

१ मध्ये. २ केवलम्. ३ भारवाहकम्, न तु मधुररसयुक्तम्. ४ चन्द्रमण्डले. ५ एकसिन्नासिकावस्थितिः एकाधिकरण्यमित्यर्थः.

जडिता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा। कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं सुन्दर्याः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥ ७७ ॥

## परस्परदर्शनम्

स्मरतोरभिलाषकल्पितान्बहुशः स्वप्नभुवः समागमान् । अपि दृष्टिपथं प्रपन्नयोर्निर्विशश्वास चिरं मनस्तयोः ॥ १ ॥ आघ्रातं कमलं प्रियेण सुदृशा स्मित्वापनीतं मुखं दत्तं विभ्रमकन्दुके नखपदं सीत्कृत्य गूढौ स्तनौ। दत्ता चम्पकमालिकोरसि भुजानिर्भिन्नरोमाञ्चया मीलल्लोचनया स्थितं प्रणयिनोर्दूरेऽपि पूर्णो रसः ॥ २ ॥

## नायकदर्शनम्

न जाने संमुखायाते प्रियाणि वदति प्रिये। सर्वाण्यङ्गानि किं यान्ति नेत्रतामुत कर्णताम् ॥ १ ॥ यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव। निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ २ ॥ काचिन्निवारितबहिर्गमना जनन्या द्रष्टुं प्रियं भवनजालकमाससाद। तस्या विलोचनमदृश्यत दीशदत्तयन्त्रोपरुद्धशफरोपमितं क्षणेन ॥ ३ ॥ कृच्छ्रेण कापि गुरुणैव जनेन रोधमुल्लङ्घ्य नायकसमीपभुवं प्रतस्थे। हा हन्त शीघ्रगमनप्रतिरोधहेतुस्तस्याः पुनः स्तनभरोऽपि गुरुर्बभूव ॥ ४ ॥ नान्तःप्रवेशमरुणद्विमुखी न चासीदाचष्ट दोषपरुषाणि न चाक्षराणि । सा केवलं सरलपक्ष्मभिरक्षिपातैः कान्तं विलोकितवती जननिर्विशेषम् ॥ ५ ॥ किंचित्कुञ्चितहारयष्टि सरलभ्रूवल्लि साचिस्मितं भ्रान्तभ्रान्तविलोचनद्युति भुजापर्यस्तकर्णोत्पलम्। अङ्गुल्या स्फुरदङ्गुलीयकरुचा कर्णस्य कण्डूयनं कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥ ६ ॥

## नायिकादर्शनम्

प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा ॥१॥ क्षीरसागरकल्लोललोललोचनयानया। असारोऽपि हि संसारः सारवानिव लक्ष्यते ॥२॥ सेयं सीधुमयी वा सुधामयी वा हलाहलमयी वा । दृग्भ्यां निपीतमात्रा मदयति मोदयति मूर्च्छयति ॥ ३ ॥ गच्छति न तृप्तिमेतत्सुललितमस्याः समापिबद्रूपम् । नयनयुगं मम नूनं संप्रति समुपैति सफलतां चैवम् ॥ ४ ॥ जानीमहेऽस्याः खलु सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः। तत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताऽक्षिपद्मे ॥ ५ ॥

१ धीवरः. २ मीनः.

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः। मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥६॥ तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम्। नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥ ७ ॥ इदमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा। पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी ॥ ८ ॥ इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भारुणं चारु वासो वसाना । समस्तस्य लोकस्य चेतःप्रवृत्तिं गृहीत्वा घटे न्यस्य यातीव भाति ॥ ९ ॥ कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः । लीलाशिरोंशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ १० ॥ अर्धस्मितेन विनिमज्य दृशार्धबाणमर्धे विधूय वसनाञ्चलमर्धमार्गे। अर्धेन नेत्रविशिखेन निवृत्य सार्धमर्धार्धमेव तरुणी तरुणं चकार ॥ ११ ॥ आधाय कोमलकराम्बुजकेलिनालीमालीसमाजमधिकृत्य समालपन्ती। मन्दस्मितेन मयि साचिविलोकितेन चेतश्चकोरनयना चुलुकीचकार ॥ १२ ॥ मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् । मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥ १३ ॥ पुरः स्थित्वा किंचिद्वलितमुखमालोकय सखे सखेदाः स्थास्यन्ति ध्रुवमिदमदृष्ट्वा तव दृशः। इतश्चञ्चत्काञ्चीरणितमुखरात्सौधशिखरादराकायां कोऽयं कवलयति चान्द्रेण महसा ॥ १४ ॥ अये केयं लीलाधवलगृहवातायनतले तुलाकोटिक्वाणैः कुसुमधनुषं जागरयति । अहो नेत्रद्वन्द्वं विलसति विलङ्घ्य श्रुतिमहो कथं न त्रैलोक्यं जयति मदनः स्मेरवदनः ॥ १५ ॥ तडिल्लेखा नेयं विलसति परं सौधशिखरे वसन्त्याः कस्याश्चित्कनकरुचिरा गात्रलतिका। अपीदं नोन्मज्जत्कुवलयवनं मीनतरलं परं तस्या एव स्फुरति नयनालोकललितम् ॥१६॥ सखे सायं स्नात्वा कनकरुचिकौसुम्भवसनं वसानायास्तिर्यग्वलितचिकुरस्यन्दिसलिलम्। दिशन्त्या दृष्टेयं कुसुमशरकोदण्डलतिकामकस्मादस्माकं मृगशिशुदृशो दर्शनमभूत् ॥१७॥ अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि। इति न भजते वस्तु प्रायः परस्परसंकरं तदियमबला धत्ते लक्ष्मीं कुतः सकलात्मिकाम् ॥ १८ ॥ केयं श्यामोपलविरचितोल्लेखहेमैकरेखालग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः। हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥ १९ ॥ अर्कच्छायं तिरयति सुधालिप्तविद्युन्मतल्ली चक्रप्रख्यं महति

१ वस्त्रम्. २ मनोवृत्तिम्. ३ मदनम्. ४ नूपुरध्वनिभिः. ५ प्रशस्ता.

सुषमामण्डले दूरमग्नम् । रक्तादर्शप्रतिफलमिव श्रीसदङ्गं वहन्ती दृष्टा काचित्तरलनयना देवतेव स्मरस्य ॥ २० ॥ नेयं विद्युद्ध्रुवमधिगता काञ्चनी नापि वल्ली मन्दं मन्दं प्रचलति यतो नापि वा पन्नगस्य । चूडारत्नस्फुरदुरुशिखा क्वापि धत्ते सरोजं का वा तर्हि [1]प्रकृतिसुभगा तत्सखे न प्रतीमः ॥२१॥ वक्त्रोपान्तं नयनयुगलं सर्वतो निक्षिपन्ती श्रोणीभाराच्छिथिलशिथिलन्यस्तपादारविन्दा । आरादालीकरकिसलये दत्तहस्तावलम्बा काचित्कान्त्या विकसितमहीचक्रमायाति तन्वी ॥ २२ ॥ इयं भुजगिनीश्रिता लसदनेकपुष्पान्विता द्विरेफततिसेविता प्रमदखञ्जनालंकृता । फलद्वयभरानता विलसिता नवैः पल्लवैर्विलोचनपथं गता भवति कापि हैमी लता ॥ २३ ॥ पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन्कुतोऽस्तीदृशी । [2]मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ २४ ॥ अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशां याताया विगलत्पयोधरभराद्दृष्टव्यतां कामपि । अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥ २५ ॥ श्रोणीभारभरालसा [3]दरगलन्माल्यापवृत्तिच्छलाल्लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः । नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो दूरान्दोलनलोलकङ्कणझणत्कारोत्तरं सर्पति ॥ २६ ॥ लग्नं पादतले नखेषु विलुठत्संसक्तमूर्वोर्युगे विश्रान्तं जघनस्थले निपतितं नाभीसरोमण्डले । शून्यं मध्यमवेक्ष्य रोमलतिकामालम्बमानं क्रमादारूढं स्तनयोः प्लुतं नयनयोर्लीनं मनः कैशिके ॥ २७ ॥ अस्या धाम सरोवरे भुजबिसे वक्त्रारविन्दे भ्रमन्नेत्रभ्रूभ्रमरे सुयौवनजले कस्तूरिकापङ्किले । वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधादुपेत्य द्रुतं मग्नश्चित्तमतंगजः कथमसावुत्थाय निर्यास्यति ॥ २८ ॥ स्वैरं सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते रोमाञ्चं तनुते मुहुः स्तनतटे व्यालम्बते नाम्बरम् । आलिङ्गत्यपरां तनोति चिकुरं प्रत्युत्तरं याचते केयं कामकलाविलासवसतिर्लोलेक्षणा भाविनी ॥ २९ ॥ खेलत्खञ्जननेत्रया परिलसत्स्वर्णारविन्दास्यया पीनोत्तुङ्गनिरन्तरस्तनभरन्यालोलसन्मध्यया । स्फीतस्फीतनितम्बया क्षणमपि व्यालोकितश्चानया किं न स्याद्वशिनां वरः स्मरहरः स्मारैः शरैर्जर्जरः ॥ ३० ॥ सायं चन्द्रकलामृतोदयगिरिस्पर्धो दधानः स्तनस्पर्शोत्तुङ्गतरो नखाङ्कुरुचिरः शोणाम्बराभ्यन्तरे । अस्याः कं न विलोकनोत्कमकरोत्तीक्ष्णः कटाक्षः क्षणं भृङ्गाकृष्टगरिष्ठकेतकदलभ्रान्तिं वहन्नप्ययम् ॥ ३१ ॥ उत्तुङ्गस्तनशैलदुस्तरसुरो निम्नातिनाभिस्थली भीमं देहवनं स्फुरद्भुजलतं रोमालिजालाकुलम् । व्याधः पञ्चशरः किरत्यतितरांस्तीक्ष्णान्कटाक्षाशुगांस्तन्मे ब्रूहि मनःकुरङ्ग शरणं कं सांप्रतं यास्यसि ॥ ३२ ॥ वक्त्रश्रीजितजर्जरेन्दुमलिनं कृत्वा करे कन्दुकं क्रीडाकौतुकमिश्रभावमनया ताम्रं वहन्त्याननम् । भृङ्गाग्रग्रहकृष्णकेतकदलस्पर्धावतीनां दृशां दीर्घापाङ्गतरङ्गितैकसुहृदामेषोऽक्षि पात्रीकृतः ॥ ३३ ॥ स्कन्धे विन्यस्य सख्या भुजमपरकरस्यार्धचन्द्रेण मध्यं बिभ्राणा धूयमानस्तनतटवसना गन्धवाहेन मन्दम् । पन्थानं दृग्विलासैरिव नलिनदलैः कोमलैरास्तृणन्ती सौधाग्रे कस्य साक्षात्परिणमति तपःसिद्धिरेषा सुवेषा ॥ ३४ ॥

## विरहः

समानकुलशीलयोः सुवयसोः परायत्तयोः परस्परविलोकनाकुलितचेतसोः प्रेयसोः । तनुत्वमनुविन्दतोर्बहुविधां व्यथां विन्दतोरशक्यविनिवेदना विरहवेदना वर्धते ॥ १ ॥

## वियोगिनोऽवस्थावर्णनम्

प्रियाविरहितस्यास्य हृदि चिन्ता समागता । इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥ १ ॥ अत्राशितं शयितमत्र निपीतमत्र तोयं तया सह मया विधिवञ्चितेन । इत्यादि हन्त परिचिन्तयता वनान्ते हा तस्य लोचनपयोभिरभूत्पयोधिः ॥ २ ॥ मन्दं मरुद्वहति गर्जति वारिवाहो विद्युल्लता चलति नृत्यति नीलकण्ठः । एतावति व्यतिकरे तरुणस्य तस्य मूर्च्छैव केवलमभूदवलम्बनाय ॥ ३ ॥ गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा । भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ ४ ॥ धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः । दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तरायस्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ ५ ॥ रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः । दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ ६ ॥ प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं बिभ्रत्काञ्चनमेकमेव वलयं श्वासापरक्ताधरः । चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ७ ॥ [1]चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि [2]वज्रा-

१ निसर्गरमणीया. २ प्रत्यक्षस्वरूपवती. ३ ईषत्.

१ सूर्यवदाचरति. २ वज्रवदाचरति.

यते माल्यं सूचिकुलायते मलयजालेपः[1] स्फुलिङ्गायते[2] । रात्रिः कल्पशतायते[3] विधिवशात्प्राणोऽपि भारायते हा हन्त प्रमदावियोगसमयः संहारकालायते ॥ ८ ॥ माकन्दाक्षिप मा मरन्दनिकरं मूको भव त्वं शुक स्फारं कोकिल कोमलं कलरवं भ्रातः क्षणं संहर । सौगन्ध्यं वह गन्धवाह न मनाक्सर्वैः क्षणं क्षम्यतां जानीध्वं तरुणस्य तस्य यदयं कालः करालो महान् ॥ ९ ॥

---

## वियोगिन्या अवस्थावर्णनम्

दह्यमानेऽपि हृदये मृगाक्ष्या मन्मथाग्निना । स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥ १ ॥ जीवेन तुलितं प्रेम सखि मूढेन वेधसा । लघुर्जीवो ययौ कण्ठं गुरुप्रेम हृदि स्थितम् ॥ २ ॥ कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ । अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥ ३ ॥ वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः । राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥ ४ ॥ अस्तमितविषयसङ्गा मुकुलितनयनोत्पला मुहुः श्वसिता । ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव ॥ ५ ॥ लिखति न गणयति रेखा निर्झरबाष्पाम्बुधौतगण्डतला । अवधिदिवसावसानं मा भूदिति शङ्किता बाला ॥ ६ ॥ अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ७ ॥ पातयति हृदयदेशे प्रियजनगर्भे पुनः पुनर्मुग्धा । वर्णितमदनातङ्का बाष्पवती भावमन्थरां दृष्टिम् ॥ ८ ॥ श्लिष्यति पश्यति चुम्बति पुनः पुनः पुलकमुकुलितैरङ्गैः । प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम् ॥ ९ ॥ कमले निधाय कमलं कलयन्ती कमलवासिनं कमले । कमलयुगादुद्धृतं कमलं कमलेन वारयति ॥ १० ॥ नयनोत्पलचलधारां दृष्ट्वा वारांनिधिभ्रान्त्या । वडवानल इव भगवान्वसति तनौ कृशतनोस्तापः ॥ ११ ॥ लीनानसून्सरोरुहदृष्टेरन्वेष्टुमेष कुसुमेषुः । भ्रमति द्रागवपुरन्तः संतापं दीपमादाय ॥ १२ ॥ कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि । परिवर्तते स्म नलिनी लहरीभिर्लोलिताप्यघूर्णत सा ॥ १३ ॥ शशभृन्नवपल्लवे शशाङ्के मकरन्दस्रुतिवारिणी सरोजे । अपि चास्य मरुद्गणान्प्रसूते तिलकुसुमं स्फुटचम्पकौघदाम्नि ॥ १४ ॥ अधिदेहलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः । उपखञ्जनचञ्चु मौक्तिकाली फलितं कस्य सुजन्मनस्तपोभिः ॥ १५ ॥ विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् । तनूत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ १६ ॥ अपि मरणमुपैति सा मृगाङ्के विलसति कैव कथा रसान्तरस्य । अपि कथमधुना दधातु शान्तिं विषमशरज्वरतीव्रदेहदाहः ॥ १७ ॥ निवेशिते यदि शुकशिखा पदे सृजति सा कियतीमिव न व्यथाम् । मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥ १८ ॥ सा तोरणान्तिकमुपेत्य दिशोऽवलोक्य निःश्वस्य दीर्घमुपधाय करं कपोले । मत्वा च तं पुरत एव ससंभ्रमत्वाज्ज्ञात्वाऽऽसे मोहलिखितेव न किं किमासीत् ॥ १९ ॥ अस्यास्तनौ विरहताण्डवरङ्गभूमौ स्वेदोदबिन्दुकुसुमाञ्जलिमाविकीर्य । नान्दीं पपाठ पृथुवेपथुवेपमानकाञ्चीलताकलरवैः स्मरसूत्रधारः ॥ २० ॥ मदनदहनशुष्यत्कान्तकान्ताकुचान्तर्घनमलयजपङ्के गाढबद्धाखिलाङ्घ्रिः । उपरि विततपक्षो लक्ष्यतेऽलिर्निमग्नः शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ २१ ॥ नवकिसलयतल्पं कल्पितं तापशान्त्यै करसरसिजसङ्गात्केवलं म्लापयन्त्याः । कुसुमशरकृशानुप्रापिताङ्गारतायाः शिव शिव परितापं को वदेत्कोमलाङ्ग्याः ॥ २२ ॥ दरललितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः । वलति सति हि यस्मिन्सार्धमावर्त्य हेम्ना रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥ २३ ॥ किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः । ग्लपयति परिपाण्डुक्षाममस्याः शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ २४ ॥ परिमृदितमृणालीम्लानमङ्गं[2] प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः[3] क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २५ ॥ स्थगयति नयनास्रं छद्मना धूमधूम्रं प्रथयति च नितान्तं कार्श्यमङ्गप्रकृत्या । अहह विरहबाधां छादयत्यम्बुजाक्षी तदपि वदति साक्षी पाण्डुरो गण्डदेशः ॥ २६ ॥ परिम्लानं पीनस्तनजघनसङ्गादुभयतस्[4]तनोर्मध्यस्यान्तः[5] परिमिलनमप्राप्य[6] हरितम्[7] । इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः कृशाङ्ग्याः संतापं वदति[8] बिसिनीपत्रशयनम्[9] ॥ २७ ॥ प्रयातेऽस्तं भानौ श्रितशकुनिनीडेषु तरुषु स्फुरत्संध्यारागे शशिनि शनकैरुल्लसति च । प्रियप्रत्याख्यानद्विगुणविरहोत्कण्ठितदृशा तदारब्धं तन्व्या मरणमपि यत्रोत्सवपदम् ॥ २८ ॥ लतामूले लीनो हरिणपरिहीनो हिमकरः स्खलन्मुक्ताकारा गलति जलधारा कुवलयात् । धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥ २९ ॥ मराल-

---

१ चन्दनलेपः. २ अग्निकण इवाचरति. ३ सहस्रकल्पमितेवाचरति.

१ आसेति क्रियापदम्. २ प्राप्तमर्दा. ३ सखीजनः. ४ ऊर्ध्वाधोभागयोः. ५ कृशस्य. ६ संघर्षम्. ७ हरिद्वर्णम्. ८ अनुमापयति. ९ शय्या.

श्रेणीभिर्नियतमुपनीतं सफलतां गतिस्पर्धावैरं मृदुकलरवै-रम्बुजदृशः। यदेतान्शृण्वत्याः प्रियविरहवत्याः कृशतनो-रगादस्याः स्तम्भादहह गतिसंभावनमपि ॥ ३० ॥ अ-गारेऽस्मिन्कान्ते गिरिशगनिशानाथशकलं भुजंगानुत्तुङ्गा-न्सकलमपि वातायनपथे। निकुञ्जेषु श्येनानधिगृहशिरो राहुवलयं लिखन्त्या नीयन्ते शिव शिव तया हन्त दिवसाः ॥ ३१ ॥ स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्। समस्तापः कामं मनसिजनिदाघप्रसरयोर्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युव-तिषु ॥ ३२ ॥ कपोले पाण्डुत्वं किमपि जलधारां नयन-योस्तनौ कार्श्यं दैन्यं वचसि हृदि दावानलशिखाम्। अवज्ञां प्राणेषु प्रकृतिषु विपर्यासमधुना किमन्यद्वैराग्यं सकल-विषयेष्वाकलयते ॥ ३३ ॥ निकामं क्षामाङ्गी सरसकदली-गर्भसुभगा कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी। अवस्थामापन्ना मदनदहनोद्दाहविधुरामियं नः कल्याणी रमयति मनः कम्पयति च ॥ ३४ ॥ घनोऽयं चेदश्चेदुपरि विकिरंश्चन्दनरसानुदाराञ्चेहारी सरिदुरसि हारीभवति वा। समन्तात्प्राणाली चिरमुपवनाली मिलति वा तदप्यस्यास्तापः प्रियविरहजः किं विरमति ॥ ३५ ॥ इतो विद्युद्वल्लीविलसित-मितः केतकरजः स्फुरद्गन्धं प्रोद्यज्जलदनिनदस्फूर्जितमितः। इतः केकिक्रीडाकलकलभरः पक्ष्मलदृशां कथं यास्यन्त्येते विरहदिवसाः संभ्रमरसाः ॥ ३६ ॥ न नीतमुपनासिकं परि-मलव्ययाशङ्कया न हन्त विनिवेशितं विरहवह्निकुण्डे हृदि। दृशोर्बहिरिति श्रुतौ न निहितं प्रियप्रेषितं करे कमलमर्पितं मृगदृशा दृशा पीयते ॥ ३७ ॥ वीणामङ्के कथमपि सखी-प्रार्थनाभिर्विधाय स्वैरं रत्यां सरसिजदृशा गातुमारब्धमेव। तन्त्रीबुद्ध्या किमपि विरहक्षीणदीनाङ्गवल्लीमेनामेव स्पृशति बहुशो मूर्च्छना चित्रमेतत् ॥ ३८ ॥ अन्तस्तारं तरलतरलाः स्तोकमुत्पीडभाजः पक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण। चित्तातङ्कं निजगरिमतः सम्यगासूत्रयन्तो निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः ॥ ३९ ॥ मुक्त्वानङ्गः कुसुमविशिखान्पञ्च कुण्ठीकृताग्रान्मन्ये मुग्धां प्रहरति हठा-त्पत्त्रिणा वारुणेन। वारां पूरः कथमपरथा स्फारनेत्रप्रणाली-वक्रोद्भ्रान्तस्त्रिवलिविपिने सारणीसाम्यमेति ॥ ४० ॥ खिन्नौ गण्डौ स्फुरितमधरं स्पन्दितं चूचुकाग्रं सन्नौ बाहू मसृणमुकुले लोचने भ्रूश्चलैव। अङ्गादङ्गादजनि पुलक-श्रेणिरूरू सकम्पौ किं च श्वासास्तरलितदुकूलाञ्चलाश्चञ्च-लाक्ष्याः ॥ ४१ ॥ पीनोत्तुङ्गस्तनकलशयोस्तारहारं न धत्ते हस्तेनापि स्पृशति सहसा नैव कर्पूरवीटीम्। मञ्चं नापि श्रयति शयितुं हंसतूलास्तराढ्यं तादृक्तन्वी गुरुजनभया-द्रोद्धुकामा स्वतापम् ॥ ४२ ॥ गण्डे पाण्डौ कलयति पुनश्चान्दनान्पत्रभङ्गान्निद्रालाभे स्वयमरुणदृक्पृच्छति त्वां निदानम्। प्रत्यासन्ने मधुरलपिते गृह्यके कीरशावे कण्ठे धत्ते कमलनयना चारु वैदूर्यहारम् ॥ ४३ ॥ नीवीबन्धो-च्छ्वसनमधरस्पन्दनं दोर्विषादः खेदश्चक्षुर्मसृणमधुराकेकर-स्निग्धमुग्धम्। गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः *प्रकम्पो गण्डाभोगे पुलकपटलं मूर्च्छना चेतना च ॥ ४४ ॥ संध्यां कोपं तत उपगतां हन्त रात्रिं कृपाणीं चन्द्रं चक्रं विरह-विधुरा तारकापङ्क्तिमुग्राम्। तूणीरान्तर्गतशरततिं प्रज्वल-त्पुङ्खभागां संनद्धास्त्रं कलयति पुनर्मन्मथं राक्षसेन्द्रम् ॥ ४५ ॥ लीलावल्लीभवनकुहरे पत्त्ररन्ध्राच्चकोरीचञ्चुस्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति। लीलारामात्पिकमुख-रितात्का कथा सा बिभेति स्वालापेभ्यश्चकितनयना यत्कुहू-कोमलेभ्यः ॥ ४६ ॥ व्यजनमरुतः श्वासश्रेणीमिमामुप-चिन्वते मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः। कुसुम-शयनं कामास्त्राणां करोति सहायतां द्विगुणगरिमा कामो-न्मादः कथं नु विरंस्यति ॥ ४७ ॥ विषयविधुरा दृष्टिः श्वासानिला ग्लपिताधरास्तनुरपि भृशं म्लाना लूनेव पल्लव-मञ्जरी। अपि च लवलीपाकोद्भेदाभिरामवदावदः स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा ॥ ४८ ॥ कथ-मपि कृतप्रत्याधृत्तौ प्रिये स्खलितोत्तरे विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम्। असहनसखीश्रोत्रप्राप्तिप्रमाद-ससंभ्रमं प्रचलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ४९ ॥ तन्वङ्ग्या गुरुसंनिधौ नयनजं यद्वारि संस्त-म्भितं तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः। मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता श्वासायास-समागतालिसरणिव्याजेन धूमावली ॥ ५० ॥ मुग्धा स्वप्न-समागते प्रियतमे तत्पाणिसंस्पर्शनं रोमाञ्चाञ्चितया शरीर-लतया संभाव्य कोपात्किल। मा वा वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुः सख्या नो हसिता सचिन्तमसकृ-त्संशोचिता प्रत्युत ॥ ५१ ॥ शीघ्रं भूमिगृहे गृहाण वसतिं प्राणैः किमु क्रीडसि प्राप्तां पश्यसि किं न दैवहतिकां ज्योत्स्नां गवाक्षोदरे। इत्थं मन्मथतीव्रसंज्वरजुषो गेहेषु वामभ्रुवा-मुद्गच्छन्ति कुरङ्गलाञ्छनभयाद्दीनाः सखीनां गिरः ॥ ५२ ॥ शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते ताम्यन्त्यन्तिक-तालवृन्तनलिनीपत्राणि दाहोष्मणा। न्यस्तं च स्तन-मण्डले मलयजं शीर्णान्तरं दृश्यते क्वाथादाशु भवन्ति फेनि-लमुखा भूषामृणालाङ्कुराः ॥ ५३ ॥ आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः। अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदा-

वहं हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥ ५४ ॥ अङ्गासङ्गिमृणालकाण्डमयते भृङ्गावलीनां रुचं नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्वाहते । क्षिप्ता सा हिमवालुकापि कुचयोर्धत्ते क्षणं दीप्ततां तप्तायःपतिताम्बुवत्करतले धाराम्बु संलीयते ॥ ५५ ॥ केशैः कोमलमालिकामपि चिरं या बिभ्रती खिद्यते या गात्रेषु घनं विलेपनमपि न्यस्तं न वोढुं क्षमा । दीपस्यापि शिखां न चापि भवने स्वप्नेऽपि या वीक्षितुं तापं सा विरहानलस्य महतः सोढुं कथं शक्ष्यते ॥ ५६ ॥ उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते स्फोटः स्यादिति नाङ्गकं मलयजक्षोदाम्भसा सिच्यते । स्यादस्यातिभरात्पराभव इति त्रासान्न वा पल्लवारोपो वक्षसि तत्कथं वरतनोराधिः समाधीयताम् ॥ ५७ ॥ निःश्वासानलविद्धदन्तवसना नेत्राम्बुसिक्तस्तनी हस्तन्यस्तकपोलदीनवदना हारैकभूषावती । बिभ्राणांसपदेन तुङ्गजघना विस्रंसिनीं वेणिकामास्ते स्थण्डिल एव पाण्डुमधुरक्षामालसैरङ्गकैः ॥ ५८ ॥ क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा । शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ५९ ॥ कर्पूराम्बुनिषेकभाजि सरसैरम्भोजिनीनां दलैरास्तीर्णेऽपि विवर्तमानवपुषः स्रस्तस्रजि स्रस्तरे । मन्दोन्मेषदृशा किमन्यदभवत्सा काप्यवस्था तदा यस्याश्चन्दनचन्द्रचम्पकदलश्रेण्यादि वह्नीयते ॥ ६० ॥ आलीचालितपद्मिनीदलचलत्सर्वाङ्गमङ्गीकृतस्वाङ्गालिङ्गनमर्मरीकृतनवाम्भोजालिशय्या चिरात् । चैतन्यं कथमप्युपेत्य शनकैरुन्मील्य नेत्राञ्चलं बाला केवलमेव शून्यहृदया शून्यं जगत्पश्यति ॥ ६१ ॥ न क्रीडासु कुतूहलं वितनुते नालंकृतौ सादरा नाहारेऽपि च सस्पृहा न गणयत्यालापलोलां सखीम् । बाला केवलमङ्गकैरनुकलक्षामैर्विविक्तस्थले ध्यायन्ती किल किंचिदन्तरधुना निःस्पन्दमास्ते सदा ॥ ६२ ॥ सोन्मेषो न सखीजनः परिजनः प्रागल्भ्यभूमिर्न वा वात्सल्यादविभावितस्फुटवयोवस्थाविशेषो गुरुः । आयाता नवमल्लिकापरिमलक्रूराः शरद्वासराः कस्याख्यातु नितम्बिनी पितृगृहावस्थानदुःस्थं जनुः ॥ ६३ ॥ दुःखं दीर्घतरं वहत्यपि सखीवर्गाय नो भाषते शैवालैः शयनं सृजत्यपि पुनः शेते न वा लज्जया । कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न बाष्पोदकं संतापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥ ६४ ॥

१ चञ्चलदृशः. २ बिसखण्डम्. ३ प्राप्नोति. ४ भृङ्गपङ्क्तीनाम्. ५ कान्तिम्. ६ प्राप्नोति. ७ कर्पूरः. ८ दीप्तरूपताम्. ९ तप्तलोहपतितजलवत्.

कण्ठे मौक्तिकमालिकाः स्तनतटे कार्पूरमच्छं रजः सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः । तन्वी नक्तमियं चकास्ति तनुनी चीनांशुके बिभ्रती शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः ॥ ६५ ॥

---

## वियोगिनो विप्रलापाः

यदि प्रियावियोगेऽपि रुद्यते दीनदीनकम् । तदिदं दग्धमरणमुपयोगं क्व यास्यति ॥ १ ॥ दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा । इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥ २ ॥ नपुंसकमिति ज्ञात्वा तां प्रति प्रहितं मनः । तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥ ३ ॥ न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति सा । एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥४॥ यदि स्मरामि तन्वङ्गीं जीविताशा कुतो मम । अथ विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥ ५ ॥ मुखं तस्याः स्मितस्मेरं किंचिदञ्चलसंवृतम् । मदालोकनलोलाक्षं स्मृत्वा मन्ये सुधा मुधा ॥ ६ ॥ तद्वियोगसमुत्थेन तच्चिन्ताविपुलार्चिषा । रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ७ ॥ विशालाक्ष्याः कटाक्षेण विकृष्टं रश्मिनेव मे । हृदयं किं करिष्यामि न पुनर्विनिवर्तते ॥ ८ ॥ सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु । विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ ९ ॥ दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥ १० ॥ अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले । दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः ॥ ११ ॥ भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् । तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥ १२ ॥ मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे । कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ १३ ॥ या जयश्रीर्मनोजस्य यया जगदलंकृतम् । यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ॥ १४ ॥ अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् । स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥ १५ ॥ स्पर्शः स्तनतटस्पर्शो वीक्षणं वक्रवीक्षणम् । तस्याः केलिकथालापसमयः समयः सखे ॥ १६ ॥ कुतः प्रेमलवोऽप्यस्ति खले मे हृदये खलु । सुन्दरीं तामनालोक्य यदहं प्राणिमि प्रिय ॥ १७ ॥ नूनमयं मे पापः कान्ताविरहो रसायनीभूतः । वर्षसहस्राभ्यधिकान्नयामि कथमन्यथा दिवसान् ॥ १८ ॥ संगमविरहवितर्के वरमिह

१ रोदनं क्रियते. २ अतीन्द्रियज्ञानवान्. ३ वञ्चिताः. ४ स्मितेन हास्येन स्मेरं प्रसन्नम्. ५ वस्त्राञ्चलेनावगुण्ठितम्. ६ अमृतम्. ७ व्यर्थम्. ८ जीवनसाधकरसायनरूपो जातः.

विरहो न संगमस्तस्याः । सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ १९ ॥ अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे । यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ २० ॥ दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २१ ॥ स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा । कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम् ॥ २२ ॥ आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् । विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ २३ ॥ तस्यां सुतनुसरस्यां चेतो नयनं च निष्पतितम् । चेतो गुरु तु निमग्नं लघु नयनं सर्वतो भ्रमति ॥ २४ ॥ निष्कासयन्त्यनेके सागरसरिदम्बुपूरपरिपतितम् । हृदयहृदे निमग्नामिन्दुमुखीं मा बहिः कुरुताम् ॥ २५ ॥ दर्शनपथमुपयाता यदवधि मदिरायतेक्षणा सहसा । तदवधि हृदयेनाहं मदनेषुभयादिवोन्मुक्तः ॥ २६ ॥ अपसरति न चक्षुषो मृगाक्षी रजनिरियं च न याति नैति निद्रा । प्रहरति मदनोऽपि दुःखितानां बत बहुशोऽभिमुखीभवन्त्यपायाः ॥ २७ ॥ पुनरपि मिलनं यदाकदाचित्प्रियतमया कृपया भवेद्विधातुः । हरिरिव करवै हृदि प्रतिष्ठामिह रमणीं तनवै तनोरभिन्नाम् ॥ २८ ॥ स्खलदंशुकमव्यवस्थतारं स्मितकान्ति स्नपिताधरप्रवालम् । असमासनकारमात्तशोभं हरिणाङ्कं हरिणीदृशः स्मरामः ॥२९॥ अधृतपरिपतन्निचोलबन्धं मुषितनकारमवक्रदृष्टिपातम् । प्रकटहसितमुन्नतास्यबिम्बं पुरसुदृशः स्मरचेष्टितं स्मरामि ॥ ३० ॥ नयनेन निरीक्षिता नताङ्गी हृदये हन्त पतत्रिणः पतन्ति । विषमा विषमायुधव्यथासौ परिभूयेत परः परापराधैः ॥ ३१ ॥ यत्राकृतिस्तत्र गुणा वसन्ति नैतद्धि सम्यक्कविभिः प्रणीतम् । येनातिचार्वङ्ग्यपि मे हृदिस्था दुनोति गात्रं विरहे प्रियासौ ॥ ३२ ॥ पञ्चसायकमहेन्द्रजादिना पाणिपद्मसमुदञ्चिता स्वयम् । मोहनाय मनसः प्रगल्भते पिञ्छिकेव मम चञ्चलेक्षणा ॥ ३३ ॥ दूरमस्तु दरघूर्णिततारं शारदेन्दुमुखवीक्षणमक्ष्णोः । एतदेव मम पुण्यमगण्यं यत्कृशोदरि दृशोरतिथिस्त्वम् ॥ ३४ ॥ ग्रसति कोऽपि विमोहविधुंतुदो हृदयचन्द्रमसं मम दारुणः । तदपि हन्त तदन्तरशायिनी लगति चिह्नमृगीव मृगेक्षणा ॥ ३५ ॥ असुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम् । अभिमुखीष्विव वाञ्छितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः ॥ ३६ ॥ तप्ते महाविरहवह्निशिखावलीभिरापाण्डुरस्तनतटे हृदये प्रियायाः । मन्मार्गवीक्षणनिवेशितदीनदृष्टेर्नूनं छमच्छमिति बाष्पकणाः पतन्ति ॥ ३७ ॥ कान्तामुखं सुरतकेलिविमर्दखेदसंजातघर्मकणविच्छुरितं रतान्ते । आपाण्डुरं विलसदर्धनिमीलिताक्षं संस्मृत्य हे हृदय किं शतधा न यासि ॥ ३८ ॥ अद्यापि तत्प्रचलकुण्डलमृष्टगण्डं वक्त्रं स्मरामि विपरीतरताभियोगे । आन्दोलनश्रमजलस्फुटसान्द्रबिन्दुमुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ३९ ॥ निद्रार्धमीलितदृशो मदमन्थराणि नाप्यर्थवन्ति न च नाम निरर्थकानि । अद्यापि मे मृगदृशो मधुराणि तस्यास्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥ ४० ॥ अद्यापि तां कनकचम्पकदामगौरीं फुल्लारविन्दनयनां तनुरोमराजिम् । सुप्तोत्थितां मदनविह्वललालसाङ्गीं विद्यां प्रमादगलितामिव चिन्तयामि ॥ ४१ ॥ अद्यापि सा मनसि संप्रति वर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात्कर्णे कृतं कनकपत्रमनालपन्त्या ॥ ४२ ॥ आसन्नमार्गमतिलङ्घ्य नतेन मूर्ध्ना पश्चात्प्रसङ्गवलितेन मुखेन यान्त्या । आरोपिताः कतिपये मयि पङ्कजाक्ष्या साकूतहासमनतिप्रकटाः कटाक्षाः ॥ ४३ ॥ राजल्ललाटफलका कमनीयकूजत्काञ्चीगुणप्रणयिनी धृतकेशपक्षा । हा किं करोमि मम सा हृदयं प्रविष्टा नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ ४४ ॥ यत्र क्षिपामि दृशमन्यदिदृक्षयाहं तत्रागतः स्फुरति केवलमेतदेव । तद्वक्त्रबिम्बमरुणाधरलोभनीयं ते लोचने तदलसालसमीक्षितं च ॥ ४५ ॥ मन्दस्मितेन मधुराधरपल्लवेन कुम्भोन्नमत्कुचभरेण कृशोदरेण । विद्युन्निभाङ्गलतया च विचिन्त्यमाना चेतो धुनोति च धिनोति च चञ्चलाक्षी ॥ ४६ ॥ तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य चेतः कथं कथमपि व्यपवर्तते मे । लज्जां विजित्य विनयं विनिवार्य धैर्यमुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ ४७ ॥ यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् । तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥ ४८ ॥ पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् । उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीमासक्ततिर्यगपवर्तिदृष्टि वक्त्रम् ॥ ४९ ॥ लीलास्मितेन शुचिना मृदुनोदितेन व्यालोकितेन लघुना गुरुणा गतेन । व्याजृम्भितेन जघनेन च दर्शितेन सा हन्ति तेन गलितं मम जीवितेन ॥ ५० ॥ यान्त्या मुहुर्वलितकंधरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥ ५१ ॥ तां हेमचम्पकरुचिं

१ इष्टसिद्धिषु. २ संतोपम्.

१ मन्दानि.

मृगशावकाक्षीं पार्श्वे स्थितां च पुरतः परिवर्तमानाम् । पश्चात्तथा दशदिशासु परिस्फुरन्तीं पश्यामि तन्मयमहो भुवनं किमेतत् ॥ ५२ ॥ अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ता । वाचं निशम्य नयनं नयनं ममेति किंचित्तदा यदकरोत्स्मितमायताक्षी ॥ ५३ ॥ राकासुधाकरमुखी तरलायताक्षी सस्मेरयौवनतरङ्गितविभ्रमास्था । तत्किं करोमि कथमत्र तनोमि मैत्रीं तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः ॥ ५४ ॥ यान्त्याः सरः सलिलकेलिकुतूहलाय व्याजादुपेत्य मयि वर्त्मनि वर्तमाने । अन्तःस्थितद्युतिचमत्कृतिदत्तरङ्गैरङ्गीकृतं किमपि वामदृशः स्मरामि ॥ ५५ ॥ मन्दादरः कुसुमपत्रिषु पेलवेषु नूनं बिभर्ति मदनः पवनास्त्रमद्य । हारप्रकाण्डसरलाः कथमन्यथामी श्वासाः प्रनर्तितदुकूलदशाः सरन्ति ॥५६॥ पीतो यतःप्रभृति कामपिपासितेन तस्या मयाधररसः प्रचुरः प्रियायाः । तृष्णा ततः प्रभृति मे द्विगुणत्वमेति लावण्यमस्ति बहु तत्र किमप्यपूर्वम् ॥ ५७ ॥ अलसविलसितानामुल्लसद्भ्रूलतानां मसृणमुकुलितानां प्रान्तविस्तारितानाम् । प्रतिनयननिपाते किंचिदाकुञ्चितानां विविधमहमभूवं पात्रमालोकितानाम् ॥ ५८ ॥ अलसवलितमुग्धस्निग्धनिस्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः । हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं च ॥ ५९ ॥ क्रमसरलितकण्ठप्रक्रमोल्लासितोरस्तरलितवलिलेखासूत्रसर्वस्वमस्याः । स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ ६० ॥ व्रीडायोगान्नतवदनया संनिधाने गुरूणां बद्धोत्कम्पस्तनकलशया मन्युमन्तर्निगृह्य । तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥ ६१ ॥ वारंवारं तिरयति दृशोरुद्गमं बाष्पपूरस्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् । सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ६२ ॥ हा हा देवि स्फुटति हृदयं संसते देहबन्धः शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि । सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ६३ ॥ ऊरू रम्भा दृगपि कमलं शेवलं केशपाशो वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् । नाभिः कूपो बलिरपि सरित्पल्लवः किं च पाणिर्यस्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः ॥ ६४ ॥ प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य । हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥ ६५ ॥ कुन्दं दन्तैर्मधु निगदितैः षट्पदं दृग्विलासैरेभिर्हासैरमृतलहरीं कुन्तलैरम्बुवाहम् । इन्दोर्बिम्बं वदनशशिना पङ्कजं च स्तनाभ्यां त्वं जित्वा तान्वससि हृदये तेन मां विद्विषन्ति ॥ ६६ ॥ स्वप्ने दृष्टा किमपि पिशुनाशङ्कया नैव पृष्टा स्पृष्टा नीवी न खलु भयतः किङ्किणीनिक्वणानाम् । आश्लेषाय स्पृहयति मयि द्राग्व्यरंसीदसीमा निद्रामुद्रा शिव शिव दृशोरीदृशो दुर्विपाकः ॥ ६७ ॥ दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते वहति विकलः कायो मोहं न मुञ्चति चेतनाम् । ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ६८ ॥ जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये । मम तु यदियं याता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ६९ ॥ मयि सकपटं किंचित्क्वापि प्रणीतविलोचने किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम् । स्थितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥ ७० ॥ हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् । न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ ७१ ॥ कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः । मनसिजरुजं सा वा दिव्या ममालममोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ ७२ ॥ इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः । अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ७३ ॥ कदा कान्तागारे परिमलमिलत्पुष्पशयने शयानः श्यामायाः कुचयुगमहं वक्षसि वहन् । अये स्निग्धे मुग्धे चपलनयने चन्द्रवदने प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ७४ ॥ तया गाढं मुक्तो भुवि धनुषि संधाय निशितः कटाक्षेषुर्नान्यैः सह पठनयोग्यः शरगणैः । पतन्गात्रे गात्रे परममृतमास्रौदिव तदा दवीयानद्यायं दलयति पुनर्न व्रणयति ॥ ७५ ॥ तदा मुग्धं वक्त्रं किसलयसखः सोऽधरमणिर्विशाले ते नेत्रे स्तनभरनता सा तनुलता । सलीलं तद्यातं

१ लज्जा. २ नम्रमुखत्वेन. ३ क्रोधम्. ४ रुद्ध्वा.

१ कनकवलयमित्यर्थः. २ उष्णैः, अश्रुभिरित्यनेन संबन्धः. ३ अभ्यन्तरे विरहजन्यतापाद्धेतोः. ४ विवर्णा हीनवर्णा मणयो यस्मिन्नेवंविधं कृतम्. ५ नेत्रप्रान्तः. ६ मौर्वीघर्षणजन्यः किणः. ७ सुवर्णकङ्कणम्. ८ वारंवारं गलितम्.

जननयनसंजीवनसुधा प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥ ७६ ॥ कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा तदानन्दः सान्द्रः स्फुरति निहताशेषविषयः । सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥ ७७ ॥ पुरस्ताद्गच्छन्ती सह सहचरीभिः प्रियतमा ममालापं श्रुत्वा सचकितपरावृत्तवदना । किमग्रे व्यासङ्गादहमहह यामीति विनयप्रणालीमालीनां यदकृत तदन्तर्व्यथयति ॥ ७८ ॥ समुत्तीर्णे तन्व्या निशितनयनान्तेन मृदिते स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतमति । मदन्तःकेदारे मदनकृषिकारेण जनिता चिरादाशावल्ली किमिति न फलं हन्त लभते ॥ ७९ ॥ विलीयेन्दुः साक्षादमृतरसवापी यदि भवेत्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् । ततः स्नानक्रीडाजनितजडभावैरवयवैः कदाचिन्मुञ्चेयं मदनशिखिपीडाव्यतिकरम् ॥ ८० ॥ परागैः कार्पूरैस्तुहिनसलिलैश्चान्दनरसैः सुधाभिर्ज्योत्स्नाभिः स्नपितमिव यः प्रागकृत माम् । स एवासौ मारः शिव शिव वियोगे मृगदृशः करालं काकोलं किरति मयि कालानलमपि ॥ ८१ ॥ न दूतीसंचारो न सरसपरोक्षोक्तिकलना न सांमुख्ये हासः क्वचिदपि न वाचां व्यतिकरः । अहो चित्रं चेतः क्षणपरिचितालोकनवशान्मुहुर्धावंधावं व्रजति सुदृशं नो विरमति ॥ ८२ ॥ शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति । तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं प्रसक्ते निर्वाणे हृदयमरितापं वहसि किम् ॥ ८३ ॥ दृगन्तव्यापारप्रबलनिगडेन स्फुरदुरस्तटीकारागारे तव समुचितं बन्धनमिदम् । अरे चेतस्त्यक्त्वा यदिह जनमाजन्मसुहृदं क्षणप्राप्तामेतामधरमधुलामेन भजसे ॥ ८४ ॥ विपत्सिन्धुं बन्धुं विगलितजलं नेत्रयुगलं सशोकं भूलोकं भुवनवलयं खेलनिलयम् । अनङ्गं नीरङ्गं विघटितधनं कोशभवनं विधातुं किं धातस्तव हृदि न लज्जा प्रभवति ॥ ८५ ॥ न वक्षोजाश्लेषप्रभृतिकुतुकानामवगमो न पीयूषस्वादस्मितवलितवाचामनुभवः । न चासीन्मे तादृग्दृढपरिचयः पङ्कजदृशः कुतो हेतोस्तन्वी क्षणमपि न निर्याति मनसः ॥ ८६ ॥ आः पात्री स्यामकृतकघनप्रेमविस्फारितानां सव्रीडानां सकलकरणानन्दनार्डिधमानाम् । तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्रव्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणाम् ॥ ८७ ॥ तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं सुवर्णकदलीदलोद्दलितगर्भगौरं पुनः । कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठितप्रथीयकुचमण्डलं परिरभेय वीक्षेय वा ॥ ८८ ॥ जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः । नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ८९ ॥ याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि । लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मा हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ९० ॥ श्वासा एव मृगीदृशो न गणिताः के नाम झञ्झानिलास्तीर्णा बाष्पपरम्परैव सरितां वृन्देषु कः संभ्रमः । सोढा कातरदृष्टिरेव कियती वज्राभिघातव्यथा प्रेमैवायमुपेक्षितो यदि तदा प्राणेषु कोऽनुग्रहः ॥ ९१ ॥ सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् । साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ ९२ ॥ प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि । यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ९३ ॥ धन्या सा गृहदेहली स्पृशति या तत्पादपद्मप्रभां जाता सा सरसी रसाद्विशति सा यस्यां विहारेच्छया । वन्द्यः कोऽपि स एव यः खलु तया नेत्रेण संभाव्यते धिग्धिग्वेधसमेषु मां यदनयन्नैकं कथंचित्कथम् ॥ ९४ ॥ किं मे सद्गुरुसेवनैः प्रतिदिनं किं व्योमकेशार्चनैः किं स्वाध्ययनेन वा सुरपुरप्राप्त्याथवा किं फलम् । एतस्याः कुचकुम्भनिर्भरपरीरम्भप्रभावोद्भवस्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि ॥ ९५ ॥ तन्वी सा यदि गायति श्रुतिकटुर्वीणाध्वनिर्जायते यद्याविष्कुरुते स्मितानि मलिनैवालक्ष्यते चन्द्रिका । आस्ते म्लानमिवोत्पलं नवमपि स्याच्चेत्पुरो नेत्रयोस्तस्याः श्रीरवलोक्यते यदि तडिद्वल्ली विवर्णैव सा ॥ ९६ ॥ तानि स्पर्शसुखानि ते च तरलस्निग्धा दृशोर्विभ्रमास्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा । सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि मन्मानसं तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्तते ॥ ९७ ॥ तस्मिन्पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे । यस्मामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभिर्जातं मे विदलत्कदम्बमुकुलस्पर्धोपमानं वपुः ॥ ९८ ॥ ज्योत्स्नां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकैर्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् । चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः

१ विकसितम्. २ शैत्यम्. ३ वह्निः.

॥ ९९ ॥ किं तिष्ठामि किमु व्रजामि किमहं जागर्मि निद्रामि किं किं जानामि किमु भ्रमामि किमु वा सुख्यामि दुःख्यामि वा । किं नास्म्यस्मि किमित्यनल्पकलिते न क्वापि पक्षे स्थितः प्राप्यानिर्वचनीयमेव कमपि क्रूरं विकारं सखे ॥ १०० ॥ आसीनः शयितः स्थितः प्रचलितः स्वप्नायितो जागृतः पश्यन्मीलितलोचनो व्यवहरन्मौनं प्रपन्नोऽथवा । तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां श्लिष्यन्तीं प्रणयार्द्रमुग्धलपितां पश्यामि नक्तंदिवम् ॥ १०१ ॥ नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ १०२ ॥ सा मे यद्यपि सुन्दरी भगवतो मामेव चेतोभुवो न स्वप्ने न च जागरे नयनयोः पन्थानमासादिता । तामाकर्ण्य तथापि तादृशदशावैधुर्यमासेदुषीमानन्दाद्भुतशोककौतुकभयव्रीडाकुलं मे मनः ॥ १०३ ॥ सा संचारचमत्कृतिर्नयनयोः स भ्रूलताविभ्रमस्तद्बिम्बाधरपाटलस्मितयुतस्यास्यस्य सा वैखरी । सेयं चङ्क्रमचातुरी चरणयोः सोऽप्यङ्गहारक्रमो दिष्ट्या तन्मम नेत्रपात्रमखिलं जायेत जीवामि च ॥ १०४ ॥ लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ १०५ ॥ सा विद्याधरकन्यका किमु भुवं पुण्यैः प्रपन्ना नृणां लावण्यामृतसागराद्धिमथिता लक्ष्मीः किमन्योत्थिता । आ ज्ञातं घनसारचन्दनसुधाज्योत्स्नामृणालादिभिः प्रारब्धा हृदयं मम भ्रमयितुं पौष्पेषवी शाम्बरी ॥ १०६ ॥ हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते । चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे संजाताः सहसा ममैव भुवनस्याप्यन्धकारा दिशः ॥ १०७ ॥ नेत्रे खञ्जनगञ्जने नवसुधाधारानुकारा गिरः पाणिः पद्मसहोदरः कचरुचिः शैवालजालोपमा । वक्त्रं कार्तिकपौर्णिमापतिसमं हारिद्रहृद्यं वपुस्त्वं यस्मै वलसे विलासिनि हृदा तेनैव तप्तं तपः ॥ १०८ ॥ आस्तां दूरतया तदीयवदनाम्भोजामृतास्वादनं नोदेत्येव मनोरथोऽपि हृदये तत्संगमाशां प्रति । उत्कण्ठाशिथिलीकृताङ्गलतिकं वीक्षेत मामेकदा सस्नेहं यदि सा सरोजवदना धन्योऽस्म्यहं तावता ॥ १०९ ॥ निद्रे लोचनमुद्रणं विरचय स्वप्न त्वमप्याचर प्राणाभिन्नतमां चिरात्प्रियतमां मच्चेतसो गोचरम् । भ्रातर्बोध दृढानुरोध न तथा कुर्या यथा प्रेयसीप्रौढाश्लेषविघट्टनेन भवतः क्रीडन्ति दुष्कीर्तयः ॥ ११० ॥ लज्जेवोद्घटिता किमत्र कुलिशोद्भिन्ना कपाटावली मर्यादैव विलङ्घिता सखि पुनः केयं कलिन्दात्मजा । आक्षिप्ता खलु दृष्टिरेव किमियं व्यालावली वा पुनः प्राणा एव समर्पिताः सखि पुनस्तस्मै किमेषा तनुः ॥ १११ ॥ सव्याजं तिलकालकान्विरलयँल्लोलाङ्गुलिः संस्पृशन्वारंवारमुदञ्चयन्कुचयुगप्रोदञ्चिनीलाञ्चलम् । यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितं तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः ॥ ११२ ॥ क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ ११३ ॥

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् । किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥ ११४ ॥ स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च । इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ ११५ ॥ सा सौन्दर्यनिधिर्विलासभवनं मीनध्वजस्यापि वा कान्तीनामधिदेवताधिकरणं माधुर्यसारस्य वा । तामुद्वीक्ष्य सखे तदादि गतवान्सर्वेन्द्रियाणामहं सार्धं तद्गतमानसेन गलितोत्साहः किलानीशताम् ॥ ११६ ॥ तस्याः किं मुखपङ्कजं स्मितरुचा चन्द्रद्युतेर्निन्दकं किं वा नेत्रयुगं कटाक्षचतुरं किं भ्रूलताविभ्रमम् । किं वा स्निग्धमवेक्षितं मयि पुनर्यान्त्या सखीनां पुरः किं किं संप्रति चिन्तयामि हृदये कामेन लक्ष्यीकृते ॥ ११७ ॥ शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं हारः क्षारपयोभवः प्रियसुहृत्पङ्केरुहं भास्वतः । इत्येषां किमिवास्तु वस्तु मदनज्वालाविघाताय यद्वाह्याकारपरिभ्रमेण तु वयं तत्त्वत्यजो वञ्चिताः ॥ ११८ ॥ जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभूत्प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नं महः । तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकैर्दृष्टा काप्यबला बलात्कृतवती सा मन्मथं मन्मथम् ॥ ११९ ॥ सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति । वत्सैतद्विदितं कथं तु भवता धत्ते कुरङ्गं यतः क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥ १२० ॥ पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती भूयो-

१ कोमलपल्लवकान्तिना. २ सव्याजम्.

भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे[1]। वक्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाच किंचित्स्थितमपि पुरतो मानसं तद्दुनोति ॥ १२१ ॥ चक्षुः-प्रीत्या निषण्णे मनसि परिचयाच्चिन्त्यमानेऽभ्युपाये याते रागे विवृद्धिं प्रविसरति गिरां विस्तरे दूतिकायाः। आस्तां दूरे स तावत्सरभसदयितालिङ्गनानन्दलाभस्तद्गेहोपान्त-रथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥ १२२ ॥

## मदनं प्रत्युक्तयः

स्मयमप्राप्तदुःखो यः स दुनोति न विस्मयः। त्वं स्मर प्रासदाहोऽपि दहसीति किमुच्यते ॥ १२३ ॥ भवनेत्रभवो वह्निरद्यापि त्वयि मन्मथ। ज्वलतीवान्यथा किं ते विशिखास्तत्कणा इव ॥ १२४ ॥ अद्यापि नूनं हरकोप-वह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ। त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ॥ १२५ ॥ वृथैव संकल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम्। आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥ १२६ ॥ क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम्। मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥१२७॥ अनुममार न मार कथं नु सा रतिरतिप्रथितापि पतिव्रता। अयमनाथवधूवधपातकी दयितयापि तयासि किमुज्झितः ॥ १२८ ॥ भुवनमोहनजेन किमेनसा तव परेत बभूव पिशाचता। यदधुना विरहाधिमलीमसामभिभवन्भ्रमसि स्मर मद्विधाम् ॥ १२९ ॥ स्मर नृशंसतमस्त्वमतो विधिः सुमनसः कृतवान्भवदायुधम्। यदि दृढं धनुरायसमाशुगं तव सृजेत्त्रिजगत्प्रलयं व्रजेत् ॥ १३० ॥ विधिरनंशमभेद्य-मवेक्ष्य ते जनमनः खलु लक्ष्यमकल्पयत्। अपि स वज्रमदास्यत चेत्तदा त्वदिषुभिर्व्यदलिष्यदसावपि ॥ १३१ ॥ अपि विधिः कुसुमानि तवाशुगान्स्मर विधाय स निर्वृति-मासवान्। अदित पञ्च हि ते स नियम्य तांस्तदपि तैर्बत जर्जरितं जगत् ॥ १३२ ॥ सह तया स्मर भस्म झटित्यभूः पशुपतिं प्रति यामिषुमग्रहीः। ध्रुवमभूदधुना वितनोः शरस्तव कटुस्वर एव स पञ्चमः ॥ १३३ ॥ त्वमुचितं नयनार्चिषि शंभुना भुवनशान्तिकहोमहविः कृतः। तव वयस्यमपास्य मधुं मधुं हतवता हरिणा बत किं कृतम् ॥ १३४ ॥ बाणाग्निमस्तकरुणो विकिरन्ममाङ्गे प्रायो न वेत्सि विषमास्त्रवर स्वपीडाम्। संताप एव भवता किमु नान्वभावि चण्डीपते-रलिकलोचनगोचरेण ॥ १३५ ॥ तव कुसुमशरत्वं शीतरश्मि-त्वमिन्दोर्द्वयमिदमयथार्थं दृश्यते मद्विधेषु। विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्त्वमपि कुसुमबाणान्वज्रसारीकरोषि[1] ॥ १३६ ॥ हृदि बिसलताहारो नायं भुजंगमनायकः[2] कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः। मलयजरजो नेदं भस्म प्रियारहिते मयि प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥ १३७ ॥ पाणौ मा कुरु चूतसायकममुं मा चापमारोपय क्रीडानिर्जितविश्व मूर्च्छितजनाघातेन किं पौरुषम्। तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षानलश्रेणी-जर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ १३८ ॥ रे रे निर्दय[3] दुर्निवार मदन प्रोत्फुल्लपङ्केरुहं[4] बाणं संवृणु[5] संवृणु त्यज धनुः किं पौरुषं मां प्रति। कान्तासङ्गवियोग-दुःखदहनज्वालावलीढं वपुः शूराणां मृतमारणे न हि परो धर्मः प्रयुक्तो बुधैः ॥ १३९ ॥ आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्धं मम। तत्कंदर्प निरायुधोऽसि भवता जेतुं न शक्तः परो दुःखी स्मामहमेक एव सकलो लोकः सुखं जीवतु ॥ १४० ॥ बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम्। दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥ १४१ ॥ तद्विच्छेद-कृशस्य कण्ठलुठितप्राणस्य मे निर्दयं क्रूरः पञ्चशरः शरैरति-शितैर्भिन्दन्मनो निर्भरम्। शंभोर्भूतकृपाविधेयमनसः प्रोद्दाम-नेत्रानलज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥ १४२ ॥ बाणान्संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः के नामात्र वयं शिरीषकलिकाकल्पं यदीयं मनः। तत्कारुण्यपरिग्रहात्कुरु दयामस्मिन्विधेये जने स्वामिन्मन्मथ तादृशं पुनरपि स्वप्नाद्भुतं दर्शय ॥ १४३ ॥

## चन्द्रं प्रत्युक्तयः

चण्डीशचूडाभरण चन्द्र लोकतमोपह। विरहिप्राणहरण कदर्थय न मां वृथा ॥ १४४ ॥ तारापते कुमुदिनीमनु-कूलकान्तां पादेन पीडयसि कम्पयसि द्विजातीन्। विद्वेषमा-चरसि किं च वियोगिलोके नक्तंचरस्य भवतः करुणा कुतः स्यात् ॥ १४५ ॥ किं रे विधो मृगदृशां मुखमद्वितीयं राजीव दृप्यसि दृगम्बुजमन्यदेव। झङ्कारमावहसि भङ्गतनुर्न तादृक्कर्माणि धिङ्न पुनरीदृशमीक्षणीयम् ॥ १४६ ॥ अभिलषसि यदिन्दो वक्रलक्ष्मीं मृगाक्ष्याः पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम्। सुविमलमथ बिम्बं पारिजातस्य गन्धैः सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व ॥ १४७ ॥ सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभौ

१ लोला चञ्चला तारा कनीनिका ययोः. २ लज्जया नम्रम्. ३ संतापयति. ४ वडवाग्निः. ५ समुद्रे. ६ दैत्यविशेषम्. ७ असत्यम्.

१ वज्रवत्कठिनान्करोषि. २ वासुकिः. ३ निष्करुण. ४ विकसितम्. ५ उपसंहर. ६ विरुद्धस्वभावम्. ७ पक्षिणः; पक्षे,–ब्राह्मणान्. ८ रात्रिचरस्य; पक्षे,–राक्षसस्य. ९ लाञ्छनमित्यर्थः. १० उत्पत्तिः

सोदरौ सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः । स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत्स्थाणुचूडामणे हंहो चन्द्र कथं नु सिञ्चसि मयि ज्वालामुचो रोचिषः ॥ १४८ ॥

पवनं प्रत्युक्तयः

उन्मीलन्मुकुलकरालकुन्दकोशप्रच्योतद्घनमकरन्दगन्धबन्धो । तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन्पवन मम स्पृशाङ्गमङ्गम् ॥ १४९ ॥ व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः । आलिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह ॥ १५० ॥

मेघं प्रत्युक्तयः

भो मेघ गम्भीरतरं नद त्वं तव प्रसादात्स्मरपीडितं मे । संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥१५१॥ भ्रमय जलदानम्भोगर्भान्प्रमोहय चातकान्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान् । विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथामकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ १५२ ॥ मलयमरुतां व्राता याता विकासितमल्लिका परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि । घन घटयितुं निःस्नेहं तं य एव निवर्तने प्रभवति गवां किं नश्छिन्नं स एव धनंजयः ॥ १५३ ॥

अशोकं प्रत्युक्तिः

रक्तस्त्वं[1] नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायान्ति शिलीमुखाः[2] स्मरधनुर्मुक्तास्तथा मामपि । कान्तापाद[3]तलाहतिस्तव मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥१५४॥ रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः । उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ १५५ ॥

तमालं प्रत्युक्तिः

धन्यस्त्वमसि तमाल स्पृष्टस्तन्व्या लतावदनया यत् । अद्य स्थावरजन्मा जातस्त्वं जङ्गमादधिकः ॥ १५६ ॥

मृणालहारं प्रत्युक्तिः

परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार । न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥ १५७ ॥

मधुकरं प्रत्युक्तयः

वदनमिदं न सरोजं नयने नेन्दीवरे एते । इह सविधे मुग्धदृशो मधुकर न मुधा परिभ्राम्य ॥ १५८ ॥ भ्रातर्द्विरेफ भवता भ्रमता समन्तात्प्राणाधिका प्रियतमा मम वीक्षिता किम् । ब्रूषे किमोमिति सखे कथयाशु तन्मे किं व्यवसति कुतोऽस्ति च कीदृशीयम् ॥ १५९ ॥ चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ १६० ॥ उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवलादामोदादवधारणीयवपुषोः कान्तासखे न क्षणम् । यत्कर्णोत्पलयोः स्थितेन भवता किंचित्समुद्गुञ्जितं भ्रातस्तिष्ठति कुत्र तत्कथय मे कान्तं प्रियाया मुखम् ॥ १६१ ॥

हंसं प्रत्युक्तिः

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता । विभावितैकदेशेन देयं यदभियुज्यते ॥ १६२ ॥

चकोरं प्रत्युक्तिः

चुलुकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् । अधिकरणमुष्णमनयोः किमिह चकोरावधारयसि ॥ १६३ ॥

कृष्णसारं प्रत्युक्तिः

स्नेहं स्वीकुरु कृष्णसार कथय क्वागान्मम प्रेयसी नो जानासि यदावयोः समजनि व्यापारतो मित्रता । स्फीते यत्किल मण्डले हिमरुचेर्जातं त्वया लाञ्छनं भव्ये भास्करमण्डले तदधुना दत्तः कलङ्को मया ॥ १६४ ॥

सारङ्गं प्रत्युक्तिः

रे सारङ्गा वनवसतयस्तत्त्वमाख्यात यूयं कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः । आं जानीमो गमनसमये हन्त कान्तारसीमन्येकाकिन्याः कुवलयदृशो लुण्ठिता यौवनश्रीः ॥ १६५ ॥

मयूरविषयकोक्तिः

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्घनरुचिरकलापो निःसपत्नोऽद्य जातः । रतिविगलितबन्धे केशपाशे सुकेश्याः सति कुसुमसनाथे किं हरेदेष बर्हः ॥ १६६ ॥

मुक्ताकलापं प्रत्युक्तिः

सूचीमुखेन सकृदेव कृतव्रणस्त्वं मुक्ताकलाप लुठसि स्तनयोः प्रियायाः । बाणैः स्मरस्य शतशो विनिकृत्तमर्मा स्वप्नेऽपि तां कथमहं न विलोकयामि ॥ १६७ ॥

---

## वियोगिन्या विप्रलापाः

हारो नारोपितः कण्ठे मया [1]विश्लेषभीरुणा[2] । इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ १ ॥ बिभेमि सखि संवीक्ष्य भ्रमरीभूतकीटकम् । यद्ध्यानादागते पुंस्त्वे तेन सार्धं रतिः कथम् ॥ २ ॥ याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः । अस्माकं तु गते कान्ते गता निद्रापि वैरिणी ॥ ३ ॥ यदीयबलमालोक्य गतः प्रयान्वियुज्यते ।

१ रक्तवर्णः; पक्षे,—अनुरक्तः. २ भ्रमराः; पक्षे,—बाणाः. ३ कान्तापादघातः 'पादाहतः प्रमदया विकसत्यशोकः.'

१ सीतावियोगदूयमानमानसस्य सूर्यवंशमुक्तामणेः श्रीरामस्योक्तिरियम्. २ वियोगः.

आलोकये कथं सख्यस्तस्य चन्द्रमसो मुखम् ॥ ४ ॥ विरमत विरमत सख्यो नलिनीदलतालवृन्तपवनेन । हृदयगतोऽयं वह्निर्झटिति कदाचिज्ज्वलत्येव ॥ ५ ॥ अनलस्तम्भनविद्यां सुभग भवान्नियतमेव जानाति । मन्मथशराग्नितप्ते हृदि मे कथमन्यथा वससि ॥ ६ ॥ अजनि प्रतिदिनमेषा कर्दमशेषा मदङ्गसङ्गेन । प्रतिनिशमपूरि पम्पा दक्षिणसंपातिभिः सलिलैः ॥ ७ ॥ मदकलकृतान्तकासरखुरपुटनिर्धूतधूलिसंकाशम् । केतकरजो निवार्यं सखि यदि कार्यं मम प्राणैः ॥ ८ ॥ आलि बालिशतया बलिरस्मै दीयतां बलिभुजे न कदापि । केवलं हि कलकण्ठशिशूनामेष एव कुशलेषु निदानम् ॥ ९ ॥ गरलद्रुमकन्दमिन्दुबिम्बं करुणावारिजवारणो वसन्तः । रजनी स्मरभूपतेः कृपाणी करणीयं किमतः परं विधातः ॥ १० ॥ हन्तालि संतापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि । उत्ताप एषोऽन्तरदाहहेतुर्नतभ्रुवो नो व्यजनापनोद्यः ॥ ११ ॥ वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिनम् । उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः ॥ १२ ॥ अहमिह स्थितवत्यपि तावकी त्वमपि तत्र वसन्नपि मामकः । न तनुसंगम एव सुसंगमो हृदयसंगम एव सुसंगमः ॥१३॥ बकुलमालिकयापि मया न सा तनुरभूषि तदन्तरभीरुणा । तदधुना विधिना कृतमावयोर्गिरिदरीनगरीशतमन्तरम् ॥ १४ ॥ दहनजा न पृथुर्दववथुर्व्यथा विरहजैव यथा यदि नेदृशम् । दहनमाशु विशन्ति कथं स्त्रियः प्रियमपासुमुपासितुमुद्धुराः ॥ १५ ॥ कति न सन्ति जना जगतीतले तदपि तद्विरहाकुलितं मनः । कति न सन्ति निशाकरतारकाः कमलिनी मलिनी रविणा विना ॥ १६ ॥ अरतिरियमुपैति नापि निद्रा गणयति तस्य गुणान्मनो न दोषान् । विगलति रजनी न संगमाशा व्रजति तनुस्तनुतां न चानुरागः ॥ १७॥ प्रियसखि न तथा पटीरपङ्को न च नलिनीदलमारुतोऽपि शीतः । शमयति मम देहदाहमन्तः सपदि कथा हि यथा नरेन्द्रसूनोः ॥ १८ ॥ एतानि निःसहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति गतागतानि । एते च तीरतरवः प्रथयन्ति तापमालम्बितोज्झिततरुग्लपितैः प्रवालैः ॥ १९ ॥ अन्तर्गता मदनवह्निशिखावली या सा बाधते किमिह चन्दनचर्चितेन । यः कुम्भकारभवनोपरि पङ्कलेपस्तापाय केवलमसौ न च तापशान्त्यै ॥ २० ॥ बत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन्रागिलोके तथा हि । उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ २१ ॥ कलयति मम चेतस्तल्पमङ्गारकल्पं ज्वलयति मम गात्रं चन्दनं चन्द्रकश्च । तिरयति मम नेत्रे मोहजन्मान्धकारो विकृतबहुविकारं मन्मथो मां दुनोति ॥ २२ ॥ रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते । हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ २३ ॥ ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी दहतु मदनः किं वा मृत्योः परेण विधास्यति । मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ २४ ॥ इदानीं तीव्राभिर्दहन इव भाभिः परिवृतो ममाश्चर्यं सूर्यः किमु सखि रजन्यामुदयति । अयं मुग्धं चन्द्रः किमिति मयि तापं प्रकटयत्यनाथानां बाले किमिव विपरीतं न भवति ॥ २५ ॥ पिकाली वाचालीभवति बहुधाऽलीकवचने मृणाली व्यालीव व्यथयतितरामङ्गमनिशम् । विषज्वालाजालं सखि किरति पीयूषकिरणो जगत्प्राणः प्राणानपहरति केयं परिणतिः ॥ २६ ॥ मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव । हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ २७ ॥ आदौ हालाहलहुतभुजा दत्तहस्तावलम्बो बाल्ये शंभोर्निटिलमहसा बद्धमैत्रीनिरूढः । प्रौढो राहोरपि मुखविषेणान्तरङ्गीकृतो यः सोऽयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥ २८ ॥ भस्मीभूतः कुसुमविशिखः शंभुनेत्राग्निना भूज्ज्वालादायी तदनु मनसि प्राप्तजन्मा बभूव । भूयस्तस्मिन्विरहदहनैर्दाहितोऽसौ मयैवं कुत्रोत्पन्नो व्यथयति पुनर्मामहो तन्न वेद्मि ॥ २९ ॥ पञ्चत्वं तनुरेति भूतनिवहाः स्वांशैर्मिलन्तु ध्रुवं धातारं प्रणिपत्य हन्त शिरसा तत्रापि याचे वरम् । तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गनव्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥ ३० ॥ यास्यामीति समुद्यतस्य गदितं विश्रब्धमाकर्णितं गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि । तच्छून्ये पुनरागतास्मि भवने प्राणास्त एते दृढाः सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ॥३१॥ यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां जने बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले । प्राणेशस्य महीक्षणार्पितदृशः कृच्छ्रादपि क्रामतः किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ ३२ ॥ दाक्षिण्यं मलयानिलस्य विदितं शैत्यं सुधादीधितेर्वाचामेव न गोचरे मलयजस्यापि स्फुटं सौष्ठवम् । विश्लेषे तव केन मे परिचिताः

१ विरामं कुरुत. २ एतन्नामकं सरः. इयमपि रामोक्तिः. ३ नव्यो नवीनो जनस्तरुणः; पक्षे,–व्यजनं तालवृन्तम्. ४ दत्तम्.

१ ललाटनेत्राग्निना. २ प्रसिद्धः. ३ ग्रहणकाले संपर्कातिशयादन्तरङ्गतां प्रापित इत्यर्थः. ४ न्यायप्राप्तमित्यर्थः.

तेजोपहारिणः । स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ॥ २ ॥ आपूरितमिदं श्यामतमसंतमसैरलम् । ब्रह्माण्डमण्डलं भाति सकज्जलकरण्डवत् ॥ ३ ॥ तनुलग्ना इव ककुभः क्ष्मावलयं चरणचारपात्रमिव । वियदपि चालिकदघ्नं मुष्टिग्राह्यं तमः कुरुते ॥ ४ ॥ अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधेः । रोमसु यदस्य लग्नास्तारकजलबिन्दवो भान्ति ॥ ५ ॥ घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः । ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥ ६ ॥ औषसातपभयादपलीनं वासरच्छविविरामपटीयः । संनिपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ ७ ॥ एकतामिव गतस्य विवेकः कस्यचिन्न महतोऽप्युपलेभे । भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषाः ॥ ८ ॥ रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु । पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ ९ ॥ रात्रिरागमलिनानि विकासं पङ्कजानि रहयन्ति विहाय । स्पष्टतारकमियाय नभःश्रीर्वस्तुमिच्छति निरापदि सर्वः ॥ १० ॥ नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः । लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥ ११ ॥ शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् । सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम् ॥ १२ ॥ पिदधति[1] तिमिरे समस्तलोकं प्रलयमहाब्धिनिभे भृतोच्चनीचे । व्युरुचदुडुगणो वलक्षरोचि[3]र्बहुविधफेनसमूहतुल्यरूपः ॥ १३ ॥ पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ । अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ १४ ॥ व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्बहलपङ्करुचि । दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहाः ॥ १५ ॥ किमलम्बताम्बरविलग्नमधः किमवर्धतोर्ध्वमवनीतलतः । विससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ १६ ॥ स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति । दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ १७ ॥ अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतमसन्तमसम् । सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ १८ ॥ ददृशेऽपि भास्कररुचाह्नि न यः स तमीं तमोभिरभिगम्य तताम् । द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ १९ ॥ अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपशिखाः । समयेन तेन चिरसुप्तमनोभवबोधनं समवबोधिषत ॥ २० ॥ विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् । गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारः ॥ २१ ॥ चरमगिरिनिकुञ्जमुष्णभानौ भगवति गच्छति विप्रयोगखिन्ना । मुकुलितनयनाम्बुजा धरित्री वपुषि बभार तमांसि शैवलानि ॥ २२ ॥ काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितोरुचिमञ्जरीभिः । एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहेमनिकषोपलतां तनोति ॥ २३ ॥ उद्दामदिग्द्विरदचञ्चलकर्णपूरगण्डस्थलोच्चलदलिस्तबकाकृतीनि । मीलन्नभांसि मृगनाभिसमानभांसि दिक्कन्दरेषु विलसन्तिततमां तमांसि ॥ २४ ॥ सिन्धोः सुधांशुशकलं परिगृह्य संध्याक्षेमंकरी निपतिताम्बरभूरुहाग्रे । चञ्चूपुटेन चपलेन तया विकीर्णास्तारामिषेण पतिता इव पक्षखण्डाः ॥ २५ ॥ व्यसनिन इव विद्या क्षीयते पङ्कजश्रीर्गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः । कुनृपतिरिव लोकं पीडयत्यन्धकारो धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥ २६ ॥ इदं नभसि भीषणभ्रमदुलूककोलाहलैर्निशाचरविलासिनीनिवहदत्तनेत्रोत्सवम् । प्ररिस्फुरति निर्भरप्रचुरपङ्कमग्नोल्लसद्वराहकुलमांसलप्रबलबन्धमन्धं तमः ॥ २७ ॥ पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति । उपेतः पीनत्वं तदनु भुवनस्येक्षणपथं तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ २८ ॥ अमुष्मिन्नुद्यानद्रुमकुहररन्ध्रभरिते तमःखण्डे पिण्डीकृतबहलकालायसघने । यतामद्यास्माकं कथमपि पुरोन्यस्तचरणं निमेषेऽप्युन्मेषे नहि नहि विशेषो नयनयोः ॥ २९ ॥ काकोलः[2] कलकण्ठिका कुवलयं कादम्बिनी[3] कर्दमः कंसारिः कबरी[4] कृपाणलतिका[5] कस्तूरिका कज्जलम् । कालिन्दी कषपट्टिका करिघटा[6] कामारिकण्ठस्थली यस्यैते करदा[7] भवन्ति सखि तद्वन्दे विनिद्रं तमः ॥ ३० ॥ किं भूमौ परितः स्फुरन्ति करिणः कस्तूरिकाया रसैः सिक्ताः किं निखिला दिशः किमखिलं लिप्तं मषीभिर्नभः । किं व्याप्तं भुवनं समस्तमपि च श्रीकण्ठकण्ठत्विषा कालिन्दीजलकान्तिभाजि निबिडे जातेऽन्धकारेऽधुना ॥ ३१ ॥ सद्यः सान्द्रमषीविलुप्तककुभः स्निग्धेन्द्रनीलद्रवव्यामीलन्नभसो निरन्तरमिलन्नीलीरसश्च्योतिनः । एते कोकिलकायकालिमहृतो लुम्पन्ति वृत्तिं दृशोरुन्निद्राञ्जनपुञ्जमेचकरुचो भीमास्तमःप्रक्रमाः ॥ ३२ ॥ चिन्वच्चौरचिकीर्षितानि घटयद्वेतालगोष्ठीसुखं तन्वानं शवसाधनोत्सवरसं निर्व्याजवीरात्मनाम् । कुर्वत्कामकृशानुतप्तमनसां गुप्ताङ्गनासंगमं दृप्यत्कोकिलकालकण्ठमलिनं

१ तिरोदधति सति. २ अन्धकारे. ३ धवलकान्तिः. ४ किरणाः.

१ गच्छताम्. २ विषभेदः. ३ मेघपङ्क्तिः. ४ केशपाशः. ५ खड्गलतिका. ६ गजसमूहः. ७ करप्रदाः. ८ कर्तव्यकर्माणि. ९ प्रेतसाधनविधिः.

ध्वान्तं समुज्जृम्भते ॥ ३३ ॥ नाकाशं न दिशो न भूधरकुलं नाम्भोधयो न क्षितिर्न द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागणः । एतैः षट्पदकायकान्तिपटलीपाण्डित्यवैतण्डिकैः कल्लोलैस्तमसामसांप्रतमयं विश्वव्ययः कल्प्यते ॥ ३४ ॥ एतद्व्योमवनीवराहवलयं विश्वैकवीरस्मरस्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकैशिकम् । चक्षुष्याञ्जनवस्तु घूकसदसां विश्लिष्टचक्राह्वयस्तोमान्तर्गतधूमकेतनमहाधूम्या तमस्तार्यते ॥ ३५ ॥ सर्वे ध्वान्तमिदं वदन्तु बहुधा सिद्धान्त एवं तु नः स्वाधारेषु करेषु पुष्करमणेः स्वस्तेषु नूनं शनैः । अस्तालम्बतयाम्बरेण पतता ग्रस्ते समस्ते जगत्युन्मीलत्करकन्दलैरपि विधोस्तत्तावदुत्तार्यते ॥ ३६ ॥ विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिकप्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम् । गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भीति च ध्वान्तेनातिघनेन वस्तु वचसा ज्ञातः स्वरेणामुकः ॥ ३७ ॥ व्योम्नि प्राङ्गणसीम्नि सांध्यकिरणं विस्तार्य चेलाञ्चलं ध्वान्तैः कार्मणपांसुमिश्र जगतां द्राङ् मोहयित्वा दृशौ । ताराशौक्तिकमौक्तिकानि विहगश्रेणीरवच्छद्मना जिंजिकृत्य च मायिकः स्मरनटो वक्राद्बहिर्वर्षति ॥ ३८ ॥ उत्खातच्छिन्नसंध्यारुणकमलवनो व्योमकासारमध्यं मन्ये मत्तो निशीथाह्वयवनमहिषो मङ्क्ष्वविक्षिन्निमक्षुः । तत्कालोद्भिद्यमानः सह तनुपृथुभिस्तारकाबुद्बुदौघैस्तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ॥ ३९ ॥ चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलानुज्ज्वलानि प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः । किं चामी शल्ययन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रासंघट्टोत्पिष्टसंध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः ॥ ४० ॥

---

## अभिसारिकासंचारकथनम्

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा । गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः ॥ १ ॥ मल्लिकामाल्यभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः । क्षौमवत्यो[1] न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ २ ॥ मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः । अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥ ३ ॥ गर्ज वा वर्ष वा मेघ मुञ्च वा शतशोऽशनिम् । न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ ४ ॥ प्राणेशमभिसरन्ती पथि स्खलन्ती सुपिच्छिले[2] मुग्धा । अवलम्बनाय वारां धारासु करं प्रसारयति ॥ ५ ॥ अधियामिनि गजगामिनि कामिनि सौदामिनीव यं व्रजसि । जलदेनेव न जाने कति कति सुकृतानि तेन विहितानि ॥ ६ ॥ जलधर निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम् । स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥ ७ ॥ यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोऽस्मीति । तद्वन्ममापि दुःखं निरवेक्ष्य निवार्यतां जलदः ॥ ८ ॥ यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः । अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि ॥ ९ ॥ रभसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् । रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥ १० ॥ चन्द्रोदये चन्दनमङ्कपेषु विहस्य विन्यस्य विनिर्गतायाः । मनो निहन्तुं मदनोऽपि बाणान्करेण कौन्दान्विभरांबभूव ॥ ११ ॥ स्फुरदुरसिजभारभङ्गुराङ्गी किसलयकोमलकान्तिना पदेन । अथ कथय कथं सहेत गन्तुं यदि न निशासु मनोरथो रथः स्यात् ॥ १२ ॥ संचरन्ति मृगनाभिचर्चिता मेचकाम्बरकृतावगुण्ठनाः । प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव ॥ १३ ॥ क्व प्रस्थितासि करभोरु घने[1] निशीथे[2] प्राणाधिपो वसति यत्र मनःप्रियो मे । एकाकिनी वद कथं न बिभेषि बाले नन्वस्ति पुङ्खितशरो[3] मदनः सहायः ॥ १४ ॥ मन्दं निधेहि चरणौ परिधेहि वासो नीलं पिधेहि वलयावलिमञ्चलेन । मा जल्प साहसिनि शारदचन्द्रकान्तदन्तांशवस्तव तमांसि समापयन्ति ॥ १५ ॥ मूढे निरन्तरपयोधरया मयैव कान्तः सहाभिरमते यदि किं तवात्र । मां गर्जितैरिति मुहुर्विनिवारयन्ती मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १६ ॥ उरसि निहितस्तारो हारः कृता जघने घने कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ । प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा यदि किमपरं त्रासोत्कम्पं दिशः समुदीक्षसे ॥ १७ ॥ न जल्प दशनत्विषा भवति ते तमिस्राक्षतिस्तरङ्गय दृगञ्चलं भवतु तेन गाढं तमः । अपीह सखि साध्वसं पथि जहीहि निम्नोन्नते स्मरं समदसिन्धुरं समधिरुह्य निर्गच्छसि ॥ १८ ॥ वातोद्धूतमुखी प्रनष्टतिलका तोयार्द्रलीनांशुका मेघानां निनदेन भीतहृदया गत्वा प्रियस्यालयम् । द्वारं नेच्छति लज्जया प्रलपितुं देहीति वर्षाहता पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥ १९ ॥ मुक्तं मौक्तिकदाम हेमवलयश्रेणी समुत्सारिता वासो नीलमुरीकृतं नियमितो मञ्जीरकोलाहलः । गच्छन्त्यास्तव साहसं न सहते तन्वङ्गि संगोपनं धम्मिल्लच्युतमल्लिकापरिमलप्रौढो निशीथानिलः ॥ २० ॥ जाताः प्रासादपालीकनकवलभिकान्यस्तमाणिक्यदीपच्छायाविच्छर्दतुच्छीकृतविरलतमा ये निशीथान्धकाराः । तेऽमी स्फारीक्रियन्ते प्रतिविशिखमितः कान्तसंकेतधावद्वामभ्रूमुक्तनेत्रोत्प-

---

१ दुकूलधारिण्यः. २ पङ्कयुक्ते.

१ निबिडे. २ अर्धरात्रे. ३ पुङ्खिताः शरा येन.

लतरलतरत्तारकामेचकिम्ना ॥ २१ ॥ उत्तंसः केकिपिच्छैर्मरकतवलयैः श्यामले दोःप्रकाण्डे हारः सान्द्रेन्द्रनीलैर्मृगमदरचितो वक्रपत्रप्रपञ्चः। नीलाब्जैः शेखरश्रीरसितवसनता चेत्यभीकाभिसारे संप्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेषलीला ॥ २२ ॥ मलयजरसविलिप्ततनवो नवहारलताविभूषिताः सिततरदन्तपत्रकृतवक्ररुचो रुचिरामलांशुकाः। शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥ २३ ॥

## नक्षत्रोदयवर्णनम्

घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम्। छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि ॥ १ ॥ उद्धर्तुं किल शैलकेलिरभसस्रस्तानि पाथोनिधेरन्तर्भूषणमौक्तिकानि दिविजस्त्रीभिः समुत्कण्ठया। गाढं तत्र निमज्जितेन रविणा बद्ध्वा दृढं रश्मिभिः प्रोत्क्षिप्तानि निपत्य तानि गगने तारापदेशं दधुः ॥ २ ॥

## चन्द्रोदयवर्णनम्

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना[१]। नेत्रानन्देन चन्द्रेण माहेन्द्री[२] दिगलंकृता ॥ १ ॥ कुमुदेष्वधिकं भान्ति पतिताश्चन्द्ररश्मयः। अतिप्रकृष्टशीलेषु कुलेष्विव समृद्धयः ॥ २ ॥ आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम्। लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥ ३ ॥ पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम्। तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥ ४ ॥ नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति। अधुना विनिरुद्धाशं प्रविशीर्णमिदं तमः ॥ ५ ॥ नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः। पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥ ६ ॥ ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च। राजति व्योमकासारराजहंसः सुधाकरः ॥ ७ ॥ इदमाभाति गगने भिन्दानं संततं तमः। अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥ ८ ॥ उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम्[३]। परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ ९ ॥ अथ पथिकवधूदहनः शनकैरुदभून्निशाकरालोकः। कुमुदप्रबोधदूतो व्यसनगुरुश्चक्रवाकीणाम् ॥ १० ॥ त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः। अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥ ११ ॥ हंसो यथा राजति पञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः। वीरो यथा दर्पितकुञ्जरस्थश्चन्द्रोऽपि बभ्राम तथाऽम्बरस्थः ॥ १२ ॥ आकाशवापीसितपुण्डरीकं[४] शाणोपलं[१] मन्मथसायकानाम्। पश्योदितं शारदमम्बुजाक्षि संध्याङ्गनाकन्दुकमिन्दुबिम्बम् ॥ १३ ॥ वीथीषु वीथीषु विलासिनीनां मुखानि संवीक्ष्य शुचिस्मितानि। जालेषु जालेषु करं प्रसार्य लावण्यभिक्षामटतीव[२] चन्द्रः ॥ १४ ॥ नभोलताकुञ्जमुपागतायाः प्रमोदपर्याकुलतारकायाः। निशाङ्गनायाः स्फुरता करेण शशी तमःकञ्चुकमुन्मुमोच ॥ १५ ॥ मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः। विराजति व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम् ॥ १६ ॥ अथ मन्मथवाहिनीपरागः किमपि ज्योतिरुदस्फुरत्पुरस्तात्। तिमिरस्य जरा चकोरकूरं[३] कुलटाकेलिवनीदवानलार्चिः ॥ १७ ॥ नवकुङ्कुमचर्चिका रजन्या गगनाशोकतरोः प्रवालपङ्क्तिः। मणिकुन्तलता स्मरस्य मन्ये शशिनः प्राथमिकी मयूखलेखा ॥ १८ ॥ उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्। यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥ १९ ॥ करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य। विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥ २० ॥ अन्धकारगरलं यतो जगन्मोहकारि भृशमत्ति नित्यशः। उज्ज्वलं जठरमोषधीपतेरञ्जनाभमभवत्ततः प्रिये ॥ २१ ॥ मानिनीजनविलोचनपातानुष्णबाष्पकलुषान्प्रतिगृह्णन्। मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥ २२ ॥ शंकरार्धतनुबद्धपार्वतीकुङ्कुमाक्तकुचकोरकाकृतिः। सूच्यते कमलिनीभिरुन्नमत्पद्मकोशकरलीलया शशी ॥ २३ ॥ इन्दुरिन्दुरिति किं दुराशया बिन्दुरेष पयसो विलोक्यते। नन्विदं विजयते मृगीदृशः श्यामकोमलकपोलमाननम् ॥ २४ ॥ रुद्धनिर्गमनमा दिनक्षयात्पूर्वदृष्टतनुचन्द्रिकास्मितम्। एतदुद्गिरति रात्रिचोदिता दिग्रहस्यमिव चन्द्रमण्डलम् ॥ २५ ॥ पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा। विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ २६ ॥ अङ्गुलीभिरिव केशसंचयं संनियम्य तिमिरं मरीचिभिः। कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ २७ ॥ रक्तभावमपहाय चन्द्रमा जात एव परिशुद्धमण्डलः। विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥ २८ ॥ उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः। नूनमात्मसदृशी प्रकल्पिता वेधसैव गुणदोषयोर्गतिः ॥ २९ ॥ चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः। मेखलातरुषु निद्रितानमूनबोधयत्यसमये शिखण्डिनः ॥ ३० ॥

१ विरहिणीकपोलवत्पाण्डुरेण. २ प्राचीदिक्. ३ चन्द्रम्. ४ आकाश एव वापी तस्याः श्वेतकमलम्.

१ शाणपाषाणः. शस्त्रादितीक्ष्णकरणार्हः पाषाण इति यावत्. २ सौन्दर्यस्य याचनाम्. ३ चकोराणां कूरमोदनम्. भोजनमिति यावत्.

उन्नतावनतभागवत्तया चन्द्रिका सतिमिरा गिरेरियम् । भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तदन्तिनः ॥३१॥ एतदुच्छ्वसितपीतमैन्दवं सोढुमक्षममिव प्रभारसम् । मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥ ३२ ॥ आननानि हरिणीनयनानामद्भुतानि च समीक्ष्य जगत्याम् । लज्जयैव घनमण्डललीनो मन्दमन्दमहहेन्दुरुदेति ॥ ३३ ॥ व्यानशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः । चूर्णमुष्टिरिव लम्बितकान्तिर्वासवस्य दिशमंशुसमूहः ॥ ३४ ॥ उज्झती शुचमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे । दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥३५॥ नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः । खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥३६॥ द्यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् । क्षिप्यमाणमसितेतरभासा शंभुनेव करिचर्म चकासे ॥ ३७ ॥ अन्तिकान्तिकगतेन्दुविसृष्टे जिह्मतां जहति दीधितिजाले । निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः ॥३८॥ लेखया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे । दंष्ट्रया कनकटङ्कपिशङ्गया मण्डलं भुव इवादिवराहः ॥३९॥ दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः । हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥ ४० ॥ उद्गतेन्दुमविभिन्नतमिस्रां पश्यति स्म रजनीमवितृप्तः । व्यंशुकस्फुटमुखीमतिजिह्मां व्रीडया नववधूमिव लोकः ॥४१॥ न प्रसादमुचितं गमिता द्यौर्नोद्धृतं तिमिरमद्रिवनेभ्यः । दिङ्मुखेषु न च धाम विकीर्णं भूषितैव रजनी हिमभासा ॥ ४२ ॥ श्लिष्यतः प्रियवधूरुपकण्ठं तारकास्ततकरस्य हिमांशोः । उद्वमन्नभिरराज समन्तादङ्गराग इव लोहितरागः ॥ ४३ ॥ प्रेरितः शशधरेण करौघः संहतान्यपि नुनोद तमांसि । क्षीरसिन्धुरिव मन्दरभिन्नः काननान्यविरलोच्चतरूणि ॥ ४४ ॥ शारतां गमितया शशिपादैश्छायया विटपिनां प्रतिपेदे । न्यस्तशुक्लबलिचित्रतलाभिस्तुल्यता वसतिवेश्ममहीभिः ॥ ४५ ॥ गन्धमुद्धतरजःकणवाही विक्षिपन्विकसतां कुमुदानाम् । आदुधाव परिलीनविहङ्गा यामिनीमरुदपां नवराजीः ॥ ४६ ॥ संविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः । यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥ ४७ ॥ ओजसापि खलु नूनमनूनं नासहायमपयाति जयश्रीः । यद्विभुः शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः ॥ ४८ ॥ कलितमम्बरमाकलयन्करैर्मृदितपङ्कजकोशपयोधरः । विकसदुत्पलनेत्रविलोकितः सखि निशां सरसीकुरुते विधुः ॥ ४९ ॥ वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् । स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥ ५० ॥ विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः । मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ ५१ ॥ कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् । क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ ५२ ॥ नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव । ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् ॥ ५३ ॥ प्रथमं कलाभवदथार्धमथो हिमदीधितिर्महदभूदुदितः । दधति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥ ५४ ॥ उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा । प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ५५ ॥ अथ लक्ष्मणानुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः । परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥ ५६ ॥ उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः । घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥ ५७ ॥ रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् । अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥ ५८ ॥ दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः । मुहुरामृशन्मृगधरोऽग्रकरैरुदशिश्वसत्कुमुदिनीवनिताम् ॥ ५९ ॥ प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्मधर्मपयसोपचिताम् । सुदृशोऽभिभर्तृशशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ ६० ॥ अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपति स्म करैः । परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ६१ ॥ अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः । विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥६२॥ उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि । रजनीकरः किमिव चित्रमहो यदुरागिणां गणमनङ्गलघुम् ॥ ६३ ॥ भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिकयष्टिरुचः । अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ६४ ॥ अविभावितेषुविषयः प्रथमं मदनोऽपि नूनमभवत्तमसा । उदिते दिशः प्रकटयत्यमुना यदघर्मधाम्नि धनुराचकृषे ॥ ६५ ॥ युगपद्विकाससमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत । द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥ ६६ ॥ ककुभां मुखानि सहसोज्ज्वलयन्दधदाकुलत्वमधिकं रतये । अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥ ६७ ॥ ख्याता वयं समधुपा मधुकोशवत्यश्चन्द्रः प्रसारितकरो द्विजराज एषः । अस्त्समागमकृतोऽस्य पुनर्द्वितीयो मा भूत्कलङ्क इति संकुचिता

१ कौटिल्यं, तिर्यक्त्वं वा. २ अतिमन्दगामिनीम्.

नलिन्यः ॥ ६८ ॥ उद्दर्भहूणतरुणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः । बिम्बं कठोरबिसकाण्डकडारमेतद्रम्भापदं प्रथममग्रकरैर्व्यनक्ति ॥ ६९ ॥ ताराक्षतान्प्रतिकिरन्कलकण्ठनादान्मन्त्राक्षराणि निगदन्कुसुमेषुरेषः । लाभाय वासरमणेर्मुषितस्य सायं संचारयत्यमृतदीधितिकांस्यपात्रम् ॥ ७० ॥ एतद्विभाति चरमाचलचूडचुम्बिडिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् । उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन ॥ ७१ ॥ भूयस्तराणि यदमूनि तमस्विनीषु ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः । संध्यानलेन भृशमम्बरमूषिकायामावर्तितै रुडुभिरेव कृतोऽयमिन्दुः ॥ ७२ ॥ उज्जृम्भते कुमुदिनीसुकृतं मृगाङ्को विष्वग्विकीर्णपरिपाटलरश्मिदण्डः । उत्सूतविद्रुमकुलो जलधेस्तरङ्गादुत्क्षिप्यमाण इव कश्चन राजकम्बुः ॥ ७३ ॥ गगनविपिनसिंहः कामभूपातपत्रं निखिलदिगबलानां कन्दुकं क्रीडनाय । मणिरिव रतिभर्तुः कार्मणः पार्वणोऽयं जयति कुमुदबन्धुर्बन्धुरश्चन्द्रबिम्बः ॥ ७४ ॥ अयमुदयति चन्द्रो वारिधेरम्बुगर्भादमृतकणकरालैरंशुभिर्दीप्यमानः । भुजगशयनवक्षोहर्म्यदेशे ललन्त्या वदनमिव यदृच्छोत्तानितं विश्वमातुः ॥ ७५ ॥ अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः परिणतविमलिम्नि व्योम्नि कर्पूरगौरः । ऋजुरजतशलाकास्पर्धिभिर्यस्य पादैर्जगदमलमृणालीपञ्जरस्थं विभाति ॥ ७६ ॥ उदयति कलमन्द्रैः कण्ठतालैरलीनां कुमुदसुकुलकेषु व्यञ्जयन्नङ्गहारान् । मदमुखरचकोरीतोयकर्मान्तिकोऽयं तुहिनरुचिरधामा दक्षिणं लोकचक्षुः ॥ ७७ ॥ मृगाङ्कोऽयं धत्ते गगनजलधेः फेनतुलनां सितच्छत्राकारां मदननृपतेर्विश्वजयिनः । त्रियामारामाया मलयजविशेषप्रतिकृतिं जगद्धात्रीदेव्या मणिमुकुरलक्ष्मीं च विमलाम् ॥ ७८ ॥ कपाले मार्जारः पय इति कराँल्लेढि शशिनस्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ७९ ॥ अयं नेत्रादत्रेरजनि रजनीवल्लभ इति भ्रमः कोऽयं प्रज्ञापरिचयपराधीनमनसाम् । सुधानामाधारः स खलु रतिबिम्बाधरसुधारसासेकस्निग्धादजनि नयनात्पुष्पधनुषः ॥ ८० ॥ जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो वियोगिव्यापत्तेरिव कलितवैराग्यविशदः । परिप्रेङ्खत्तारापरिकरकपालाङ्किततले शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥ ८१ ॥ तथा पौरस्त्यायां दिशि कुमुदकेदारकलिकाकवाटघ्नीमिन्दुः किरणलहरीमुल्लसयति । समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ ८२ ॥ सुधारश्मिः सद्यस्तिमिरनिकरान्तं विरचयन्नलिन्देभ्यः स्यन्दं शशिमणिसमुत्थं च वितरन् । उदेत्यादौ रक्ताम्बुजसमरुचिः कैरववने प्रमोदं तन्वानो मधुपवनितागीतिमधुरम् ॥ ८३ ॥ त्रिनयनजटावल्लीपुष्पं निशावदनस्मितं ग्रहकिसलयं संध्यानारीनितम्बनखक्षतिः । तिमिरभिदुरं व्योम्नः शृङ्गं मनोभवकार्मुकं प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयमस्तु नः ॥ ८४ ॥ प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः । उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ ८५ ॥ मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्छलत्तरलतारकागणविकीर्णमुक्तागणः । पुरंदरहरिद्दरीकुहरगर्भसुप्तोत्थितस्तुषारकरकेसरी गगनकाननं गाहते ॥ ८६ ॥ प्रसारणपरैः करैः प्रकटितानुरागोदये सुधाकिरणकामुके त्वरितमम्बरालम्बिनि । तदा विगलितोल्लसत्तिमिरजालनीलांशुका पुरंदरदिगङ्गना पुलकितैव तारागणैः ॥ ८७ ॥ कलानिधिरयं [1]रवेः समुपलभ्य रूपं स्वयं दिनान्तसमयेऽस्पृशत्सपदि पद्मिनीं रागवान् । [2]ध्वान्यकरसंगमान्मुकुलितेति [3]पूर्वाकृतिं समीक्ष्य जहसुः प्रियाँ ध्रुवमभूदतः पाण्डुरः ॥ ८८ ॥ दर्पोद्रेकः कुसुमधनुषो जीवितं कैरवाणां जीवंजीवप्रणयगरिमा भाग्यराशिर्निशायाः । शृङ्गारश्रीललितहसितं पानपात्रं सुराणां पौरस्त्याद्रेर्जयति शिखरं किं तमः स्थातुमीष्टे ॥ ८९ ॥ तैः सर्वज्ञीभवदभिसृतानेत्रसिद्धाञ्जनैर्वा नीरन्ध्रैर्वा त्रिभुवनदृशामन्धपट्टैस्तमोभिः । व्याप्तं पृथ्वीवलयमखिलं क्षालयन्नुच्छलद्भिर्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्वभौमः ॥ ९० ॥ पश्योदेति [5]वियोगिनां दिनमणिः शृङ्गाररक्षामणिस्तारामौक्तिकहारनायकमणिश्चण्डीशचूडामणिः । प्रौढानङ्गभुजंगमस्तकमणिः कंदर्पसीमन्तिनीकाञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥ ९१ ॥ ॐकारो मदनद्विजस्य गगनक्रोडैकदंष्ट्राङ्कुरस्तारामौक्तिकशुक्तिरन्धतमसस्तम्बेरमस्याङ्कुशः । शृङ्गारार्गलकुञ्चिका विरहिणीमर्मच्छिदा कर्तरी संध्यावारवधूनखक्षतिरियं चान्द्री कला जृम्भते ॥ ९२ ॥ स्वैरं कैरवकोरकान्विदलयन् यूनां मनो दोलयन्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूलयन् । ज्योत्स्नां कन्दलयन्दिशो धवलयन्नम्भोधिमुद्वेल्लयन्कोकानाकुलयंस्तमः कवलयन्निन्दुः समुज्जृम्भते ॥ ९३ ॥ एष स्वर्गतरंगिणीजलमिलद्दिग्दन्तिदन्तद्युतिश्रैश्यद्राजतकुम्भविभ्रमधरः शीतांशुरभ्युद्यतः । हंसीयत्यमलाम्बुजीयति लसड्डिण्डीरपिण्डीयति स्फारस्फाटिककुण्डलीयति दिशामानन्द-

१ सूर्यात्. २ पतिः. ३ पूर्ववदाकृतिः स्वरूपं यस्य तथा बिम्बम्. प्रथमं पद्मिनीदर्शनेन विकृताकृतिः पश्चान्मुकुलीभावेन निराशतया विकारापगमेन स्वरूपस्थितिं प्राप्तमित्यर्थः. ४ कैरविण्यः. ५ विरहिणः सूर्यवत्तापकः. ६ वराहः. ७ उद्घाटनसाधनम्; 'चावी' इति लोके.

कन्दीयति ॥ ९४ ॥ अद्यापि स्तनशैलदुर्गविषमे किं मानिनीनां हृदि स्थातुं वाञ्छति मान एष झगिति क्रोधादिवालोहितः । उद्यन्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ ९५ ॥ कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः । मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ॥ ९६ ॥ पीयूषाश्रपणं जगत्त्रयदृशामालानलेखालवो विश्वोन्माथहुताशनस्य ककुभामुद्घाटिनी कुञ्चिका । वीरेषु प्रथमा च पुष्पधनुषो रेखा मृगाक्षीमुखश्रीणां च प्रतिराजबीजमधिकानन्दी नवश्चन्द्रमाः ॥ ९७ ॥ दिग्बालाकरकन्दुकः स्मरवधूसीमन्तमुक्तामणिः कामक्षोणिपतेर्विहारवलभीनिर्व्यूहपारावतः । हृद्व्योम्नि विकीर्णतारकमणिः श्यामा वणिक्सुभ्रुवः स्फारः स्फाटिकसंपुटः कुमुदिनीकान्तोऽयमुन्मीलति ॥ ९८ ॥ यातस्यास्तमनन्तरं दिनकृतो वेषेण रागान्वितः स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन् । शीतस्पर्शमुपेत्य संप्रति तया रुद्धे मुखाम्भोरुहे हासेनेव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृतः ॥ ९९ ॥ एतत्कोककुटुम्बिनीजनमनःशल्यं चकोराङ्गनाचञ्चूकोटिकपाटयोर्घटितयोरुद्घाटिनी कुञ्चिका । दग्धस्यापि नवाङ्कुरः स्मरतरोराद्रीगसां प्रेयसीमानोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः ॥ १०० ॥ क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रवत्पाथःसीकरिणो विकासिकुसुदक्रोडे रजःपिञ्जराः । उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्रमत्कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥ १०१ ॥ ध्वान्तौघे शितिकण्ठकण्ठमहसि प्राप्ते प्रतीचीमुखं प्राचीमञ्चति किं च दुग्धलहरीमुग्धे विधोर्धामनि । एतत्कोकचकोरशोकरभसम्लानप्रसन्नोल्लसद्दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥ १०२ ॥ शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदीवल्लीनूतनपल्लवाञ्चितमिव प्राप्य क्षणं ताम्रताम् । चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्रुतक्षीरस्यन्दनिरन्तराप्लुतमिव श्वेतं वियद्भासते ॥ १०३ ॥ यः श्रीखण्डतमालपत्त्रति दिशः प्राच्या स्मरक्ष्मापतेः पाण्डुच्छत्त्रति दन्तपत्त्रति वियल्लक्ष्मीकुरङ्गीदृशः । केलिश्वेतसहस्रपत्त्रति रतेः किं च क्षपायोषितः क्रीडाराजतसीधुपात्त्रति शशी सोऽयं जगन्नेत्रति ॥ १०४ ॥ ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छदच्छायासाम्यभृतो मृणाललतिकालावण्यभाजोऽत्र ये । ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रियस्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥ १०५ ॥ सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः । उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करैर्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ १०६ ॥ कोकानाकुलयंश्चकोरतरुणीवैकल्यमुन्मूलयन्नम्भोजानि निमीलयन्कुमुदिनीरुन्मीलयन्सर्वतः । पान्थानाकुलतां नयन्कुलवधूचेतः समुल्लासयन्नस्तं याति दिवापतिः समुदयं यात्येष दोषापतिः ॥ १०७ ॥ स्वर्गामामृतपानचारुचषकं किं कामदेवाङ्गनाक्रीडाकन्दुक एष किं सुरनदीडिण्डीरपिण्डः किमु । किं छत्त्रं स्मरभूपतेः किमु यशः पुञ्जं पुरस्तादिदं चेतःसंशयकारकं समुदितं शीतद्युतेर्मण्डलम् ॥ १०८ ॥ पद्मिन्या दयितेऽनुधावति रुषा स्वं पद्मिनीद्रोहिणं भ्रान्त्वा भीतमना दिगन्तमखिलं चन्द्रो जगाहेऽम्बुधिम् । गाढे तत्र च तत्र विह्वलममुं कर्षन्ति ताराः पतिं सोऽयं तच्छ्रमवारिकुङ्कुमरसैः सिक्तोऽरुणो दृश्यते ॥ १०९ ॥ भानावभ्युदिते तथा मयि गते किं स्वान्मम प्रेयसी हा हेत्यस्तमितः शशी रसवशादिन्दीवरिण्याः स्मरन् । सोऽयं संप्रति नीलिमाङ्कितततनुस्तस्माद्दरीदृश्यते ये वै यत्किल संस्मरन्ति चरमे तद्रूपमेष्यन्ति ते ॥ ११० ॥ आदायामृतपूर्णमर्कचषकं शोणारविन्दप्रभे पाणाविन्द्रवधूर्विलोक्य च पुनस्तस्मिन्नभःश्यामिकाम् । चिक्षेपोपरि कोपतः परिजनेऽसंशोध्य दत्ता सुधेत्येनं तं शशिनं प्रशंसति जनस्तत्पाणिमुक्तार्जुनम् ॥ १११ ॥ आनीलां करपल्लवैरपनयन्नच्छां तमःकञ्चुकीमाशां संप्रति वासवीमनुसरन्नक्षीणरागः शशी । अस्याश्च स्तनसङ्गिनीमिव वहन्नङ्केन कस्तूरिकामालिङ्गत्ययमादरेण रजनीमर्धोन्मिषत्तारकाम् ॥ ११२ ॥ यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां नेत्राणामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ । अम्भोजानि पराञ्चि तन्निजमघं दत्त्वैव तेभ्यस्ततो गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ११३ ॥ यं प्राक्प्रत्यगवागुदञ्चि ककुभां नामानि संबिभ्रतं ज्योत्स्नाजालझलज्झलाभिरभितो लुम्पन्तमन्धं तमः । प्राचीनादचलादितस्त्रिजगतामालोकबीजाद्बहिर्निर्यान्तं हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति ॥ ११४ ॥ स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरिः । संस्कर्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोदगात् ॥ ११५ ॥ प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निजैर्निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि । अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्त्रीर्यते बिम्बादङ्कुरभग्ननैशिकतमःसंदोहमिन्दोर्महः ॥ ११६ ॥ सायं नायमुदेति वासरमणिश्चन्द्रो नु चण्डद्युतिर्दावाग्निः कथमम्बरे किमशनिः स्वच्छान्तरीक्षे कुतः । हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया धावद्घोरविभावरीविषधरीभोगस्य भीमो मणिः ॥ ११७ ॥ प्राणायामोपदेष्टा सरसिरुहमुने-

यौवनोन्मादलीलागोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराशः। कामायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्रानुरागः शृङ्गाराद्वैतवादी प्रभवति भगवानेषु पीयूषभानुः ॥ ११८ ॥ कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरःस्वःस्रवन्तीमृणालं कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालम्। एतद्दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दोरन्तस्तोषं न केषां किसलयति जगन्मण्डनं खण्डमिन्दोः ॥ ११९ ॥ संरम्भोद्रिक्तनक्तंसमयदशमुखोच्चण्डदोर्दण्डहेलाकैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः। लोलाक्षीगण्डपालीलवणिमजलधेरुद्गतः फेनपिण्डः पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥ १२० ॥ क्वैतन्मार्तण्डबिम्बं सरसि सरसिजश्रेणिहास्यं क्व यातं क्वैते याता रथाङ्गाः सपदि गतह्रियः क्व प्रविष्टा मरालाः। संध्यारागारुणाङ्गः कुपित इव पतिः प्रोद्यतोऽयं हिमांशुर्मन्ये हर्षादिवेयं हसति कुमुदिनी जाग्रतीवालिनादैः ॥ १२१ ॥ प्राचीभागे सरागे धरणिविरहिणीक्रान्तवक्त्रे समुद्रे निद्रालौ नीरजालौ विकसति कुमुदे निर्विकारे चकोरे। आकाशे सावकाशे तमसि शममिते नागलोके सशोके कंदर्पे मन्ददर्पे वितरति किरणान् शर्वरीसार्वभौमः ॥ १२२ ॥

## चन्द्रकलावर्णनम्

अकलङ्कचन्द्रकलया कलिता सा भाति वारुणी तरुणी।
भालस्थलीव शंभोः संध्याध्यानोपविष्टस्य ॥ १२३ ॥

## ज्योत्स्नावर्णनम्

दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः। मदचपलचकोरचञ्चुकोटीकवलनतुच्छमिवान्तराऽन्तराभूत् ॥ १२४ ॥ आलोक्य चन्द्रमसमभ्युदितं समन्तादुद्वेल्लदूर्मिविचलत्कलशाम्बुराशेः। विष्वग्विसारिपरमाणुपरम्परैव ज्योत्स्नात्मना जगदिदं धवलीकरोति ॥ १२५ ॥ सितकिरणकपोलीमालिमालोकयन्ती तिमिरविरहतापव्याकुलां व्योमलक्ष्मीम्। रजनिरमलताराशीकरैः सिक्तमस्याः परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥ १२६ ॥ अपि पिबत चकोराः कृत्स्नमुन्नाम्य कण्ठं क्रमकवलनचञ्चच्चञ्चवश्चन्द्रिकाम्भः। विरहविधुरितानां जीवितत्राणहेतोर्भवति हरि[1]णलक्ष्मा येन तेजोदरिद्रः ॥ १२७ ॥ सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः। सह सरसिजखण्डैः स्वा[2]न्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः संचरन्ति ॥ १२८ ॥ भास्वत्कर्कशशाणचक्रकषणैराकाशकालायसा[3]द्यचूर्णं निविडं निपत्य तम इत्याख्यां जगत्यामगात्। यच्चेन्दोश्चलसिद्धपारदमहाबिन्दोः समायोगतो जातं रूप्यरजोमयं वयमिदं ज्योत्स्नां समाचक्ष्महे ॥ १२९ ॥ एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि। कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदैरक्षालि स्फटिकोपलैः किमघटि द्यावापृथिव्योर्वपुः ॥ १३० ॥ उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिकासंवर्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः। अप्युत्सैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता विश्वेनेव तमोमयो निधिरपामह्नाय फेनायते ॥ १३१ ॥ किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करैरत्यच्छोऽयमधश्च पङ्कपटलं छायापदेशादभूत्। किं वा तत्करकर्तरीभिरमितो निस्तक्षणादुज्ज्वलं व्योमैवेदमितस्ततश्च पतिताश्छायाच्छलेन त्वचः ॥ १३२ ॥ पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धताः शीतांशोर्द्युतयः पुरंदरपुरीसीमासुपस्कुर्वते। एताभिर्लिहतीभिरन्धतमसान्युद्भ्रमतीभिर्दिशः क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ १३३ ॥ नैवायं भगवानुदञ्चति शशी गव्यूतिमात्री[म]पि द्यामद्यापि तमस्तु कैरवकुलश्रीचाटुकाराः कराः। मज्जन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते जीवग्राहमिव क्वचित्क्वचिदपि च्छायासु गृह्णन्ति च ॥ १३४ ॥ यन्द्राद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती येयं मौक्तिकदामगुम्फनविधौ योग्यच्छविः प्रागभूत्। उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्तते ॥ १३५ ॥ मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि। कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥ १३६ ॥ इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य। कंदर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशानासामुक्ताफलस्य स्थगयति जगतीं कोऽपि भासां विलासः ॥ १३७ ॥ लक्ष्मीक्रीडातडागो रतिधवलगृहं दर्पणो दिग्वधूनां पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम्। पिण्डीभूतं हरस्य स्मितममरसरित्पुण्डरीकं मृगाङ्को ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोकुलस्य ॥ १३८ ॥

## सकलङ्कचन्द्रवर्णनम्

दोषागमनमाशङ्क्य रविरेष तिरोहितः। कथमिन्दुः समायाति कुतः शङ्का कलङ्किनः ॥ १३९ ॥ यक्ष्मं विरहिणं कंचित्त्रासयामास तेजसा। यक्ष एव विलोमेन संलग्नोऽभूद्विधौ क्षयः ॥ १४० ॥ शिवभालानलोत्थेन धूमयोगेन कालिमा। विधौ शुक्लतरे किं वा इति मन्मानसाशयः ॥ १४१ ॥ इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्धनि धृतायाः। स्थानमिव तुच्छमेतत्कलङ्करूपेण परिणमति ॥ १४२ ॥ अस्तं गतवति सवितरि पायसपिण्डं सुधाकरं प्राची। विरचयदम्बरकुशभुवि चरति कलङ्कस्तदन्तरे

१ चन्द्रमा. २ हृदयम्. ३ लोहविशेषात्.

१ किरणैः २ 'निर्मली नामकजलप्रकाशकफलशकलैः. ३ बदरीफलम्. ४ विपरीततया.

काकः ॥ १४३ ॥ कृष्णवर्णहृदयं सितदीप्तिं दुर्धियः किल कलङ्किनमाहुः । कृष्णवर्णसमुदीरणमात्रादेव यद्गलति दृश्यकलङ्कः ॥ १४४ ॥ आयताग्रसितरश्मिनिबद्धं लाञ्छनच्छविमषीरसदिग्धम् । चन्द्रकैतवमरुत्पटचक्रं क्रीडयोत्सृजति किं स्मरबालः ॥ १४५ ॥ शम्बरारिरमृतं विषगर्भं चन्द्रबिम्बकपटात्प्रयुनक्ति । यद्बहिः सितमथासितमन्तः प्रोषितान्दहति दर्शनमात्रात् ॥ १४६ ॥ अयं पुरः पार्वणशर्वरीशः किं दर्पणोऽयं रजनीरमण्याः । यतस्तदीयं प्रतिबिम्बमस्मिन्संलक्ष्यते लाञ्छनकैतवेन ॥ १४७ ॥ प्रदोषमातङ्गमनङ्गदेवस्तुङ्गं समारुह्य समागतोऽयम् । सिन्दूरिते तस्य सुधांशुकुम्भे किमङ्कुशो लक्ष्ममिषेण दत्तः ॥ १४८ ॥ मम प्रियां कैरविणीं करेण संतापयामास दिनाधिनाथः । इतीव दुःखेविकलः कलावान्पपौ विषं लक्ष्ममिषेण सद्यः ॥१४९॥ कलाधिनाथानयनाय सायं कुमुद्वतीप्रेषित एष भृङ्गः । किमिन्दुनालिङ्ग्य सरागमङ्के कृतः कलङ्कभ्रममातनोति ॥१५०॥ नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः । नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥१५१॥ मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन । बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति ॥१५२॥ अत्रान्तरे च कुलटाकुलवर्त्मपातसंजातपातक इव स्फुटलाञ्छनश्रीः । वृन्दावनान्तरमदीपयदंशुजालैर्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १५३ ॥ अच्छप्रकाशवति चन्द्रमसि प्रियेऽस्मिन्नाह्लादकारिणि सुधावति पूर्णबिम्बे । धाता विचिन्त्य मनसाखिलदृष्टिपातं हर्तुं चकार किसु कज्जलबिन्दुयोगम् ॥ १५४ ॥ दष्टे जगद्वपुषि कालभुजंगमेन तत्रान्धकारमिषमाविरभूद्विषं यत् । संजातलक्ष्मणि तदिन्दुमणौ निपाय्य ज्योत्स्नामये पयसि तत्क्षिपति स्म धाता ॥ १५५ ॥ दिग्यन्त्रतस्तिमिरचूर्णविशेषपूर्णादुद्गत्वरोडुमयरञ्जकविस्फुलिङ्गात् । कालेन पूर्वगिरिदुर्गजुषा प्रयुक्तो वृत्तोपलो विधुमिषात्पथिकान्हिनस्ति ॥ १५६ ॥ मन्थानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणैः स्फुरतीन्दुमध्ये । छाया मृगः शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥ १५७ ॥ अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि । असुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥१५८॥ समयशबरो व्योमारण्ये सुधाशनमक्षिकासुविहितसुधाबिम्बक्षौद्रस्फुरत्पटलं प्रति । कलयति कलङ्काख्यं धूमं निपीड्य पुनश्च तत्किरति मधुरज्योत्स्नाक्षौद्रं महीतलभाजने ॥१५९॥ रुचिभिरभितष्टङ्कोत्कीर्णैरिव त्रसरेणुभिर्यदुडुभिरपिच्छेदैः स्थूलैरिव भ्रियते नभः । प्रकृतिमलिनो भास्वद्बिम्बोन्मृजाकृतकर्मणस्तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः ॥ १६० ॥ तरुणतमालकोमलमलीमसमेतदयं कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते । तदनृतमेव निर्दयविधुंतुददन्तपदव्रणविवरोपदर्शितमिदं हि विभाति नभः ॥१६१॥ अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे । इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥ १६२ ॥ रङ्कावङ्कगते त्रिविष्टपवनीखेलत्कुरङ्गीगणैः साकं क्रीडनकौतुकेन रभसादुत्प्लुत्य याते दिवम् । तच्छायानुगतात्ममूर्तिरधुना धर्तुं तमेनं शशी मन्दं व्यायतरश्मिजालकलितः खाग्रं समारोहति ॥ १६३ ॥ काश्मीरेण दिहानमम्बरतलं वामभ्रुवामाननद्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःसिराः । प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदूर्वाङ्कुरक्षीबोत्सङ्गकुरङ्गमैन्दवमिदं बिम्बं समुज्जृम्भते ॥१६४॥

## नायकागमनावस्थावर्णनम्

श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया । भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥ १ ॥ आगच्छन्सूचितो येन येनानीतो गृहं प्रति । प्रथमं सखि कः पूज्यः किं काकः किं क्रमेलकः ॥ २ ॥ सज्जितसकलशरीरा क्षणे क्षणे मनसि किमपि गणयन्ती । उत्सवमिव तं दिवसं मनुते मुग्धा प्रियागमने ॥ ३ ॥ अभ्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय । सा पूर्णकुम्भनवनीरजतोरणस्रक्संभारमङ्गलमयत्नकृतं विधत्ते ॥ ४ ॥ आयातो दयितस्तवेति सहसा न श्रद्दधे भाषितं सद्यः संमुखतां गतेऽपि सुमुखी भ्रान्तिं निजां मन्यते । कण्ठाश्लेषिभुजेऽपि शून्यहृदया स्वप्नान्तरं शङ्कते प्रत्यावृत्तिमियं प्रियस्य कियता प्रत्येतु शातोदरी ॥ ५ ॥ द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् । आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने वाचस्तच्च निवारितं प्रसरणं संकोचिते दोर्लते ॥ ६ ॥

## नायकागमने नायिकां प्रति सखीवचनम्

नित्यं मनोरथस्यापि सखि दुर्गम एव यः । अभवत्सांप्रतं कामं प्रत्यक्षेण विभाति सः ॥ १ ॥ धैर्यमाधाय लज्जां च व्यपनीय विलासिनम् । संभावयसि किं नैनं दिष्ट्या स्वयमुपस्थितम् ॥ २ ॥ अपाङ्गसंसर्गि तरङ्गितं दृशोर्भ्रुवोररालान्त-

१ मध्यभागे. २ मन्दरः. ३ चिह्नम्. ४ मूर्खैः. ५ छायादीनाम्. ६ अत्यन्तसंनिहिते.

१ कलङ्कम्. २ अब्रुवन्. ३ स्फुटित. ४ घनम्. ५ गाढध्वान्तम्.

विकासि वेल्लनम्। विसारि रोमाञ्चितकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥ ३ ॥ कलय वलयं धम्मिल्लेऽस्मिन्निवेशय मल्लिकां रचय सिचयं मुक्ताहारं विभूषय सत्वरम्। मृगमदमषीपत्रालेपं कुरुष्व कपोलयोः सहचरि समायातः प्रातः स ते हृदयप्रियः ॥ ४ ॥

## नायकातिथ्यवर्णनम्

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां गेहिन्या परितोषबाष्पकलिलामासज्य दृष्टिं मुखे। दत्त्वा पीलुशमीकरीरकवलं लोलाञ्चलेनादरादुन्मृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः ॥ १ ॥ बाला चन्दनमालिकाकिसलयग्रन्थीनधःकुर्वतः श्रुत्वा वल्लभवाहनस्य रटितं दासेरकस्याङ्गने। आक्रन्दात्सुहृदो वनाद्गुरुजनं नासाग्रसङ्गाद्दसून्कान्तं स्त्रीवधपातकात्स्मरमसत्कीर्तेः परावर्तयत् ॥२॥ किंचित्कम्पितपाणिकङ्कणरवैः पृष्टं ननु स्वागतं व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले। द्वारस्थस्तनयुग्ममङ्गलघटे दत्तः प्रवेशो हृदि स्वामिन्किं न तवातिथेः समुचितं सख्यानयानुष्ठितम् ॥ ३ ॥ दीर्घा वन्दनमालिका विरचिता दृष्टचैव नेन्दीवरैः पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः। दत्तः स्वेदमुचा पयोधरभरेणार्घ्यो न कुम्भाम्भसा स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ४ ॥

## नायकस्य नायिकां प्रति प्रश्नः

कृशा केनासि त्वं प्रकृतिरियमङ्गस्य ननु मे मलाधूम्रा कस्माद्गुरुजनगृहे पाचकतया। स्मरस्यस्मान्कच्चिन्नहि नहि नहीत्येवमवदत्स्मरोत्कम्पं बाला मम हृदि निपत्य प्ररुदिता ॥ १ ॥ कृशासीत्यालीना मलिनवसनासीत्यवनता चिराद्दृष्टासीति स्तनकलशकम्पं प्ररुदिता। परिष्वक्ता यावत्प्रणयपदवीं कामपि गता ततः सारङ्गाक्ष्या हृदयसदने लीनमभवत् ॥ २ ॥ अङ्गानामतितानवं कुत इदं कस्मादकस्मादये मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति। तन्व्या सर्वमिदं स्वभावत इति व्याहृत्य पक्ष्मान्तरव्यापी बाष्पभरस्तया चलितया निःश्वस्य मुक्तोऽन्यतः ॥ ३ ॥

## प्रणयकलहे नायिकानुनयः

अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम्। कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥ १ ॥ किं त्वां भणामि विच्छेददारुणायासकारिणि। कामं कुरु वरारोहे देहि मे परिरम्भणम् ॥ २ ॥ मयि ते पादपतिते किंकरत्वमुपागते। प्रिये कामातुरः कोपं कान्ते कोऽन्योऽपनेष्यति ॥ ३ ॥ दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम्। तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ ४ ॥ मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये। वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत् ॥ ५ ॥ सोढुमलमस्मि नाहं सुन्दरि मन्दागमाद्विलम्बं ते। पञ्चशरास्त्रहतं मां संजीवय चारुगात्रि परिरम्भैः ॥ ६ ॥ सकृदिव समर्प्य बाले मम हस्ते मदनघर्मतप्तस्य। अपहरसे कुचकुम्भं तृषितकरादमृतकुम्भमिव ॥ ७ ॥ अपराधी नूनमहं प्रसीद रम्भोरु विरम संरम्भात्[१]। सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥ ८ ॥ त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते। स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम् ॥ ९ ॥ सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम्[२]। विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥ १० ॥ क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते नित्यम्। विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ ११ ॥ अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा। अयमीहितकुसुमानां संपादयिता तवास्ति दासजनः ॥ १२ ॥ मधुधारेव न मुञ्चसि मानिनि रूक्षापि माधुरीं सहजाम्। कृतमुखभङ्गापि रसं ददासि मम निम्नगा यथाम्भोधेः ॥१३॥ विराममेवानलयाऽतितोषात्तथापि रोषारुणितेव दृष्टिः। निशापतिः श्लिष्यति पश्चिमाशामये किमाशां विफलीकरोषि ॥ १४ ॥ यदि प्रिये वेत्सि तव प्रभुं मामनन्यसाधारणदासमङ्गचोः। तदद्य वक्षो मम पात्रमस्तु स्वयंग्रहाश्लेषमहोत्सवानाम् ॥१५॥ उत्तरङ्गय कुरङ्गलोचने लोचने कमलगर्वमोचने। अस्तु सुन्दरि कलिङ्गनन्दिनीवीचिडम्बरगभीरमम्बरम् ॥ १६ ॥ शशिमुखि तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पः। यदुदितभयभञ्जनाय यूनां त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ १७ ॥ त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः। कमपराधलवं मयि पश्यसि त्यजसि मानिनि दासजनं यतः ॥ १८ ॥ विसृज सुन्दरि संगमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे। परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ १९ ॥ मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो बाष्पबिन्दुरधरं परिबाधमानः। तं तावदाकुटिलपक्ष्मविलग्नमद्य कान्ते प्रमृज्य विगतानुशयो भवामि ॥ २० ॥ मुग्धे विधेहि मयि निर्दयदन्तदंशं दोर्वल्लिबन्धनिविडस्तनपीडनानि। चण्डि त्वमेव मुदमञ्चय पञ्चबाणचण्डालकाण्डदलनादसवः प्रयान्ति ॥२१॥ मा मा ससाध्वसमपेहि विलोलनेत्रे दासे जने किमिति संभ्रमकातरासि। किं युज्यते बत मया चिरकाङ्क्षितस्य मध्ये वराङ्गि परिरम्भसुखस्य भङ्गः ॥ २२ ॥ किं शीकरैः[३]

१ कृशत्वम्। २ एतन्नामकवृक्षः प्रसिद्धः।

१ कोपात्। २ कोपम्। ३ नद्यनुतापः।

क्लमविमर्दिभिरार्द्रवातं संचालयामि नलिनीदलतालवृन्तम् । अङ्के विधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु यथासुखं ते ॥ २३ ॥ आताम्रतामपनयामि विलक्ष एष लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना । कोपोपरागजनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥२४॥ इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन । अङ्गानि चम्पकदलैः स विधाय वेधाः कान्ते कथं घटितवानुपलेन चेतः ॥ २५ ॥ किं मुक्तमासनमलं मयि संभ्रमेण नोत्थातुमित्थमुचितं मम तन्तुमध्ये । दृष्टिप्रसादविधिमात्रहृतो जनोऽयमत्यादरेण किमिति क्रियते विलक्षः ॥२६॥ भुग्नालकं स्मितपराजितचन्द्रलेखं दृग्लीलया कुवलयश्रियमाददानम् । एतन्मुखं दिविषदामपि दुर्निरीक्ष्यं तन्वङ्गि मामिव सुधा किमधःकरोषि ॥ २७ ॥ लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना इव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥ २८ ॥ किं ते निसर्गरुचिरौ चरणौ कराभ्यां संवाहयामि नयने च तवाञ्जनेन । किं रञ्जयामि किमु ते स्तनयोर्विचित्रां पत्रावलीं विरचयाम्यचिरेण तन्वि ॥ २९ ॥ सुतनु जहिहि मौनं मुञ्च वाचो जडत्वं प्रणयिनि मयि कोपं किंकरे किं करोषि । अथ यदि तव चित्ते सापराधोऽस्मि बाले निजभुजयुगवल्लीबन्धनं मां विधेहि ॥ ३० ॥ किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि । कलयसि कलितोऽहं वल्लभे देहि वाचं भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ ३१ ॥ यदिदमगणयित्वा दुर्वहं श्रोणिभारं मदभिसरणलोभात्प्रस्थितं पद्मताम्रम् । अयमहमभिवाञ्छाम्यप्रमृज्यैव पांसुं सुमुखि पदतलं ते चूडितुं चुम्बितुं च ॥ ३२ ॥ वितरय कुचयोस्त्वद्दर्शनोपक्रमाणां मदनशररुजानां शान्तये मामकीनाम् । सकृदपि परिरम्भं सुभ्रु दोर्मूलकूलंकषघनपरिणाहस्त्यातयोरेतयोस्ते ॥ ३३ ॥ चरणकमलदासस्त्वेष संकल्पसङ्गे सुमुखि यदभिधत्से त्वं बलात्कारधूर्तम् । प्रसभविधृततर्षैः पीडयाम्यात्मनैव द्विरद इव सरोजं पाणिमापाटलं ते ॥ ३४ ॥ विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः परिजनपथवर्तिन्यत्र किं संभ्रमेण । स्मितमधुरमुदारं देवि मामालपोच्चैः प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥ ३५ ॥ परिलुठति ललाटे भङ्गुरा भ्रूलता किं मदनजयपताकाविभ्रमं बिभ्रतीयम् । स्फुरति च किमकाण्डे चण्डि बिम्बाधरोऽयं मृदुपवनविधूतोन्निद्रबन्धूकबन्धुः ॥ ३६ ॥ मुहुर्मुहुरवेक्षणं सरसमञ्जसा संस्तवः समुच्चलतरङ्गिणि प्रचुरनर्मभर्मस्पृहा । मुहुर्निबिडनम्रता परिजनव्यपेक्षापि नो कुतः सुमुखि शिक्षिता कथय कोपरीतिस्त्वया ॥ ३७ ॥ तरङ्गय दृशोऽङ्गने रचय वन्ध्यमिन्दीवरं क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमा । स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेततामुदञ्चय मुखं मनाग्भवतु लज्जितश्चन्द्रमाः ॥ ३८ ॥ उदञ्चय दृगञ्चलं चलतु चञ्चरीकोच्चयः प्रपञ्चय वचःसुधा श्रवणपालिमालिङ्गतु । भ्रुवं नटय नागरि त्यजतु मन्मथः कार्मुकं मुखं च कुरु संमुखं व्रजतु लाघवं चन्द्रमाः ॥ ३९ ॥ पुरोदिगनुरागिणी तदपि नानुरागोदयः कृशोदरि निशा कृशा तदपि ते न मानः कृशः । प्रसन्नमिदमम्बरं तदपि न प्रसन्नं मनो ननाद चरणायुधस्तदपि मौनमालम्बसे ॥ ४० ॥ कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् । न दृष्टेः शैथिल्यं मिलत इति चेतो दहति मे निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ ४१ ॥ गतप्राया रात्रिः कृशतनु शशी सीदत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव । प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ ४२ ॥ इदं दूर्वाकाण्डद्युतिमुषि कपोले कतिपयैः श्रमाम्भोभिः कीर्णं सहजबकुलामोदसुभगम् । समाकाङ्क्षे ताम्राधरमनुमनुष्व प्रियतमे मनोज्ञं ते पातुं मुखकमलमाघ्रातुमथवा ॥ ४३ ॥ प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ४४ ॥ प्रसीदेति ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः । न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥४५॥ कृतेऽप्याज्ञाभङ्गे कथमिव मया ते प्रणतयो धृताः स्मित्वा हस्ते विसृजसि रुषं सुभ्रु बहुशः । प्रकोपः कोऽप्यन्यः पुनरयमसीमाद्य गुणितो वृथा यत्र स्निग्धाः प्रियसहचरीणामपि गिरः ॥४६॥ कपोले पत्राली करतलनिरोधेन मृदिता निपीतो निःश्वासैरयममृतहृद्योऽधररसः । मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥४७॥ सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते किमपि मनसः संमोहो मे तदा बलवानभूत् । प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ ४८ ॥ परिहर कृतातङ्के शङ्कां त्वया सततं घनस्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि । विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं स्तनभरपरीरम्भारम्भे विधेहि

१ नीलोत्पलेन. २ पाषाणेन. तत्सदृशकठिनत्वात्. ३ अभिलाषः.

१ अत्यन्तकोपने. २ निराकुलितहृखम्. ३ मालाम्. ४ सर्पभ्रान्त्या.

विधेयताम् ॥ ४९ ॥ व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः । सुमुखि विमुखीभावं तावद्विमुञ्च न वञ्चय स्वयमतिशयस्निग्धो मुग्धे प्रियोऽहमुपस्थितः ॥ ५० ॥ कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् । किमिदमथवा सत्यं मुग्धे त्वया हि विनिश्चितं यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ ५१ ॥ पादासक्ते सुचिरमिह ते वामता कैव मुग्धे नर्मासक्ते प्रणयिनि जने कोऽपराधोपराधः । इत्थं तस्याः परिजनकथा कोमले कोपवेगे बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तम् ॥ ५२ ॥ कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां पीयूषद्रववदीर्घिकापरिमलैरामोदिनी मेदिनी । आस्तां वा स्पृहयालुलोचनमिदं व्यावर्तयन्ती मुहुर्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दानि वन्दामहे ॥ ५३ ॥ सूर्येऽस्ताचलमौलिमालिनि गृहे दीपावलीशालिनि प्राणस्वामिनि मानिनि प्रतिपदं सत्कारमातन्वति । यन्मानं न जहासि कोपकलनादालोहितस्तत्क्षणादिन्दुः सुन्दरि पूर्वपर्वतशिरःसीमानमारोहति ॥५४॥ सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाधुना प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते । आत्मद्रोहिणि दुर्जनप्रलपितं कर्णे वृथा मा कृथाश्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवर्त्या यतः ॥ ५५ ॥ क्षीणांशुः शशलाञ्छनः सखि पुनः क्षीणो न मानस्तव स्मेरं[१] पद्मवनं मनागपि न ते स्मेरं[२] मुखाम्भोरुहम् । पीतं श्रोत्रयुगेन षट्पदरुतं[३] पीतं न ते जल्पितं रक्ता शक्रदिगङ्गना[४] रविकरैर्नाद्यापि रक्तासि किम् ॥ ५६ ॥ किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया निद्राच्छेदविवर्तनेष्वभिमुखी नाद्यापि संभाविता । अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ५७ ॥ चक्षुर्जाड्यमपैतु मानिनि मुखं संदर्शय श्रोत्रयोः पीयूषस्रुतिसौख्यमस्तु मधुरां वाचं प्रिये व्याहर । तापः शाम्यतु मे प्रसादशिशिरां दृष्टिं शनैः पातय त्यक्त्वा दीर्घमभूतपूर्वमचिराद्रोषं सखीदोषजम् ॥ ५८ ॥ कल्याणाङ्गरुचानुरक्तमनसा त्वं येन संप्रार्थ्यते यस्यार्थे सुमुखि त्वया पुनरसुत्यागेऽपि संनह्यते । सोऽयं सुन्दरि पञ्चबाणविशिखव्यालीढदोरन्तरस्वैरोत्पीडितपीवरस्तनतटस्त्वद्दोर्लतापञ्जरे ॥ ५९ ॥ शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ । इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मामङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ६० ॥ स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि द्युतिर्माधुर्यापि सती स्खलत्यनुपदं ते गद्गदा वागियम् । निःश्वासा नियता अपि स्तनभरोत्कम्पेन संलक्षिताः कोपस्ते प्रकटं प्रयत्नविधृतोऽप्येष स्फुटं लक्ष्यते ॥ ६१ ॥ भ्रूभङ्गैः क्रियते ललाटशशिनः कस्मात्कलङ्को मुधा वाताकम्पितबन्धुपुष्पसमतां नीतोऽधरः किं स्फुरन् । मध्यश्वाधिककम्पितस्तनभरेणायं पुनः खिद्यते कोपं मुञ्च तवैव चित्तहरणायैतन्मया क्रीडितम् ॥ ६२ ॥ भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे केवलं नातिप्रस्फुरिताधरानवरतं निःश्वासमेवोज्झसि । वाचं नापि ददासि तिष्ठसि परं प्रध्यातनम्रानना कोपस्ते स्तिमितोऽतिपीडयति मां गूढप्रहारोपमः ॥ ६३ ॥ धृष्टः किं पुरतोऽवरुध्य विहसन्गृह्णामि कण्ठे प्रियां किं वा चाटुशतप्रचण्डरचनाप्रीतां करिष्यामि ताम् । किं तिष्ठामि कृताञ्जलिर्निपतितस्तस्याः पुरः पादयोः सत्यं सत्यमहो न वेद्म्यनुनयस्तस्याः कथं स्यादिति ॥ ६४ ॥ सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः । रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना सद्यस्त्वद्विरहे भवन्ति सुभगे सर्वा ममान्धा दिशः ॥ ६५ ॥ व्यावृत्तं खलु सर्वतो विषयतस्त्वय्येव लीनं मनो नित्यं च त्वदधीनमेव नियतं मज्जीवितं मानिनि । मत्वैवं मयि नूनमन्यविषया शङ्का त्वया त्यज्यतां किं वान्यत्र निशाकरोऽभिरमते मुक्त्वा क्षणं कौमुदीम् ॥ ६६ ॥ यद्रम्यं गुरुगौरवस्य सुहृदो यस्मिँल्लभन्तेऽन्तरं यद्दाक्षिण्यवशात्प्रसह्य सहते नर्मोपचारानपि । यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्यय[२]स्तत्किं प्रेम स उच्यते परिचयस्तत्रापि कोपेन किम् ॥ ६७ ॥ मुग्धे मानिनि कोपरीतिरियती युक्ता न तथ्यं त्विदं कान्ते किं त्वदुपेक्षिता मम तनुः शोभेत नेहाद्भुतम् । अन्यायो भवति च्छलस्य करणे दक्षे जनेऽन्यादृशं काहेति प्रतिरुद्धवागकरवं वाक्स्तम्भनं चुम्बनैः ॥ ६८ ॥ मानं मानिनि मुञ्च देवि दयिते मिथ्या वचः श्रूयते किं कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते । दोर्भ्यां बन्धनमाशु दन्तदलनं पीनस्तनास्फालनं दोषश्चेन्मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु ॥ ६९ ॥ सुभ्रु त्वं नवनीतकल्पहृदया केनापि दुर्मन्त्रिणा मिथ्यैव प्रियकारिणा मधुमुखेनास्मासु चण्डीकृता । किं त्वेतद्विमृश क्षणं प्रणयिनामेणाक्षि कस्ते हितः किं धात्रीतनया वयं किमु सखी किं वा किमस्मत्सुहृत् ॥ ७० ॥

---

## सख्यनुनयः

मुग्धे मानं न ते कर्तुं युक्तं प्राणाधिके प्रिये । धत्ते मत्स्यी कियत्कालं जीवितं जीवनं[३] विना ॥ १ ॥ कुपितासि यदा तन्वि निधाय करजक्षतम् । बधान भुजपाशाभ्यां

१ प्रियाः· २ विकसितम्· ३ भ्रमरशब्दः· ४ प्राची·

१ दृढः· २ विश्वासः· ३ जलम्·

कण्ठमस्य दृढं तदा ॥ २ ॥ खेरराजीवनयने नयने किं निमीलिते । पश्य निर्जितकंदर्पं कंदर्पवशगं प्रियम् ॥ ३ ॥ रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना । वदामि सखि ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥ ४ ॥ यदि कुप्यसि नास्ति रतिः कोपेन विनाऽथवा कुतः कामः । कुप्य च कोपय च त्वं प्रसीद च त्वं प्रसादय च कान्तम् ॥ ५ ॥ अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम् । मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥ ६ ॥ अञ्चति रजनिरुदञ्चति तिमिरमिदं चञ्चति मनोभूः । उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥ ७ ॥ वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः । धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥ ८ ॥ जहीहि कोपं दयितोऽनुगम्यतां पुरोऽनुशेते तव चञ्चलं मनः । इति प्रियं कांचिदुपैतुमिच्छतीं पुरानुनिन्ये निपुणः सखीजनः ॥ ९ ॥ सभयचकितं विन्यस्यन्तीं दृशं तिमिरे पथि प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् । कथमपि रहःप्राप्तामङ्गैरनङ्गतरङ्गिभिः सुमुखि सुभगः स त्वां पश्यन्नुपैतु कृतार्थताम् ॥ १० ॥ चपलहृदये किं स्वातन्त्र्यात्स्वयं गृहमागतश्चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः । तदिदमधुना यावज्जीवं निरस्तसुखोदया रुदितशरणा दुर्जातानां सहस्व रुषां फलम् ॥ ११ ॥ लिखन्नास्ते भूमिं बहिरवनतः[1] प्राणदयितो निराहाराः[2] सख्यः संततरुदितोच्छूननयनाः[3] । परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने[4] मानमधुना ॥ १२ ॥ असद्वृत्तो नायं न च खलु गुणैरेष रहितः प्रियो मुक्ताहारस्तव[5] चरणमूले निपतितः । गृहाणैनं मुग्धे व्रजतु निजकण्ठप्रणयितामुपायो नास्त्यन्यस्तव हृदयसंतापशमने[6] ॥१३॥ अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृदस्त्वयाकाण्डे[7] मानः किमिति सरले संप्रति कृतः । समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ १४ ॥ अयेऽस्तमयते शशी नहि कृशीभवत्याग्रहो विनश्यति तमो दृढं किमणुमर्प्यपास्ते[8] मनः । सखि प्रकटितोऽरुणो न करुणोदयस्ते मनाक्प्रयाति खलु यामिनी न विमनीकृथा नायकम् ॥ १५ ॥ आयातः कुसुदेश्वरो विजयते सर्वेश्वरो मारुतो भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति । एते सिद्धरसाः प्रसूनविशिखो वैद्योऽनवद्योत्सवो मानव्याधिरयं कृशोदरि कथं त्वच्चेतसि स्थास्यति ॥ १६ ॥ मानं मानिनि मुञ्च मानसभुवः साम्राज्यमुज्जृम्भतां हा हा गच्छति यामिनी न समयो यातः पुनः प्राप्यते । अत्यल्पागसि कल्पिताधिकमये कान्ते पदान्तानते कोऽयं कोकिलवाणि केलिसमये कोपस्त्वयालम्बितः ॥ १७ ॥ स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये । तन्मुग्धे विपरीतकारिणि तव श्रीखण्डचर्चा विषं शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ १८ ॥ त्वां चित्तेन चिरं वहन्नयमतिश्रान्तो भृशं तापितः कन्दर्पेण च पातुमिच्छति सुधासंवादि बिम्बाधरम् । अस्याङ्कं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीलवक्रीते दासजनेऽपि सेवितपदाम्भोजे कुतः संभ्रमः ॥ १९ ॥ मुग्धे किं नखरैः क्षिपस्यविरतं नेत्राम्बु मानोन्नते पश्यैनं चरणाग्रनम्रशिरसं स्वं कान्तमात्ताञ्जलिम् । अप्रह्वे तव चेतसि प्रणयिनि प्राप्तेऽतिनिर्विण्णतामन्यासक्तमनस्युपेक्षितगता फूत्कृत्य रोदिष्यति ॥२०॥ मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व धृतिं बधान ऋजुतां[2] दूरीकुरु प्रेयसि । सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना नीचैः शंस[3] हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥२१॥ अङ्गुल्यग्रनखेन बाष्पसलिलं निक्षिप्य निक्षिप्य किं तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यसि । यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति[4] ॥ २२ ॥ नो तल्पं[5] भजसे न जल्पसि सुधाधारानुकारा[6] गिरो दृक्पातं कुरुषे न वा परिजने कोपप्रकाशच्छलात् । इत्थं केतकगर्भगौरि[7] दयिते कोपस्य संगोपनं तत्स्याद्दैव न चेत्पुनः सहचरी कुर्वीत साचिस्मितम् ॥ २३ ॥

---

## कलहान्तरिताप्रलापाख्यानम्

उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा । अधुना निष्ठुरमपि यदि स वदति कलिकैतवाद्यामि ॥ १ ॥ प्रयाहि तत्रैव ययानुरज्यसे किमत्र निस्त्रिंश[8] तव प्रयोजनम् । न कञ्चुकग्रन्थिमपाकुरुष्व मे कथं हृदि ग्रन्थिमपाकरिष्यसि ॥ २ ॥ अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपल्लवावरोधम् । कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदग्धाः ॥ ३ ॥ स्फुरसि बाहुलते किमनर्थकं त्वमपि लोचनभावमहो गता । तमहमागतमप्यपराधिनं न परिरब्धुमलं न च वीक्षितुम् ॥४॥ मानोन्नतेत्यसहनेत्यतिपण्डितेति मय्येव धिक्कृतिरनेकमुखी सखीनाम् । दाक्षिण्यमात्रमसृणेन विचेष्टितेन धूर्तस्य तस्य हि गुणानुपवर्णयन्ति ॥५॥ नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना

---

१ नम्रः. २ उपवासशीलः. ३ संततरोदनेन शोथयुक्तानि नयनानि यासाम्. ४ पाषाणहृदये. ५ मौक्तिकानां हारः; पक्षे,—मुक्तस्त्यक्त आहारोऽशनं येन. प्रियेणेत्यर्थः. ६ हृदयदाहशान्त्यै. ७ अनवसरे. ८ नाशयति.

१ क्रोधः. २ सरलत्वम्. ३ कथय. ४ उदासीनताम्. ५ शय्याम्. ६ अमृतधारातुल्याः. ७ केतकीगर्भवच्छ्वेताङ्गि. ८ निर्दय.

दलिकुलनूपुरा निरासे नलिनवनेषु पदं वसन्तलक्ष्मीः ॥७६॥ विकसितकुसुमाधरं हसन्तीं कुरबकराजिवधूं विलोकयन्तम् । ददृशुरिव सुराङ्गना निषण्णं सशरमनङ्गमशोकपल्लवेषु ॥ ७७ ॥ मुहुरनुपतता विधूयमानं विरचितसंहति दक्षिणानिलेन । अलिकुलमलकाकृतिं प्रपेदे नलिनमुखान्तविसर्पि पङ्कजिन्याः ॥ ७८ ॥ श्वसनचलितपल्लवाधरोष्ठे नवनिहिते ऽर्थमिवावधूनयन्ती । मधुसुरभिणि षट्पदेन पुष्पे मुख इव शाललतावधूश्चुचुम्बे ॥ ७९ ॥ उत्सृष्टमम्बुजदृशामिव मानरत्नमादाय षट्पदतिलान्मधुवारिपूरान् । पुंस्कोकिलस्य कलकूजितकैतवेन संकल्पवाक्यमयमातनुते रसालः ॥ ८० ॥ उत्फुल्लपङ्कजनिषक्तलसद्द्विरेफः किंचिद्विनिद्रकुमुदोत्करसंभृतश्रीः । आमूलनद्धविविधाद्भुतमाल्यमालश्चित्रं न कस्य तनुते ललितस्तमालः ॥ ८१ ॥ धुन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि । निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि ॥ ८२ ॥ कुपितापि मनःपतिना सह का सहकारविलोकनजातरसा । तरसा रमते स्म न हा रमणी रमणीयतनुः सुतनुः सुरभौ ॥ ८३ ॥ स्थलकमलतरूणां कामिनीलोचनेषु क्षिपति मुकुलमुष्ट्या धूलिजालं विशालम् । तदनु हरति हन्त स्वान्तसर्वस्वमासामयमनयविदग्धो धूर्तवन्मीनकेतुः ॥ ८४ ॥ पथि पथि शुकचञ्चूचारुराभाङ्कुराणां दिशि दिशि पवमानो वीरुधां लासकश्च । नरि नरि किरति द्राक्सायकान्पुष्पधन्वा पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥ ८५ ॥ इह मधुपवधूनां पीतमल्लीमधूनां विलसति कमनीयः काकलीसंप्रदायः । इह नटति सलीलं मञ्जरी वञ्जुलस्य प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥ ८६ ॥ विकसति सहकारे स्फारसौरभ्यसारे वहति धुतपटीरे मन्दमन्दं समीरे । कलयति कलवाचं कोकिलोकोऽपि रुष्टः क्षणमपि न मृगाक्ष्या वल्लभो दुर्लभोऽभूत् ॥ ८७ ॥ इह हि नववसन्ते मञ्जरीरेणुपुञ्जच्छुरणधवलदेहा बद्धहेलं सरन्ति । तरलमलिसमूहा हारिहुंकारिकण्ठा बहलपरिमलालीसुन्दरं सिन्दुवारम् ॥ ८८ ॥ स्थाने स्थाने मलयमरुतः पूरयन्त्यङ्कपालीं पुष्पालीषु स्मरगजरजःस्नानयोग्याः परागाः । जातं चूते मधु मधुकरप्रेयसीजानुदघ्नं निर्विघ्नत्वं सपदि भवते रागराज्याभिषेकः ॥ ८९ ॥ प्रसूनकलिकाकुलैः किसलयैः करस्पर्धिभिः स्फुरन्मधुमदभ्रमद्भ्रमरकोकिलाकूजितैः । इति क्रमसमुद्गतैरुपवनावलीमण्डलीममण्डयदिव प्रियामृतुवसुंधरावल्लभः ॥ ९० ॥ विलासिभिरिवोन्मदै रचितरम्यगुञ्जारवैः प्रसूनसुरभीकृतैर्विगलितत्रपास्तापसाः । अशोकशिखरस्थितैः सुनयनाम्वितैः षट्पदैर्निरन्तरनिषेवितामितमधौ मधौ रेमिरे ॥ ९१ ॥ मन्दोऽयं मलयानिलः किसलयं चूतद्रुमाणां नवं माद्यत्कोकिलकूजितं विचकिलामोदः पुराणं मधु । बाणानित्युपदीकरोति सुरभिः पञ्चैव पञ्चेषवे यूनामिन्द्रियपञ्चकस्य युगपत्संमोहसंपादिनः ॥ ९२ ॥ उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः । भ्राम्यन्तो मलयानिलाहतिचलैः शाखासहस्रैर्मुहुर्भान्ति प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥९३॥ चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया । कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ९४ ॥ पुष्पाणि प्रथमं ततः प्रकटिताः स्वान्तोत्सवाः पल्लवाः पश्चादुन्मदकोकिलालिललनाकोलाहलः कोमलः । इत्थं प्रादुरभूदुपेत्य परितः प्राज्यप्रमोदप्रदः प्रोद्दामद्रुमराजिराजितवनक्षोणीमृतुक्ष्मापतिः ॥ ९५ ॥ स्तोत्रं चैत्रगुणोदयस्य विरहिप्राणप्रयाणानकष्टंकारः स्मरकार्मुकस्य सुदृशां शृङ्गारशिक्षागुरुः । दोलाकेलिकलासु मङ्गलपदं बन्दी वनान्तश्रियां नादोऽयं कलकण्ठकण्ठकुहरप्रेङ्खोलितः श्रूयते ॥ ९६ ॥ माकन्दच्युतपुष्परेणुपटलीकूलालवालोदरे मन्दस्यन्दिमरन्दपूरभरिते वातोत्थपुष्पप्लवैः । खेलन्तो ललितं मधोर्गुणगणान्गायन्ति पुष्पंधयाः कान्तानामधरे धयन्ति मधुरं सक्तं मधूलीरसम् ॥ ९७ ॥ आरूढो मलयानिलद्विपवरं युक्तो विलासानुगैः पीतः पुष्पविलोचनैर्नवलतापौराङ्गनानां गणैः । अभ्राम्यद्वनपत्तने मधुमहीपालस्ततः कोकिलालीलालापमिलद्भ्रमद्भ्रमरिकाभाङ्कारभेरीरवैः ॥ ९८ ॥ वारस्त्रीव वनस्थली नवनवां शोभां बभारान्वहं पान्थान्पीडयति स्म तस्कर इव क्रूरैः शरैर्मन्मथः । शृङ्गारः सगुणः क्षमापतिरिव प्राप्तः प्रतिष्ठां परां रात्रिः स्वीकुरुते स्म मुग्धललनालज्जेव कार्श्यं क्रमात् ॥ ९९ ॥ साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैर्बाह्लीकीदशनव्रणारुणतरैः पत्रैरशोकश्रितः । भृङ्गालङ्कितकोटि किंशुकमिदं किंचिद्विवृन्तायते माञ्जिष्ठस्तबकैश्च पाटलितरोरन्यैव कांचिल्लिपिः ॥ १०० ॥ गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः । किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ १०१ ॥

## मदनपूजा

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् । आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ १०२ ॥

१ अतिप्रियेण. २ मृदुगुञ्जितं. ३ आम्रवृक्षे.

१ प्रवालम्. २ पल्लवैः. ३ आन्दोलितः. ४ आम्रः. ५ समूहः. ६ भ्रमराः. ७ पिबन्ति. ८ मकरन्दम्. ९ मदनाख्यतरुकुसुमम्. १० रचना. ११ लतानाम्.

### कुसुमावचयः

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि । नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥ १०३ ॥ असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति । एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥ १०४ ॥ अताडयत्पल्लवपाणिनैकं पुष्पोच्चये राजवधूरशोकम् । तच्छेदहेतोरलिपङ्क्तिभङ्ग्या विक्रन्तिता बाललता स्मरेण ॥ १०५ ॥ अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः । नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥ १०६ ॥ उच्चित्य प्रथममवस्थितं मृगाक्षी पुष्पौघं श्रितविटपं ग्रहीतुकामा । आरोढुं पदमदधादशोकयष्टावामूलं पुनरपि तेन पुष्पिता सा ॥ १०७ ॥ मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि । तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या ॥ १०८ ॥ व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः । यदधयदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥ १०९ ॥ विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः । रमणमृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥ ११० ॥ सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयान्या । सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥ १११ ॥ मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य । उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या ॥ ११२ ॥ उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुपोऽन्यः । प्रथितपृथुपयोधरां गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥ ११३ ॥ इदमिदमिति भूरुहां प्रसूनैर्मुहुरतिलोभयता पुरः पुरोऽन्या । अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः ॥ ११४ ॥ विजनमिति बलादमुं गृहीत्वा क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या । अभिपतितुमना लघुत्वभीतेरभवदमुष्मिन्वति वल्लभेऽतिगुर्वी ॥ ११५ ॥ पूर्वं द्विरेफपरिभूतिभयाद्भवत्या यत्केशपुष्पभरणं हरिणाक्षि मुक्तम् । व्यर्थं तदद्य पुनरप्यलकेषु भृङ्गाः पुञ्जीभवन्निजकुलभ्रमतः पतन्ति ॥ ११६ ॥ सन्तु द्रुमाः किसलयोत्तरपुष्पभाराः प्राप्ते वसन्तसमये कथमित्थमेव । न्यासैर्नवद्युतिमतोः पदयोस्त्वयेयं भूः पुष्पिता सुतनु पल्लवितेव भाति ॥ ११७ ॥ अनुभवत युवत्यो भाग्यवत्यो नितान्तं कुसुमवलयवेलासङ्गखेलासुखानि । मम तु मधुकराणां वाटपाटच्चराणां सपदि पतति धाटी पुष्पवाटीनिवेशे ॥ ११८ ॥ पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोर्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे । लीयन्ते कबरीभरे निजकुलव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ ११९ ॥

### वसन्तवायवः

यथायथं ताः सहिता नभश्चरैः प्रभाभिरुद्भासितशैलवीरुधः । वनं विशन्त्यो वनजायतेक्षणा क्षणद्युतीनां दधुरेकरूपताम् ॥ १२० ॥ विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननानिलेन । तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ १२१ ॥ स्फुटमिदमभिचारमन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम् । वरतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥ १२२ ॥ विपुलकमपि यौवनोद्धतानां घनपुलकोदयकोमलं चकाशे । परिमलितमपि प्रियैः प्रकामं कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ १२३ ॥ हिमलवसदृशः श्रमोदबिन्दूनपनयता किल नूतनोढवध्वाः । कुचकलशकिशोरकौ कथंचित्तरलतया तरुणेन पस्पृशाते ॥ १२४ ॥ समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः । व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥ १२५ ॥ अतिमन्दचन्दनमहीधरवातं स्तवकाभिरामलतिकातरुजातम् । अपि तापसानुपवनं मदनार्तान्मदमञ्जुगुञ्जदलिपुञ्जमकार्षीत् ॥ १२६ ॥ उपवनतरुनृत्याध्यापने लब्धवर्णो विरचितजलकेलिः पद्मिनीकामिनीभिः । प्रियसुहृदसमेषोरायथौ योगियोगस्थितिविदलवदक्षो दक्षिणो गन्धवाहः ॥ १२७ ॥ आलिङ्गन्ते मलयजतरूनास्वजन्ते[1] वनान्तानापृच्छन्ते चिरपरिचितान्मालयान्निर्झरौघान् । अद्य स्थित्वा द्रविडमहिलाभ्यन्तरे श्वः प्रभाते प्रस्थातारो मलयमरुतः कुर्वते संनिधानम् ॥ १२८ ॥ लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन् समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् । मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥ १२९ ॥ मलयशिखरादाकैलासं मनोभवशासनाद्भुवनवलयं जेतुं वाञ्छन्वसन्तसमीरणः । विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं मनसि विमृशन्भीतः शङ्के प्रयाति शनैः शनैः ॥ १३० ॥ पथि पथि लतालोलाक्षीभिः स्रवन्मधुसीकरं कुसुमनिकरं वर्षन्तीभिः सहर्षमिवार्चितः । मधुकरवधूगीतासक्तः कुरङ्गकमास्थितः प्रसरति वने मन्दं मन्दं वसन्तसमीरणः ॥ १३१ ॥ उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे नटन्तः कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः । अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्लीचलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः[2] ॥ १३२ ॥ हेमाम्भोरुहपत्तने परिमलस्तेयी वसन्तानिलस्तत्रत्यैरिव यामिकैर्मधुकैरारब्धकोलाहलः । निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्ड-

१ मलयसंबन्धिनः. २ मेघविस्फूर्जितावृत्तम्.

पङ्कद्रवैर्लिप्ते केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥ १३३ ॥ प्राप्तः प्राज्यमिव श्रमं जलजिनीसौरभ्यभारं वहन्नुद्दामस्तबकानमन्नवलतालक्ष्मीमिवालोकयन् । स्वीकुर्वन्मदमन्थरानिव गतेर्वामभ्रुवां विभ्रमान्मन्दं मन्दमुपाजगाम पवनः पाटीरवाटीतटात् ॥ १३४॥ पानीयं नारिकेलीफलकुहरकुहूत्कारि कल्लोलयन्तः कावेरीतीरतालद्रुमभरितसुराभाण्डभाङ्कारचण्डाः । एते तन्वन्ति वेलावनललितलताताण्डवं द्राविडस्त्रीकर्पूरापाण्डुगण्डस्थललुठितरया वायवो दाक्षिणात्याः ॥ १३५ ॥ कावेरीतीरभूमीरुहभुजगवधूमुक्तमुक्तावशिष्टः कर्णाटीचीनपीनस्तनवसनदशान्दोलनस्पन्दमन्दः । लोलल्लाटीललाटालकललितलतालास्यलीलाविलोलः कष्टं भो दाक्षिणात्यः प्रसरति पवनः पान्थकान्ताकृतान्तः ॥ १३६ ॥ ये दोलाकेलिकाराः किमपि मृगदृशां मानतन्तुच्छिदो ये सद्यः शृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेऽपि । ते कण्ठे लोठयन्तः परभृतवयसां पञ्चमं रागराजं वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः ॥ १३७ ॥

### वसन्तपथिकाः

वक्रेण शिरसि पतता नित्यं रुधिरारुणेन दुर्वारः । मत्तद्विप इव पथिकः किंशुककुसुमाङ्कुशेन भृतः ॥ १३८ ॥ समवलोक्य विलासवनस्थलीं न पथिकैः पथि कैः पतितं भुवि । मलयजद्रुमसौरभमेदुरोदरसमीरसमीरितवल्लरीम् ॥ १३९ ॥ वसन्तप्रारम्भे चिरविरहखिन्ना सहचरी यदि प्राणान्मुञ्चेत्तदिह वधभागी भवति कः । वयो वा स्नेहो वा कुसुमविशिखो वेति विमृशंस्तुंहीति प्रव्यक्तं पिकनिकरझाङ्कारमशृणोत् ॥ १४० ॥ रे पान्थाः स्वगृहाणि गच्छत सुखं सेवाक्षणो मुच्यतां मानं मानिनि मुञ्च वल्लभजने कोपानुबन्धेन किम् । आयातः कुसुमाकरः क्षपयति प्राणान्वियोगातुरेष्वित्येवं परपुष्टनादपटहो वक्तीव कामाज्ञया ॥ १४१ ॥ सा तन्वीति घनस्तनीति विकसन्नीलाब्जनेत्रेति च स्वैरं संचरतीति वक्ति मधुरां वाचं विचित्रामपि । इत्थं विद्रुमपाटलाधरपुटां सीमन्तिनीं ध्यायतो रोमाञ्चो रुदितं स्मितं प्रलपितं पान्थस्य संजायते ॥ १४२ ॥ अध्वन्यस्य वधूर्वियोगविधुरा भर्तुः स्मरन्ती यदि प्राणानुज्झति कस्य तत्खलु महत्संजायते पातकम् । यावन्नो कृतमध्वगेन हृदये तावत्तरोर्मूर्धनि प्रोद्घुष्टं परपुष्टया तव तवेत्युच्चैर्वचोऽनेकशः ॥१४३॥ उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः । नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ १४४ ॥ अध्वन्यैर्मकरन्दशीकरसुरामत्तक्वणत्कोकिले मार्गे मार्गनिरोधिनी परिहृता शङ्केऽशुभाशङ्कया । पान्थस्त्रीवधपातकादुपनतं चण्डालचिह्नं मषीरेखा खिङ्खिणिकेव षट्पदमयी भाङ्कारिणी संहतिः ॥ १४५ ॥ सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रुतिः किंचिन्नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः । आ ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥ १४६ ॥ एतस्मिन्दक्षिणाशानिलचलितलतालीनमत्तालिमालापक्षक्षोभावधूतच्युतबहलरजोह्लादिहृद्ये वसन्ते । प्रेमस्वेदार्द्रबाहुश्लथवलयलसत्प्रौढसीमन्तिनीनां मन्दः कण्ठग्रहोऽपि ग्लपयति हृदयं किं पुनर्विप्रयोगः ॥ १४७ ॥

---

## ग्रीष्मवर्णनम्

रेजे पुष्पैर्ग्रीष्ममासाद्य मल्ली मल्लीं सद्यः संश्रयन्ते स्म भृङ्गाः । भृङ्गैस्तत्रारम्भि हर्षेण गानं गाने लौल्यं लेभिरे योगिनोऽपि ॥ १ ॥ अत्युल्लसद्बिसरहस्ययुजा भुजेन वक्त्रेण शारदसुधांशुसरोरुहेण । पीयूषपोषसुभगेन च भाषितेन त्वं चेत्प्रसीदसि मृगालि कुतो निदाघः ॥ २ ॥

### ग्रीष्मसमयस्वभावाख्यानम्

प्रतिगतमर्थिजनानां विच्छिन्नाशं समूहमवलोक्य । स्फुटितमपयस्तापादिव हृदयमलं तडागस्य ॥ ३ ॥ सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः । प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ४ ॥ देशे देशे जडिमकुरङ्गास्तेजोभल्लैर्दिनकरभिल्ले । धावं धावं प्रहरति राज्ञां धारागेहं शरणमवापुः ॥ ५ ॥ संजातपत्रप्रकरान्वितानि समुद्वहन्ति स्फुटपाटलत्वम् । विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः ॥ ६ ॥ प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसंचयः । दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये ॥ ७ ॥ दुःप्रेक्ष्यमुच्चैर्गगनं निदाघे कोपाकुलस्येव मुखं नृपस्य । हरेः शयानस्य मृणालबुद्ध्या कर्षन्ति पुच्छं करिणः करेण ॥ ८ ॥ प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणाम् । प्रौढिं गते संप्रति तिग्मभानौ शैत्यं शनैरन्तरपामयासीत् ॥ ९ ॥ रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजो रुचः । उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसंपदः ॥१०॥ दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि । मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥ ११ ॥

---

१ तुहीति हिन्दुस्थानीभाषया त्वमेवेत्यर्थः. २ वसंन्ततुः. ३ पान्थैः.

१ चण्डालवल्लकी. २ हिमान्येव कुरङ्गा मृगाः. ३ धावित्वा धावित्वा. ४ समूहाः. ५ वृक्षविशेषः; पक्षे,–पाटलवर्णानि. ६ भासुराणि; पक्षे,–विकासशालीनि. ७ आपुः. ८ हेमन्ते इत्यर्थः. ९ वसन्ते इत्यर्थः. १० ग्रीष्मे. ११ जलानाम्.

निदधिरे दयितोरसि तत्क्षणस्नपनवारितुषारभृतस्तनाः। सरसचन्दनरेणुरनुक्षणं विचकरे च करेण वरोरुभिः ॥ १२ ॥ कथमिव तव संमतिर्भवित्री सममृतुभिर्मुनिनावधीरितस्य। इति विरचितमल्लिकाविकासः स्मयत इव स्म मधुं निदाघकालः ॥ १३ ॥ बलवदपि बलं मिथोविरोधि प्रभवति नैव विपक्षनिर्जयाय। भुवनपरिभवी न यत्तदानीं तमृतुगणः क्षणमुन्मनीचकार ॥ १४ ॥ अपि शिशिरतरोपचारयोग्यं द्वितयमिदं युगपन्न सह्यमेव। जरठितरविदीधितिश्च कालो दयितजनेन समं च विप्रयोगः ॥ १५ ॥ तप्ता मही विरहिणामिव चित्तवृत्तिस्तृष्णाध्वगेषु कृपणेष्विव वृद्धिमेति। सूर्यःकरैर्दहति दुर्वचनैः खलो नु छाया सतीव न विमुञ्चति पादमूलम् ॥ १६ ॥ छाया वियोगिवनितेव गता कृशत्वं तप्तं पयः पिशुनमानसवद्बभूव। केनाधुना बत मनागवलोकनीयः क्रुद्धोत्तमर्णमुखमण्डलवत्पतङ्गः ॥ १७ ॥ रिक्तेषु वारिकथया विपिनोदरेषु मध्याह्नजृम्भितमहातपतापतप्ताः। स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥ १८ ॥ मुखकृतबिसखण्डश्चण्डमार्तण्डतापात्सितजलजतलस्थो राजते राजहंसः। रजतघट इवायं विद्रुमाबद्धधाराविवरविगलदम्बुः कम्बुकण्ठि प्रतीहि ॥ १९ ॥ रजनिचरमयामेष्वादिशन्ती रतेच्छां किमपि कठिनयन्ती नालिकेरीफलाम्भः। अपि परिणमयित्री राजरम्भाफलानां दिनपरिणतिभोग्या वर्तते ग्रीष्मलक्ष्मीः ॥ २० ॥ निजां कायच्छायां श्रयति महिषः कर्दमधिया च्युतं गुञ्जापुञ्जं रुधिरमिति काकः कलयति। समुत्सर्पन्सर्पः सुषिरविवरं तापविवशः सचीत्काराधूतं प्रविशति करं कुञ्जरपतेः ॥२१॥ तदास्वस्नातानां दरदलितमल्लीमुकुलिताः स्रजो बिभ्राणानां मलयजरसार्द्रार्द्रवपुषाम्। निदाघाग्निप्लोषग्लपितमभिसार्यं मृगदृशां परिष्वङ्गोऽनङ्गं पुनरपि शनैरङ्कुरयति ॥ २२ ॥ जलार्द्राः शष्पाणां बिसकिसलयैः केलिवलयाः शिरीषैरुत्तंसा विचकिलमयी हाररचना। शुचावेणाक्षीणां मलयजरसार्द्राश्च तनवो विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥ २३ ॥ हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो यदर्दति कैरम्बिता शिशिरवायुना वारुणी। भवन्ति च हिमोपमाः स्तनभवो यदेणीदृशो रुचेरुपरि संस्थितो रतिपतेः प्रसादो गुरुः ॥ २४ ॥ मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च। शैरीषी कुसुमोन्नतिः परिणमन्मोचश्च सोऽयं गणो ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥ २५ ॥ अङ्गारैः खचितेव भूर्वियदपि ज्वालाकरालं करैस्तिग्मांशोः किरतीव तीव्रमभितो वायुः कुकूलानलम्। अप्यम्भांसि नखंपचानि सरितामाशा ज्वलन्तीव च ग्रीष्मेऽस्मिन्नवविह्निदीपितमिवाशेषं जगद्वर्तते ॥ २६ ॥ पाश्चात्यैर्मरुमारुतैस्त्रिजगतामुन्मूलयन्नार्द्रतां दावाग्निर्ज्वलितैरपारगहनान्यप्यानयन्भस्मताम्। वात्याभिस्तृणपत्त्रधूलिनिकरान्धुन्वन्विहायःस्थले ग्रीष्मः शुष्यद्पुच्छपल्वलल्लुठन्मत्स्यः समभ्यागतः ॥ २७ ॥ अत्यच्छं सितमंशुकं शुचि मधु स्वामोदमच्छं रजः कार्पूरं विधृतार्द्रचन्दनकुचद्वन्द्वाः कुरङ्गीदृशः। धारावेश्म सपाटलं विचकिलस्रग्दाम चन्द्रत्विषो धातः सृष्टिरियं वृथैव तव न ग्रीष्मोऽभविष्यद्यदि ॥ २८ ॥ माकन्दद्रुममञ्जरीषु वसतिस्तत्पल्लवैर्वर्तनं सा नो मञ्जुलता वचःसु मधुना सर्वं सह प्रस्थितम्। एतत्तिष्ठतु दुःश्रवं मृदुहृदां निःस्वामिनस्तत्सखे प्रोन्मीलत्करुणो द्विजोऽयमिति हि त्वं ग्रीष्म मुष्णाहि नः ॥२९॥ कानि स्थानानि दग्धान्यतिशयगहनाः सन्ति के वा प्रदेशाः किं वा शेषं वनस्य स्थितमिति पवनासङ्गविस्पष्टतेजाः। चण्डज्वालावलीढस्फुटिततनुलताग्रन्थिमुक्ताट्टहासो दावाग्निः। शुष्कवृक्षे शिखरिणि गहनेऽधिष्ठितः पश्यतीव ॥ ३० ॥ बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां किं त्वं पक्ष्मान्तवान्तैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः। एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलानां दावाग्नेः संप्रवृद्धा मलिनयति दिशां मण्डलं धूमलेखा ॥३१॥ स्फीतं शीतं गतं क्व क्व शिशिरकिरणः क्वास्ति हेमन्तमासः क्वैते पानीयपूर्णा मलिनजलधराः क्वाद्य विद्युत्प्रमोदः। इत्युच्चैर्जल्पमानैरिव मुखरमुखैर्मिल्लिदूतैरुपेतो वातौघश्चागतोऽसौ प्रकटितविजयस्तम्भचिह्नैर्निदाघः ॥ ३२ ॥

## मध्याह्नः

एष सूर्यांशुसंतप्तो मृगः कुतरुमाश्रितः। साधुर्भाग्यपरिक्षीणो नीचं प्राप्येव सीदति ॥ ३३ ॥ मध्याह्ने नूनमापोऽपि तिग्मतापोपशान्तये। दधुः कमलिनीपत्त्रमानपत्त्रमिवोपरि ॥ ३४ ॥ दुःसहसंतापभयात्संप्रति मध्यस्थिते दिवसनाथे। छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥ ३५ ॥ रवेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांसुभिः। अवाक्फणो जिह्मगतिः श्वसन्मुहुः फणी मयूरस्य तले निषीदति ॥३६॥ अस्मद्रिपूणामनिलाशनानां दत्तो निवासः खलु चन्दनेन। इतीव रोषाद्यजनस्य वायुर्व्यशोषयच्चन्दनमङ्गसंस्थम् ॥३७॥ स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया। अतनुमानपरिग्रहया स्थितं रुचिरया चिरयायिदिनश्रिया ॥३८॥ तरुणतरणितेजःपुञ्जसंतप्तदेहः पतति जरठखड्गः पल्वले पङ्कलेहः। हरिरपि सलिलार्थी शङ्कया तस्य नीरं न पिबति न च याति क्लिश्यति प्राप्य तीरम् ॥ ३९ ॥ किरति मिहिरे विष्वद्रीचः करानतिवामनी स्थलकमठवद्देहच्छाया जनस्य विचेष्टते। गजपतिमुखोद्गीर्णैराप्यैरथ त्रसरेणुभिः शिशिरम-

१ दुर्जनान्तःकरणवत्. २ संमिश्रिता.

धुरामेणाः कच्छस्थलीमधिशेरते ॥ ४० ॥ भानोः पादैर्दहनपरुषैर्दह्यमानान्तराणामुत्क्रामन्तः किल विटपिनां प्राणपिण्डा इवामी । गाढोदन्याकुलितमनसो भिन्नचञ्चूपुटान्ताः कोकूयन्ते विहगशिशवः कोटराणां मुखेषु ॥ ४१ ॥ वहद्बहलमारुतप्रसरदग्निखण्डैरिव स्फुरद्द्युमणिमण्डलद्युतिवितानकैस्तापिता । विसारि वपुरात्मनः सपदि वासरश्रीरियं चलन्मरुमरीचिकासिचयपल्लवेनाञ्चति ॥ ४२ ॥ विशन्तीनां स्नातुं जघनपरिवेषैर्मृगदृशां यदम्भः संप्राप्तं प्रमदवनवाप्यास्तटभुवम् । गभीरे तन्नाभीकुहरपरिणाहाध्वनि रसत्कुहुंकारस्फारं रचयति निनादं नयति च ॥४३॥ धत्ते पद्मलतादलेप्सुरुपरि स्वं कर्णतालं द्विपः शष्पस्तम्बरसान्नियच्छति शिखी मध्येशिखण्डं । शिरः मिथ्या लेढि मृणालकोटिरभसादंष्ट्राङ्कुरं शूकरो मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥ ४४ ॥ सर्पत्सारिणि वारिशीतलतले विन्यस्तपुष्पोत्करे नीरन्ध्रे कदलीवने गुरुदलच्छायाहृतार्कत्विषि । कर्पूरागरुपङ्कपिच्छिलघनोत्तुङ्गस्तनालिङ्गिभिः कान्ताकेलिरतैरहो सुकृतिभिर्मध्यंदिनं नीयते ॥ ४५ ॥ उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपलज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः । भौमोष्मप्लवमानसूर्यकिरणाः क्रूरप्रकाशा दृशामायुःकर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः ॥ ४६ ॥ मध्याह्ने हरितो हुताशनमुचः कामोऽपि वामभ्रुवां पाटीरद्रवचर्चितां स्तनतटीमासाद्य निद्रायते । एणाः केसरिणोऽपि केसरसटोपान्तश्रिताः शेरते छायामङ्गगतां न मुञ्चति तरुर्वोढा नवोढामिव ॥४७॥ मध्याह्ने चलतालवृन्तमनिलः सर्वात्मना सेवते वारि स्वेदमिषेण शीतलवधूवक्षोजमालम्बते । निद्रा नेत्रमुपैति पक्ष्मयुगलच्छायाश्रिता दैहिकी पान्थानामथ पादयोर्निपतति छायापि मा यान्त्विति ॥ ४८ ॥ काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपःपूर्णिकाः । दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुटाः ॥ ४९ ॥ स्वे स्वे कर्मणि संनियोज्य सुहृदो भूमीसुरान्मन्त्रिणश्चक्रं निर्भयमारचय्य भगवान्संप्राप्तरागोदयः । स्वालोकक्षणकांदिशीकमधुनोत्खातं विचिन्वन्निव ध्वान्तं क्वापि निलीनमम्बरमणिर्व्योमाग्रमारोहति ॥ ५० ॥ छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं मूलं याति सरो जलस्य जडता ग्लानेव मीनैः सह । आचामत्यहिमांशुदीधितिरपस्तृप्तेव लोकैः समं निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥५१॥ उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी निर्भिद्योपरिकर्णिकारकुसुमान्याशेरते षट्पदाः । तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते क्रीडावेश्मनिवेशिपञ्जरशुकः क्लान्तो जलं याचते ॥ ५२ ॥ स्कन्धान्सिन्धुरयूथगण्डकषणव्यासक्तदानोदकान्सेवन्ते मधुपा महीरुहशिरः पुष्पाणि हित्वा भृशम् । लीयन्ते वलभीकुलायकुहरे निस्पन्दमेते खगा जिह्वालीढवधूमुखो मृगगणश्छायासु विश्राम्यति ॥५३॥ उत्तप्तोऽयमुरंगमः शिखितलच्छायां समालम्बते वैरं साहजिकं विहाय च शिखी मूलं तरोर्गच्छति । याचन्ते च जलं निकुञ्जभवने तृष्णातुराः सारिकास्तप्ते वारिणि पङ्कजानि मधुपास्त्यक्त्वा श्रयन्ते लताः ॥ ५४ ॥ अङ्गं चन्दनपाण्डु पल्लवमृदुस्ताम्बूलताम्रोऽधरो धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने । अन्तः पुष्पसुगन्धिरार्द्रकबरी सर्वाङ्गलग्नाम्बरं रामाणां रमणीयतां विदधति ग्रीष्मापराह्णागमे ॥ ५५ ॥ पान्थानां प्रमदा इव प्रतिदिनं दैन्यं हृदिन्यो ययुर्दृश्यन्ते स्म दिगम्बरा इव वने पत्रोज्झिताः पादपाः । निःश्वासा इव दुःसहा विरहिणां वाता ववुः सर्वतः पायं पायमिव प्रियाधररसं पाथः पपुः प्राणिनः ॥ ५६ ॥ अस्वाध्यायः पिकानां मदनमखसमारम्भणस्याधिमासो निद्राया जन्मलग्नं किमपि मधुलिहां कोऽपि दुर्भिक्षकालः । विष्टिर्यात्रोत्सुकानां मलयजमरुतां पान्थकान्ताकृतान्तः प्रालेयोन्मूलमूलं समजनि समयः कश्चिदौत्पातिकोऽयम् ॥५७॥ पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि । बिन्दूत्क्षेपान्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ ५८ ॥

## जलकेलिः

निजप्रियमुखभ्रान्त्या हर्षेणाचुम्बदम्बुजम् । दष्टाधरा तु भृङ्गेण सीत्कारमकरोन्मृदु ॥ ५९ ॥ ललितसुरसा तरन्ती तरलतरङ्गौघचालितनितम्बा । विपरीतरतासक्ता किमदृश्यत सरसि या सख्या ॥ ६० ॥ एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्यः । गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात्प्लवन्ते ॥६१॥ अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् । पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलांश्छलयन्ति मीनान् ॥ ६२ ॥ आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्धिषु शीकरेषु । पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न च्छिदुरोऽपि हारः ॥ ६३ ॥ आवर्तशोभा नतनाभिकान्तेर्भङ्ग्यो भ्रुवां द्वन्द्वचराः स्तनानाम् । जातानि रूपावयवोपमानान्यदूरवर्तीनि विलासिनीनाम् ॥ ६४ ॥ तीरस्थलीबर्हिभि-

१ द्विजान्. २ भयद्रुतम्. ३ गुप्तम्. ४ सूर्यः. ५ पिबति. ६ उष्णाक्रान्तः.

१ मयूरः. २ भ्रमराः. ३ गजसमूहस्य. ४ लिप्तमदोदकान्. ५ भृङ्गाः. ६ नीडरन्ध्रे. ७ निश्चलम्. ८ वापी. ९ किरणैः. १० सूर्यः.

रुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् । श्रोत्रेषु संमूर्च्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६५ ॥ संदष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः । अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥ ६६ ॥ एताः करोत्पीडितवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः । वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान्वारिलवान्वहन्ति ॥ ६७ ॥ उद्बन्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः । मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ ६८ ॥ उन्मृष्टपत्राः कलितालकान्ताः कण्ठेषु लग्ना जघनं स्पृशन्तः । स्तनस्थलेष्वाहतिमादधाना गता वधूनां प्रियतां जलौघाः ॥ ६९ ॥ हृतोऽङ्गरागस्तिलकं विमृष्टं लब्धान्तरैरेभिरतीव मत्वा । सुसंहितेनेति तदा जलानामदायि मध्यं न कुचद्वयेन ॥ ७० ॥ निरीक्ष्य वेणीप्रतिबिम्बमेणीदृशो भुजंगभ्रममावहन्त्यः । पतद्दुकूलं धुतबाहुमूलं झम्पाप्रकम्पाकुलिताः प्रचेलुः ॥ ७१ ॥ अथ स्फुरन्मीनविधूतपङ्कजा विपङ्कतीरस्खलितोर्मिसंहतिः । पयोऽवगाढुं कलहंसनादिनी समाजुहावेव वधूः सुरापगा ॥ ७२ ॥ प्रशान्तघर्माभिभवः शनैर्विवान्विलासिनीभ्यः परिमृष्टपङ्कजः । ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥ ७३ ॥ गतैः सहावैः कलहंसविक्रमं कलत्रभारैः पुलिनं नितम्बिभिः । मुखैः सरोजानि च दीर्घलोचनैः सुरस्त्रियः साम्यगुणान्निरासिरे ॥ ७४ ॥ विभिन्नपर्यन्तगमीनपङ्क्तयः पुरो विगाढाः सखिभिर्मरुत्वतः । कथंचिदापः सुरसुन्दरीजनैः सभीतिभिस्तत्प्रथमं प्रपेदिरे ॥ ७५ ॥ विगाढमात्रे रमणीभिरम्भसि प्रयत्नसंवाहितपीवरोरुभिः । विभिद्यमाना विससार सारसानुदस्य तीरेषु तरङ्गसंहतिः ॥ ७६ ॥ शिलाघनैर्नाकसदासुरःस्थलैर्बृहन्निवेशैश्च वधूपयोधरैः । तटाभिनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥ ७७ ॥ विधूतकेशाः परिलोलितस्रजः सुराङ्गनानां प्रविलुप्तचन्दनाः । अतिप्रसङ्गाद्विहितागसो मुहुः प्रकम्पमीयुः सभया इवोर्मयः ॥ ७८ ॥ विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रममण्डनेन ये । हृतस्य शेषानिव कुङ्कुमस्य तान्विकत्थनीयान्दधुरन्यथा स्त्रियः ॥ ७९ ॥ प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने । स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ८० ॥ असंशयं न्यस्तमुपान्तरक्ततां यदेव रोद्धुं रमणीभिरञ्जनम् । हृतेऽपि तस्मिन्सलिलेन शुक्लतां निरास रागो नयनेषु न श्रियम् ॥ ८१ ॥ द्युतिं वहन्तो वनितावतंसका हृताः प्रलोभादिव वेगिभिर्जलैः । उपप्लुतास्तत्क्षणशोचनीयतां च्युताधिकाराः सचिवा इवाययुः ॥ ८२ ॥ विपन्नलेखा निरलक्तकाधरा निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् । निरीक्ष्य रामा बुबुधे नभश्चरैरलंकृतं तद्वपुषैव मण्डनम् ॥ ८३ ॥ तथा न पूर्वं कृतभूषणादरः प्रियानुरागेण विलासिनीजनः । यथा जलार्द्रो नखमण्डनश्रिया ददाह दृष्टीश्च विपक्षयोषिताम् ॥ ८४ ॥ शुभाननाः साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपङ्क्तिषु । नितान्तगौर्यो हृतकुङ्कुमेष्वलं न लेभिरे ताः परभागमूर्मिषु ॥ ८५ ॥ ह्रदाम्भसि व्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति । मुहुः स्तनैस्तालसमं समाददे मनोरमं नृत्यमिव प्रवेपितम् ॥ ८६ ॥ श्रिया हसद्भिः कमलानि सस्मितैरलंकृताम्बुः प्रतिमागतैर्मुखैः । कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥ ८७ ॥ परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः । उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥ ८८ ॥ भयादिवाश्लिष्य झषाहतेऽम्भसि प्रियं मुदानन्दयति स्म मानिनी । अकृत्रिमप्रेमरसाहितैर्मनो हरन्ति रामाः कृतकैरपीहितैः ॥ ८९ ॥ तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः । ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ९० ॥ करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसंभ्रमा । सखीषु निर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥ ९१ ॥ प्रियैः सलीलं करवारिवारितः प्रवृद्धनिःश्वासविकम्पितस्तनः । सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥ ९२ ॥ उदस्य धैर्यं दयितेन सादरं प्रसादितायाः करवारिवारितम् । मुखं निमीलन्नयनं नतभ्रुवः श्रियं सपत्नीवदनादिवाददे ॥ ९३ ॥ विहस्य पाणौ विधृते धृताम्भसि प्रियेण वध्वा मदनार्द्रचेतसः । सखीव काञ्ची पयसा घनीकृता बभार वीतोच्चयबन्धमंशुकम् ॥ ९४ ॥ निरञ्जने साचिविलोकितं दृशावयावकं वेपथुरोष्ठपल्लवम् । नतभ्रुवो मण्डयति स्म विग्रहे बलिक्रिया चातिलकं तदास्पदम् ॥ ९५ ॥ निमीलदाकेकरलोलचक्षुषां प्रियोपकण्ठं कृतगात्रवेपथुः । निमज्जतीनां श्वसितोद्धतस्तनः श्रमो नु तासां मदनो नु पप्रथे ॥ ९६ ॥ प्रियेण सिक्ता चरमं विपक्षतश्चुकोप काचिन्न तुतोष सान्त्वनैः । जनस्य रूढप्रणयस्य चेतसः किमप्यमर्षोऽनुनये भृशायते ॥ ९७ ॥ अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम् । आत्तमात्तमपि कान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ॥ ९८ ॥ निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः । तद्भवैः कुहुरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥ ९९ ॥ संक्षोभं पयसि पुनर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने । विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम्

१ जलक्लिन्नाम्.

॥ १०० ॥ किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते तरुण्याः । संशय्य क्षणमिति निश्चिकाय कश्चिद्विब्बोकैर्बकसहवासिनां परोक्षैः ॥ १०१ ॥ योग्यस्य त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराज्यलक्ष्म्याः । कान्तायाः करकलशोद्यतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥१०२॥ पर्यच्छे सरसि हृतेंऽशुके पयोभिर्लोलाक्षे सुरतगुरावपत्रपिष्णोः । सुश्रोण्या दलवसनेन वीचिहस्तन्यस्तेन द्रुतमकृताब्जिनीसखित्वम् ॥ १०३ ॥ नारीभिर्गुरुजघनस्थलाहतानामास्रश्रीविजितविकासिवारिजानाम् । लोलत्वादपहरतां तदङ्गरागं संजज्ञे सकलुष आशयो जलानाम् ॥ १०४ ॥ सौगन्ध्यं दधदपि काममङ्गनानां दूरत्वाद्धतमहमाननोपमानम् । नेदीयो जितमिति लज्जयेव तासामालोले पयसि महोत्पलं ममज्ज ॥ १०५ ॥ प्रभ्रष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः । आकल्पैः सरसि हिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि ॥ १०६ ॥ आस्माकी युवतिदृशामसौ तनोति च्छायैव श्रियमनपायिनीं किमेभिः । मत्वैवं स्वगुणपिधानसाभ्यसूयैः पानीयैरिति विदधाविरेऽञ्जनानि ॥ १०७ ॥ निर्धौते सति हरिचन्दने जलौघैराण्डोर्गतपरभागयाङ्गनायाः । अह्वाय स्तनकलशद्वयादुपेये विच्छेदः सहृदययेव हारयष्ट्या ॥ १०८ ॥ अन्यूनं गुणममृतस्य धारयन्ती संफुल्लस्फुरितसरोरुहावतंसा । प्रेयोभिः सह सरसी निषेव्यमाणा रक्तत्वं व्यधित वधूदृशां सुरेव ॥ १०९ ॥ स्नान्तीनां बृहदमलोदबिन्दुचित्रौ रेजाते रुचिरदृशामुरोजकुम्भौ । हाराणां मणिभिरुपाश्रितौ समन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥११०॥ आरूढः पतित इति स्वसंभवोऽपि स्वच्छानां परिहरणीयतामुपैति । कर्णेभ्यश्च्युतमसितोत्पलं वधूनां वीचीभिस्तटमनु यन्निरासुरापः ॥ १११ ॥ दन्तानामधरमयावकं पदानि प्रत्यग्रास्तनुमविलेपनां नखाङ्काः । आनिन्युः श्रियमधितोयमङ्गनानां शोभायै विपदि सदाश्रिता भवन्ति ॥ ११२ ॥ कस्याश्चिन्मुखमनु धौतपत्रलेखं व्यातेने सलिलभरावलम्बिनीभिः । किञ्जल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः ॥ ११३ ॥ अविरलमिदमम्भः स्वेच्छयोच्छालयन्त्या विकचकमलशोभोत्तानहस्तद्वयेन । परिकलित इवार्घः कामबाणातिथिभ्यः सलिलमिव वितीर्णं बाललीलासुखेभ्यः ॥ ११४ ॥ जलविलुलितवस्त्रव्यक्तनिम्नोन्नताभिः परिगततटभूमिस्नानमात्रोत्थिताभिः । कनकरुचिरकुम्भश्रीमदाभोगतुङ्गस्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ ११५ ॥ एतस्याः करिकुम्भसंनिभकुचप्राग्भारपृष्ठे लुठद्‌दुग्धाग्गर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि । दूरादेत्य तरङ्ग एष पतितो वेगाद्विलीनः कथं को वाऽन्योऽपि विलीयते न सरसः सीमन्तिनीसंगमे ॥ ११६ ॥

### प्रपापालिका

यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः । तथा प्रपापालिकापि धारां वितनुते तनुम्[१] ॥ ११७ ॥ अङ्गुल्यग्रनिरोधतस्तनुतरां धारामियं कुर्वती कर्कर्या न परं पयो निपुणिका दातुं प्रपापालिका । विश्लिष्टाङ्गुलिना करेण दशनापीडं शनैः पान्थ हे निष्पन्दोर्ध्वविलोचनस्त्वमपि हा जानासि पातुं पयः ॥ ११८ ॥ दूरादेव कृतोऽञ्जलिर्न तु पुनः पानीयपानोचितो रूपालोकनकौतुकात्प्रचलितो मूर्धा न शान्त्या तृषः । रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपामक्षुण्णो विधिरध्वगेन विहितो वीक्ष्य प्रपापालिकाम् ॥ ११९ ॥ गन्तुं सत्वरमीहसे यदि पुनर्व्यालोलवेणीलतां द्रष्टुं वा स्वकुटुम्बिनीमनुदिनं कान्तां समुत्कण्ठसे । तत्तृष्यन्नपि मुग्धमन्थरवलन्नेत्रान्तरुद्धाध्वगामेतां दूरत एव हे परिहर भ्रातः प्रपापालिकाम्[२] ॥ १२० ॥ मध्याह्नेऽतिखरे निदाघसमये तापोऽध्वनो वर्तते शीते कुञ्जतटे विचित्रविटपे भोः पान्थ विश्रम्यताम् । एकाकी च भवानहं च तरुणी शून्या प्रपा वर्तते लज्जेऽहं ब्रुवती स्वयं तु चतुरो जानासि कालोचितम् ॥ १२१ ॥ कस्येयं तरुणि प्रपा पथिक नः किं पीयतेऽस्यां पयो[३] वेनूनामथ माहिषं पथिक रे वारः[४] कथं मङ्गलः । सोमो वाथ शनैश्चरोऽमृतमिदं तत्तेऽधरे दृश्यते भो भोः पान्थ विलाससुन्दर सखे यद्रोचते तत्पिब ॥ १२२ ॥ मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां मा शून्येति विमुञ्च पान्थ विवशः शीतः प्रपामण्डपः । तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसीं त्वच्चित्तं तु न रञ्जयन्ति पथिक प्रायः प्रपापालिकाः ॥ १२३ ॥

### ग्रीष्मवायवः

आध्मातोद्धतदाववह्निसुहृदः कीर्णोष्णरेणूत्कराः संतप्ताध्वगमुक्तखेदविषमश्वासोष्णसंवादिनः । तृष्णार्तोजगरायतास्यकुहरक्षिप्रप्रवेशोत्कटा भ्रूभङ्गैरिव तर्जयन्ति पवना दग्धस्थलीकज्जलैः ॥१२४॥ कारञ्जीः कुञ्जयन्तो निजजरठरवव्यञ्जितावीरकोशानुत्पाकान्कृष्णलानां पृथुसुषिरगताञ्शिम्बिकान्पाटयन्तः । झिल्लीकाझल्लरीणां बधिरितककुभं झंकृतं खे क्षिपन्तः सिञ्जानाश्वत्थपत्रप्रकरझणझणाराविणो वान्ति वाताः ॥ १२५ ॥ व्योमव्यालोलमुक्ताफलधवलगलद्बिन्दुसंदोहगर्भानम्भोदान्भर्त्सयित्वा दिशि दिशि भुवने भीतिमुद्भावयन्तः । एते रक्षोमृगाक्षीगतलुलितमदक्षोभसंरम्भरूक्षा वाताः पातालकुक्षिस्थितमपि सलिलं तत्क्षणाद्भक्षयन्ति ॥ १२६ ॥

### ग्रीष्मपथिकाः

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्ददुहि ।

---

१ सूक्ष्माम्. २ पानीयशालिका. ३ जलम्; पक्षे,-क्षीरम्. ४ जलानि; पक्षे,-सोमादिवासरः. ५ उदकम्; पक्षे,-पीयूषम्.

शुष्यत्स्रोतसि तप्तभूमिरजसि ज्वालायमानार्णसि ग्रीष्मे मासि तताऽर्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥ १२७ ॥ वाताकीर्णविशीर्णवीरणतृणश्रेणीझणत्कारिणि ग्रीष्मे सोष्मणि चण्डसूर्यकिरणप्रक्काथ्यमानाम्भसि । चित्तारोपितकामिनीमुखशशिज्योत्स्नाहृतक्लान्तयो मध्याह्नेऽपि सुखं प्रयान्ति पथिकाः स्वं देशमुत्कण्ठिताः ॥ १२८ ॥ ग्रीष्मोष्मप्लोषशुष्यत्पयसि बकभयोद्भ्रान्तपाठीनभाजि प्रायः पङ्कैकमात्रे गतवति सरसि स्वल्पतोये लुठित्वा । कृत्वा कृत्वा जलार्द्रीकृतमुरसि जरत्कर्पटार्धं प्रपायां तोयं जग्ध्वापि पान्थः पथि वहति हहा हेति कुर्वन्पिपासुः ॥१२९॥ भ्राम्यच्चीत्कारचक्रभ्रमभरितघटीयन्त्रचक्रप्रमुक्तस्रोतःपूर्णप्रणालीपथसरणिशिरासारि सीत्कारि वारि । कौपं पान्थाः प्रकामं शितमणिमुसलाकारविस्फारधारं विक्षिप्तक्षुण्णमुक्ताकणनिकरनिभासारपातं पिबन्ति ॥ १३० ॥

---

## वर्षावर्णनम्

चलद्बलाकादशनाभिरामः परिस्रवद्वारिमदाम्बुधारः । आहन्यमानस्तडिदङ्कुशेन स्वरस्य दध्वान घनद्विपेन्द्रः ॥ १ ॥ या कामिनी सा यदि मानिनी स्यात्स्मरस्य राज्ञो ह्यपराधिनी स्यात् । इतीव दण्डैः किमु ताड्यतेऽसौ कादम्बिनी कामनृपस्य ढक्का ॥ २ ॥ चन्द्रबिम्बरविबिम्बतारकामण्डलानि घनमेघडम्बरैः । भक्षितानि जलदोदरेषु तद्रोदनध्वनिरिवैष गर्जितम् ॥ ३ ॥ निद्रितस्य बत शम्बरद्विषो जागराय किमु वारिवाहकः । ऊर्जितं दधदतीव गर्जितं संभ्रमन्नभसि संभ्रमाययौ ॥ ४ ॥

### वर्षासमयस्वभावाख्यानम्

शीतलादिव संत्रस्तं प्रावृषेण्यान्नभस्वतः । नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥ ५ ॥ स्फुरन्तः पिङ्गलाभासो धरण्यामिन्द्रगोपकाः । सरक्तवान्तपान्थस्त्रीजीवा इव चकाशिरे ॥ ६ ॥ पतत्यविरतं वारि नृत्यन्ति च कलापिनः । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥ ७ ॥ उत्कण्ठयति[1] मेघानां माला वर्गं केलापिनाम्[2] । यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥ ८ ॥ अस्थिरमनेकरागं गुणरहितं नित्यदुष्प्रापम् । प्रावृषि सुरेन्द्रचापं विभाव्यते युवतिचित्तमिव ॥९॥ नन्दयति कस्य न मनश्चपलैर्वनधूलिधूसरच्छायैः । आक्रम्य पुत्रकैरिव मलिनीकृतमम्बरं जलदैः ॥१०॥ आयाताः सखि वर्षा वर्षादपि यासु वासरो दीर्घः । दिशि दिशि नीरतरङ्गो नीरतरङ्गो[3] ममापि हृदयेशः ॥ ११ ॥ गर्जति वारिदपटले वर्षति नयनारविन्दमबलायाः । भुजवल्लिमूलसेके विरहलता पल्लवं सूते ॥ १२ ॥ अतिशयितकदम्बोऽयं मोदकदम्बानिलो वहति । वियदम्बुदमेदुरितं मे दुरितं पश्य नागतो दयितः ॥ १३ ॥ शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम् । क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् ॥ १४ ॥ आस्वाद्य निर्विशेषं विरहिवधूनां मृदूनि मांसानि । करकामिषेण मन्ये निष्ठीवति नीरदो[1]ऽस्थीनि ॥ १५ ॥ वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराभूत् । पुष्पोद्गमोऽजायत मालतीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥ १६ ॥ वसन्तविश्लेषमपारयन्त्या भुवो निदाघस्मरतापशान्त्यै । आशावयस्याभिरुदाह्रियन्ते पयोदनीलोत्पलपल्लवानि ॥ १७ ॥ घनोद्यमे गाढतमेऽन्धकारे न कोऽपि निर्णेतुमहः शशाक । स्पृशन्मुहुः किंतु करेण नाभीसरोजमाभीरकुलाधिनाथः[2] ॥ १८ ॥ कामेन कामं प्रहिता जवेन प्रावृट् चचाल त्रिजगद्विजेतुम् । किं चन्द्रबिम्बं दधि भक्षयन्ती संधारयन्ती हरितः शुभाय ॥ १९ ॥ निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः । धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास[3] ॥ २० ॥ सजलजलधरं नभो विरेजे विवृतिमियाय रुचिस्तडिल्लतानाम् । व्यवहितरतिविग्रहैर्वितेने जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥ २१ ॥ परिसुरपतिसूनुधाम सद्यः समुपदधन्मुकुलानि मालतीनाम् । विरलमपजहार बद्धबिन्दुः सरजसतामवनेरपां निपातः ॥२२॥ प्रतिदिशमभिगच्छताभिमृष्टः ककुभविकाससुगन्धिनानिलेन । नव इव विबभौ स चित्तजन्मा गतधृतिराकुलितश्च जीवलोकः ॥ २३ ॥ व्यथितमपि भृशं मनो हरन्ती परिणतजम्बुफलोपभोगहृष्टा । परभृतयुवतिः स्वनं वितेने नवनवयोजितकण्ठरागरम्यम् ॥ २४ ॥ अभिभवति मनः कदम्बवायौ मदमधुरे च शिखण्डिनां निनादे । जन इव न धृतेश्चचाल जिष्णुर्न हि महतां सुकरः समाधिभङ्गः ॥ २५ ॥ धृतबिसवलयावलिर्वहन्ती कुमुदवनैकदुकूलमात्तबाणा । शरदमलतले सरोजपाणौ घनसमयेन वधूरिवाललम्बे ॥ २६ ॥ समदशिखिरुतानि हंसनादैः कुमुदवनानि कदम्बपुष्पवृष्ट्या । श्रियमतिशयिनीं समेत्य जग्मुर्गुणमहतां महते गुणाय योगः ॥ २७ ॥ सरजसमपहाय केतकीनां प्रसवमुपान्तिकनीपरेणुकीर्णम् । प्रियमधुरसनानि षट्पदाली मलिनयति स्म विनीलबन्धनानि ॥ २८ ॥ मुकुलितमतिशय्य बन्धुजीवं धृतजलबिन्दुषु शाद्वलस्थलीषु । अविरलवपुषः सुरेन्द्रगोपा विकचपलाशचयश्रियं समीयुः ॥ २९ ॥ रटतु जलधरः पतन्तु धाराः स्फुरतु तडिन्मरुतोऽपि वान्तु शीताः । इयमुरसि

१ ऊर्ध्वं कण्ठो यस्य तादृशं करोति. २ मयूराणाम्. ३ विरतस्मरतरागः.

१ मेघः; पक्षे,–निर्गता रदा दन्ता यस्य; दन्तानामभावादस्थिचर्वणासमर्थः संस्त्यजतीति भावः. २ भगवान्पद्मनाभः. ३ आक्रन्दनं कृतवान्.

महौषधीव कान्ता निखिलभयप्रतिघातिनी स्थिता मे ॥३०॥ स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा । जलधरावलिरप्रतिपालितस्वसमयासमयाज्जगतीधरम् ॥३१॥ गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे । अभिससार न वल्लभमङ्गना न चमके च कमेकरसं रहः ॥३२॥ अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् । धृतधनुर्वलयस्य पयोमुचः शबलिमा वलिमानमुषो वपुः ॥ ३३ ॥ द्रुतसमीरचलैः क्षणलक्षितव्यवहिता विटपैरिव मञ्जरी । नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदैः ॥३४॥ पटलमम्बुमुचां पथिकाङ्गना सपदि जीवितसंशयमेष्यती । सनयनाम्बुसखीजनसंभ्रमाद्विधुरबन्धुरबन्धुरमैक्षत ॥ ३५ ॥ प्रवसतः सुतरामुदकम्पयद्विदलकन्दलकम्पनलालितः । नमयति स्म वनानि मनस्विनीजनमनोनमनो घनमारुतः ॥ ३६ ॥ जलदपङ्क्तिरनर्तयदुन्मदं कलविलापि कलापिकदम्बकम् । कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसंपदा ॥ ३७ ॥ नवकदम्बरजोरुणिताम्बरैरधिपुरंध्रि शिलीन्ध्रसुगन्धिभिः । मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे ॥ ३८ ॥ शमिततापमपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् । प्रविरलैरचलाङ्गनमङ्गनाजनसुगं न सुगन्धि न चक्रिरे ॥ ३९ ॥ द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् । घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिव च्युतम् ॥ ४० ॥ दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः । कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥ ४१ ॥ नवपयःकणकोमलमालतीकुसुमसंततिसंततसङ्गिभिः । प्रचलितोडुनिभैः परिपाण्डिमा शुभरजोभरजोऽलिभिराददे ॥४२॥ निजरजः पटवासमिवाकिरद्धृतपटोपमवारिमुचां दिशाम् । प्रियवियुक्तवधूजनचेतसामनवनी नवनीपवनावलिः ॥ ४३ ॥ प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः । प्रणयिनः परिरब्धुमथाङ्गना ववलिरे वलिरेचितमध्यमाः ॥४४॥ विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति । अभिहितेऽलिभिरेवमिवोच्चकैरननृते ननृते नवपल्लवैः ॥४५॥ प्रौढमौक्तिकरुचः पयोमुचां बिन्दवः कुटजपुष्पबन्धवः । विद्युतां नभसि नाट्यमण्डले कुर्वते स्म कुसुमाञ्जलिश्रियम् ॥ ४६ ॥ महीमण्डलीमण्डपीभूतपाथोधरारब्धहर्षासु वर्षासु सद्यः । कदम्बे प्रसूनं प्रसूने मरन्दो मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥ ४७ ॥ उन्निद्रकन्दलदलान्तरलभ्यमानगुञ्जन्मदान्धमधुपे नवमेघकाले । स्वप्नेऽपि यः प्रवसति प्रविहाय कान्तां तस्मै विषाणरहिताय नमो वृषाय ॥ ४८ ॥ घनसमयमहीभृत्पत्तनस्याम्बरस्य त्रिभुवनपतिचापं गोपुरत्वं प्रपेदे । अपि विरसवचोभिः प्राप्तपङ्काभिषेकाः कुकवय इव भेकाः खेदयन्ति स्म लोकान् ॥ ४९ ॥ घनतरघनवृन्दच्छादिते व्योम्नि लोके सवितुरथ हिमांशोः संकथैव व्यरंसीत् । रजनिदिवसभेदं मन्दवाताः शशंसुः कुमुदकमलगन्धानाहरन्तः क्रमेण ॥ ५०' ॥ घनतरघनवृन्दच्छादिते व्योम्नि लोके सवितुरथ हिमांशोः संकथैव व्यरंसीत् । विरहमनुभवन्ती संगमं चापि भर्त्रा रजनिदिवसभेदं चक्रवाकी शशंस ॥ ५१ ॥ अथ नभसि निरीक्ष्य व्याप्तदिक्चक्रवालं सजलजलदजालं प्राप्तहर्षप्रकर्षः । विहितविपुलबर्हाडम्बरो नीलकण्ठो मदमृदुकलकण्ठो नाट्यमङ्गीचकार ॥ ५२ ॥ अभिनवयवसश्रीशालिनि क्ष्मातलेऽस्मिन्नतिशयपरभागं भेजिरे जिष्णुगोपाः । कुवलयशयनीये मुग्धसुग्वेक्षणाया मणय इव विमुक्ताः कामकेलिप्रसङ्गात् ॥ ५३ ॥ मलिनहुतभुग्धूमश्यामैर्दिशो मलिना घनैरविरलतृणश्यामा भूमिर्नवोद्गतकन्दलैः । सुरतसुभगो नूनं कालः स एष समागतो मरणशरणा यस्मिन्नेते भवन्ति वियोगिनः ॥ ५४ ॥ क्षपां[१] क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् । क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरास्त[३]डिद्दीपालोका दिशि दिशि चरन्तीव जलदाः ॥५५॥

मेघाटोपैः स्तनितसुभगं वीक्ष्य खं हस्तिदन्तैः कृत्वा भित्तीनुपरिसदनं चामरैश्छादयित्वा । कर्पूरैस्ता मृगमदरसैर्भूमिमालिप्य शेते सैंहे चर्मण्युरसि दयिताबाहुरूढः पुलिन्दः ॥ ५६ ॥ उपैति घनमण्डली नदति नीलकण्ठावली तडिल्लसति सर्वतो वहति केतकीमारुतः । इतोऽपि यदि नागतः प्रियतमो नु मन्येऽधुना दधाति मकरध्वजस्त्रुटितशिञ्जिनीकं धनुः ॥ ५७ ॥ दिशां हाराकाराः शमितशमभाराः शमवतामसूचीसंचाराः कृतमदविकाराश्च शिखिनाम् । हृताध्वव्यापारास्तुहिनकणसारा विरहिणीमनःकीर्णाङ्गाराः किरति जलधारा जलधरः ॥ ५८ ॥ देवे वर्षत्यशनपवनव्यापृता वह्निहेतोर्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः । नीध्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा शूर्पच्छत्रस्थगितशिरसो योषितः संचरन्ति ॥ ५९ ॥ आकर्ण्य स्मरयौवराज्यपटहं जीमूतधीरध्वनिं नृत्यत्केकिकुटुम्बकस्य दधतं मन्द्रां मृदङ्गक्रियाम् । उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता हर्षेणेव समुच्छ्रितान् वसुमती दध्रे शिलीन्ध्रध्वजान् ॥ ६० ॥ वज्रेण त्रिजगत्पतेर्बलरिपोरच्छिन्नपक्षाः पुरा ये भीता निममज्जुरब्धिजठरे ते लूनपक्षान्गिरीन् । आश्वास्य व्रणदुःखजां शमयितुं तेषामुदग्रव्यथामुत्तस्थुर्जलदच्छलेन जलधेरूढाम्भसः पर्वताः ॥ ६१ ॥ मन्दं मुद्रितपांसवः परिपत-

१ रात्रिम्. २ कृशां कृत्वा. ३ तडिदेव दीपस्तस्यालोकः प्रकाशस्तैः.

ज्झंकारिझञ्झामरुद्वेगध्वस्तकुटीरकाग्रनिपतच्छिद्रेषु लब्धान्तराः । कर्मव्यग्रकुटुम्बिनीकुचभरस्वेदच्छिदः प्रावृषः प्रारम्भे मदयन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥ ६२ ॥ किंचिन्मुद्रितपांसवः शिखिकुलैरुत्कण्ठमालोकिता जीर्णावासरुदद्दरिद्रगृहिणीश्वासानिलैर्जर्जराः । एते ते निपतन्ति नूतनघनात्प्रावृड्भरारम्भिणो विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ॥ ६३ ॥ काले नीलबलाहके सतडिति प्रीतिप्रदे बर्हिणामाश्चर्यं कथयामि वः शृणुत भो यद्वृत्तमस्मद्गृहे । सौभाग्यव्ययशङ्कयैकशयने कान्ताप्रियाभ्यामहो मानिभ्यां बत रात्रिमेव सकलां चीर्णं प्रवासिव्रतम् ॥ ६४ ॥ उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झानिलप्रेङ्खोलत्स्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः । धारासिक्तवसुंधरासुरभयः प्राप्तास्त एवाधुना घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥ ६५ ॥ आच्छन्ने क्षितितेजसी मनसिजव्यापारमेयं मनः स्वात्मा च द्वयमेतदस्ति दशमं द्रव्यं परेषां तमः । कालाकाशदिशां निरस्तमधुना नामापि वर्षागमे द्रव्यं वारि गुणश्च वारिदरवः कर्मापि वारिक्रिया ॥ ६६ ॥ आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते । जालैः शीकरशीतलैश्च मरुतो रत्यन्तखेदच्छिदो धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ६७ ॥ उद्योगः क्षयमेति हन्त सहसा जाड्यं समुज्जृम्भते मित्रस्यापि च दर्शनं भवति नो किं वान्यदाचक्ष्महे । यल्लोकस्पृहणीयतां गतमभूत्तज्जीवनं व्यर्थतां प्राप्तं येन दुनोति तन्मम मनो दुर्दैववद्दुर्दिनम् ॥ ६८ ॥ सर्वत्रोद्गतकन्दला वसुमती वृद्धिर्जलानां परा जातं निष्कमलं जगत्सुमलिनैर्लब्धा घनैरुन्नतिः । सर्पन्ति प्रतिमन्दिरं द्विरसनाः संत्यक्तमार्गो जनो वर्षाणां च कलेश्च संप्रति जयत्येकैव राज्यस्थितिः ॥ ६९ ॥ नैतद्वारिदगर्जितं रतिपतिप्रस्थानढक्कारवो नैते वारिधराः स्रवन्मदजलास्तत्सिन्धुराः प्रोद्धुराः । नैषा विद्युदियं विभाति रुचिरा तच्चन्द्रहासप्रभा मन्ये मानिनि मानदुर्गमधुना जेतुं किमायात्यसौ ॥ ७० ॥ दृष्ट्वाडम्बरमम्बरे घनकृतं सौदामिनीनर्तकीनृत्यारम्भमृदङ्गमङ्गलरवं श्रुत्वा च तद्गर्जितम् । पुष्प्यत्पुष्पभरानताङ्गणतरुस्कन्धावसद्वायसक्काणाकर्णनसोत्सवप्रियतमं पान्था ययुर्मन्दिरम् ॥ ७१ ॥ सद्मन्येव निरन्तरं निवसतिर्मित्राद्यनालोकनं पन्थाः पङ्कसमाकुलः कलुषता वारां सदा दुर्दिनम् । एवं यद्यपि दूषणानि तदपि स्वर्भूजनोल्लासकृत्सस्योत्पत्तिनिमित्ततैकगुणतः प्रावृट् प्रपेदे यशः ॥ ७२ ॥

## दोलाकेलिः

सौन्दर्यमिन्दीवरलोचनानां दोलासु लोलासु यदुल्ललास । यदि प्रसादाल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः ॥ ७३ ॥ प्रसार्य पादौ विहितस्थितीनां दोलासु लोलांशुकपल्लवानाम् । मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुः सुदृशां युवानः ॥ ७४ ॥ उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बबिम्बाः । दोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥ ७५ ॥ दृशा विदधिरे दिशः कमलराजिनीराजिताः कृता हसितरोचिषा हरति चन्द्रकावृष्टयः । अकारि हरिणीदृशः प्रबलदण्डकप्रस्फुरद्वपुर्विपुलरोचिषा वियति विद्युतां विभ्रमः ॥ ७६ ॥ प्रत्यासन्नमुखी कराम्बुजयुगप्रेङ्खोलितां प्रेङ्खिकामारुह्येयमुदस्तहारलतिकाव्यावृत्ततुङ्गस्तनी । दृष्टादृष्टमुखी गतागतवशादालोलमानांशुका तन्वङ्गी गगने करोति पुरतः शातह्रदं विभ्रमम् ॥ ७७ ॥

## वर्षावायवः

एते ते दुरतिक्रमक्रममिलद्घर्मोर्मिमर्मच्छिदः कादम्बेन रजोभरेण ककुभो रुन्धन्ति झञ्झानिलाः । गाढारम्भनिगूढनीरदघटासंघट्टनीलीभवद्व्योमक्रोडकटाहपातुकपयोवेणीकणग्राहिणः ॥ ७८ ॥ धाराधौतं धुनानाः शशधरधवलं केसरं केतकीनां कैलासे किंनरीणां चलदलकलतालास्यलीलां दधानाः । आमूलं मानिनीनां मनसि विनिहितं मानमुन्मूलयन्तो वान्त्येते वारिवाहव्यतिकरशिशिराः प्रावृषेण्याः समीराः ॥ ७९ ॥ गोकर्णं गाहमानाः पृथुतरपृषतग्राहिणः शंबरौघानाकर्षन्तो दिगन्तानपि च विदधतः कन्दलीसुप्रचारान् । एते धावन्ति वार्धश्रवसमुरुधनुर्धारयन्तः समन्तादावृण्वन्तोऽभ्रवीथिं वनमिव शबरभ्रान्तिभाजोऽम्बुवाहाः ॥ ८० ॥

## वर्षापथिकाः

उपरि पयोधरमाला दूरे दयिता किमेतदापतितम् । हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥ ८१ ॥ उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः । क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयतु ॥ ८२ ॥ किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम् । इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् ॥ ८३ ॥ शिखिनि कूजति गर्जति तोयदे स्फुटति जातिलताकुसुमाकरे । अहह पान्थ न जीवति ते प्रिया नभसि[1] मासि न यासि गृहं यदि ॥ ८४ ॥ रसति तरुणीकेशश्यामे पयोभृति निर्भरं स्फुटति चपले वारंवारं क्षणद्युतितेजसि । उपगुरुजनं मन्ये दैन्यात्पराङ्मुखसुप्तया निभृतनिभृतं मन्दोच्छ्वासं तया बत रुद्यते ॥ ८५ ॥ निशीथे लीनानां झटिति तडितां वीक्ष्य विषयं घनानामाभोगं रसिकपथिकेनोन्मुखदृशा । न गीतं सोत्कण्ठं न च रुदितमुत्कण्ठतरलं न मुक्ता निःश्वासाः स्फुरदनुमतं किं तु हृदयम् ॥ ८६ ॥ यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति स्फुलिङ्गानां रूपं दधति च

१ श्रावणमासे.

यथा कीटमणयः । यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥ ८७ ॥ बर्हीं रौति बका रटन्ति तडितो भ्राम्यन्त्यतिव्याकुला विक्रोशन्ति घना घना च विलपत्युच्चैर्बलाकावलिः । आत्मानं मरुतः क्षिपन्ति सलिलासारः पतत्यग्रतो मुक्त्वा प्रावृषि साहसैकरसिके याति प्रियामध्वगे ॥ ८८ ॥ नृत्यच्चन्द्रकिणि क्वणन्मधुलिहि श्यामायमानक्षितौ धीरध्वानपयोमुचि प्रविलसत्सौदामिनीदामनि । धाराम्भःकणवाहिशीतमरुति प्राणान्पयोदागमे हा हा हास्यति मुग्धिका नववधूरित्यध्वगः क्रन्दति ॥ ८९ ॥ श्रुत्वा बालमृगीविलोलनयना शब्दं घनानां पुरा भीत्या वक्षसि संश्रितापि निबिडं भूयः समालिङ्गति । या वक्त्रादपहृत्य रोपितवती कण्ठे ममैवाननं सा द्रक्ष्यत्यधुना कथं नु विरहे बाला पयोदावलीम् ॥ ९० ॥ रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया । आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥ ९१ ॥ ग्रामेऽस्मिन् पथिकाय पान्थ वसतिर्नैवाधुना दीयते रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा । तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥ ९२ ॥ भ्रातः पान्थ कुतो भवान्नगरतो वार्ता न वा वर्तते बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति । सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ ९३ ॥ धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं दीर्घोच्छ्वाससमुदश्रुणा विरहिणीं बालां चिरं ध्यायता । अध्वन्येन विमुक्तकण्ठकरुणं रात्रौ तथा क्रन्दितं ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ॥ ९४ ॥ भ्रातः पान्थ प्रसीद प्रतिविरम समुत्सृज्य बालामकाण्डे गन्तुं बाष्पाम्बुपूरप्लुतनयनमुखीं प्रेयसीं ते न युक्तम् । वृत्तं ग्रामेऽतिकष्टं यदिह गृहपतेः प्रोषितस्य प्रियाया मुक्ताक्रन्दांस्त्वमेतान्सलिलवितरणे निर्गतान्पश्य बन्धून् ॥ ९५ ॥ भद्रात्र ग्रामके त्वं वससि परिचयस्तेऽस्ति जानासि वार्तामस्मिन्नध्वन्यजाया जलधररसितोत्का न काचिद्विपन्ना । इत्थं पान्थः प्रवासावधिदिनविगमापायशङ्की प्रियायाः पृच्छन् वृत्तान्तमारात्स्थितनिजभवनोऽप्याकुलो न प्रयाति ॥ ९६ ॥

### वर्षापथिककामिनी

अदृष्टपूर्वमस्माभिर्यदेतद्दृश्यतेऽधुना । विषं विषधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः ॥ ९७ ॥ सखि हे पश्य रसमयं जलधरसमयं समुन्नद्धम् । विलसति कापि बलाका कापि बलाका मुदं धत्ते ॥ ९८ ॥ शिशिरसीकरवाहिनि मारुते चरति शीतभयादिव सत्वरः । मनसिजः प्रविवेश वियोगिनीहृदयमाहितशोकहुताशनम् ॥ ९९ ॥ एष्यन्त्यवश्यमधुना हृदयाधिनाथा मुग्धा मुधा कुरुत मा विविधं विलापम् । इत्थं शशंसुरिव गर्जितकैतवेन पाथोधराः पथिकपङ्कजलोचनाभ्यः ॥ १०० ॥ आकर्णितानि रसितानि यया प्रसर्पत्प्रद्युम्नराजरथनिःस्वनसोदराणि । उच्चै रणच्चरणनूपुरया पुरन्ध्र्या क्षिप्रं प्रियं कुपितयापि तयाभिसस्रे ॥ १०१ ॥ प्रणतिभिरपि पत्युः प्रार्थनाभिश्च सख्याः क्षणमपि न मनस्तो मानिनी मानमौज्झत् । तमसमशरशस्त्रीभूतगानप्रकारः फणिनमिव शिखण्डी किं न खण्डीचकार ॥ १०२ ॥ नभसि जलदलक्ष्मीं सास्रया वीक्ष्य दृष्ट्या प्रवससि यदि कान्तेत्यर्धमुक्त्वा कथंचित् । मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं तदनु कृतवती सा यत्र वाचो निवृत्ताः ॥ १०३ ॥ विरमत घनाः किं वो वृष्ट्या मुधैव विसृष्टया व्रजत ककुभं कामप्यन्यां मनोरुचिरामतः । न तदिह वनं नासौ मार्गो न तच्च धरातलं विरहगलितैस्तन्व्या यन्न प्लुतं नयनाम्बुभिः ॥ १०४ ॥ प्रसरदलकाकीर्णे कर्णे न केकिरुतं श्रुतं श्वसितविजितो वातो घ्रातो न वा कुटजोत्कटः । न च परिचितासावासंपत्स्रुताश्रुणि लोचने तदपि किमपि प्रावृट्श्यामा धुनोति वियोगिनीः ॥ १०५ ॥ मेघैर्व्योम नवाम्बुभिर्वसुमती विद्युल्लताभिर्दिशो धाराभिर्गगनं वनानि कुटजैः पूरैर्वृता निम्नगाः । एकां घातयितुं वियोगविधुरां दीनां वराकीं स्त्रियं प्रावृट्काल हताश वर्णय कृतं मिथ्या किमाडम्बरम् ॥ १०६ ॥ वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः सोत्साहा नववारिगर्भगुरवो मुञ्चन्तु नादं घनाः । मग्नां कान्तवियोगशोकजलधौ मां वीक्ष्य दीनाननां विद्युत्किं स्फुरसि त्वमप्यकरुणे स्त्रीत्वे समाने सति ॥१०७॥ अम्भोवाहसुरद्विषो निवसनं ध्वान्ताद्रिदिव्यौषधी कन्दर्पस्य विलासचम्पकधनुर्वर्षालतामञ्जरी । लेखा व्योमकषोपले विरचिता चामीकरस्य स्फुरद्धाम्नः पान्थविलासिनीजनमनःकम्पाय शम्पाभवत् ॥ १०८ ॥ श्रुत्वा तन्व्या निशीथे नवघनरसितं विश्लथाङ्गं पतित्वा शय्यायां भूमिपृष्ठे करतलधृतया दुःखितालीजनेन । सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटाघातशीर्णाश्रुबिन्दु स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ॥ १०९ ॥

### खद्योतः

प्राचीमहीधरशिलाविनिवेशितस्य धाराधरस्फुरदयोघनताडितस्य । तप्तायसस्य तपनस्य कणा विकीर्णाः खद्योतपोतसुषमां स्फुटमावहन्ति ॥ ११० ॥

### हंसः

तटमुपगतं पद्मे पद्मे निवेशितमाननं प्रतिपुटकिनीपत्रच्छायां मुहुर्मुहुरासितम् । मुहुरुपगतैरस्रैः कोष्णीकृता जलवीचयो जलदमलिनां हंसेनाशां विलोक्य पिपासता ॥१११॥

## शरद्वर्णनम्

अहो बाणस्य संधानं शरदि स्मरभूपतेः । अपि सोऽयं त्विषामीशः कन्याराशिमुपागतः ॥ १ ॥ अपीतक्षीबकादम्बमसंसृष्टामलाम्बरम् । अप्रसादितसूक्ष्माम्बु जगदासीन्मनोरमम् ॥ २ ॥ अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा । कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥ ३ ॥

### शरत्समयस्वभावाख्यानम्

दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः । नवसंगमसव्रीडा जघनानीव योषितः ॥ ४ ॥ एकेन चुलुकेनाब्धिर्निपीतः कुम्भजेन यत् । तस्योदयेऽन्तःकालुष्यं त्यजन्त्यापो भयादिव ॥ ५ ॥ पाथोदजालजटिलं मलिनं शरदङ्गना । अम्बरं धावयामास चन्द्रिकाचयवारिभिः ॥ ६ ॥ धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् । प्रासादान्स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ ७ ॥ नमिताः फलभारेण न मिताः शालमञ्जरीः । केदारेषु हि पश्यन्तः के दारेषु विनिःस्पृहाः ॥ ८ ॥ हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा । विमलाः कुमुदानीव तारकाः शरदागमे ॥ ९ ॥ राजीवमिव राजीवं जलं जलमिवाजनि । चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥ १० ॥ काशाः क्षीरनिकाशा दधिशरवर्णानि सप्तपर्णानि । नवनीतनिभश्चन्द्रः शरदि च तक्रप्रभा ज्योत्स्ना ॥ ११ ॥ द्वयमिदमत्यन्तसमं नीचे प्रभविष्णुता शरच्चेयम् । क्षेत्रेभ्यः प्राप्य फलं खलेषु निक्षिप्यते यस्याम् ॥ १२ ॥ अथ प्रसन्नेन्दुमुखी सिताम्बरा समाययावुत्पलपत्रलोचना । सपङ्कजा श्रीरिव गां निषेवितुं सहंसबालव्यजना शरद्वधूः ॥ १३ ॥ समुल्लसत्पङ्कजलोचनेन विनोदयन्ती तरुणानशेषान् । शुद्धाम्बरा गुप्तपयोधरश्रीः शरन्नवोढेव समाजगाम ॥ १४ ॥ पयोदकेशेषु विकृष्य रोषान्निष्कास्य सा कोकनदायताक्षी । वर्षावधूं स्वां श्रियमुन्नयन्ती प्रौढा सपत्नीव शरच्चकाशे ॥ १५ ॥ चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता । कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ १६ ॥ ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् । प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥ १७ ॥ उपैति सस्यं परिणामरम्यतां नदीरनौद्धत्यमपङ्कता महीम् । नवैर्गुणैः संप्रति संस्तवस्थिरं तिरोहितं प्रेम घनागमश्रियः ॥ १८ ॥ पतन्ति नास्मिन्विशदाः पतत्रिणो धृतेन्द्रचापा न पयोदपङ्क्तयः । तथापि पुष्णाति नभः श्रियं परां न रम्यमाहार्यमपेक्षते गुणम् ॥ १९ ॥ विपाण्डुभिर्म्लानतया पयोधरैश्च्युताचिराभा गुणहेमदामभिः । इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥ २० ॥ विहाय वाञ्छामुदिते मदात्ययादरक्तकण्ठस्य रुते शिखण्डिनः । श्रुतिः श्रयत्युन्मदहंसनिःस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥ २१ ॥ अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः । विकासि वप्राम्भसि गन्धसूचितं नमन्ति निघ्रातुमिवासितोत्पलम् ॥ २२ ॥ विहारभूमेरभिघोषमुत्सुकाः शरीरजेभ्यश्च्युतयूथपङ्क्तयः । असक्तमूधांसि पयः क्षरन्त्यमूरुपायनानीव नयन्ति धेनवः ॥ २३ ॥ जगत्प्रसूतिर्जगदेकपावनी व्रजोपकण्ठं तनयैरुपेयुषी । द्युतिं समग्रां समितिर्गवामसावुपैति मन्त्रैरिव संहिताहुतिः ॥ २४ ॥ कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने । इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥ २५ ॥ असावनास्थापरयावधीरितः सरोरुहिण्या शिरसा नमन्नपि । उपैति शुष्यन्कलभः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम् ॥ २६ ॥ अमी समुद्धूतसरोजरेणुना हृता हृतासारकणेन वायुना । उपागमे दुश्चरिता इवापदां गतिं न निश्चेतुमलं शिलीमुखाः ॥ २७ ॥ मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशङ्गीः कमलस्य बिभ्रती । शुकावलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥ २८ ॥ ददतमन्तरिताहिमदीधितिं खगकुलाय कुलायनिलायिताम् । जलदकालमबोधकृतं दिशामपरथाप रथावयवायुधः ॥ २९ ॥ स विकचोत्पलचक्षुषमैक्षत क्षितिभृतोऽङ्कगतां दयितामिव । शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्तनः ॥ ३० ॥ जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः । जलजराजिषु नैद्रमदिद्रवन्न महतामहताः क्व च नारयः ॥३१॥ समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् । शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणीयताम् ॥३२॥ तनुरुहाणि पुरोविजितध्वनेर्धवलपक्षविहङ्गमकूजितैः । जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥ ३३ ॥ अनुवनं वनराजिवधूमुखे बहलरागजवाधरचारुणी । विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥३४॥ कनकभङ्गपिशङ्गदलैर्दधे सरजसारुणकेसरचारुभिः । प्रियविमानितमानवतीरुषां निरसनै रसनैरवृथार्थता ॥ ३५ ॥ मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः । धृतनवातपमुत्सुकतामतो

१ मत्तम्. २ आकाराम्; पक्षे,-वक्त्रम्.

न कमलं कमलम्भयदम्भसि ॥ ३६ ॥ विगतसस्यजिघत्स-मघट्टयत्कलमगोपवधूर्न मृगव्रजम् । श्रुततदीरितकोमल-गीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ३७ ॥ कृतमदं निग-दन्त इवाकुलीकृतजगत्रयमूर्जमतङ्गजम् । ववुरयुक्छद-गुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ॥ ३८ ॥ तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति मित्रमिवा-कृतज्ञः । तोयं प्रसीदति मुनेरिव चित्तवृत्तिः कामं दरिद्र इव शोषमुपैति पङ्कः ॥ ३९ ॥ आसादितप्रकटनिर्मलचन्द्र-हासः प्राप्तः शरत्समय एष विशुद्धकान्तः । उत्खाय गाढ-तमसं घनकालमुग्रं रामो दशास्यमिव संभृतबन्धुजीवः ॥ ४० ॥ वृद्धाङ्गनेव विजहौ सरिदुद्धतत्वं वेदान्तिनामिव मनः शुचि नीरमासीत् । चन्द्रे प्रभा युवतिवक्त्र इवाद्भुता-भूद्विद्वत्कवित्वमिव केकिरुतं न रेजे ॥ ४१ ॥ मधुमधुरिम-भङ्गीं भेजिरे हंसनादास्तुहिनपटललीलां लेभिरे वारि-वाहाः । क्षितिरभवदपङ्का किं च रोलम्बबालावलिकलित-नलिन्यः शैवलिन्यस्तदासन् ॥ ४२ ॥ स्फुटं स्फुटपलाशवत्सु-भगभासिचञ्चूपुटे विपाककपिशीकृताः कलममञ्जरीर्बिभ्रती । बभौ दिवि शुकावलिः कुवलयच्छविर्जङ्गमा स्वभावहृदयं-गमा विबुधचापलक्ष्मीरिव ॥ ४३ ॥ अपाकृत्याशेषाण्यपि च घनजालानि परितस्तमोधूमस्तोमोद्भवमलिनिमानं च तदनु । शरच्चन्द्रः शिल्पी रतिपतिमुदेऽसौ निजकरैः सुधा-संदोहार्द्रैर्भुवनभवनं पाण्डुरयति ॥ ४४ ॥ रम्यं हर्म्यतलं नवाः सुनयना गुञ्जद्विरेफा लताः प्रोन्मीलन्नवमालतीसुर-भयो वाताः सचन्द्राः क्षपाः । यद्येतानि जयन्ति हन्त परितः शस्त्राण्यमोघानि मे तद्धोः कीदृगसौ विवेकविभवः कीदृक्प्रबोधोदयः ॥ ४५ ॥ अर्धं सुप्तो निशायाः सरभस-सुरतायाससन्नश्लथाङ्गः प्रोद्भूतासह्यतृष्णो मधुमदविरतौ हर्म्यपृष्ठे प्रबुद्धः । संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो ज्योत्स्नाभिन्नाच्छधारं न पिबति सलिलं शारदं मन्दपुण्यः ॥ ४६ ॥ चेतः कर्षन्ति सप्तच्छदकुसुमरसासार-सौरभ्यलुभ्यद्भृङ्गीसंगीतभङ्गिश्रुतिसुभगदिशो वासराः शार-दीनाः । किं च व्याकोशपङ्केरुहमधुरमुखीं संचरच्चञ्चरीक-श्रेणीवेणीसनाथां रमयति तरुणः पद्मिनीमंशुमाली ॥ ४७ ॥

### भ्रमरक्रीडा

अलक्षितकुचाभोगं भ्रमन्ती नृत्यभूमिषु । स्मरेणापि सरोजाक्षी न लक्ष्यीक्रियते शरैः ॥ ४८ ॥ भ्रमात्प्रकीर्णे भ्रमरीषु किंचिच्चेलाञ्चले चञ्चललोचनायाः । कुचौ कदाचिज्जघनं युवानो विलोक्य साफल्यमवापुरक्ष्णोः ॥ ४९ ॥ परिभ्रमन्त्या भ्रमरीविनोदे नितम्बबिम्बाद्विगल-द्दुकूलम् । विलोक्य कस्याश्चन कोमलाङ्ग्याः पुंभावमन्याः सुदृशो ववाञ्छुः ॥ ५० ॥ यतो यतः षट्चरणोऽभिवर्तते ततस्ततः प्रेरितलोललोचना । विवर्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम् ॥ ५१ ॥ करौ धुनाना नव-पल्लवाकृती वृथा कृथा मानिनि मा परिश्रमम् । उपेयुषी कल्पलताभिशङ्कया कथं न्वितस्त्रस्यति षट्पदावलिः ॥ ५२ ॥ चेलाञ्चलेन चलहारलताप्रकाण्डैर्वेणीगुणेन च चलद्वलयी-कृतेन । हेलाहितभ्रमरकभ्रमण्डलीभिश्छत्रत्रयं रचयतीव चिरं नतभ्रूः ॥५३॥ मुक्ते काञ्चनकुण्डले निपतिते माणिक्य-भूषामणौ कीर्णे केलिसरोरुहे विगलिते मुक्ताकलापे सति । निःश्वस्याम्बुजलोचनाभ्रमरिकानृत्यावसाने पुनः प्राणेशच्युतिशङ्कयेव हृदये हस्तारविन्दं ददौ ॥ ५४ ॥

### शरद्वायवः

वान्ति रात्रौ रतिक्लान्तकामिनीसुहृदोऽनिलाः । ललना-लोलधम्मिल्लमल्लिकामोदवासिताः ॥ ५५ ॥ वान्ति कह्लार-सुभगाः सप्तच्छदसुगन्धयः । वाता नवरतम्लानवधू-गमनमन्थराः ॥ ५६ ॥

### शरत्पथिकः

पङ्कानुषङ्गं पथि विस्मरन्तः कथावशेषे च पयोदवृन्दे । मार्गेषु चन्द्रातपपिच्छिलेषु पदे पदे चस्खलुरध्वनीनाः ॥ ५७ ॥ इह निचुलनिकुञ्जे वंशसंभारभाजि स्वपिषि यदि मुहूर्तं पश्यसि क्षेत्रमेतत् । इति पथिकमकस्मान्मार्ग एवोपविष्टं वदति तरुणकान्तं गोपिका साङ्गभङ्गम् ॥ ५८ ॥

---

## हेमन्तवर्णनम्

हेमन्तहिमनिस्पन्दमवलोक्य मनोभवम् । प्रहर्तुं सुभ्रुवां चेतो रविर्देवो धनुर्दधौ ॥ १ ॥ दुराशेव दरिद्रस्य तृष्णेव कृपणस्य च । अहो न विरमत्येषा हन्त हेमन्तयामिनी ॥२॥ हेमन्ते बहुदोषाढ्ये द्वौ गुणौ सर्वसंमतौ । अयत्नशीतलं वारि सुरतं स्वेदवर्जितम् ॥ ३ ॥

### हेमन्तसमयस्वभावाख्यानम्

हे हेमन्त स्मरिष्यामि त्वय्यतीते गुणद्वयम् । अयत्न-शीतलं वारि निशा च सुरतक्षमा ॥ ४ ॥ हसन्तीं वा हसन्तीं वा हसन्तीं वामलोचनाम् । हेमन्ते ये न सेवन्ते ते नूनं दैववञ्चिताः ॥ ५ ॥ कामिनो हन्त हेमन्तनिशि शीतज्वरातुराः । जीवन्ति हरिणाक्षीणां वक्षोजाश्लेषरक्षिताः ॥ ६ ॥ अद्य शीतं वरीवर्ति सरीसर्ति समीरणः । अपत्नीको मरीमर्ति नरीनर्ति कुचोष्मवान् ॥ ७ ॥ हिमधवलदन्तकेशी मन्दद्युतितारका बृहत्तिमिरा । द्विगुणीभूता रजनी वृद्धेव शनैः शनैर्याति ॥ ८ ॥ अम्बरमेष रमण्यै यामिन्यै वासरः प्रेयान् । अधिकं ददौ निजाङ्गादथ संकुचितः स्वयं तस्थौ ॥ ९ ॥ विकसति सूर्ये विकसति मुकुलति चास्तङ्गते तस्मिन् । शिशिरे निःस्वकुटुम्बः पङ्कजलीलां समुद्वहति ॥ १० ॥

कन्याप्रसूतस्य[1] धनुःप्रसङ्गादङ्गाधिकासादितविक्रमस्य[2] । धनंजयाधीनपराक्रमस्य[3] हिमस्य कर्णस्य च को विशेषः ॥ ११ ॥ अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुनसंगमेन । अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा भीष्मो महात्माजनि माघतुल्यः ॥ १२॥ अविरलफलिनीवनप्रसूनः कुसुमितकुन्दसुगन्धिगन्धवाहः । गुणमसमयजं चिराय लेभे विरलतुषारकणस्तुषारकालः ॥ १३ ॥ निचयिनि लवलीलताविकासे जनयति लोध्रसमीरणे च हर्षम् । विकृतिमुपययौ न पाण्डुसूनुश्चलति नयान्न जिगीषतां हि चेतः ॥ १४ ॥ कतिपयसहकारपुष्परम्यस्तनुतुहिनोऽल्पविनिद्रसिन्दुवारः । सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः ॥ १५ ॥ गजपतिद्वयसीरपि हैमनस्तुहिनयन्सरितः पृषतांपतिः । सलिलसंततिमध्वगयोषितामतनुतातनुतापकृतं दशाम् ॥ १६ ॥ इदमयुक्तमहो महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा । स्मृतसयौवनसोष्मपयोधरान्सतुहिनस्तु हिनस्तु वियोगिनः ॥ १७ ॥ प्रियतमेन यया सरुषा स्थितं न सहसा सहसा परिरभ्य तम् । श्लथयितुं क्षणमक्षमताङ्गना न सहसा सहसा कृतवेपथुः ॥ १८ ॥ भृशमदूयत याऽधरपल्लवक्षतिरनावरणा हिममारुतैः । दशनरश्मिपटेन च सीत्कृतैर्निवसितेन सितेन सुनिर्ववौ ॥ १९ ॥ व्रणभृता सुतनोः कलसीत्कृतस्फुरितदन्तमरीचिमयं दधे । स्फुटमिवावरणं हिममारुतैर्मृदुतया द्रुतयाधरलेखया ॥ २० ॥ धृततुषारकणस्य नभस्वतस्तरुलताङ्गुलितर्जनविभ्रमाः । पृथुनिरन्तरमिष्टभुजान्तरं वनितयानितया न विषेहिरे ॥ २१ ॥ हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि । प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ २२ ॥ प्रालेयशैलशिखरानिलसंप्रयोगः प्रोत्फुल्लकुन्दमकरन्ददृतालिवृन्दः । कालोऽयमातपति कुङ्कुमपङ्कपिङ्गप्रोत्तुङ्गरम्यरमणीकुचसङ्गयोग्यः ॥२३॥ शुकहरितयवानां सीम्नि नीहारभासः सपदि विगतनिद्राः क्रौञ्चकान्ताः क्षपान्ते । विदधति कमनीयक्काणसुव्यक्तकारं सरलितगलनालं जर्जरस्फाररेफम् ॥ २४॥ लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकलमपलालस्रस्तरे सोपधाने । परिहरति सुषुप्तं हालिकद्वन्द्वमारात्कुचकलशमहोष्माबद्धरेखस्तुषारः ॥ २५ ॥ अपि दिनमणिरेष क्लेशितः[4] शीतसंघैरथ निशि निजभार्यां गाढमालिङ्ग्य दोर्भ्याम् । स्वपिति पुनरुदेतुं सालसाङ्गस्तु तस्मात्किमु न भवतु दीर्घा हैमनी यामिनीयम् ॥ २६ ॥ जरीजृम्भत्प्रौढद्युमणिकरसंदोहसदृशस्फुरद्दीप्तिव्रातप्रगुणतरतारुण्यसुभगाम् । हसन्तीं हेमन्ते परिजनयुतां वा सुवदनां हसन्तीं सेवन्ते परिणतमहाभाग्यनिचयाः ॥ २७ ॥ वेपन्ते कपयो भृशं कृतजडं गोजाविकं म्लायति श्वा चुल्लीकुहरोदरं क्षणमपि प्राप्यापि नैवोज्झति । शीतार्तिव्यसनातुरः पुनरसौ दीनो जनः कूर्मवत्स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥ २८ ॥ शीतांशोरिव नूतनस्य रुचयो विद्या इवामेधसां विप्रातिक्रमिणां विभूतय इव क्षीबस्य बोधा इव । भावैः संवलिता इव प्रियतमे दृग्भङ्गयः सुभ्रुवां प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥२९॥ लज्जा प्रौढमृगीदृशामिव नवस्त्रीणां रतेच्छा इव स्वैरिण्या नियमा इव स्मितरुचः कुल्याङ्गनानामिव । दंपत्योः कलहा इव प्रणयिता वाराङ्गनानामिव प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ ३० ॥ हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः काश्मीरद्रवलिप्तचारुवपुषः खिन्ना विचित्रै रतैः । वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ३१ ॥ चक्रे चण्डरुचा समं रणमसौ हेमन्तपृथ्वीपतिर्ये ये तत्र जिता दिवाकरकरास्ते तेऽमुना तत्क्षणात् । कान्तानां कुचभूधरे निदधिरे मन्येऽहमेवं तदा नो चेन्मन्दकरः कथं दिनकरस्तप्तश्च तन्वीस्तनः ॥ ३२ ॥ प्रोद्यत्प्रौढारविन्दद्युतिभृति विदलत्कुन्दमाद्यद्द्विरेफे काले प्रालेयवातप्रबलविकसितोद्दाममन्दारदाम्नि । येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोददक्षा मृगाक्षी तेषामायामियामा यमसदनसमा यामिनी याति नूनम् ॥ ३३॥

### कन्दुकक्रीडा

पयोधराकारधरो हि कन्दुकः करेण रोषादिव ताड्यते मुहुः । इतीव नेत्राकृतिभीतमुत्पलं तस्याः प्रसादाय पपात पादयोः ॥ ३४ ॥ वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि । विदितं खलु कन्दुक ते हृदयं वनिताधरसंगमलुब्धमिव ॥ ३५ ॥ सानन्दकन्दुकविहारविधौ वधूनां दोलायमानमणिकङ्कणनिक्कणेन । उद्गायितेषु युवचित्तविहंगमेषु श्येना इव स्मृतिभुवो विशिखा विलग्नाः ॥ ३६ ॥ स्मरशरधिनिकाशं कर्णपाशं कृताङ्गी रयविगलितताळीपत्रताटङ्कमेकम् । वहति हृदयचोरं कुङ्कुमन्यासगौरं वलयितमिव नालं लोचनेन्दीवरस्य ॥ ३७ ॥ अमन्दमणिनूपुरक्कणनचारुचारिक्रमं झणज्झणितमेखलास्खलिततारहारच्छटम् । इदं तरलकङ्कणावलिविशेषवाचालितं मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडनम् ॥ ३८ ॥ भ्रमच्चरणपल्लवक्कणदमन्दमञ्जीरकं परिस्खलदुरोरुहस्तबककम्प-

१ कन्याराशावुत्पन्नस्य; पक्षे,-कुमारिकायां प्रसूतस्य. २ धनूराशिसंगमेनाङ्गेषु शरीरेष्वधिकमासादितः संपादितो विक्रमो रोमाञ्चोत्पादनादिरूपः पराक्रमो येन; पक्षे,-धनुर्विद्याङ्गदेशेषु संपादितः पराक्रमो येन. ३ धनंजयोऽग्निस्तदधीनः पराक्रमो बलं यस्य; पक्षे,-धनंजयोऽर्जुनस्तदधीनपराक्रमः. ४ सूर्यः.

मानांशुकम् । रणत्कनकमेखलं करसरोरुहाभ्यां पुरः पतन्तमपराऽऽददे कुसुमकन्दुकं सुन्दरी ॥ ३९ ॥ वक्रश्रीजितलज्जितेन्दुमलिनं कृत्वा करे कन्दुकं व्रीडाकौतुकमिश्रभावमनया तिर्यग्वहन्त्याननम् । भृङ्गाग्रग्रहकृष्णकेतकदलस्पर्धावतीनां दृशां दीर्घापाङ्गतरङ्गणैकसुहृदां कोऽप्येष पात्रीकृतः ॥ ४० ॥ व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदि वक्त्राम्बुजम् । शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया यस्मात्कन्दुक सादरं सुभगया संसेव्यसे तत्कृती ॥ ४१ ॥ चञ्चच्चेलाञ्चलानि प्रतिसरणिचलव्यस्तवेणीनि बाहोर्विक्षेपाद्दक्षिणस्य प्रचलितवलयस्फारकोलाहलानि । श्वासत्रुट्यद्वचांसि द्रुतमितरकरोत्क्षेपलोलालकानि स्रस्तस्रक्ञ्जि प्रमोदं दधति मृगदृशां कन्दुकक्रीडितानि ॥ ४२ ॥ अस्याः स्वेदाम्बुबिन्दुच्युततिलकतया व्यक्तवक्त्रेन्दुकान्तेर्वारंवारेण वेगप्रहणनगणनाकेलिवाचालितायाः । तत्पातोत्थानतालक्रमनमितदृशस्ताण्डवोत्तालतालीलालित्यालोभिताः स्म प्रतिकलममुना कन्दुकक्रीडितेन ॥ ४३ ॥

### हेमन्तवायवः

दधत्यधरचुम्बनं नयनपङ्कजं मुद्रयत्यमन्दपुलकं मनागमलमङ्गमालिङ्गते । विचालयति चालकं चपललोचनानां हठात्तनोत्यविनयं मरुत्प्रिय इवैष हैमन्तिकः ॥ ४४ ॥ हूणीसीमन्तमुद्रां सपदि तरलयन्कीरकान्ताकुचान्तः स्वच्छन्दस्रस्तवस्त्राञ्चलचपलतया लोलयन्हारवल्लीम् । प्रालेयावासपृथ्वीधरशिखरचलच्चारुवारिप्रवाहप्रक्षोभप्रातिभश्रीः प्रसरति परितो हैमनो गन्धवाहः ॥ ४५ ॥ नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान्परागान्कौन्दानानन्दितालीनतितरसुरभीन्भूरिशो दिङ्मुखेषु । एते ते कुङ्कुमाक्तस्तनकलशभरास्फालनादुच्छलन्तः पीत्वा सीत्कारिवक्त्रं शिशुहरिणदृशां हैमना वान्ति वाताः ॥ ४६ ॥

### हेमन्तपथिकः

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि । गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥ ४७ ॥ हेमन्ते पथिकजनाः प्रियावियुक्ता लोकानां गृहबहिरङ्गणे शयानाः । कन्दर्पाकुलमनसां निशासु तेषां शीतं किं लगति जगत्प्रकम्पकारि ॥ ४८ ॥ हेमन्ते हिमकरबिम्बचारुमुख्या रामाया मृदुभुजपञ्जरे शयानाः । ये कालं परमसुखं नयन्ति तेषां शीतं किं लगति जगत्प्रकम्पकारि ॥४९॥ हे पान्थ प्रियविप्रयोगहुतभुग्ज्वालानभिज्ञोऽसि किं किं वा नास्ति तव प्रिया गतघृणः किं वा विहीनो धिया । येनास्मिन्नवकुङ्कुमारुणरुचिव्यासङ्गधर्मोचिते कुन्दानन्दितमत्तषट्पदकुले काले गृहान्निर्गतः ॥५०॥ शीतार्तिप्रसरस्तथाकुलपदन्यासैः समुत्कम्पिभिः पान्थैर्निर्दयतुच्छगोधननदद्वापारवैः सूचिताः । प्राप्यन्ते हिमपीडितानि निभृतप्रोद्घाटधूमा घनस्तोकालक्षकुटीरकाः कथमपि प्राप्ता गिरिग्रामकाः ॥ ५१ ॥ अन्योन्याहतिदन्तनादमुखरं वक्त्रं मुखं कुर्वता नेत्रे साश्रुकणे निमील्य पुलकव्यासङ्गि कण्डूयता । हा हा हेति सुनिष्ठुरं विवदता बाहू प्रसार्य क्षणं पुण्याग्निः पथिकेन पीयत इव ज्वालाहतश्मश्रुणा ॥ ५२ ॥

---

## शिशिरवर्णनम्

प्रावरणैरङ्गारैर्गर्भगृहैः स्तनतटैश्च दयितानाम् । संतर्जितमाढ्यानां निपतति शीतं दरिद्रेषु ॥ १ ॥

### शिशिरसमयस्वभावाख्यानम्

कारणोत्पन्नकोपोऽपि सांप्रतं प्रमदाजनः । निशि शीतापदेशेन गाढमालिङ्गति प्रियम् ॥२॥ एते समुल्लसद्भासो राजन्ते कुन्दकोरकाः । शीतभीता लताकुन्दमाश्रिता इव तारकाः ॥३॥ अंशुकमिव शीतभयात्संस्त्यानस्वच्छलेन हिमधवलम् । अम्भोभिरपि गृहीतं पश्यत शिशिरस्य माहात्म्यम् ॥ ४ ॥ आचुम्ब्य बिम्बाधरमङ्गवल्लीमालिङ्ग्य संस्पृश्य कपोलपालिम् । श्रीखण्डमादाय करेण कान्तः संत्रासयामास सरोरुहाक्षीम् ॥५॥ तपनस्तपति स्म मन्दमन्दं ज्वलनोऽपि ज्वलति स्म किंचिदेव । शरणं शिशिरेऽथ किं च यूनां युवतीनां स्तनयुग्ममात्रमासीत् ॥६॥ कुसुमयन्फलिनीरलिनीरवैर्मदविकासिभिराहितहुंकृतिः । उपवनं निरभर्त्सयत प्रियान्वियुवतीर्युवतीः शिशिरानिलः ॥ ७ ॥ उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद्बलवानपि । तपसि मन्दगभस्तिरभीषुमान्नहि महाहिमहानिकरोऽभवत् ॥ ८ ॥ अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत लोध्ररजश्चयः । क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः ॥९॥ शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः । इति धियास्तरुषः परिरेभिरे धनमतो नमतोऽनुमतान्प्रियाः ॥१०॥ अधिलवङ्गममी रजसाधिकं मलिनितासुमनोदलतालिनः । स्फुटमिति प्रसवेन पुरो हसत्सपदि कुन्दलता दलतालिनः ॥ ११ ॥ द्वारं गृहस्य पिहितं शयनस्य पार्श्वे वह्निर्ज्वलत्युपरि तूलपटो गरीयान् । अङ्गानुकूलमनुरागवशं कलत्रमित्थं करोति किमसौ स्वपतस्तुषारः ॥ १२ ॥ वह्नेः शक्तिर्जलमिव गता दर्शनाद्दाहवृत्तेर्नित्योद्वन्द्वे नवमरुबके वर्तते पुष्पकार्यम् । शीतत्रासं दधदिव रविर्याति सिन्धोः कृशानुः शीतैर्भीता इव च दिवसाः सांप्रतं संकुचन्ति ॥ १३ ॥ पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्राननाः कान्ता नैव गृहे गृहे न च दृढं जात्यं न काश्मीरजम् । ताम्बूलं न च तूलिका न च पटी तैलं न

१ वह्निः २ सूर्यः ३ वह्निः ४ केशरम्.

गन्धाविलं सद्यो गोघृतपाचिता न वटकाः शीतं कथं गम्यते ॥ १४ ॥ चुल्लीसीमनि गोरसार्द्रमशनं भुक्त्वा परीत्याऽर्भकैरभ्याशे स्वकृषीक्षुयन्त्रनिनदं हर्षात्समाकर्णयन् । शेते संहतगोगणोष्मणि गृहे स्रस्ताम्बरां गेहिनीमालिङ्ग्याग‍णयन्निशासु तुहिनं प्रोड्डामरः पामरः ॥ १५ ॥

### दृङ्मीलनक्रीडा

न पाणिप्रच्छाद्यं नयनयुगमत्यायतमिदं नितम्बस्यौदार्यात्त्वरितगतियोगोऽप्यसुलभः । अतिस्वल्पौ पाणी स्तनभरनिरोधान्न मिलितौ निमीलक्रीडायां कलुषयसि मुग्धे किमिति नः ॥ १६ ॥ नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ सर्वत्रैव विलोक्यते मुखशशिज्योत्स्नावितानैरियम् । इत्थं बालतया सखीभिरसकृद्दृङ्मीलनाकेलिषु व्याषिद्धा रजनीमुखे च नयने स्वे गर्हते कन्यका ॥ १७ ॥

### शिशिरवायवः

केशानाकुलयन्दृशौ मुकुलयन्वासो बलादाक्षिपन्नातन्वन्पुलकोद्गमं प्रकटयन्नावेगकम्पं गतेः । वारंवारमुदारसीत्कृतभरैर्दन्तच्छदं पीडयन्प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते ॥१८॥ चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः । ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोंऽशुकानि व्यक्तं कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः ॥ १९ ॥

### शिशिरपथिकः

पुण्याग्नौ पूर्णवाञ्छः प्रथममगणितप्लोषदोषः प्रदोषे पान्थः सुप्त्वा यथेच्छं तदनु तनुतृणे धामनि ग्रामदेव्याः । उत्कम्पी कर्पटार्धे जरति परिजडे छिद्रिणि च्छिन्ननिद्रे वाते वाति प्रकामं हिमकणिनि क्वणत्कोणतः कोणमेति ॥ २० ॥ संविष्टो ग्रामदेव्याः कुटघटितकुटीकुड्यकोणैकदेशे शीते संवाति वायौ हिमकणिनि रणद्दन्तपङ्क्तिद्वयाग्रः । पान्थः कन्थां निशीथे परिकुथितजरत्तन्तुसंतानगुर्वीं ग्रीवापादाग्रजानुग्रहणचटचटत्कर्पटां प्रावृणोति ॥ २१ ॥ आरात्कारीषवह्नेर्विरचितसुतृणप्रस्तरान्तर्निषण्णैः संशीर्णग्रन्थिकन्थाविवरवशविशच्छीतवाताभिभूतैः । नीताः कृच्छ्रेण पान्थैः श्वभिरिव निबिडं जानुसंकोचकुब्जैरन्तर्दुर्वारदुःखद्विगुणतरकृतायामयामास्त्रियामाः ॥ २२ ॥

---

## स्त्रीस्वभावनिन्दा

अनृतं[१] साहसं माया[२] मूर्खत्वमतिलोभता । अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥१॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः[३] प्रियसाहसाः । घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ २ ॥ स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः । पुरुषाणां तु पाण्डित्यं शास्त्रेणैवोपदिश्यते ॥ ३ ॥ विधायालीकविश्रम्भमज्ञेषु[१] त्यक्तसौहृदाः । नवं नवममीप्सन्त्यः पुंश्चल्यः[२] स्वैरवृत्तयः[३] ॥ ४ ॥ जल्पन्ति सार्धमन्येन[४] पश्यन्त्यन्यं सविभ्रमम् । हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ५ ॥ स्त्रीणां द्विगुण आहारो लज्जा चापि चतुर्गुणा । साहसं षड्गुणं चैव कामश्चाष्टगुणः स्मृतः ॥ ६ ॥ अन्तःक्रूराः सौम्यमुखा अगाधहृदया स्त्रियः । अन्तर्विषा बहिःसौम्या भक्ष्या विषकृता इव ॥ ७ ॥ कामनाम्ना किरातेन वितता मूढचेतसाम् । नार्यो नरविहंगानामङ्गबन्धनवागुराः ॥ ८ ॥ दर्शनाद्धरते चित्तं स्पर्शनाद्धरते बलम् । संगमाद्धरते वीर्यं नारी प्रत्यक्षराक्षसी ॥ ९ ॥ चतुरः सृजतः पूर्वमुपायांस्तेन वेधसा । न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥ १० ॥ स्त्रियस्तु यः कामयते संनिकर्षे च गच्छति । ईषत्प्रकुरुते सेवां तं तमिच्छन्ति योषितः ॥ ११ ॥ स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥ १२ ॥ यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी । स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत् ॥ १३ ॥ अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च । मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १४ ॥ नासां कश्चिदगम्योऽस्ति नासां च वयसि स्थितिः । विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १५ ॥ रक्तोऽभिजायते भोग्यो नारीणां शाटको यथा । घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १६ ॥ अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा । अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १७ ॥ शम्बरस्य च या माया या माया नमुचेरपि । बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ १८ ॥ हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि । अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः ॥ १९ ॥ उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः । स्त्रीबुद्ध्या न विशिष्येत तस्माद्रक्ष्याः कथं हि ताः ॥ २० ॥ अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् । इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ॥ २१ ॥ अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः । गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ २२ ॥ यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः । स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद्दुर्जनो हितः ॥ २३ ॥ या भार्या दुष्टचरिता सततं कलहप्रिया । भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ २४ ॥ तस्मात्सर्वप्रयत्नेन नामापि परिवर्जयेत् । स्त्रीणामिह हि सर्वासां य इच्छेत्सुखमात्मनः

१ असत्यम्. २ कपटम्. ३ दुःसहाः. ४ स्वभावतः.

१ कपटविश्वासम्. २ कुलटाः. ३ स्वेच्छावृत्तयः. ४ सह. ५ भिन्नेन. ६ प्रसृताः. ७ नरा एव विहंगाः पक्षिणस्तेषाम्. ८ पाशाः. ९ समुचितावसरः. १० क्रीडार्थं पालितः पिञ्जरस्थो हि पक्षी यथा भाषणादि करोति तद्वत्. ११ पटः.

॥ २५ ॥ के नाम न विनश्यन्ति मिथ्याज्ञानान्नितम्बिनीम्। रम्यां बुद्ध्वोपसर्पन्ति ये ज्वालां शलभा इव ॥ २६ ॥ यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः। यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ २७ ॥ ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः। न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ २८ ॥ आस्तां तावत्किमन्येन दौरात्म्येनात्र योषिताम्। विधृतं स्वोदरेणापि घ्नन्ति पुत्रमपि स्वकम् ॥ २९ ॥ रूक्षायां स्नेहसंभारं कठोरायां सुमार्दवम्। नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ३० ॥ भोजनाच्छादने दद्यादृतुकाले च संगमम्। भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत्सुधीः ॥ ३१ ॥ यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता। राजन्निर्मूलतां याति तद्गृहं भार्गवोऽब्रवीत् ॥ ३२ ॥ तावत्स्यात्सुप्रसन्नास्यस्तावद्गुरुजने रतः। पुरुषो योषितां यावन्न शृणोति वचो रहः ॥ ३३ ॥ एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः। न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना ॥ ३४ ॥ यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः। सुस्वादः सागरः स्त्रीणां तत्सतीत्वं प्रजायते ॥ ३५ ॥ संगतानि मृगाक्षीणां तडिद्विलसितान्यपि। क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ ३६ ॥ उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते। राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥ ३७ ॥ न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता। प्रार्थनाभाव एवैकः सतीत्वे कारणं स्त्रियाः ॥ ३८ ॥ न दानेन न मानेन नार्जवेन न सेवया। न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥ ३९ ॥ सुरूपं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम्। योनिः क्लिद्यति नारीणामामपात्रमिवाम्भसा ॥ ४० ॥ न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते। गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ ४१ ॥ कुलीना रूपवत्यश्च नाथवत्यश्च योषितः। मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ॥४२॥ समयज्ञानर्थवतः प्रतिरूपान्वशे स्थितान्। पतीनां तटमासाद्य नालं नार्यः प्रतीक्षितुम् ॥ ४३ ॥ न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथंचन। न ज्ञातिकुलसंबन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु ॥ ४४ ॥ माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा न माद्यति। यस्माद्दृष्टिमदा नारी तस्मात्तां परिवर्जयेत् ॥ ४५ ॥ यौवने वर्तमानानां मृष्टाभरणवाससाम्। नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥ ४६ ॥ या हि शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः। अपि ताः संप्रसजन्ते कुब्जान्धजडवामनैः ॥ ४७ ॥ पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता जनाः। स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने ॥ ४८ ॥ अलाभात्पुरुषाणां हि भयात्परिजनस्य च। वधबन्धभयाच्चैव तथा गुप्ता हि योषितः ॥ ४९ ॥ लोकानामपि दातारं कर्तारं मानसान्त्वयोः। रक्षितारं न मृष्यन्ति भर्तारं परमस्त्रियः ॥ ५० ॥ न कामभोगान्बहुलान्नालंकारार्थसंचयान्। तथा हि बहु मन्यन्ते यथा रत्याः परिग्रहम् ॥ ५१ ॥ असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो। पापीयसो नरान् यद्वै लज्जां त्यक्त्वा भजन्ति ताः ॥ ५२ ॥ अविद्वांसमलं लोके विद्वांसमपि वा पुनः। प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ ५३ ॥ यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः। स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ५४ ॥ यस्य जिह्वासहस्रं स्याज्जीवेत्साग्रशतं च यः। अनन्यकर्मा स्त्रीदोषान्सोऽप्यनुक्त्वा लयं व्रजेत् ॥ ५५ ॥ न विषेण न शस्त्रेण नाग्निना न च मृत्युना। अप्रतीकारपारुष्याः[1] स्त्रीभिरेव स्त्रियः कृताः ॥ ५६ ॥ नयनविकारैरन्यं वचनैरन्यं विचेष्टितैरन्यम्। रमयति सुरतेनान्यं स्त्री बहुरूपा निजा कस्य ॥ ५७ ॥ स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति। रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥ ५८ ॥ हृदयं हरन्ति नार्यो मुनेरपि भ्रूकटाक्षविक्षेपैः। दोर्मूलनाभिदेशं प्रदर्शयन्त्यो महाचपलाः ॥ ५९ ॥ सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा। मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषम् ॥ ६० ॥ अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते। पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथालिभिः ॥ ६१ ॥ गुणाश्रयं कीर्तियुतं च कान्तं पतिं विधेयं सधनं रतिज्ञम्। विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥ ६२ ॥ समुद्रवीचीव[2] चलस्वभावाः संध्याभ्रलेखेव[3] मुहूर्तरागाः। स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति[4] ॥ ६३ ॥ स्त्रियो हि मूलं निधनस्य[5] पुंसः स्त्रियो हि मूलं व्यसनस्य[6] पुंसः। स्त्रियो हि मूलं नरकस्य पुंसः स्त्रियो हि मूलं कलहस्य पुंसः ॥ ६४ ॥ अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति। श्रियो हि कुर्वन्ति तथैव नार्यो भुजंगकन्यापरिसर्पणानि ॥ ६५ ॥ अन्यं मनुष्यं हृदयेन कृत्वा अन्यं ततो दृष्टिभिराह्वयन्ति। अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥ ६६ ॥ नातिप्रसङ्गः प्रमदासु कार्यो नेच्छेद्बलं स्त्रीषु विवर्धमानम्। अतिप्रसक्तैः पुरुषैर्यतस्ताः क्रीडन्ति काकैरिव लूनपक्षैः ॥ ६७ ॥ कुर्वन्ति तावत्प्रथमं प्रियाणि यावन्न जानन्ति नरं प्रसक्तम्। ज्ञात्वाथ तं मन्मथ-

१ प्रतीकाररहितं पारुष्यं क्रौर्यं यासां ताः. २ तरङ्गः. ३ सायंतनाभ्रमिव क्षणमनुरागिण्यः. ४ निष्पीडितलाक्षारसरञ्जितकार्पासवत्. ५ मरणस्य. ६ दुःखस्य.

पाशबद्धं ग्रस्तामिषं मीनमिवोद्धरन्ति ॥ ६८ ॥ संमोहयन्ति मदयन्ति विडम्बयन्ति निर्भर्त्सयन्ति रमयन्ति विषादयन्ति । एताः प्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ ६९ ॥ स्त्रीणामशिक्षितपटुत्वममानुषीणां संदृश्यते किमुत याः परिबोधवत्यः । प्रागन्तरिक्षगमनात्स्वमपत्यजातमन्यद्विजैः परभृताः किल पोषयन्ति ॥७०॥ अनङ्कुरितकूर्चकः[1] स तु [2]सितोपलाढ्यं पयः स एव धृतकूर्चकः सलवणाम्बुतक्रोपमः । स एव सितकूर्चकः[3] क्कथितगुग्गुलूद्वेगकृद्भवन्ति हरिणीदृशां प्रियतमेषु भावास्त्रयः ॥ ७१ ॥ शृणु हृदय रहस्यं यत्प्रशस्तं मुनीनां न खलु न खलु योषित्संनिधिः संविधेयः । हरति हि हरिणाक्षी क्षिप्रमक्षि क्षुरप्रैः पिहितशमतनुत्रं चित्तमप्युत्तमानाम् ॥ ७२ ॥ शास्त्रज्ञोऽपि प्रकटविनयोऽप्यात्मबोधेऽपि गाढं संसारेऽस्मिन्भवति विरलो भाजनं सद्गतीनाम् । येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती वामाक्षीणां भवति कुटिला भ्रूलता कुञ्चिकेव[4] ॥ ७३ ॥ अपसरत रे दूरादस्मात्कटाक्षविषानलात्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः । इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधैश्चटुलवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ७४ ॥ स्वातन्त्र्यं पितृमन्दिरे च वसतिर्यात्रोत्सवे संगतिर्गोष्ठीपूरुषसंनिधाननियमो वासो विदेशे तथा । संसर्गः[5] सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः पत्युर्वार्धकमीप्सितं प्रवसनं[6] नाशस्य हेतुः स्त्रियः ॥ ७५ ॥ अग्राह्यं हृदयं तथैव वदनं यद्दर्पणान्तर्गतं भावः[7] पर्वतसूक्ष्ममार्गविषमः[8] स्त्रीणां न विज्ञायते । चित्तं पुष्करपत्रतोयतरलं[9] विद्वद्भिराशंसितं नारी नाम विषाङ्कुरैरिव लतादोषैः समं वर्धिता ॥ ७६ ॥ एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं वीक्षन्तेऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः । दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ॥ ७७ ॥ कार्कश्यं स्तनयोर्दृशोस्तरलताऽलीकं मुखे दृश्यते कौटिल्यं कचसंचये प्रवचने मान्द्यं त्रिके स्थूलता । भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये यासां दोषगणो गुणा मृगदृशां ताः किं नराणां प्रियाः ॥ ७८ ॥ भर्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान्कुलीनो युवा दाता कर्णसमः प्रसिद्धविभवः शृङ्गारदीक्षागुरुः[10] । स्वप्राणाधिककल्पिता स्ववनिता स्नेहेन संलालिता तं कान्तं प्रविहाय सैव युवती जारं पतिं वाञ्छति ॥७९॥ आलापैर्मधुरैश्च काश्चिदपरानालोकितैः सस्मितैरन्यान्विभ्रमतल्पनाभिरितरानङ्गैरनङ्गोज्ज्वलैः । आचारैश्चतुरैः परानभिनवैरन्यान्भ्रुवः कम्पनैरित्थं काश्चन रञ्जयन्ति सुदृशो मन्ये मनस्त्वन्यथा ॥ ८० ॥ हासस्तूलकलिकाप्रदीपनपटुर्हस्ताङ्गिनेत्राननं तन्वङ्ग्या विषजातमेव भुजगी वेणी च रोमावलिः । किं च श्रीफलमुन्नतस्तनभरः कामं मनस्तामिमां सर्वाकारविषोग्रमूर्तिमबलां प्राप्यापि यज्जीवति ॥ ८१ ॥ मुक्ताहारलता रणन्मणिमया हैमास्तुलाकोटयो रागः कुङ्कुमसंभवः सुरभयः पौष्प्यो विचित्राः स्रजः । वासश्चित्रदुकूलमल्पमतिभिर्नार्यामहो कल्पितं बाह्यान्तः परिपश्यतां तु निरयो नारीति नाम्ना कृतः ॥ ८२ ॥ आवर्तः संशयानामविनयभवनं पत्तनं साहसानां दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् । दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम् ॥ ८३ ॥

१ अनुद्गतश्मश्रुः. २ शर्करायुक्तं दुग्धमिव सुखावहः. ३ सितकूर्चकस्तु स्त्रीणां क्कथितगुग्गुलवदुद्वेगजनकः न कथमपि संतोषजनक इत्यर्थः. ४ 'चावी' इति लोके. ५ समागमः. ६ प्रवासः. ७ चित्ताभिप्रायः. ८ पर्वतस्यसूक्ष्ममार्गवदतिकठिनः. ९ कमलपत्रगतजलबिन्दुवच्चञ्चलम्. १० उपदेष्टा.

---

## सतीवर्णनम्

यस्य भार्या शुचिर्दक्षा[1] भर्तारमनुगामिनी । नित्यं मधुरवक्त्री च सा रमा[2] न रमा रमा ॥ १ ॥ नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी । अल्पभुङ्मितवक्त्री च देवता सा न मानुषी ॥ २ ॥ असारभूते संसारे सारभूता नितम्बिनी । इति संचिन्त्य वै शंभुरर्धाङ्गे पार्वतीं दधौ ॥ ३ ॥ सैव साध्वी सुभक्तश्च सुस्नेहः सरसोज्ज्वलः । पाकः[3] संजायते यस्याः करादप्युदरादपि ॥ ४ ॥ रूपसंपन्नमग्राम्यं[4] प्रेमप्रायं[5] प्रियंवदम्[6][7] । कुलीनमनुकूलं च कलत्रं[8] कुत्र लभ्यते ॥ ५ ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते ॥ ६ ॥ वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद्गृहम् । प्रासादोऽपि तया हीनो ह्यरण्यसदृशः स्मृतः ॥ ७ ॥ तावत्कुलस्त्रीमर्यादा यावल्लज्जावगुण्ठनम्[9] । हृते तस्मिन्कुलस्त्रीभ्यो वरं वेश्याङ्गनाजनः ॥ ८ ॥ कार्ये दासी रतौ वेश्या भोजने जननीसमा । विपत्तौ बुद्धिदात्री च सा भार्या सर्वदुर्लभा ॥ ९ ॥ वश्यभावेन सुमनाः सुव्रता सुसमाहिता । अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ १० ॥ न कार्येषु न भोगेषु नैश्वर्ये न सुखे तथा । स्पृहा यस्याश्च यथा भर्तुः सा नारी सुखभागिनी ॥ ११ ॥ कल्योत्थानपरा[10] नित्यं गुरुशुश्रूषणे रता । सुसंमृष्टगृहा चैव गोशकृत्कृतलेपना ॥ १२ ॥ श्वश्रूश्वशुरयोः पादौ तोषयन्ती पतिव्रता । मातापितृपरा नित्यं या

१ पवित्रा. २ लक्ष्मीः. ३ पक्वान्नम्; पक्षे,–बालकः. ४ सौन्दर्यपूर्णम्. ५ सद्व्यवहारचतुरम्. ६ प्रेमबहुलम्. ७ मधुरभाषि. ८ पत्नी. ९ लज्जाया अवगुण्ठनं संवरणम्. १० प्रातरुत्थाननियमा.

नारी सा पतिव्रता ॥ १३ ॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः । पत्युर्गतिसमा नास्ति दैवतं वा यथा पतिः ॥ १४ ॥ बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥ १५ ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १६ ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥ १७ ॥ सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १८ ॥ जीवति जीवति नाथे मृते मृता या मुदा मुता मुदिते । सहजस्नेहरसाला कुलवनिता केन तुल्या स्यात् ॥ १९ ॥ प्रतिरजनि प्रतिदिवसं विहर बहिश्चण्डि डिण्डिमं दत्त्वा । कोणवधूदृग्वलितैर्विश्वं पुनराकुलीभवति ॥ २० ॥ दीपदशा कुलयुवती वैदग्ध्येनैव मलिनतामेति । दोषा अपि भूषायै गणिकायाः शशिकलायाश्च ॥ २१ ॥ प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः । अन्यरुदितां शतानि हि समुद्रगाः प्रापयन्त्यब्धिम् ॥ २२ ॥ तल्पे प्रभुरिव गुरुरिव मनसिजशास्त्रे श्रमे भुजिष्येव । गेहे श्रीरिव गुरुजनपुरतो मूर्तेव सा व्रीडा ॥ २३ ॥ ढक्कामाहत्य मदं वितन्वते करिण इव चिरं पुरुषाः । स्त्रीणां करिणीनामिव मदः पुनः स्वकुलनाशाय ॥ २४ ॥ अकरुण कातरमनसा दर्शितनीरा निरन्तरालेयम् । त्वामनुधावति विमुखं गङ्गेव भगीरथं दृष्टिः ॥ २५ ॥ परपतिनिर्दयकुलटाशोषित शठ नेर्ष्यया न कोपेन । दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥२६॥ कार्येषु मन्त्री करणेषु दासी भोज्येषु माता शयनेषु रम्भा । धर्मेऽनुकूला क्षमया धरित्री भार्या च षाड्गुण्यवतीह दुर्लभा ॥ २७ ॥ बहिर्न लोला दृगपाङ्गमूलादुपैति कूलादिव सागरोर्मिः । न वा सतीनामभिलाषबन्धं व्यनक्ति गन्धं कलिकेव चेतः ॥ २८ ॥ लज्जावशावनतमन्थरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनारविन्दम् । तेषामनेकपुरुषव्रणिताधरेषु सक्तिः कथं भवति वेशवधूमुखेषु ॥ २९ ॥ नातः परं कुलमतः परतो न शीलं नातः परं च करुणासदनं मृगाक्ष्याः । यद्बाष्पबिन्दुरपराधवतोऽपि पत्युरुत्सङ्गितेन चरणेन तयापनिन्ये ॥ ३० ॥ मानाग्निवर्धनमहौषधमेतदेव स्त्रीणां सपत्नवनिताद्वयकीर्तनं यत् । अव्याजनिर्भरभयप्रणतोत्तराणां मन्ये विशेषत इदं कुलकन्यकानाम् ॥ ३१ ॥ पदन्यासो गेहाद्बहिरहि[1]फणारोपणसमो निर्जा[2]वासादन्यद्भवनमपरद्वीपतुलितम् । वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः पुमानन्यः कान्ताद्[1]विधुरिव चतुर्थीसमुदितः ॥ ३२ ॥ चतुर्थेऽह्नि स्नातां त्रिदिनविरहात्पाण्डुवदनां रजोमुक्तां तन्वीं चपलनयनां कामकलिताम् । हिमत्वङ्मार्जारीमलयभवगन्धप्रणयिनीमधन्यः को भुङ्क्ते च्युतकुसुमशेषामिव लताम् ॥३३॥ गतागतकुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति । वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३४ ॥ भक्तिः प्रेयसि संश्रिते[3]षु करुणा श्वश्रूषु नम्रं शिरः प्रीतिर्यातृषु गौरवं गुरुजने क्षा[4]न्तिः कृ[5]तागस्यपि । अ[6]म्लाना कुलयोषितां व्रतविधिः सोऽयं विधेयः पुनर्मद्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥ ३५ ॥ अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता तत्पादार्पितदृष्टिरासनविधिस्तस्योप[7]चर्या स्वयम् । सुप्ते तत्र शयीत तत्प्रथमतो ज[8]ह्याच्च शय्यामिति प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्तधर्मागमः ॥ ३६ ॥ शुश्रूषस्व गुरूनकुरु प्रियसखीवृत्तिं सपत्नीजने भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥३७॥ निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता भव स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि । भर्तुर्मित्रजने सनम्रवचना खिन्ना च तद्वैरिषु प्रायः संवननं नतभ्रु तदिदं वीतौषधं भर्तृषु ॥ ३८ ॥ स्नानाम्भो बहु साधिता रसवती देवाग्निकार्योचितः संभारो रचितो विशुद्धवसने कालोचिते योजिते । स्नानं नाथ विधीयतामतिथयः सीदन्ति नान्या त्वरा धन्यं बोधयते शनैरिति पतिं मध्याह्नसुप्तं सती ॥ ३९ ॥ संचारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं चेतः कान्तसमीहितावधि महामानोऽपि मौनावधि । हास्यं चाधरपल्लवावधि पदन्यासावधि प्रेक्षितं सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् ॥ ४० ॥ शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि । सन्नद्धातिथिसत्कृतौ गृहभरे नैस्तन्द्र्यमाबिभ्रती वत्से किं बहुना भजस्व कुशलं भर्तुः प्रिये जाग्रती ॥ ४१ ॥

---

## असतीचरित्रम्

यस्य भार्या विरूपा च क[9]श्मला कलहप्रिया । अधिकाधिकभक्षा च सा ज[10]रा न जरा जरा ॥ १ ॥ एषैव योषितां धन्या शीलं च लभते सुखम् । दिवा पतिव्रता भूयो

१ सर्पः. २ स्वगृहात्.

१ कान्तात्प्रियादन्यः पुमान्वरदचतुर्थ्युदितश्चन्द्र इव दर्शनानर्ह इत्यर्थः. २ भर्तरि. ३ आश्रितेषु. ४ क्षमा. ५ अपराधिनि. ६ प्रफुल्लवदना. ७ पूजा. ८ त्यजेत्. ९ अमङ्गला. १० वृद्धत्वम्.

नक्तं च कुलटा यतः ॥ २ ॥ पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् । तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतिलुब्धाः ॥ ३ ॥ दुर्दिवसे घनतिमिरे दुःसंचारासु नगरवीथीषु । पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ ४ ॥ इह वटवृक्षे यक्षः प्रतिवसति दिवापि यत्र भयशङ्का । तस्मिन्नभिनववध्वा नीता वीतोदयाः क्षणदाः ॥ ५ ॥ सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि । तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ६ ॥ दिवसे घटिकास्त्रिंशत्त्रिंशद्धटिकाः परं रजनौ । लक्ष्यं नगरयुवानस्तात विधातः किमाचरितम् ॥ ७ ॥ आरोपिता शिलायामश्मेव त्वं भवेति मन्त्रेण । मग्नापि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥८॥ कुलपतनं जनगर्हां बन्धनमपि जीवितस्य संदेहम् । अङ्गीकरोति सकलं वनिता परपुरुषसंसक्ता ॥ ९ ॥ सखि सुखयत्यवकाशे प्राप्तः प्रेयान् यथा तथा न गृहे । वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ १० ॥ द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि । प्रहिणोषि भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥ ११ ॥ सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम् । पीयूषेऽपि हि भेषजभावोपहिते भवत्यरुचिः ॥ १२ ॥ इह नगरे प्रतिरथ्यं भुजंगसंबाधरुचिरसंचारे । सुन्दरि मम मतमेतन्नकुलप्रतिपालनं श्रेयः ॥ १३ ॥ केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः कटवः । बन्धक्याः परितोषो न स्यादनभीष्टदंपत्योः ॥ १४ ॥ संदिग्धे परलोके जनापवादे च जगति बहुचित्रे । स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥ १५ ॥ यदि भवति दैवयोगात्पुमान्विरूपोऽपि बन्धकी रहसि । न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥ १६ ॥ यदवधि विवृद्धमात्रा विकसितकुसुमोत्करा शणश्रेणी । पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ १७ ॥ तिमिरेऽपि दूरदृश्या कठिनाश्लेषे च रहसि मुखरा च । दन्तमयवलयराजी गृहपतिशिरसा सह स्फुटतु ॥ १८ ॥ एष्यति मा पुनरयमिति गमने यद्मङ्गलं मयाकारि । अधुना तदेव कारणमवस्थितौ दग्धगेहपतेः ॥ १९ ॥ ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ २० ॥ मया कुमार्यापि न सुप्तमेकया न जारमुत्सृज्य पुमान्विलोकितः । अनेन गोत्रस्थितिपालनेन मे प्रसन्नतामेतु भवोपकारिणी ॥ २१ ॥ पाणौ गृहीतापि पुरस्कृतापि स्नेहेन नित्यं परिवर्धितापि । परोपकाराय भवेदवश्यं वृद्धस्य भार्या करदीपिकेव ॥ २२ ॥ प्रियो मयैवावचितैः प्रसूनैर्हृष्टो हरस्यातनुते सपर्याम् । अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥ २३ ॥ निभृतं निभृतं निभालयन्त्या वरुणाशाभरणायितं पतङ्गम् । गुरुयन्त्रितयापि गोपवध्वा नयनान्तेन निमन्त्रितो मुकुन्दः ॥ २४ ॥ शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा । गणयितुमपि पारयन्ति केचित्प्रियसखि के कथयन्तु जारसंख्याम् ॥ २५ ॥ पतिरतीव धनी सुभगो युवा परविलासवतीषु पराङ्मुखः । शिशुरलंकुरुते भवनं सदा तदपि सा सुदती रुदती कुतः ॥ २६ ॥ नाम्बुजैर्न कुसुमैरुपमेयं स्वैरिणीनयनपङ्कजयुग्मम् । नोदये दिनकरस्य न वेन्दोः केवलं तमसि यस्य विकासः ॥ २७ ॥ दृग्भङ्गभङ्गिमशतैरसतीरहस्यमन्वेषयन्कपटभिक्षुक लक्षितोऽसि । स्वस्य प्रभुर्न च भवामि ततः क्षमस्व भिक्षोपढौकनमिषादयमञ्जलिस्ते ॥ २८ ॥ ब्रह्मैव सत्यमखिलं नहि किंचिदन्यत्तस्मान्न मे सखि परापरभेदबुद्धिः। जारे तथा निजवरे सदृशोऽनुरागो व्यर्थं किमर्थमसतीति कदर्थयन्ति ॥ २९ ॥ जन्मैव मास्तु यदि वा न नितम्बिनीषु तत्रापि चेदहह नैव कुलाङ्गनासु । हा धिग्विधे कुलवधूरथ चेद्भवेयं नैवास्तु च क्वचन मे मनसोऽनुबन्धः ॥ ३० ॥ गोष्ठेषु तिष्ठति पतिर्बधिरा ननान्दा नेत्रद्वयस्य च न पाटवमस्ति यातुः । इत्थं निशम्य तरुणी कुचकुम्भसीम्नि रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३१ ॥ वयं बाल्ये बालांस्तरुणिमनि यूनः परिणतावपीच्छामो वृद्धान् परिणयविधौ नः स्थितिरियम् । त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना न मे गोत्रे पुत्री क्वचिदपि सतीलाञ्छनमभूत् ॥ ३२ ॥ दृशा किंचित्किंचिच्चलितभुजलीलाविलसितैः कराघातैः किंचिन्नखविलिखनैः किंचिदधिकम् । स्पृशन्त्यः संबाधे गुरुभिरनभिप्रेक्षितपथे यथेष्टं चेष्टन्ते स्फुटकुचतटाः पश्य कुलटाः ॥ ३३ ॥ अनार्यप्रज्ञानामिह जनवधूनां हि मनसो महाशल्यं कर्णे तव नवकजम्बूकिसलयः । भ्रमन्भिक्षाहेतोरधिनगरि बुद्धोऽसि न मया त्वयैतावद्द्वेषः पथिक न विधेयः पुनरपि ॥ ३४ ॥ अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः समीरोऽयं वेलानवविदलदेलापरिमलः । इयं प्रावृड्

१ दुर्दिने. २ रात्रयः. ३ स्थापिता. ४ परिणयरूपायामापदि संकटे. ५ भ्रष्टताम्. ६ निन्दाम्. ७ अवसरे. ८ रथ्यायां रथ्यायाम्. ९ सर्पाः; पक्षे,–जाराः. संमर्दः. १० नकुलस्य पालनम्; पक्षे,–न इति पदच्छेदः. ११ कुलप्रतिपालनं न श्रेयः. १२ बन्धकी = कुलटा. १३ अशोककलिका. १४ अशोकतरुतले कृतसंकेतं तत्र गत्वा तदीयमञ्जरीमादाय प्रतिनिवृत्तं दृष्ट्वा गृहव्यापारावेशात्स्वकृतसंकेतभङ्गात्स्वापराधभावनया तस्या मुखच्छाया लज्जया मलिना भवतीत्यर्थः.

१ प्रीत्या; पक्षे,–तैलेन. २ सुन्दरः; अथ च,–सुष्ठु भं नक्षत्रं तस्मिन्गच्छति. कुयोगं त्यक्त्वा भार्या व्रजति. इदमेव रोदनकारणम्. ३ उपमातुं योग्यम्. ४ बाल्यावस्थायाम्. ५ तारुण्ये. ६ वार्धक्ये. ७ इच्छाविषयान्कुर्मः. ८ जनसंमर्दे. ९ व्यापारं कुर्वते. १० स्वैरिण्यः. ११ नर्मदातीरभवं लतागृहम्.

धन्या नवजलदविन्यासचतुरा पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ ३५ ॥ स्थितिर्गेहोपान्ते परिजनपरीहासकलना मुहुर्यातायाते सकृदपि गृहे व्याजगमनम् । मुहुस्तद्वोगेऽपि क्षणपरिचयो वस्तुनि दृशः समुत्पन्नप्रेम्णः सकलमिदमापातसुखदम् ॥ ३६ ॥ नितम्बिन्यो नित्यं विनयपथविन्यस्तमनसः पताकाः स्युः पुत्रि प्रतिनियतमेताः स्वकुलयोः । गुरोरित्यादेशं सदसि सुदृशामोंकृतवती गतातङ्कं राधा हरिमुखमृगाङ्कं मृगयते ॥ ३७ ॥ अये को जानीते निजपुरुषसङ्गो नहि तथा यथा स्त्रीणां चेतः परपुरुषसङ्गो रमयति । अपि स्वैरं भुक्त्वा दिवसमखिलं वासरकृता करस्पर्शादिन्दोर्मुकुलयति नेत्राणि नलिनी ॥ ३८ ॥ ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी घोटीह्रेषा विकृतविरुतं हेतुहीनं हसन्ती । स्थानस्थानस्खलितपदविन्यासमाभासमाना यूनामग्रे वसति कुटिलं नर्तितोच्चैर्नितम्बम् ॥ ३९ ॥ ज्ञाता मैत्री सहजमधुरापातिभिर्लोचितान्तैः कर्णाकर्णि प्रथितमयशो बन्धुवर्गेरभाणि । संप्रत्येवं तदपि न मनाग्मुञ्चति प्राणनाथं को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः ॥ ४० ॥ भ्रूभेदैः कतिचिद्गिरा कुटिलया काश्चित्कियत्यः स्मितैः स्वैरिण्यः कथयन्ति मन्मथरसव्यापारवश्यं मनः । कासांचित्पुनरङ्गकेषु मसृणच्छायेषु मध्यस्थितो भावः काचपुटेषु पुष्करमिव प्रव्यक्तमालोक्यते ॥ ४१ ॥ यः कौमारहरः स एव हि वैरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः । सा चैवास्मि तथापि चौर्यसुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥४२॥ दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यति प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति । एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ ४३ ॥ शुश्रूषस्व गुरून्निवर्तय सखीवृन्दस्य बन्धुस्त्रियः कावेरीतटसंनिविष्टनयने मुग्धे किमुत्ताम्यसि । आस्ते पुत्रि समीप एव गमनादेलालतालिङ्गितन्यञ्चद्वालतमालदन्तुरदरी तत्रापि गोदावरी ॥ ४४ ॥ भद्रं तस्य तरोः स्वयं चिरकृतप्रस्थानकं कथ्यतां दुर्वारस्मरण्यवह्निरदहद्दिग्दारुणं दुर्वचः । मा खिद्यस्व ततः प्रभृत्यनुदिनं तस्याः पतद्भिर्दृशोरम्भोभिः परिणद्धपल्लवघनच्छायस्तरुर्वर्धते ॥ ४५ ॥ स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते वैदग्धीमधुरप्रपञ्चचतुर व्यर्थोऽयमत्र श्रमः ॥ ४६ ॥ आयातासि विमुञ्च वेपथुभरं दृश्यसि नो केनचिन्नीलं चोलममुं विमुञ्च हरतु खेदं निशीथानिलः । इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पं गता जल्पन्ती परिरभ्यते सुकृतिभिः स्वैरं नवस्वैरिणी ॥ ४७ ॥ सव्रीडार्धनिरीक्षणं यदुभयोर्यद्दूतिसंप्रेषणं ह्यश्च श्वो भविता समागम इति प्रीतिप्रसादश्च यः । प्राप्ते कालसमागमे सरभसं यच्चुम्बनालिङ्गनं तत्कामस्य फलं तदेव सुरतं शेषा पशूनां स्थितिः ॥ ४८ ॥ इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते नोच्छ्वासा हृदयं दहन्त्यशिशिरा नो याति कार्श्यं वपुः । स्वाधीनामनुकूलिकां स्वगृहिणीमालिङ्ग्य यत्सुप्यते तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ ४९ ॥ चेच्चौरादपि शङ्कसे हिमरुचोरप्यर्चिषो लज्जसे भोगीन्द्रादपि चेद्बिभेषि तिमिरस्तोमादपि त्रस्यसि । चेत्कुड्यादपि दूयसे जनघटध्वानादपि क्षुभ्यसि प्रायः पुत्रि हताश्चि हन्त भविता त्वत्तः कलङ्कः कुले ॥ ५० ॥ आः पाकं न करोषि पापिनि कथं पापी त्वदीयः पिता रण्डे जल्पसि किं तवैव जननी रण्डा त्वदीया स्वसा । निर्गच्छ त्वरितं गृहाद्बहिरितो नेदं त्वदीयं गृहं हा हा नाथ ममाद्य देहि मरणं जारस्य भाग्योदयः ॥ ५१ ॥ कार्ये सत्यपि जातु याति न बहिर्नाप्यन्यमालोकते साध्वीरप्यनुकुर्वती गुरुजनं श्वश्रूं च शुश्रूषते । विस्रम्भं कुरुते च पत्युरधिकं प्राप्ते निशीथे पुनर्निद्राणे सकले जने शशिमुखी निर्याति रन्तुं विटैः ॥५२॥ आकारेण शशी गिरा परभृतः पारावतश्चुम्बने हंसश्चङ्क्रमणे समं दयितया रत्यां प्रमत्तो गजः । इत्थं भर्तरि मे समस्तयुवतिश्लाघ्यैर्गुणैः सेविते क्षुण्णं नास्ति विवाहितः पतिरिति स्यान्नैष दोषो यदि ॥ ५३ ॥ ज्ञातं ज्ञातिजनैः प्रमृष्टमयशो दूरं गता धीरता त्यक्ता ह्रीः प्रतिपादितोऽप्यविनयः साध्वीपदं प्रोज्झितम् । लुप्ता चोभयलोकसाधुपदवी दत्तः कलङ्कः कुले भूयो दूति किमन्यदस्ति यदसावद्यापि नागच्छति ॥ ५४ ॥ देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो यातंस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते । दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥ ५५ ॥ अम्ब श्वश्रु यदि त्वया हतशुकः संवर्धनीयस्तदा लौहं पञ्जरमस्य दुर्नयवतो गाढान्तरं कारय । अद्यैनं बदरीनिकुञ्जकुहरे संलीनमन्विष्यती दष्टा यन्न भुजङ्गमेन तदतिश्रेयः किमेभिः क्षतैः ॥ ५६ ॥ न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरोस्त्यक्ता प्रीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम् ।

१ सूर्येण. २ जलम्. ३ नवयौवनोपभोक्ता. ४ श्रेष्ठः विलक्षणरतिक्षम इत्यर्थः. ५ कूपसंबन्धिनीः.

१ भगिनी. २ कदाचित्. ३ अनुकरणं कुर्वाणा. ४ विश्वासम्. ५ शयाने. ६ क्रीडितुम्. ७ जारैः. ८ कोकिलः. ९ गमने. १० संबोधनपदम्. 'जातः' इति वा पाठः.

अङ्गानां शतयातना नयनयोः कोऽपि क्रमो रौरवः कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥ ५७ ॥ नारीणां खलु बन्धुरन्धतमसं पाथोधरः सोदरः कुञ्जं नाभिगृहं निशा सहचरी सेव्यः स्मरः क्षमापतिः । इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते तासामेव यशः सुधांशुधवलं तासां च सौख्यं सदा ॥ ५८ ॥ हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता वक्त्रे चन्द्रधिया चकोरवनिता चक्रे नखैरक्रमम् । भृङ्गैः पङ्कजकोरकप्रतिभया वक्षोरुहो वीक्षितस्तन्मातः करवै पुनर्न सरसीतोयावगाहोद्यमम् ॥ ५९ ॥ आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने तत्राप्यर्पयितुं दृशं सुरुचिरां शक्नोमि न व्रीडया । लोकोऽप्येष परोपहासकुशलः सूक्ष्मेङ्गितज्ञोऽप्यलं मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ॥ ६० ॥ कार्येणापि विलम्बनं परगृहे श्वश्रूर्न संमन्यते शङ्कामारचयन्ति यूनि भवनं प्राप्ते मिथो यातरः । वीथीनिर्गमनेऽपि तर्जयति च क्रुद्धा ननान्दा पुनः कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम् ॥ ६१ ॥ एकान्ते बत नो गृहं शशिमुखोऽप्यन्यादृशो दृश्यते क्षिप्रं साधय यातु पुत्रि स दिने भुक्त्वान्यमावासकम् । श्वश्र्वा संभ्रमिता किलेति बहुशः संप्रेरयन्त्या वधूः पान्थं वीक्ष्य बभञ्ज सस्मितमुखी सैवार्धसिद्धौदनम् ॥ ६२ ॥ एते वारिकणाः किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान् । त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥ ६३ ॥ संपत्कस्याद्य तारा भवति तरलिता यत्पुरो नेत्रतारा दृष्टा केनाद्य काञ्ची यदभिमुखगता वेपते रत्नकाञ्ची । उग्रः कस्याद्य तुष्टः सखि यदनुमते कश्चिदुग्रोऽनुतापः स्नातं केनाद्य वेणीपयसि विलुलिता यत्कृते कापि वेणी ॥ ६४ ॥ पश्यन्ति स्निग्धमुग्धं प्रतिकलमधुरैर्मोहयन्त्यङ्गहारैः साकूतैर्मन्दहासैरपि परपुरुषान् शश्वदानन्दयन्ति । चेष्टन्ते चेत एते किमपि परिचयाद्धारयिष्यन्ति तेषां प्राणान्को वेद लोके परजलजदृशां चित्तमत्यन्तलोलम् ॥ ६५ ॥ पृथ्वी तावत्त्रिकोणा विपुलनदनदीग्रावरुद्धं तदर्धं तत्राप्यर्धं युवत्यः शिशुगतवयसो रोगिणो योगिनश्च । त्याज्यास्तत्रापि मान्याः श्वशुरपितृमुखाः सन्ति शेषाः कियन्तो मिथ्यावादो ममायं मुखरमुखरवः पुंश्चली पुंश्चलीति ॥ ६६ ॥

**पान्थसंकेतः**

ग्रामेऽस्मिन्प्रस्तर[1]प्राये न [2]किंचित्पान्थ विद्यते । पयोधरो[3]न्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥ ६७ ॥ पान्थ मन्दमते किंवा संतापमनुविन्दसि । पयोधरं[1] समाशास्व[2] येन शान्तिमवाप्नुयात् ॥ ६८ ॥ वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः । अहमेकाकिनी बाला तवेह वसतिः कुतः ॥ ६९ ॥ त्वमिव पथिक प्रियो[3] मे विटपिस्तोमेषु[4] गमयति क्लेशान् । किमितोऽन्यत्कुशलं मे संप्रति यत्पान्थ जीवामि ॥ ७० ॥ किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः । कथय तथापि मुदे[5] मम कथयिष्यति पान्थ तव जाया ॥ ७१ ॥ यदि गन्तासि दिगन्तं पथिक पतिस्तत्र संबोध्यः । नयनश्रवणविहीना कथमुपचर्या मयैकया जननी ॥ ७२ ॥ निबिडतमतमालमल्लिवल्लीविचकिलराजिविराजितोपकण्ठे । पथिक समुचितस्तवाद्य तीव्रे सवितरि तत्र सरित्तटे निवासः ॥ ७३ ॥ [6]भो पान्थ पुस्तकधर क्षणमत्र तिष्ठ वैद्योऽसि किं गणितशास्त्रविशारदोऽसि । केनौषधेन मम पश्यति भर्तुरम्बा किं वागमिष्यति पतिः सुचिरप्रवासी ॥ ७४ ॥ एकाकिनी यदबला तरुणी तथाहमस्मिन् गृहे गृहपतिश्च गतो विदेशे । कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ ७५ ॥ रथ्यारजोरुणितधूसरिताङ्गयष्टेः कच्चित्पितुः स्मरसि पुत्रक निर्घृणस्य । उक्त्वैवमङ्कगतयायतमायताक्ष्या पान्थस्त्रिया प्ररुदितं करुणं दिनान्ते ॥ ७६ ॥ भवनमिव मदीयं निर्जनः पान्थ पन्थाः कुसुमशर इवास्मिंस्तस्करा दुर्निवाराः । गृहप[7] इव पतङ्गो[8]ऽप्येष यातो दिगन्तान्मदनसुभग भूयो नैव गन्तुं समीहे ॥ ७७ ॥ अहमिव दिनलक्ष्मीः प्रोषितप्राणनाथा त्वमिव पथिक पन्था मुक्तपान्थानुबन्धः । अयमपि परदेशः सोऽपि यत्रासि गन्ता मदनमधुरमूर्ते किं वृथा सत्वरोऽसि ॥ ७८ ॥ यामिन्येषा[9] बहलजलदैर्बद्धभीमान्धकारा[10] निद्रां यातो मम पतिरसौ क्लेशितः कर्मदुःखैः[11] । बाला चाहं मनसिज[12]भयात्प्राप्तगाढप्रकम्पा ग्रामश्चोरैरयमुपहतः पान्थ निद्रां जहीहि ॥ ७९ ॥ कुत्रायासीः किमिवमकरोः साहसं पान्थ बन्धो यद्येतस्मिन्निवससि पुरे सावधानस्तदा स्याः । अत्रोत्तालाः कतिचिदबलाः सन्ति यासां विलासैरुत्पद्यन्ते सपदि मदनव्याधयो दुर्निवाराः ॥ ८० ॥ इयं सुरतरंगिणी[13] न पुनरत्र नौसंगमो[14] भवेत्तरणि[15]मज्जनं पथिक नैव

१ पाषाणबहुले; पक्षे,-पाषाणतुल्ये. २ आस्तरणादिकम्; पक्षे,-समागमप्रतिबन्धकम्. ३ मेघानामुन्नतिः पर्जन्यागमसंकेत इति यावत्; पक्षे,-स्तनयोरुन्नतिः.

१ मेघम्; पक्षे,-स्तनम्. २ सम्यक्प्रार्थनां कुरु. ३ कान्तः. ४ वृक्षसमूहेषु. ५ हर्षाय. ६ कक्षे पुस्तकधारिणं पान्थं प्रति कस्याश्चित्कामिन्याः स्वाभिप्रायद्योतकोक्तिः. औषधप्रश्नेन श्वश्र्वा अन्धत्वं सूचितम्. प्रोषितस्य पत्युः कदागमनं भविष्यतीति प्रश्नेन सोऽपि गृहे नास्तीति सूचितम्. ७ गृहस्वामीव. ८ सूर्यः. ९ रात्रिः. १० भयंकरगाढान्धकारा. ११ कर्मजन्यैर्दुःखैः श्रान्त इत्यर्थः. १२ उक्तैर्हेतुभिर्मनसि जातं यद्भयं तस्मात्; पक्षे,-कामभयात्. १३ सुराणां तरंगिणी नदी; पक्षे,-सुरतरञ्जनशीला. १४ नौसंगमः नौकाप्राप्तिः; पक्षे,-आवयोः समागमः. १५ तरणिः सूर्यः; पक्षे,-नौका.

पान्थागमः। निधाय हृदये सदा विपुलचारुकुम्भद्वयं सखे घनघनागमे धनरसस्य[1] पारं व्रज ॥ ८१ ॥ वाणिज्येन[2] गतः स मे गृहपतिर्[3]वार्तापि न श्रूयते प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता। बालाहं नवयौवना निशि कथं स्थातव्यमस्मिन्गृहे सायं संप्रति वर्तते पथिक हे स्थानान्तरं गम्यताम् ॥ ८२ ॥ रे रे पान्थ कुतो भवान्नगरतो वार्ता न चापि श्रुता बाढं[4] ब्रूहि युवा पयोद[5]समये हित्वा प्रियां जीवति। सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ ८३ ॥ शून्यं वेश्म चिरायितो[6] गृहपतिर्जाताधुना शर्वरी स्थातुं नोचितमत्र गच्छ निभृतं लोकैर्[7]नालक्षितः। इत्थं लोलदृशा ह्यसावभिहितो दासीमुखेनाध्वगः स्थित्वा किंचिदिव क्व यामि रजनी प्राप्तेत्युदीर्य[8] स्थितः ॥ ८४ ॥ स्मर्तव्या वयमिन्दुसुन्दरमुखि प्रस्तावतो[9]ऽपि त्वया स्यादेवं यदि नाथ दास्यति विधिर्जातिस्मरत्वं मम। एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कुतः प्राणाः पान्थ समं त्वयैव चलिताः क्वापि जन्मैकता ॥ ८५ ॥ भ्रातः पान्थ पथि त्वया न पथिकः कश्चित्समासादितो बाले नैकशतानि कीदृश इति प्रख्यायतां वल्लभः। यं दृष्ट्वा प्रमदाजनस्य भवतः स्फारे मुदा लोचने स ज्ञेयो दयितो ममेति पथिकायावेद्य मोहं गता ॥ ८६ ॥ भो पान्थ त्वरितोऽसि तिष्ठ निमिषं किंचिद्वदामो वयं मार्गोऽयं पुरतो द्विधा खलु भवेद्वा[10]मेन नो गम्यताम्। तत्रास्ते सहकारकोमलतरोर्मूले प्रपापालिका तस्या लोचन[11]वागुरानिपतितो न त्वं पुनर्यास्यसि ॥ ८७ ॥ नाथो मे विपणिं[12] गतो न गणयत्येषा सपत्नी च मां त्यक्त्वा मामिह पुष्पिणीति[13] गुरवो याता गृहाभ्यन्तरम्। शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते स्वामिन्नागम[14]लालनीय रजनीं[15] लक्ष्मीपते रक्ष माम् ॥ ८८ ॥

## वेश्यागर्हणम्

वेश्यासौ[16] मदनज्वाला रूपेन्धन[17]समेधिता। कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १ ॥ अयं च सुरतज्वालाकामाग्निः प्रणयेन्धनः। नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ २ ॥ इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः। निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥ ३ ॥ धनाशा कैतवस्नेहो[1] वितथैश्चित्त[2]तोषणम्। एकमप्यस्ति नात्मासु कथं वेश्यासमा वयम् ॥ ४ ॥ कष्टं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः। दिवसे दिवसे मरणं परस्य यच्चित्तरञ्जनं वृत्तिः ॥ ५ ॥ न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति। यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः ॥ ६ ॥ हारहीरकहिरण्यभूषणैस्तोषमेति गणिका धनैषिणी[3]। प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाङ्गनाजनः ॥७॥ एता हसन्ति च रुदन्ति च वित्तहेतोर्विश्वासयन्ति पुरुषं न च विश्वसन्ति। तस्मान्नरेण कुलशीलसमन्वितेन वेश्याः श्मशान[4]घटिका इव वर्जनीयाः ॥८॥ जात्यन्धाय[5] च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च ग्रामीणाय[6] च दुष्कुलाय च गलत्कुष्ठाभिभूताय च। यच्छन्तीषु[7] मनोहरं निजवपुर्लक्ष्मीलव[8]श्रद्धया पण्यस्त्रीषु[9] विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ९ ॥ केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनाङ्गनान् यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवस्तनस्तिष्ठति। प्रेमच्छेदकृपाणवल्लिसुषमां रोमालिरालम्बते यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥ १० ॥ वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा। ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥ ११ ॥

## अष्टनायिकाः

### स्वाधीनपतिका

यदपि रतिमहोत्सवे नकारो यदपि करेण च नीविधारणानि। प्रियसखि पतिरेष पार्श्वदेशं तदपि न मुञ्चति तत्किमाचरामि ॥ १ ॥ मा गर्वमुद्वह कपोलतले चकास्ति कान्त स्वहस्तलिखिता मम मञ्जरीति। अन्यापि किं न सखि भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरायः ॥ २ ॥ अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः। किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः पतिर्नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितम् ॥ ३ ॥ श्वश्रूः पश्यति नैव पश्यति यदि भ्रूभङ्गवक्रेक्षणा मर्मच्छेदपटु प्रतिक्षणमसौ ब्रूते ननान्दा वचः। अन्यासामपि किं ब्रवीमि चरितं स्मृत्वा मनो वेपते कान्तः स्निग्धदृशा

---

१ उदकस्य. २ वाणिज्यार्थं परदेशं गतः. ३ भर्ता. ४ सत्यम्. ५ वर्षाकाले. ६ चिरकालं दूरं गतः. ७ अदृष्टः. ८ उक्त्वा. ९ गोष्ठीप्रसङ्गेन. १० वामभागेन. ११ लोचनमेव वागुरा मृगबन्धिनी. जालमित्यर्थः. १२ पण्यवीथिका. १३ रजस्वला. १४ आगमेन वेदेन लालनीयः स्तुत्यः. पक्षे,—आगमनेन लालनीयः. १५ रजनीं व्याप्येत्यर्थः १६ वाराङ्गना. १७ रूपमेवेन्धनं काष्ठं तेन सम्यक्प्रदीप्ता.

१ कपटस्नेहः. २ असत्यगोष्ठीभिः. ३ धनेच्छावती. ४ श्मशानस्थिता घटिकाः. घटयो घटा इति यावत्. एता यथा अस्पृश्यास्तथैव ता वर्जनीया इति भावः. ५ जन्मनान्धाय. ६ ग्राम्याय. ७ अर्पयन्तीषु. ८ लक्ष्मीलेशाशया. ९ गणिकासु.

तर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम्। आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३२ ॥ दैन्यं क्वचित्क्वचन मन्मथजा विकाराः कुत्राप्यनेकविधबन्धुजनप्रपञ्चः। क्वापि प्रभुत्वधनकल्पितमीश्वरत्वमित्येकवैकृतमिदं जगदाविभाति ॥ ३३ ॥ आस्तामकण्टकमिदं वसुधाधिपत्यं त्रैलोक्यराज्यमपि नैव तृणाय मन्ये। निःशङ्कसुप्तहरिणीकुलसंकुलासु चेतः परं वलति शैलवनस्थलीषु ॥ ३४ ॥ ते तीक्ष्णदुर्जननिकारशरैर्न भिन्ना धीरास्त एव शमसौख्यभुजस्त एव। सीमन्तिनीभुजलतागहनं व्युदस्य येऽवस्थिताः शमफलेषु तपोवनेषु ॥ ३५ ॥ बुद्धेरगोचरतया न गिरां प्रचारो दूरे गुरुप्रथितवस्तुकथावतारः। तत्त्वं क्रमेण विदुषां करुणावदाते श्रद्धावतां हृदि पदं स्वयमादधाति ॥ ३६ ॥ दधति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता। मनसि तत्त्वविदां तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ३७ ॥ क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः। जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुर्नरः संसाराङ्के विशति यमधानीजवनिकाम् ॥ ३८ ॥ क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरः क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनः। क्वचिद्भिक्षावृत्तिः क्वचिदपि च मृष्टाशनरुचिर्महात्मा योगज्ञो न गणयति दुःखं न च सुखम् ॥ ३९ ॥ अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा। तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥ ४० ॥ गतास्तातभ्रातृप्रमुखसुखपीयूषमधुराः पुरा लक्ष्मीक्षैब्यव्यसनसरसास्तेऽपि दिवसाः। अदः शान्तं स्वान्तं सपदि यदि निर्वेदपदवीं भजत्यभ्यासोऽयं जनयति सुखं भावविमुखम् ॥ ४१ ॥ अवश्यं यातारश्चिरतरमुषित्वापि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून्। व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ४२ ॥ न संसारोत्पन्नं चरितमनुपश्यामि कुशलं विपाकः पुण्यानां जनयति भयं मे विमृशतः। महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ४३ ॥ धनं तावल्लब्धं कथमपि तथाप्यस्य नियतं विनाशेऽलाभे वा तव सति वियोगोऽप्युभयथा। अनुत्पादः श्रेयान्किमु कथय तस्याथ विलयो विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥ ४४ ॥ परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम्। प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे विविक्तः संकल्पः किमिव हि फलं पुष्यति न ते ॥ ४५ ॥ यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं सहार्यैः संलापः श्रुतमुपशमैकव्रतफलम्। मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृशन्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ४६ ॥ तडिन्मालालोलं प्रतिदिवसदत्तान्धतमसं भवे सौख्यं हित्वा शमसुखमुपादेयमनघम्। इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो वयं वीतव्रीडाः शुक इव पठामः परममी ॥ ४७ ॥ यदासौ दुर्वारः प्रसरति मदश्चित्तकरिणस्तदा तस्योद्दामप्रसररसरूढैर्व्यवसितैः। क्व तद्धैर्यालानं क्व च निजकुलाचारनिगडः क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ ४८ ॥ कुरङ्गाः कल्याणं प्रतिविटपमारोग्यमटवि स्रवन्ति क्षेमं ते पुलिनकुशलं भद्रमुपलाः। निशान्तादस्वन्तात्कथमपि विनिष्क्रान्तमधुना मनोऽस्माकं दीर्घामभिलषति युष्मत्परिचितिम् ॥ ४९ ॥ गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति। इदानीमस्माकं जरठकमठीपृष्ठकठिना मनोवृत्तिस्तत्किं व्यसनिनि मुधैव ग्लपयसि ॥ ५० ॥ गतः कालो यत्र द्विचरणपशूनां क्षितिभुजां पुरः स्वस्तीत्युक्त्वा विषयसुखमास्वादितमभूत्। इदानीमस्माकं तृणमिव समस्तं कलयतामपेक्षा भिक्षायामपि किमपि चेतस्त्रपयति ॥ ५१ ॥ अहंकार क्वापि व्रज वृजिन हे मा त्वमिह भूरभूमिर्दर्पाणामहमपसर त्वं पिशुन हे। अरे क्रोध स्थानान्तरमनुसरानन्यमनसां त्रिलोकीनाथो नो हृदि वसतु देवो हरिरसौ ॥ ५२ ॥ अतिक्रान्तः कालो ललितललनाभोगसुखदो भ्रमन्तः शान्ताः स्मः सुचिरमिह संसारसरणौ। इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः सुतारैः फूत्कारैः शिवशिवशिवेति प्रतनुमः ॥ ५३ ॥ महाशय्या भूमिर्मसृणमुपधानं भुजलता वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः। स्फुरद्दीपश्चन्द्रः स्वधृतिवनितासङ्गमुदितः सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥ ५४ ॥ कदा वृन्दारण्ये नवघननिभं नन्दतनयं परीतं गोपीभिः क्षणरुचिमनोज्ञाभिरभितः। गमिष्यामस्तोषं नयनविषयीकृत्य कृतिनो वयं प्रेमोद्रेकस्खलितगतयो वेपथुभृतः ॥ ५५ ॥ कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम्। कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥ ५६ ॥ कदा वृन्दारण्ये विमलयमुनातीरपुलिने चरन्तं गोविन्दं हलधरसुदामादिसहितम्। अये कृष्ण स्वामिन् मधुरमुरलीवादन विभो प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि

१ पद्धतौ. २ स्वर्णैः. ३ पर्यङ्कः. ४ मृदु. ५ उल्लोचः. ६ स्वधृतिः स्वीयं धैर्यं तदेव वनिता स्त्री तस्याः सङ्गेन मुदितो हृष्टः सन्.

दिवसान् ॥ ५७ ॥ कदा वा साकेते[1] विमलसरयूतीरपुलिने चरन्तं श्रीरामं जनकतनयालक्ष्मणयुतम् । अये राम स्वामिञ्जनकतयावल्लभ विभो प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ५८ ॥ कदा वाराणस्याममरतटिनीरोधसि[2] वसन्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् । अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ५९ ॥ भूः पर्यङ्को निजभुजलतागेन्दुकः[3] खं वितानं दीपश्चन्द्रो विरतिवनितालब्धयोगप्रमोदः । दिक्कन्यानां व्यजनपवनैर्वीज्यमानोऽनुकूलैर्भिक्षुः शेते नृप इव सदा वीतरागो जितात्मा ॥ ६० ॥ आसंसारात्त्रिभुवनमिदं चिन्वतां तात तादृङ्नो वाऽस्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा । योऽयं धत्ते विषयकरिणीगाढगूढाभिमानक्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ६१ ॥ आयुर्वायुव्यथितनलिनीपत्रमित्रं किमन्यत्संपच्छम्पाद्युतिसहचरी स्वैरचारी कृतान्तः । कस्मादस्मिन्भ्रमसि तमसि त्वं प्रयाहि प्रयागं पौनःपुन्यं भुवि भगवती स्वर्धुनी ते धुनीते ॥ ६२ ॥ पूर्वं तावत्कुवलयदृशां लोललोलैरपाङ्गैराकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः । संप्रत्यन्तर्निहितसदसद्भावलब्धप्रबोधप्रत्याहारैर्विश[...]दये वर्तते कोऽपि भावः ॥ ६३ ॥ मातर्माये भगिनि कुमते हे पितर्मोहजाल व्यावर्तध्वं भवतु भवतामेष दीर्घो वियोगः । सद्यो लक्ष्मीरमणचरणभ्रष्टगङ्गाप्रवाहव्यामिश्रायां दृषदि परमब्रह्मदृष्टिर्भवामि ॥ ६४ ॥ गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य ब्रह्मज्ञानाभ्यसनविधिना योगनिद्रां गतस्य । किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः कण्डूयन्ते जरठहरिणाः शृङ्गमङ्गे मदीये ॥ ६५ ॥ भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे मायामोहौ क्षयमुपगतौ नष्टसंदेहवृत्तेः । शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६६ ॥ यद्वात्मानं सकलवपुषामेकमन्तर्बहिःस्थं दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् । नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६७ ॥ हेम्नः कार्यं हुतवहगतं हेममेवेति यद्वत्क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये । एवं सर्वं समरसतया त्वंपदं तत्पदार्थे निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६८ ॥ यस्मिन्विश्वं सकलभुवनं सामरस्यैकभूतमुर्वी ह्यापोऽनलमनिलखं जीवमेवं क्रमेण । यत्क्षाराब्धौ समरसतया सैन्धवैकत्वभूतं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६९ ॥ यद्वन्नद्योदधिसमरसौ सागरत्वं ह्यवाप्तौ तद्वज्जीवालयपरिगतौ सामरस्यैकभूतौ । भेदातीतं परिलयगतं सच्चिदानन्दरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७० ॥ दृष्ट्वा वेद्यं परमथ पदं स्वात्मबोधस्वरूपं बुद्ध्वात्मानं सकलवपुषामेकमन्तर्बहिःस्थम् । भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७१ ॥ कार्याकार्ये किमपि सततं नैव कर्तृत्वमस्ति जीवन्मुक्तस्थितिरवगतो दग्धवस्त्रावभासः । एवं देहे प्रविलयगते तिष्ठमानो विमुक्तो निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७२ ॥ कस्मात्कोऽहं किमपि च भवान्कोऽयमत्र प्रपञ्चः स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् । आनन्दाख्यं समरसघने बाह्यमन्तर्विहीने निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७३ ॥ किं कंदर्प करं कदर्थयसि रे कोदण्डटङ्कारितैः रे रे कोकिल कोमलैः कलरवैः किं त्वं मुधा वल्गसि । मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ७४ ॥ मातर्मेदिनि तात मारुत सखे ज्योतिः सुबन्धो जल भ्रातर्व्योम निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः । युष्मत्सङ्गवशोपजातसुकृतोद्रेकः स्फुरन्निर्मलज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ७५ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती[1] वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ७६ ॥ येषां वल्लभया सह क्षणमपि क्षिप्रं क्षपा क्षीयते तेषां शीतकरः शशी विरहिणामुल्केव संतापकृत् । अस्माकं तु न वल्लभा न विरहस्तेनोभयभ्रंशिनामिन्दू राजति दर्पणाकृतिरसौ नोष्णो न वा शीतलः ॥ ७७ ॥ धावन्तः प्रतिवासरं दिशि दिशि प्रत्याशया संपदां दृष्ट्वा कालवशेन हन्त पलितं कस्यापि दैवद्रुमम् । श्रावं श्रावमवज्ञयोपहसितं सर्वत्र भग्नोद्यमा[2] जीवामः परमार्थशून्यहृदयास्तृष्णा मनोमोदकैः ॥ ७८ ॥ सन्त्येके धनलाभमात्रगहनव्यामोहसंमूर्च्छिताः केचिद्दैवतसुन्दरीस्तनपरीरम्भभ्रमव्याकुलाः । अन्तर्भूतसमस्ततत्त्वनिवहं चिन्मात्रशेषं शिवं दृष्ट्वा हृष्टतनूरुहाङ्कुरभराः कष्टं न शिष्टाः क्वचित् ॥ ७९ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ८० ॥ यत्रैकं श्रुतमक्षरं पशुपतेर्हेतुः श्रुतीनां कृतौ सद्यो रोहति चाष्टधा तनुभृतां यत्रैकमुद्यद्वपुः । यत्रैकाभ्रनदीकणेऽपि विधृते सर्वैव सा धार्यते सा दृष्टाद्भुतवैभवा कविगिरां पारे हि

१ अयोध्यायाम्. २ भागीरथीतीरे. ३ उपधानम्.

१ नक्रः. २ अम्भसां भ्रमः.

वाराणसी ॥ ८१ ॥ स्मारस्मेरमदोन्नमत्कुचतटीकान्ताकरान्दोलितैः पुष्पाम्भोनिचितैरुशीररचितैः किं तालवृन्तैर्मम । अन्वानन्दवनं मुखं शिशयिषोरर्धप्रमीलद्दृशो यातायातपरिश्रमं शमयिता गङ्गातरङ्गानिलः ॥ ८२ ॥ एकद्वैः किमभावि सूरिभिरथ द्वित्राणि मित्राणि किं व्यापन्नानि गताश्च किं त्रिचतुरा घोरा महाव्याधयः । सप्ताष्टैरलमिष्टमेतदपि नश्चेतः क्षणान्पञ्चषान्स्वात्मन्येव रमस्व तेजसि गते कालेऽथ वा सर्वतः ॥ ८३ ॥ नित्यानित्यविचारणा प्रणयिनी वैराग्यमेकं सुहृन्मित्राण्येव यमादयः शमदमप्रायाः सखायो मताः । मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा बलादुच्छेद्या रिपवश्च मोहममतासंकल्पवैरादयः ॥ ८४ ॥ पुण्यैर्मूलफलैः प्रियप्रणयिनीं वृत्तिं कुरुष्वाधुना भूशय्यां नवपल्लवैः कुरु तृणैरुत्तिष्ठ यामो वने । क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा वित्तव्याध्यविवेकसंकुलगिरां नामापि न श्रूयते ॥ ८५ ॥ भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परे गिरिसुताकान्तालयालंकृते । अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ८६ ॥ कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः । द्रव्यौघाः परिसंचिताः खलु मया यस्याः कृते सांप्रतं नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः ॥ ८७ ॥ रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः । निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे निःशङ्कं करटः[1] कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ ८८ ॥ सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुणज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा । यैरेषापि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥ ८९ ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् । शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ९० ॥ शय्या शार्दूलमासनं शुचि शिला सद्म द्रुमाणामधः शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः । इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ ९१ ॥ याच्ञाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा व्यालानां पशवस्तृणाङ्कुरभुजः सुस्थाः स्थलीशायिनः । संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ९२ ॥ बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः । हातव्योऽयमसार एष विरसः संसार इत्यादिकं सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ९३ ॥ पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखितस्तद्दुःखादिकमार्जने तदनये तन्मूर्खताद्दुःखितः । जातश्चेत्सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥ ९४ ॥ आहारः फलमूलमात्मरचितं शय्या मही वल्कलं संवीताय परिच्छदः कुशसमित्पुष्पाणि पुत्रा मृगाः । वस्त्रान्नाश्रयदानभोगविभवा निर्यन्त्रणाः शाखिनो मित्राणीत्यधिकं गृहेषु गृहिणां किं नाम दुःखाद्दते ॥ ९५ ॥ सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तस्मिन्न मोदामहे क्रूरां वाचमसूयको विषमुचं तस्मिन्न खिद्यामहे । या यस्य प्रकृतिः स तां वितनुतां किं नस्तया चिन्तया कुर्मस्तत्खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ ९६ ॥ यत्क्षान्तिः समये श्रुतिः शिव शिवेत्युक्तौ मनोनिर्वृतिर्भैक्षे चाभिरुचिर्धनेषु विरतिः शश्वत्समाधौ रतिः । एकान्ते वसतिर्गुरौ प्रतिनतिः सद्भिः समं संगतिः सत्त्वे प्रीतिरनङ्गनिर्जितिरसौ सन्मुक्तिमार्गे स्थितिः ॥ ९७ ॥ संभोगाद्विषयामिषस्य परितः सौहित्यमस्याखिलज्ञानोन्मेषतया कथं तव भवेदत्यास्पदं देहिनः । साध्यं तद्धि तदेव साधनमितो व्यावृत्तिरेवामिषात्तस्यां ज्योतिरुपैत्यनिन्धनमिदं दोषत्रयं धक्ष्यति ॥ ९८ ॥ सत्यं वक्तुमशेषमस्ति सुलभा वाणी मनोहारिणी दातुं दानवरं शरण्यमभयं स्वच्छं पितृभ्यो जलम् । पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं क्षुद्व्याधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः ॥ ९९ ॥ जिह्वे लोचन नासिके श्रवण हे त्वक् चापि नो वार्यसे सर्वेभ्योऽस्तु नमः कृताञ्जलिरहं सप्रश्रयं प्रार्थये । युष्माकं यदि संमतं तदधुना नात्मानमिच्छाम्यहं होतुं भूमिभुजां निकारदहनज्वालाकराले गृहे ॥ १०० ॥ भिक्षाहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् । सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं शंभोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ १०१ ॥ मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भूर्भोगेभ्यः स्पृहयालवो नहि वयं का निःस्पृहाणामसि । सद्यःस्यूतपलाशपत्रपुटके पात्रे पवित्रीकृते भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे[2] ॥ १०२ ॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी[3] सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः । शय्या भूमि-

१ काकः. २ नवतृणमयम्.

१ उपजीव नम्. २ वांछामहे. ३ गृहस्था पत्नी. ४ पुत्रः. ५ मनोनिग्रहः.

तलं दिशोऽपि वसनं ज्ञानामृतं भोजनमेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०३ ॥ संध्यावन्दन भद्रमस्तु भवते भो स्नान तुभ्यं नमो भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम्। यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥ १०४ ॥ एणाक्षीस्पृहयालुता न कथमप्यास्ते विवेकोद्यान्नित्यं प्रच्युतिशङ्कया क्षणमपि स्वर्गे न मोदामहे । अप्यन्येषु विनाशिवस्तुविषयाभोगेषु तृष्णा न मे स्वर्णद्याः पुलिने[१] परं हरिपदध्यानं मनो वाञ्छति ॥ १०५ ॥ जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं पुत्रा मित्रमरातयो वसु बलं विद्या सुहृद्बान्धवाः। चित्तस्पन्दितकल्पनामनुभवन्विद्वानविद्यामयीं निद्रामेत्य विघूर्णितो बहुविधान्स्वप्नानिमान्पश्यति ॥ १०६ ॥ लाटीनेत्रपुटीपयोधरघटीक्रीडाकुटीदोस्तटीपाटीरद्रुमवर्णनेन कविभिर्मूढैर्दिनं नीयते । गोविन्देति जनार्दनेति जगतां नाथेति कृष्णेति च व्याहारैः समयस्तदेकमनसां पुंसामतिक्रामति ॥ १०७ ॥ वेदस्याध्ययनं कृतं परिचितं शास्त्रं पुराणं स्मृतं सर्वं व्यर्थमिदं पदं न कमलाकान्तस्य चेत्कीर्तितम्। उत्खातं सदृशीकृतं विरचितः सेकोऽम्भसा भूयसा सर्वं निष्फलमालवालवलये क्षिप्तं न बीजं यदि ॥ १०८ ॥ हेयं हर्म्यमिदं निकुञ्जभवनं [३]श्रेयं प्रदेयं धनं पेयं तीर्थपयो हरेर्भगवतो गेयं पदाम्भोरुहम्। नेयं जन्म चिराय दर्भशयने धर्मे निधेयं मनः स्थेयं तत्र सितासितस्य सविधे ध्येयं पुराणं महः ॥ १०९ ॥ गङ्गोत्तुङ्गतरङ्गरिङ्गणलघूत्सर्पन्मरुच्छीतलान्गुञ्जन्षट्पदमञ्जुवञ्जुलमसत्कुञ्जोपकण्ठान्मुदा । अध्यास्य प्रणिधाय मानसमहो शंभोः पदाम्भोरुहे धन्याः प्राप्य परं पदं प्रतिदिनं नन्दन्ति योगं विना ॥ ११० ॥ कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी निश्चिन्तं सुखसाध्यभैक्ष्मशनं शय्या श्मशाने वने । मित्रामित्रसमानता पशुपतेश्चिन्ताथ शून्यालये स्वात्मानन्दमदप्रमोदमुदितो योगी सुखं तिष्ठति ॥ १११ ॥ धिग्धिक्तान्कृमिनिर्विशेषवपुषः स्फूर्जन्महासिद्धयो निष्पन्दीकृतशान्तयोऽपि च तमःकारागृहेष्वासते । तं विद्वासमिह स्तुमः करपुटीभिक्षान्नशाकेऽपि वा बालावक्त्रसरोजिनीमधुनि वा यस्याविशेषो रसः ॥ ११२ ॥ पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं वस्त्रं विस्तीर्णमाशादशकममलिनं तल्पमस्वल्पमुर्वी । येषां निःसङ्गताङ्गीकरणपरिचितिः स्वान्तसंतोषिणस्ते धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ११३ ॥ आशा निष्ठा प्रतिष्ठा मम किल महिलास्तासु सौख्यं कदा स्याद्या प्रान्त्या सा विदध्यादिह किमपि तथा मध्यमा सा परत्र । आद्या सा नोभयत्राप्यहह तदपि किं सक्ततां यामि तस्यां या प्रौढ्यादप्रगल्भे प्रतिदिवसमुभे ते कदर्थीकरोति ॥ ११४ ॥

१ वस्त्रम्. २ तीरे. ३ आश्रयणीयम्.

### विषयोपहासः

नित्यमाचरतः शौचं कुर्वतः पितृतर्पणम्। यस्य नोद्विजते चेतः शास्त्रं तस्य करोति किम् ॥ ११५ ॥ कृमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी । स कायः परतापाय युज्यतामिति को नयः ॥ ११६ ॥ रक्तमांसमयः कायः स्त्रीणां स्पर्शसुखाय नः । तमेवाश्नन्ति सिंहाद्या रम्यं नास्तीह वस्तुतः ॥ ११७ ॥ अङ्गमङ्गेन संपीड्य मांसं मांसेन तु स्त्रियः । पुराहमभवं प्रीतो यत्तन्मोहविजृम्भितम् ॥ ११८ ॥ उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे । क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ ११९ ॥ दृष्ट्वैव विकृतं कायं वायुस्पर्शविवर्जितम् । ये तु निर्व्याजमासक्तास्तेभ्योऽपि बिभिमो वयम् ॥ १२० ॥ अन्यत्र भीष्माद्गाङ्गेयादन्यत्र च हनूमतः । हरिणीखुरमात्रेण चर्मणा मोहितं जगत् ॥ १२१ ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ । विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ १२२ ॥ चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम्। ये रमन्ते नरास्तत्र कृमितुल्याः कथं न ते ॥ १२३ ॥ सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ १२४ ॥ लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ । मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥ १२५ ॥ दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ १२६ ॥ केशः काशस्तबकविलासः कायः प्रकटितकरभविलासः । चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥ १२७ ॥ आलोचनं च वचनं च निगूहनं च यासां स्मरन्नमृतवत्सरसं कृशस्त्वम् । तासां किमङ्ग पिशितास्रपुरीषपात्रं गात्रं स्मरन्मृगदृशां न निराकुलोऽसि ॥ १२८ ॥ प्रादुर्भवन्ति वपुषः कति नाम कीटा यान्यत्नतः खलु तनोरपसारयन्ति । मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥ १२९ ॥ स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् । स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनं परं निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ १३० ॥ तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि क्षुधार्तः सञ्शालीन्कवलयति मांसाज्यकलितान्। प्रदीप्ते कामाग्नौ सुदृढतरमाश्लिष्यति वधूं प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः ॥ १३१ ॥ कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो

१ उत्तमान्नपानादिकृताहंकारनाशकस्य. २ नाशनोपायः.

व्रणी पूयक्लिन्नः कृमिकुलशतैराचिततनुः। क्षुधाक्षामो जीर्णः पिठरककपालावृतगलः शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ १३२ ॥ श्रियो दोलालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं महदपि धनं भूरि निधनम्। बृहच्छोको लोकः सततमबला दुःखबहलास्तथाप्यस्मिन्घोरे पथि बत रता हन्त कुधियः ॥ १३३ ॥ समाश्लिष्यत्युच्चैर्घनपिशित[1]पिण्डं स्तनधिया मुखं लालाक्लिन्नं पिबति चषकं[2] [3]सासवमिव। अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको महामोहान्धानां किमिव रमणीयं न भवति ॥ १३४ ॥ बाला मामियमिच्छतीन्दुवदना सानन्दमुद्वीक्षते नीलेन्दीवरलोचना पृथुकुचोत्पीडं परीरप्सते। का त्वामिच्छति का च पश्यति पशो मांसास्थिभिर्निर्मिता नारी वेद न किंचिदत्र स पुनः पश्यत्यमूर्तः पुमान् ॥ १३५ ॥ आस्यं यस्याः सुधांशुं कलयति नयनाभ्यां जितः पुंसमूहः कान्त्या विद्युत्कुचाभ्यां तरुणजलरुहे निर्जितेऽस्याः सुधांशुम्। कुष्ठं दुर्गन्धियुक्तं लघुकृमिविकृतं पूयमज्जास्रवाहिव्याप्तं तन्मक्षिकाभिर्गतिरिति वपुषः कुत्सिता नास्ति लोके ॥ १३६ ॥ क्वैतद्वक्त्रारविन्दं क्व तदधरमधु क्वायतास्ते कटाक्षाः क्वालापाः कोमलास्ते क्व च मदनधनुर्भङ्गुरो भ्रूविलासः। इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालम् ॥ १३७ ॥

## गर्भवासप्रयुक्तं दुःखम्

[4]कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम्। मूर्च्छामाप्नोत्यु[5]रुक्लेशो गर्भस्थैः क्षुधितैर्भृशम् ॥ १३८ ॥ कटुतीक्ष्णोष्णलवणक्षाराम्लादिभि[6]रुल्बणैः। मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ १३९ ॥ [7]उल्बेन संवृ[8]तस्तस्मिन्नान्त्रैश्च बहिरावृतः। आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ १४० ॥ [9]अकल्पः [10]स्वाङ्गचेष्टायां [11]शकुन्त इव पञ्जरे। [12]अनुच्छसन्[13]स्मरन्पूर्वं गर्भे किं नाम विन्दते ॥ १४१ ॥ निः[14]सृतोऽहं करिष्यामि सुकृतानीति चिन्तयन्। मेदोसृग्दि[15]ग्धसर्वाङ्गो [16]जरायुपुटसंवृतः ॥ १४२ ॥ नि[17]ष्क्रामन्[18]भृशदुःखार्तो [19]रुदन्नुच्चैरधोमुखः। यन्त्रादिव विनिर्मुक्तः पतत्यु[20]त्तानशाय्यथ ॥ १४३ ॥

## अनित्यतानिरूपणम्

एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः। स्वप्न एष महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ १४४ ॥ एकेऽद्य प्रातरपरे पश्चादन्ये पुनः परे। सर्वे निःसीम्नि संसारे यान्ति कः केन शोच्यते ॥ १४५ ॥ येषां निमेषोन्मेषाभ्यां जगतां प्रलयोदयौ। तादृशाः पुरुषा याता मादृशां गणनैव का ॥ १४६ ॥ गलितानीन्द्रलक्षाणि बुद्बुदानीव वारिणि। मां जीवितनिबद्धाशं विहसिष्यन्ति साधवः ॥ १४७ ॥ संसाररात्रिदुःस्वप्ने शून्ये देहमये भ्रमे। आस्थां चेदनुबध्नामि तन्मूर्खो नास्ति मत्परः ॥ १४८ ॥ येषु येषु दृढं बद्धा भावना दृष्टवस्तुषु। तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥ १४९ ॥ यन्मध्ये यच्च पर्यन्ते यदापाते मनोरमम्। सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ॥ १५० ॥ नीलोत्पलाभनयनाः परमप्रेमभूषणम्। ह्रासायैव विलासिन्यः क्षणभङ्गितया स्थिताः ॥ १५१ ॥ गन्धर्वनगराकारः संसारः क्षणभङ्गुरः। मनसो वासनैवेयमुभयोर्भेदसाधनम् ॥ १५२ ॥ गतेनापि न संबन्धो न सुखेन भविष्यता। वर्तमानं क्षणातीतं संगतिः कस्य केन वा ॥ १५३ ॥ पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते। सुशोषं सागरजलं शरीरे तत्र का कथा ॥ १५४ ॥ इदं युगसहस्रस्य भविष्यदभवद्दिनम्। तदप्यस्तत्वमापन्नं का कथा मरणावधेः ॥ १५५ ॥ लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया। न सन्ति खलु तावन्त्यो गङ्गायामपि वालुकाः ॥ १५६ ॥ आसन्नतामेति मृत्युरायुर्याति दिने दिने। आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ १५७ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ १५८ ॥ एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम्। यद्येकस्त्वरितं यातस्तत्र का परिदेवना ॥ १५९ ॥ सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः। किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ १६० ॥ मातापितृसहस्राणि पुत्रदारशतानि च। तवानन्तानि यातानि कस्य ते कस्य वा भवान् ॥ १६१ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समु[1]च्छ्रयाः। संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १६२ ॥ बिडालभक्षिते दुःखं यादृशं गृहकुक्कुटे। न तादृङ्ममताशून्ये कलविङ्केऽथ मूषके ॥ १६३ ॥ शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः। आपातरम्या विषयाः पर्यन्तपरितापिनः ॥ १६४ ॥ अन्तकः पर्यवस्थाता जन्मिनः संततापदः। इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥ १६५ ॥ न्यस्तं यथा मूर्ध्नि मु[2]दाऽत्ति मेषो यवाक्षताद्यं बलिकल्पितः सन्। मृत्युं समीपस्थितमप्यजानन्भुनक्ति मर्त्यो विषयांस्तथैव ॥ १६६ ॥ नन्दन्ति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्गृहीताः। विवेकदृष्ट्या

१ मांसपिण्डम्. २ पानपात्रम्. ३ मद्ययुक्तम्. ४ कीटकैः. ५ महाकष्टयुक्तः. ६ उत्कटैः. ७ जरायुणा. ८ व्याप्तः. ९ असमर्थः. १० चलनादिव्यापारे. ११ पक्षीव. १२ उच्छ्वासं त्यक्तुमशक्तः. १३ प्राचीनं कर्म. १४ गर्भाशयाच्च्युतः. १५ मेदोरक्तलिप्तसर्वाङ्गः. १६ जरायुकोशव्याप्तः. १७ बहिर्निःसरन्. १८ निःसरणकालेऽत्यन्तदुःखयुक्तः. १९ उच्चस्वरेण रोदनं कुर्वन्. २० उत्तानं शेतेऽसौ.

१ उच्चत्वं उन्नतत्वं वा. २ हर्षेण भक्षयति.

चरतां नराणां श्रियो न किंचिद्विपदो न किंचित् ॥ १६७ ॥ हरिष्यमाणो बहुधा परस्वं करिष्यमाणः सुतसंपदादि । धरिष्यमाणोऽरिशिरःसु पादं न स्वं मरिष्यन्तमवैति कोऽपि ॥ १६८ ॥ उत्तुङ्गवातायनगोपुराणि गृहाणि वित्तानि दुरर्जितानि । क्षणादधःपातकराणि हन्त चितातिथेरस्य निरर्थकानि ॥ १६९ ॥ मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ १७० ॥ क्षिपसि शुकं वृषदंशकरदने मृगमर्पयसि मृगादनवदने । वितरसि तुरगं महिषविषाणे विदधच्चेतो भोगविताने ॥ १७१ ॥ नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतं च समस्तम् ॥ १७२ ॥ अष्टकुलाचलसप्तसमुद्रा ब्रह्मपुरंदरदिनकररुद्राः । न त्वं नाहं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥१७३॥ चेतोहरा युवतयः सुहृदोऽनुकूलाः सद्बान्धवाः प्रणतिगर्भगिरश्च भृत्याः । गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः संमीलने नयनयोर्न हि किंचिदस्ति ॥ १७४ ॥ मित्रं कलत्रमितरः परिवारलोको भोगैकसाधनमिमाः किल संपदो नः । एकः क्षणः स तु भविष्यति यत्र भूयो नायं न यूयमितरे न वयं न चैते ॥ १७५ ॥ अहमिह कृतविद्यो वेदिता सत्कलानां धनपतिरहमेको रूपलावण्ययुक्तः । इति कृतगुणगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किंचित् ॥ १७६ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ १७७ ॥ यदस्माभिर्दृष्टं क्षणिकमभवत्स्वप्नमिव तत्कियन्तो भावाः स्युः स्मरणविषयादप्यवगताः । अहो पश्यन्पश्यन्स्वजनमखिलं यान्तमनिशं हतव्रीडं चेतस्तदपि न भवेत्सङ्गरहितम् ॥ १७८ ॥ अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥ १७९ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारितरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥ १८० ॥ रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं किं वा प्राणतमासमागमसुखं नैवाधिकं प्रीतये । किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ १८१ ॥ भूत्वा कल्पशतायुषोऽण्डजभुवः सेन्द्राश्च देवासुरा मन्वाद्या मुनयो महीजलधयो नष्टाः

पराः कोटयः । मोहः कोऽयमहो महानुदयते लोकस्य शोकावहो बन्धोः फेनसमे गते वपुषि यत्पञ्चात्मके पञ्चताम् ॥ १८२ ॥ आक्रान्तं मरणेन जन्म जरया यात्युल्बणं[1] यौवनं संतोषो धनलिप्सया शम[2]सुखं प्रौढाङ्गनाविभ्रमैः[3] । लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनैरस्थैर्येण विपत्तयोऽप्युपहता ग्रस्तं न किं केन वा ॥ १८३ ॥ आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः[4] । जातं जातमवश्यमाशु विवशं[5] मृत्युः[6] करोत्यात्मसात्[7]तत्किं तेन निरङ्कुशेन[8] विधिना यन्निर्मितं सुस्थिरम् ॥ १८४ ॥ भोगा[9]स्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः स्तोका[10]न्येव दिनानि यौवनसुखं स्फूर्तिः क्रियास्वस्थिरा । तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका लोकानुग्रहपेशलेन[11] मनसा यत्नः समाधीयताम् ॥ १८५ ॥ भोगा मेघवितानमध्यबिलसत्सौदामिनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् । लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ १८६ ॥ साक्षात्प्रेमावतारः कमलदलदृशो दिक्षु लक्ष्मीरनन्ताः सत्पुत्राः सन्ति मित्राण्यपि विषमविपत्संविभागी कुटुम्बः । एतत्सर्वं हि तावत्सुकृतविलसितं दृश्यमानं मनोज्ञं यच्चैतत्क्षिप्रनाशप्रणयि बत मनाङ् म्लायते तेन चेतः ॥ १८७ ॥ आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीरर्थाः संकल्प[12]कल्पा घन[13]समयतडिद्विभ्रमा भोगपूगाः । कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रिया[14]भिः प्रणीतं ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ १८८ ॥

## कालचरितम्

मातुलो यस्य गोविन्दः पिता यस्य धनंजयः । सोऽपि कालवशं प्राप्तः कालो हि दुरतिक्रमः ॥ १८९ ॥ पुरंदरसहस्राणि चक्रवर्तिशतानि च । निर्वापितानि कालेन प्रदीपा इव वायुना ॥ १९० ॥ अद्यैव हसितं गीतं पठितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ १९१ ॥ म्रियमाणं मृतं बन्धुं शोचन्ति परिदेविनः । आत्मानं नानुशोचन्ति कालेन कवलीकृतम् ॥ १९२ ॥ ब्रह्मा विष्णुदिने याति विष्णू रुद्रस्य वासरे । ईश्वरस्य तथा सोऽपि कः कालं लङ्घितुं क्षमः ॥ १९३ ॥ अप्सु प्लवन्ते[15] पाषाणा मानुषा घ्नन्ति राक्षसान् । कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ॥ १९४ ॥ अशनं[16] मे

१ उच्छ्रितम्. २ शान्तिसुखम्. ३ विलासैः. ४ विपत्तयः. ५ पराधीनम्. ६ कालः. ७ आत्माधीनम्. ८ स्वतन्त्रेण. ९ तुङ्गा उच्चा ये तरङ्गा ऊर्मयस्तेषां भङ्गस्तद्वच्चपलाः. १० अल्पानि. ११ मृदुलेन. १२ संकल्पतुल्याः. १३ वर्षाकालविद्युद्विलासाः. अतिचञ्चला इत्यर्थः. १४ कान्ताभिः. १५ तरन्ति. १६ भोजनम्.

वसनं[1] मे जाया मे बन्धुवर्गो मे । इति मे मे कुर्वाणं कालवृको[2] हन्ति पुंरुषाजम्[3] ॥ १९५ ॥ प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्ध्यै । आयुर्गतप्रायमिदं यतोऽसौ विश्रम्य विश्रम्य न याति कालः ॥ १९६ ॥ भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च । युधिष्ठिराद्याश्च बभूवुरेते सत्यं क्व याता बत ते नरेन्द्राः ॥ १९७ ॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि । इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥ १९८ ॥ यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते । इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ[4] कालः काल्या भुवनफलके[5] क्रीडति प्राणिसारैः[6] ॥ १९९ ॥ भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं[7] च तत्पार्श्वे तस्य च सा विदग्धपरिषत्[8] ताश्चन्द्रबिम्बाननाः । उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः[9] कथाः सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ २०० ॥ कांश्चित्कल्पशतं कृतस्थितिचयान्कांश्चिद्युगानां शतं कांश्चिद्वर्षशतं तथा कतिपयाञ्जन्तून्दिनानां शतम् । तांस्तान्कर्मभिरात्मनः प्रतिदिनं संक्षीयमाणायुषः कालोऽयं कवलीकरोति सकलान्भ्रातः कुतः कौशलम् ॥ २०१ ॥ कालेन क्षितिवारिवह्निपवनव्योमादियुक्तं जगद्ब्रह्माद्याश्च सुराः प्रयान्ति विलयं विद्मो विचारादिति । पश्यामोऽपि विनश्यतोऽनवरतं लोकाननेकान्मुधा माया मोहमयीं भवप्रणयिनीं नास्थां जहीमो वयम् ॥ २०२ ॥ व्योमैकान्तविहारिणोऽपि[10] विहंगाः[11] संप्राप्नुवन्त्यापदं[12] बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः[13] समुद्रादपि । दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ २०३ ॥ मान्धाता स महीपतिः क्षितितलेऽलंकारभूतो गतः सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः । अन्ये चापि युधिष्ठिरप्रभृतयो यावन्त एवाभवन्नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति ॥ २०४ ॥

**पश्चात्तापः**

जन्मैव व्यर्थतां[14] नीतं भवभोगप्रलोभिना । काचमूल्येन विक्रीतो हन्त[15] चिन्तामणिर्मया[16] ॥ २०५ ॥ तरत्तरलतृष्णेन किमिवास्मिन्धरातले । मया न कृतमज्ञेन पश्चात्तापाभिवृद्धये ॥ २०६ ॥ यातं यौवनमधुना वनमधुना शरणमेकमस्माकम् । स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥ २०७ ॥ धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि । करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ २०८ ॥ भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः । कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ २०९ ॥ पुनः प्रभातं पुनरेव शर्वरी पुनः शशाङ्कः पुनरुद्यतो रविः । कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥ २१० ॥ न चाराधि राधाधवो माधवो वा न वाऽपूजि पुष्पादिभिश्चन्द्रचूडः । परेषां धने धन्धने नीतकालो दयालो यमालोकने कः प्रकारः ॥ २११ ॥ न चाकारि कामारिकंसारिसेवा न वा स्वेष्टमाचेष्टितं हन्त किंचित् । मनः प्रेयसीरूपपङ्के निमग्नं किमन्ते कृतान्ते मयावेदनीयम् ॥ २१२ ॥ चित्तभूवित्तभूमत्तभूपालकोपासनावासनायासनानाभ्रमैः[1] । साधुता सा धुता साधिता[2] साधिता किं तया चिन्तया चिन्तयामः शिवम् ॥ २१३ ॥ अजानन्दाहार्तिं पतति शलभस्तीव्रदहने न मीनोऽपि ज्ञात्वा बडिशयुतमश्नाति पिशितम् । विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ २१४ ॥ चिरं ध्याता रामा[3] क्षणमपि न रामप्रतिकृतिः[4] परं पीतं रामाधरमधु न रामाङ्घ्रिसलिलम्[5] । नता रुष्टा रामा यदरचि न रामाय विनतिगतं[6] मे जन्माग्र्यं न दशरथजन्मा[7] परिगतः ॥ २१५ ॥ कुचौ तु परिचर्चितौ परिचितं चिरं चन्दनं कृताः परसुरोजयोः परिसरेऽरविन्दश्रियः । स्तुतिर्नतिरपि स्मृतिर्वरतनोः कृतैवादरादिदं तु निखिलं मया विरचितं पुनर्नेश्वरे ॥ २१६ ॥ नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता खङ्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः । कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ २१७ ॥ न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये[9] स्वर्गद्वार[8]कपाटपाटनपटुर्धर्मोऽपि नोपार्जितः । नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं मातुः केवलमेव यौवनवनच्छेदे कुठारा[10] वयम् ॥ २१८ ॥ क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः । ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ २१९ ॥ धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायतामानन्दाश्रुजलं

१ वंसनम्. २ काल एव वृकः. ३ पुरुष एवाजः. ४ पाशौ. ५ भुवनमेव फलकसारीपटस्तस्मिन्. ६ प्राणिन एव सारास्तैः. ७ माण्डलिकमण्डलम्. ८ चतुरसभा. ९ स्तुतिपाठकाः. १० केवलमाकाशसंचारिणः. ११ पक्षिणः. १२ विपत्तिम्. १३ कुशलैः. १४ निष्फलत्वम्. १५ हन्तेति खेदे. १६ रत्नविशेषः.

१ चित्तभूः कामः, वित्तभूर्मदः ताभ्यां मत्तो यो भूपालकस्तस्योपासनायां वासना तया आयासस्ततो ये नाना भ्रमास्तैः. २ आधिसहितत्वम्. ३ स्त्री. ४ राममूर्तिः. ५ रामपादोदकम्. ६ नमस्कारः. ७ दशरथाज्जन्म यस्य स रामः. ८ स्वर्गम्. ९ छेदनाय. १० परश्वधाः.

पिबन्ति शकुना निःशङ्कमङ्केशयाः । अस्माकं तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ २२० ॥ मन्त्रोद्भावितदैवतैर्न विधिवद्दासीकृताः सिद्धयो योगाभ्याससमाहितैरनुदिनं तीर्णो न मोहार्णवः । क्षुभ्यत्क्षुद्रनरेन्द्रदत्तविगलत्संपल्लवोल्लासितैर्धिङ्मूढैरिव पण्डितैरपि बलात्कालः कथं नीयते ॥ २२१ ॥ धावित्वा सुसमाहितेन मनसा दूराच्छ्रितो नामितं भूपानां प्रतिशब्दकैरिव चिरं प्रोद्धुष्टमिष्टं वचः । द्वाराध्यक्षनियन्त्रणापरिभवप्रम्लानवक्त्रैः स्थितं भ्रातः किं करवाम मुञ्चति मनो नाद्याप्यविद्याग्रहम् ॥ २२२ ॥ नो धर्माय ततो न तत्र निरता नार्थाय येनेदृशाः कामोऽप्यर्थवतां तदर्थमपि नो मोक्षः क्वचित्कस्यचित् । तत्त्वैः नाम वयं वृथैव घटिता ज्ञातं पुनः कारणं जीवन्तोऽपि मृता इति प्रवदतां शब्दार्थसंसिद्धये ॥ २२३ ॥ [1]ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो [2]दुष्करं यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्ये[3]कान्ततो निः[4]स्पृहाः । न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥ २२४ ॥ विद्या [5]नाधिगता कलङ्करहिता वित्तं च नोपार्जितं शुश्रूषापि [6]समाहितेन मनसा [7]पित्रोर्न संपादिता । आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ २२५ ॥ दन्तैः प्रस्थितमग्रतस्तदनु भोः शौक्ल्यं धृतं मूर्धजैः कर्णाभ्यामपि वाग्विलासरचना कथास्तमाकर्ण्यते । नेत्राभ्यामपि चापलं युवतिषु त्यक्तं गतं यौवनं सार्धेऽस्मिंश्चलिते कथं पुनरहं यातास्मि तच्चिन्तये ॥ २२६ ॥ रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः । व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ २२७ ॥ कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा मश्नन्तो विटजल्पितैरुपहताः क्षोणीभुजस्ते किल । विद्वांसोऽपि वयं किल त्रिजगतीसर्गस्थितिव्यापदामीशस्तत्परिचर्यया न गणितो यैरेष नारायणः ॥ २२८ ॥ क्षोणीपर्यटनं श्रमाय विदुषां वादाय विद्यार्जिता मानध्वंसनहेतवे परिचितास्ते ते धराधीश्वराः । विश्लेषाय सरोजसुन्दरदृशामास्ते कृता दृष्टयः कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः ॥ २२९ ॥ देशे देशे दुराशाकवलितहृदयो निष्कृपाणां नृपाणां धावं धावं पुरस्तादतिकुमतिरहं जन्म संपादयामि । आधायाधाय राधाधव तव चरणाम्भोजमन्तःसमाधावन्येऽरण्येऽतिपुण्ये पुलकितवपुषो वासरान्वाहयन्ति ॥ २३० ॥

[1] ब्रह्मज्ञानविचारेण शुद्धान्तःकरणाः. [2] दुःखेन कर्तुमशक्यम्. [3] स्वभावतः, नैरन्तर्येणेति वा. [4] निरिच्छाः. [5] संपादिता. [6] स्वस्थेन [7] माता च पिता च पितरौ तयोः.

### विचारः

मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ २३१ ॥ अधीत्य चतुरो वेदान्व्याकृत्याष्टादश स्मृतीः । अहो श्रमस्य वैफल्यमात्मापि कलितो न चेत् ॥ २३२ ॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ २३३ ॥ स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि । आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥ २३४ ॥ विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः । अपहर्तुं समर्थोऽसौ रविरेव निशातमः ॥ २३५ ॥ यस्मिन्वस्तुनि ममता मम तापस्तत्र तत्रैव । यत्रैवाहमुदासे तत्र [1]मुदासे स्वभावसंतुष्टः ॥ २३६ ॥ मुण्डी जटी वल्कलवांस्त्रिदण्डी कषायवासा व्रतकर्शिताङ्गः । त्यक्तैहिको वा यदि नाप्ततत्त्वस्तदा तु तस्योभयमेव नष्टम् ॥ २३७ ॥ जडास्तपोभिः शमयन्ति देहं बुधा मनश्चापि विकारहेतुम् । श्वा मुक्तमस्त्रं दशतीति कोपात्क्षेप्तारमुद्दिश्य हिनस्ति सिंहः ॥ २३८ ॥ किं ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरिष्यति । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥ २३९ ॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥ २४० ॥ बालिकारचितवस्त्रपुत्रिकाक्रीडनेन सदृशं सुरार्चनम् । यत्र शाम्यति मनो न निश्चलं स्फीतवज्जलधिमज्जनामलम् ॥ २४१ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः । व्यासो वदत्यखिलवेदविशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥ २४२ ॥ भिक्षाशनं भवनमायतनैकदेशः शय्या भुवः परिजनो निजदेहभारः । वासश्च जीर्णपटखण्डनिबद्धकन्था हा हा तथापि विषयान्न जहाति चेतः ॥ २४३ ॥ केनाप्यनर्थरुचिना कपटं प्रयुक्तमेतत्सुहृत्तनयबन्धुमयं विचित्रम् । कस्यात्र कः परिजनः स्वजनो जनो वा स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ २४४ ॥ अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् । यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ २४५ ॥ यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं तदा [2]दृष्टं नारीमयमखिलमेतज्जगदिति । इदानीमस्माकं पटुतरविवेकाञ्जनजुषां समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ २४६ ॥ परिच्छेदातीतः सकलवचनानामविषयः पुन-

[1] उदासीनो भवामि. [2] हर्षेण तिष्ठामि.

जन्मन्यस्मिन्ननुभवपथं यो न गतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ २४७ ॥ विशीर्णः प्रारम्भो वपुरपि जराव्याधिविधुरं गतं दूरे विप्रस्वजनभरणं वाञ्छितमपि । इदानीं व्यामोहादहह विपरीते हतविधौ विधेयं यत्तत्त्वं स्फुरति मम नाद्यापि हृदये ॥ २४८ ॥ शुचां पात्रं धात्री परिणतिरमेध्यप्रचयभूरयं भूतावासो विमृश कियतीं याति न दशाम् । तदस्मिन्धीराणां क्षणमपि किमास्थातुमुचितं खलीकारः कोऽयं यदहमहमेवेति रभसः ॥ २४९ ॥ यदा पूर्वं नासीदुपरि च तथा नैव भविता तदा मध्यावस्थाक्षणपरिचयो भूतनिचयः । अतः संयोगेऽस्मिन्परिणतिवियोगे च सहजे किमाधारः प्रेमा किमधिकरणाः सन्तु च शुचः ॥ २५० ॥ स्थिरापायः कायः प्रणयिषु सुखं स्थैर्यविमुखं महाभोगा रोगाः कुवलयदृशः सर्पसदृशः । महावेशः क्लेशः प्रकृतिचपला श्रीरपि खला यमः स्वैरी वैरी तदपि न हितं कर्म विहितम् ॥ २५१ ॥ विवेकः किं सोऽपि स्वरसजनिता यत्र न कृपा स किं योगो यस्मिन्न भवति परानुग्रहरसः । स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः कृतं किं तद्वा स्यादुपशमफलं यन्न भवति ॥ २५२ ॥ दिवसरजनीकूलच्छेदैः पतद्भिरनारतं वहति निकटे कालस्रोतः समस्तभयावहम् । इह हि पततां नास्त्यालम्बो न चापि निवर्तनं तदिह महतां कोऽयं मोहो यदेष मदाविलः ॥ २५३ ॥ माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने । युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयःपूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ २५४ ॥ अद्वैतोक्तिपटून्बटूनपि वयं बालान्नमस्कुर्महे ये तु द्वन्द्ववदास्तदीयशिरसि न्यस्याम वामं पदम् । सिंहः स्वीयशिशून्निवेश्य हृदये सान्द्रादरादामृशत्यावेशेन भिनत्ति संभ्रमपदं मत्तेभकुम्भस्थलम् ॥ २५५ ॥ क्लेशत्यागकृतेऽर्पितेन करणव्यूहेन देहेन च स्वानर्थे बत जन्तुरर्जयति चेन्मन्तुर्नियन्तुः कुतः । शस्त्रे शत्रुजयाय नैजगुरुणादत्तेऽथ तेनैव चेत्पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः ॥ २५६ ॥ बीभत्साः प्रतिभान्ति किं न विषयाः किं तु स्पृहायुष्मती देहस्यापचयो मृतौ निविशते गाढो गृहेषु ग्रहः । ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्तिका वासना का नामेयमतर्क्यहेतुगहना दैवी सतां यातना ॥ २५७ ॥ नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति । यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ २५८ ॥ रेतःशोणितयोरियं परिणतिर्यद्वर्ष्म तत्राभवन्मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः । जानन्नप्यवशी विवेकविरहान्मज्जन्नविद्याम्बुधौ शृङ्गारीयति पुत्रकाम्यति बत क्षेत्रीयति स्त्रीयति ॥ २५९ ॥ इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च काम्याशनम् । रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः संत्रासोऽपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः ॥ २६० ॥ अर्थप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां प्रत्यासन्नभयं न वेत्ति विभवं स्वं जीवितं काङ्क्षति । उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं प्राणानां च धनस्य चाधमधियामन्योन्यभावः पणः ॥ २६१ ॥ अग्रे कस्यचिदस्ति कंचिदभितः केनापि पृष्ठे कृतः संसारः शिशुभावयौवनजराभारावताराद्यम् । बालस्त्वं बहु मन्यतामसुलभं प्राप्तं युवा सेवतां वृद्धस्त्वं विषयाद्बहिष्कृत इव व्यावृत्य किं पश्यसि ॥२६२ ॥ येषां श्रीमद्यशोदासुतपदकमले नास्ति भक्तिर्नराणां येषामाभीरकन्याप्रियगुणकथने नानुरक्ता रसज्ञा । येषां श्रीकृष्णलीलाललितगुणरसे सादरौ नैव कर्णौ धिक्तान्धिक्तान्धिगेतान् कथयति सततं कीर्तनस्थो मृदङ्गः ॥ २६३ ॥

१ द्वैतवादिनः.

१ अपराधः. २ परमेश्वरस्य.

**इति श्रीसुभाषितरत्नभाण्डागारे षष्ठं नवरसप्रकरणं समाप्तम् ।**



# सप्तमं संकीर्णप्रकरणम्

शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति । न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ १ ॥ महतो हि क्षयं लब्ध्वा श्लाघां नीचोऽपि गच्छति । दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥ २ ॥ महद्भिः स्पर्धमानस्य विपदेव गरीयसी । दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥ ३ ॥ पञ्चास्यस्य पराभवाय भेषको मांसेन गोर्भूयसा दध्यन्नैरपि पायसैः प्रतिदिनं संवर्धितो यो मया । सोऽयं सिंहरवाद्गुहान्तरगमद्भीत्याकुलः संभ्रमाद्धन्ताशा विलयं गता हतविधेर्लाभः परं गोवधः ॥ ४ ॥ पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् । ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ५ ॥ पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम् । देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ६ ॥ यन्निमित्तं भवेच्छोकस्त्रासो वा दुःखमेव च । आयासो वा यतो मूलस्तदेकाङ्गमपि त्यजेत् ॥ ७ ॥ यन्निःशब्दजला घनाश्मपरुषे देशेऽतिघोरारवा यच्चाच्छाः समये पयोदमलिने कालुष्यसंदूषिताः । दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाविमौ तत्सत्यं महतामपि स्वसदृशाचारप्रवृत्तिप्रदौ ॥ ८ ॥ यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् । हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ ९ ॥ भीतवत्संविधातव्यं यावद्भयमनागतम् । आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ १० ॥ भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो गायद्भृङ्गनिवारका निगदिता विस्तीर्णकर्णा गजाः । यश्चाभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो लोकेनेति निर्गलं प्रलपता सर्वं विपर्यासितम् ॥ ११ ॥ पतिव्रता पतिप्राणा पत्युः प्रियहिते रता । यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥१२॥ संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण तु । परोपकारः पुण्याय पापाय परपीडनम् ॥ १३ ॥ शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि । विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ १४ ॥ यन्नत्र सरलं चापि यच्चापत्सु न सीदति । धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम् ॥ १५ ॥ यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् । कथाछलेन बालानां नीतिस्तदिह कथ्यते ॥ १६ ॥ यदप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्तयेत् । कर्मणा तस्य वैशिष्ट्यं कथयेद्विनयान्वितः ॥ १७ ॥ सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति साधवः । सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् ॥ १८ ॥ मुखं प्रसन्नं विमला च दृष्टिः कथानुरागो मधुरा च वाणी । स्नेहोऽधिकः संभ्रमदर्शनं च सदानुरक्तस्य जनस्य चिह्नम् ॥ १९ ॥ पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि । मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ २० ॥ परेषामात्मनश्चैव योऽविचार्य बलाबलम् । कार्यायोत्तिष्ठते मोहादापदः स समीहते ॥ २१ ॥ बलीयसा हीनबलो विरोधं न भूतिकामो मनसापि वाञ्छेत् । न वध्यतेऽत्यन्तबलो हि यस्माद्व्यक्तं प्रणाशोऽस्ति पतंगवृत्तेः ॥ २२ ॥ बलोपपन्नोऽपि हि बुद्धिमान्नरः परं नयेन्न स्वयमेव वैरिताम् । भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणात्को हि विचक्षणो विषम् ॥ २३ ॥ मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः । आपन्निकषपाषाणे नरो जानाति सारताम् ॥ २४ ॥ मित्राण्येव हि रक्षन्ति मित्रवान्नावसीदति । मित्राद्गुत्पादितं वैरमपि मूलं निकृन्तति ॥ २५ ॥ मित्रार्थे बान्धवार्थे च बुद्धिमान् यतते सदा । जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥ २६ ॥ प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्गर्जोद्भूतिं प्रकटितरुचिश्चञ्चलेवाम्बुदस्य । चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्त्वा जन्तोर्जन्मान्तरपरिचितां निश्चलां चित्तवृत्तिम् ॥ २७ ॥ प्रसादः कुरुते पत्युः संपत्तिं नाभिजाततताम् । कालिमा कालकूटस्य नापैति हरसंगमात् ॥ २८ ॥ प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः । न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ २९ ॥ प्रजावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम् । कार्याकार्ये पूजयित्वा प्रसाद्य यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ ३० ॥ यथा ग्रामान्तरं गच्छन्नरः कश्चित्क्वचिद्वसेत् । उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ३१ ॥ एवमेव मनुष्याणां पिता माता गृहं वसु । आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ३२ ॥ यथा छायातपौ नित्यं सुसंबद्धौ परस्परम् । एवं कर्म च कर्ता च संश्लिष्टावितरेतरम् ॥ ३३ ॥ यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् । एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ ३४ ॥ यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् । तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ३५ ॥ योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते । स पापकृत्तमो लोके स्तेन आत्मापहारकः ॥ ३६ ॥

१ गजानाम्. २ सिंहस्य. ३ कुक्कुरः. ४ चर्ममयं जलपात्रम्.

१ आपद् विपत्तिरेव निकषपाषाणं शाणस्तस्मिन्.

शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरंगावलीनिर्मुक्तेऽमृतसागराम्भसि मनाङ्मग्नोऽपि नाचामति । निःसारे मृगतृष्णिकार्णवजले श्रान्तो विमूढः पिबत्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥ ३७ ॥ वशं प्राप्ते मृत्योः पितरि तनये वा सुहृदि वा शुचाऽलं तप्यन्ते भृशमुदरताडं जडधियः । असारे संसारे विरसपरिणामे तु विदुषां वियोगो वैराग्यं द्रढयति वितन्वन् शमसुखम् ॥ ३८ ॥ विधिरेव हि जागर्ति भव्यानामर्थसिद्धये । असंचेतयमानानां सद्भृत्याः स्वामिनामिव ॥ ३९ ॥ लीलायन्त्यः कुलं घ्नन्ति कुलानीव सरिद्वराः । दोषान्सर्वांश्च मत्वाशु प्रजापतिरभाषत ॥ ४० ॥ रामो हेममृगं न वेत्ति नहुषो नो यान्युनक्ति द्विजान्विप्रादेव सवत्सधेनुहरणे जाता मतिश्चार्जुने । द्यूते भ्रातृचतुष्टयस्वमहिषीं धर्मात्मजो दत्तवान् प्रायः सत्पुरुषो विनाशसमये बुद्ध्या परित्यज्यते ॥ ४१ ॥ पुरा विद्वत्तासीदमलिनधियां क्लेशहतये गता कालेनासौ विषयसुखसिद्धौ विषयिणाम् । इदानीं संप्रेक्ष्य क्षितिलवभुजः शास्त्रविमुखाहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति ॥ ४२ ॥ राजा धर्मविना द्विजः शुचिविना ज्ञानं विना योगिनः कान्ता सत्यविना हयो गतिविना ज्योतिर्विना भूषणम् । योद्धा शूरविना तपो व्रतविना छन्दो विना गायनं भ्राता स्नेहविना नरो हरिविना मुञ्चन्ति शीघ्रं बुधाः ॥ ४३ ॥ प्रियवचनकृतोऽपि योषितां दयितजनानुनयो रसादृते । प्रविशति हृदयं न तद्विदां मणिरिव कृत्रिमरागयोजितः ॥ ४४ ॥ भ्रान्तो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा । सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥ ४५ ॥ परां विनीतः समुपैति सेव्यतां महीपतीनां विनयो विभूषणम् । प्रवृत्तदानो मृदुसंचरत्करः करीव भद्रो विनयेन शोभते ॥ ४६ ॥ प्रीणाति यः सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ४७ ॥ भार्यायां जनितं पुत्रमादर्शेष्विव चाननम् । ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ४८ ॥ हिंसकान्यपि भूतानि यो हिनस्ति स निर्घृणः । स याति नरकं घोरं किं पुनर्यः शुभानि च ॥ ४९ ॥ सुखास्वादपरो यस्तु संसारे सत्समागमः । स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥ ५० ॥ पूज्यो बन्धुरपि प्रियोऽपि तनयो भ्राता वयस्योऽपि वा मोहादनवद्यकार्यविमुखो हेयः स कार्यार्थिना । लोके हि प्रथिता ननु श्रुतिरियं नार्योऽपि गायन्ति यां किं कार्यं कनकेन तेन भवति च्छेदाय कर्णस्य यत् ॥ ५१ ॥ सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभि । स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ ५२ ॥ भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः । भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥ ५३ ॥ मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ । यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ५४ ॥ बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं श्रोणी तीर्थशिला च नेत्रशफरं धम्मिल्लशैवालकम् । कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलैर्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ५५ ॥ भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ५६ ॥ प्रिया हिताश्च ये राज्ञो ग्राह्यवाक्या विशेषतः । आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेण नान्यथा ॥ ५७ ॥ भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं बली कालश्चौरो नियतमसिता मोहरजनी । गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं समाधानं कृत्वा स्थिरतरदृशो जाग्रत जनाः ॥ ५८ ॥ प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् । अनागतसुखाशा च नैव बुद्धिमता नयः ॥ ५९ ॥ प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते । पूर्वं मृतं च भर्तारं पश्चात्साऽप्यनुगच्छति ॥ ६० ॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् । तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥ ६१ ॥ रागी बिम्बाधरोऽसौ स्तनकलशयुगं यौवनारूढगर्वं नीचा नाभिः प्रकृत्या कुटिलकमलकं स्वल्पकं चापि मध्यम् । कुर्वन्त्वेतानि नाम प्रसभमिह मनश्चिन्तितान्याशु खेदं यन्मां तस्याः कपोलौ दहत इति मुहुः स्वच्छकौ तन्न युक्तम् ॥ ६२ ॥ यो नानाद्युतिमत्पदार्थरसिकोऽसारेऽपि शक्रायुधे सप्रेमा स विलोक्य बर्हमिह मे किं किं न कुर्यात्प्रियम् । इत्याविष्कृतबर्हराजि नटते यो बर्हिणोऽम्भोलवान्नान्यन्मुञ्चति तं विहाय जलदं कोऽन्योऽस्ति शून्याशयः ॥ ६३ ॥ शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरम् । यद्यच्छरीरेण करोति कर्म तेनैव देही समुपाश्नुते तत् ॥ ६४ ॥ विनयेन विना का श्रीः का निशा शशिना विना । रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥ ६५ ॥ शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते । प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ६६ ॥ वरं मौनं कार्यं न च वचनमुक्तं यदनृतं वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिर्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ ६७ ॥ पुरो रेवापारे गिरिरतिरादुरोहशिखरो धनुर्बाणैः पश्चाच्छबरकवरो धावति भृशम् । सरः सव्येऽसव्ये दवदहनदाहव्यतिकरो न गन्तुं न स्थातुं

हरिणशिशुरेवं विलपति ॥ ६८ ॥ लीलाव्रतीनां सहजा विलासास्त एव मूढस्य हृदि स्फुरन्ति । रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव मुधा षडङ्घ्रिः ॥ ६९ ॥ बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् । मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥ ७० ॥ विस्तीर्णाध्यवसायसाध्यमहतां स्निग्धप्रयुक्ताशिषां कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् । मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः सामर्षे हृदयेऽवकाशविषया तावत्कथं निर्वृतिः ॥ ७१ ॥ लोको वहति किं राजन्न मूर्ध्ना दग्धुमिन्धनम् । क्षालयन्नपि वृक्षाङ्घ्रीन्नदीवेगो निकृन्तति ॥ ७२ ॥ वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते । तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ ७३ ॥ लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोदयः । दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ ७४ ॥ लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः कान्तासङ्गो यजनसमता दुःखहानिर्विलासः । धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता पूर्णे सर्वे जठरपिठरे प्राणिनां संभवन्ति ॥ ७५ ॥ पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीकपालीमादाय न्यायगर्भं द्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् । द्वारं द्वारं प्रविष्टो दरमुदरदरीपूरणाय क्षुधार्तो मानी प्राणी सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ७६ ॥ अदेशकालज्ञमनायतिक्षमं यदप्रियं लाघवकारि चात्मनः । योऽत्राब्रवीत्कारणवर्जितं वचो न तद्वचः स्याद्विषमेव तद्वचः ॥ ७७ ॥ अदृष्टपूर्वानादाय भावानपरिशङ्कितान् । इष्टानिष्टान्मनुष्याणामस्त गच्छन्ति रात्रयः ॥ ७८ ॥ सत्क्षेत्रप्रतिपादितः प्रियवचोबद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः । दातुस्तत्तदभीप्सितं किल फलन्कालेऽतिबालोऽप्यसौ राजन् दानमहीरुहो विजयते कल्पद्रुमादीनपि ॥ ७९ ॥ अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः । नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥ ८० ॥ अत्युन्नतिं प्राप्य नरः प्रावारः कीटको यथा । स विनश्यत्यसंदेहमिहैवमुशना नृप ॥ ८१ ॥ क्षेत्रग्रामवनाद्रिपत्तनपुरीद्वीपक्ष्मामण्डलप्रत्याशाघनसूत्रबद्धमनसां लब्धाधिक ध्यायताम् । तृष्णे देवि यदि प्रसीदसि तनोष्यङ्गानि तुङ्गानि चेत्तद्वोः प्राणभृतां कुतः शमकथा ब्रह्माण्डलक्षैरपि ॥ ८२ ॥ अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता । शतशाखी भवत्येव यावन्मात्रापि सत्क्रिया ॥ ८३ ॥ अत्युत्सेकेन सहसा साहसाध्यवसायिनाम् । श्रीरारोहति संदेहं महतामपि भूभृताम् ॥ ८४ ॥ ज्ञातुं वपुःपरिमितः क्षमते त्रिलोकीं जीवः कथं कथय संगतिमन्तरेण । शक्नोति कुम्भनिहितः सुशिखोऽपि दीपो भावान्प्रकाशयितुमप्युदरं गृहस्य ॥ ८५ ॥ अत्यादरपरो विद्वानीहमानः स्थिरां श्रियम् । अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत् ॥ ८६ ॥ अत्यम्बुपान द्विषमाशनाच्च दिवाशयाज्जागरणाच्च रात्रौ । संरोधनान्मूत्रपुरीषयोश्च षड्भिः प्रकारैः प्रभवन्ति रोगाः ॥८७॥ आश्रिताश्चैव लोकस्य विवृद्धिं यान्ति विद्विषः । विवृद्धाश्च विनाशाय तस्मान्नोद्वेजयेत्प्रजाः ॥ ८८ ॥ अत्यन्तचञ्चलस्येह पारदस्य निबन्धने । कामं विज्ञायते युक्तिर्न स्त्रीचित्तस्य काचन ॥ ८९ ॥ अतुष्टिदानं कृतपूर्वनाशनममाननं दुश्चरितानुकीर्तनम् । कथाप्रसङ्गेन च नामविस्मृतिर्विरक्तभावस्य जनस्य लक्षणम् ॥ ९० ॥ दुर्जनस्य च सर्पस्य वरं सर्पो न दुर्जनः । सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ ९१ ॥ अतीव गुणसंपन्नो न जातु विनयान्वितः । सुसूक्ष्ममपि भूतानामुपमर्दमुपेक्षते ॥ ९२ ॥ अतीतानागता भावा ये च वर्तन्ति सांप्रतम् । तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि ॥ ९३ ॥ धनवान्क्रोधलोभाभ्यामाविष्टो नष्टचेतनः । तिर्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः ॥९४॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन । क्रोध्यमानः प्रियं ब्रूयादाकुष्टः कुशलं वदेत् ॥ ९५ ॥ अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण च । अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥ ९६ ॥ निर्दशन्नधरोष्ठं च क्रुद्धो दारुणभाषिता । कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥ ९७ ॥ अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः । धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ ९८ ॥ अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म विगर्हितम् । तस्माद्विमुक्तिमन्विच्छन्द्वितीयं न समाचरेत् ॥ ९९ ॥ मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा ॥ १०० ॥ अजाखरखुरोत्सर्गमार्जनीरेणुवज्जनैः । दीपखट्वापच्छायेव त्यज्यते निर्धनो जनः ॥ १०१ ॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च । स्वं कालं नातवर्तन्ते तथा कर्म पुराकृतम् ॥ १०२ ॥ नाकालतो भानुरुपैति योगं नाकालतोऽस्तं गिरिमभ्युपैति । नाकालतो हीयते वर्धते च चन्द्रः समुद्रोऽपि महोर्मिमाली ॥ १०३ ॥ अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥ १०४ ॥ अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः । लोकान्विश्वासयित्वैव ततो लुम्पेद्यथा वृकः ॥१०५॥ नाकालतो म्रियते जायते वा नाकालतो व्याहरते च बालः । नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीजमुप्तम् ॥ १०६ ॥ अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् ।

१ अप्रियवचनानि. २ हुतम्.

तस्मात्तु पुरुषो यत्नाद्धर्मं संचिनुयाच्छनैः ॥१०७॥ अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः ॥ १०८ ॥ नाकालमत्ताः खगपन्नगाश्च मृगद्विपाः शैलमृगाश्च लोके । नाकालतः स्त्रीषु भवन्ति गर्भा नायान्त्यकाले शिशिरोष्णवर्षाः ॥१०९॥ एवमेव कुले जाताः पावकोपमतेजसः । क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥११०॥ स एव खलु दारुभ्य यदा निर्मथ्य दीप्यते । तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ १११ ॥ नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी । न चाभिमानी न च हीनवृत्तो रूक्षां वाचमुषतीं वर्जयीत ॥११२॥ अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु । न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥ ११३ ॥ अग्निं प्राप्य यथा सद्यस्तूलराशिर्विनश्यति । तथा गंगा प्रवाहेण सर्वं पापं विनश्यति ॥ ११४ ॥ व्याधिभिर्मथ्यमानानां त्यजतां विपुलं धनम् । वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ॥ ११५ ॥ अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति । अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥ ११६ ॥ अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः । अभिध्याप्रख्यता चैव सर्वं लोभात्प्रवर्तते ॥११७॥ शमयति गजानन्यान्गन्धद्विपः कलभोऽपि सन्प्रभवतितरां वेगोदग्रं भुजंगशिशोर्विषम् । भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं न खलु वयसा जात्यैवायं स्वकार्यसहो गणः ॥ ११८ ॥ अक्षमः क्षमतामानी क्रियायां यः प्रवर्तते । स हि हास्यास्पदत्वं च लभते प्राणसंशयम् ॥ ११९ ॥ अक्रोधेन जयेत्क्रुद्धमसाधुं साधुना जयेत् । जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ॥ १२० ॥ ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु । दाम्भिको दुष्कृतप्राज्ञः शूद्रेण सदृशो भवेत् ॥ १२१ ॥ अक्रोधनः क्रोधनेभ्यो विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः । अमानुषेभ्यो मानुषाश्च प्रधाना विद्वांस्तथैवाविदुषः प्रधानः ॥ १२२ ॥ अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति । युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ॥ १२३ ॥ यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः । तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ॥ १२४ ॥ अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः । हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ १२५ ॥ अकिंचनस्य शुद्धस्य उपपन्नस्य सर्वतः । अवेक्षमाणस्त्रींल्लोकान्न तुल्यमिह लक्षये ॥ १२६ ॥ सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा । अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥ १२७ ॥ अकिंचनः परिपतन्सुखमास्वादयिष्यसि । अकिंचनः सुखं शेते समुत्तिष्ठति चैव ह ॥ १२८ ॥ अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते । तदेव काले आरब्धं महतेऽर्थाय कल्पते ॥ १२९ ॥ ह्यः पश्यद्भिरकारणस्मितसितं पाथोजकोशाकृति श्मश्रूद्बोधकठोरमद्य रभसादुत्तप्तताम्रप्रभम् । प्रातर्जीर्णवलक्षकेशविकृतं वृद्धाजशीर्षोपमं वक्त्रं नः परिहस्यते ध्रुवमिदं भूतैश्चिरस्थायिभिः ॥ १३० ॥ अकालसहमत्यल्पं मूर्खव्यसनिनायकम् । अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १३१ ॥ अकार्याण्यपि पर्याप्य कृत्वापि वृजिनार्जवम् । विधीयते हितं यस्य स देहः कस्य सुस्थिरः ॥ १३२ ॥ स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् । विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥ १३३ ॥ अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् । अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ १३४ ॥ अकामान्कामयति यः कामयानान्परित्यजेत् । बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ १३५ ॥ स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव । अस्ति-नास्तीति संदेहो न मेऽद्यापि निवर्तते ॥१३६॥ अकामो कामयानस्य शरीरं परिपीड्यते । इच्छन्तीं कामयानस्य रतिर्भवति शोभना ॥१३७॥ अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् । यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥ १३८ ॥ प्रथमा गतिरात्मैव द्वितीया गतिरात्मजः । सन्तो गतिस्तृतीयोक्ता चतुर्थी धर्मसंचयः ॥ १३९ ॥ अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम् । शुभाशुभे महत्त्वं च प्रकर्तुं बुद्धिलाघवम् ॥१४०॥ अकर्मशीलं च महाशनं च लोकद्विष्टं बहुमायं नृशंसम् । अदेशकालज्ञमनिष्टवेषमेतान्गृहे न प्रतिवासयेत ॥ १४१ ॥ प्रयोजनेषु ये सक्ता न विशेषेषु भारत । तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः ॥ १४२ ॥ अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम् । अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ॥ १४३ ॥ अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू । कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १४४ ॥ चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम् । मृगया पानमक्षाश्च ग्राम्ये चैवातिरक्तता ॥ १४५ ॥ अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १४६ ॥ अध्रुवेण शरीरेण प्रतिक्षणविनाशिना । ध्रुवं यो नार्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ १४७ ॥ निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ १४८ ॥ अध्वा जरा देहवतां पर्वतानां जलं जरा । असंभोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ॥ १४९ ॥ अनधिगतमनोरथस्य सर्वे शतगुणितेव गता मम त्रियामा । यदि तु तव समागमे

तथैव प्रसरति सुभ्रु ततः कृती भवेयम् ॥ १५० ॥ मृदुरार्द्रः कृशो भूत्वा शनैः सँल्लीयते रिपुः । वल्मीक इव वृक्षस्य पश्चान्मूलानि कृन्तति ॥ १५१ ॥ अनध्वन्याः काव्येष्वलसगतयः शास्त्रगहनेष्वदुःखज्ञा वाचां परिणतिषु मूकाः परगुणे । विदग्धानां गोष्ठीष्वकृतपरिचर्याश्च खलु ये भवेयुस्ते किं वा परमणितिकण्डूतिनिकषाः ॥ १५२ ॥ अनभ्यासेन विद्यानामसंसर्गेण धीमताम् । अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥ १५३ ॥ मौढ्येन विपदापन्नं मध्यस्थं सुहृदं तथा । शक्त्या ततः समुद्धृत्य हितार्थं भर्त्सयेत्सुधीः ॥ १५४ ॥ अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्शम् । दैन्यं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव ॥ १५५ ॥ अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः । इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ १५६ ॥ बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु । आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ १५७ ॥ अनवाप्यं च शोकेन शरीरं चोपतप्यते । अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ १५८ ॥ अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति । परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानरागयोः ॥ १५९ ॥ प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतद्धि ज्ञानसामर्थ्यं न बालैः समतामियात् ॥ १६० ॥ अनात्मवान्नयद्वेषी वर्धयन्नतिसंपदः । प्राप्यापि महदैश्वर्यं सह तेन विपद्यते ॥ १६१ ॥ अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः । न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥ १६२ ॥ न च रात्रौ सुखं शेते ससर्प इव वेश्मनि । यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ १६३ ॥ अनादेयस्य चादानादादेयस्य च वर्जनात् । दौर्बल्यं ख्याप्यते राज्ञः स प्रत्येह च नश्यति ॥ १६४ ॥ अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् । विनाशयति भूतानि अयोनिज इवानिलः ॥ १६५ ॥ न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा । अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ १६६ ॥ अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् । मलं पृथिव्या बाल्हीकाः पुरुषस्यानृतं मलम् ॥ १६७ ॥ अनारम्भ्या भवन्त्यर्थाः केचिन्नित्यं तथागताः । कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ १६८ ॥ द्वेषादिवैकृतवतः प्रतिभासतेऽन्यो मिथ्यैव चित्रमधिको विशदात्मनोऽपि । चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः ॥ १६९ ॥ अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् । अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ १७० ॥ अनावृतनवद्वारपञ्जरे विहगानिलः । यत्तिष्ठति तदाश्चर्यं वियोगे तस्य का कथा ॥ १७१ ॥ परोक्तमात्रं यस्तथ्यं मन्यते बुद्धिवर्जितः । हसनीयः परेषां स शाखारूढो जटी यथा ॥ १७२ ॥ अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ । पथि संगतमेवैतद्भ्राता माता पिता सखा ॥ १७३ ॥ अनिर्वाच्यमनिर्भिन्नमपरिच्छिन्नमव्ययम् । त्रह्मेव सुजनप्रेम दुःखमूलनिकृन्तनम् ॥ १७४ ॥ अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् । दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ १७५ ॥ अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च । महान्भवत्यनिर्विण्णः सुखं चानन्तमश्नुते ॥ १७६ ॥ अनिश्चितैरध्यवसायभीरुभिः पदे पदे दोषशतानुदर्शिभिः । फलैर्विसंवादमुपागता गिरः प्रयान्ति लोके परिहासवस्तुताम् ॥ १७७ ॥ मित्रं परित्यजति मुञ्चति बन्धुवर्गं शीघ्रं विहाय जननीमपि जन्मभूमिम् । संसज्य गच्छति विदेशमनिष्टलोकं वित्ताकुलीकृतमतिः पुरुषोऽविलम्ब्य ॥ १७८ ॥ अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च । मनुष्या मानसैर्दुःखैर्दह्यन्ते स्वल्पबुद्धयः ॥ १७९ ॥ अनीर्ष्युर्गुप्तदारश्च संविभागी प्रियंवदः । श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् ॥ १८० ॥ न पिता नात्मजो नात्मा न माता न सखीजनः । इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ १८१ ॥ अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् । उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ १८२ ॥ अनुबन्धानुपेक्षेत सानुबन्धेषु कर्मसु । संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ १८३ ॥ सत्यश्चात्र प्रवादोऽयं लौकिकः प्रतिभाति माम् । पितॄन्समनुजायन्ते नरा मातरमङ्गनाः ॥ १८४ ॥ अनुयाति न भर्तारं यदि दैवात्कथंचन । तथापि शीलं संरक्ष्यं शीलभङ्गात्पतत्यधः ॥ १८५ ॥ अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणाम् । अनवस्थितचित्तत्वात्कार्ये तैः स उपेक्ष्यते ॥ १८६ ॥ मूढ जहीहि धनागमतृष्णां कुरु तनुबुद्धिमनःसु वितृष्णाम् । यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ १८७ ॥ अन्तर्दुष्टः सदायुक्तः सर्वानर्थकरः किल । शकुनिः शकटारश्च दृष्टान्तावत्र भूपते ॥ १८८ ॥ अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरैरात्तानापतितांस्तरंगवलयैरालिङ्ग्य गृह्णन्नसौ । व्यक्तं मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः ॥ १८९ ॥ मूर्खा यत्र न पूज्यन्ते धान्यं यत्र सुसंचितम् । दंपत्योः कलहो नास्तितत्र श्रीःस्वयमागता ॥ १९० ॥ अन्त्येषु रेमिरे धीरा न ते मध्येषु रेमिरे । अन्त्यप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्त्ययोः ॥ १९१ ॥ मूलमेवादितश्छिन्द्यात्पर-

पक्षस्य नित्यशः । ततः सहायांस्तत्पक्षान्सर्वांश्च तदनन्तरम् ॥ १९२ ॥ अन्योच्छिष्टेषु पात्रेषु भुक्तवैतेषु महीभुजः । कस्मान्न लज्जामवहन् शौचे चिन्तां न वा दधुः ॥ १९३ ॥ अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून् । द्वाभ्यामयं गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः ॥१९४॥ चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा । प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा श्रियः ॥ १९५ ॥ अन्योऽन्यसमुपस्तम्भादन्योन्यापाश्रयेण च । ज्ञातयः संप्रवर्धन्ते सरसीवोत्पलान्युत ॥ १९६ ॥ अन्यो हि नाश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित् । यत्तेन किंचिद्धि कृतं हि कर्म तदश्नुते नास्ति कृतस्य नाशः ॥ १९७ ॥ उद्योगेन विना नैव कार्यं किमपि सिध्यति । नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ १९८ ॥ अपकारिणि विश्रम्भं यः करोति नराधमः । अनाथो दुर्बलो यद्वन्न चिरं स तु जीवति ॥ १९९ ॥ लोभादेव नरा मूढा धनविद्यान्विता अपि । अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ २०० ॥ अन्यो हि नाश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित् । यत्तेन किंचिद्धि कृतं हि कर्म तदश्नुते नास्ति कृतस्य नाशः ॥ २०१ ॥ अपहृत्य तमस्तीव्रं यथा भात्युदये रविः । तथापहत्य पापानि भाति गङ्गाजलप्लुतः ॥ २०२ ॥ अगां प्रवाहो गाङ्गो वा समुद्रं प्राप्य तद्रसः । भवत्यपेयस्तद्विद्वान्नाश्रयेदशुभात्मकम् ॥ २०३ ॥ सुखमेव हि दुःखान्तं कदाचिद्दुःखतः सुखम् । तस्मादेतद्द्वयं जह्याद्य इच्छेच्छाश्वतं सुखम् ॥ २०४ ॥ अपि मन्दत्वमापन्नो नष्टो वाऽमीष्टदर्शनात् । प्रायेण प्राणिनां भूयो दुःखवेगोऽधिको भवेत् ॥२०५॥ अपि मार्दवभावेन गात्रं संलीय बुद्धिमान् । अरिर्नाशयते नित्यं यथा वल्ली महाद्रुमम् ॥ २०६ ॥ सुखार्थी नागारिप्रतिभयशमात्प्रत्युत सुखं जहौ शेषस्तल्पीकृततनु निषेव्यासुररिपुम् । यतस्तेनामुष्मिन्नधिगतवता क्लेशसहतां श्रमाधायि न्यस्तं निरवधि धराभारवहनम् ॥ २०७ ॥ अपुत्रस्य गतिर्नास्ति स्वर्गो नैव कथंचन । तस्मात्पुत्रमुखं दृष्ट्वा पश्चाद्भवति तापसः ॥२०८॥ अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम् । कृतपूर्वं तु त्यजतो महान्धर्म इति श्रुतिः ॥ २०९ ॥ सुखदुःखानि भूतानामजरो जरयत्यसौ । आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ २१० ॥ अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः । सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ २११ ॥ अप्रसादोऽनधिष्ठानं देयांशहरणं च यत् । कालयापोऽप्रतीकारस्तद्वैराग्यस्य कारणम् ॥ २१२ ॥ सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके । मूर्ध्नि स्थितानां केशानां भवेतां स्नेहच्छेदने ॥ २१३ ॥ अप्रियैरपि निष्पिष्टैः किं स्यात्क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ॥ २१४ ॥ अभयस्य हि यो दाता तस्यैव सुमहत्फलम् । नहि प्राणसमं दानं त्रिषु लोकेषु विद्यते ॥२१५॥ सुखदुःखे हि पुरुषः पर्यायेणोपसेवते । न ह्यनन्तं सुखं कश्चित्प्राप्नोति पुरुषर्षभ ॥ २१६ ॥ अभिन्नत्रैलौ गम्भीरावम्बुराशिर्भवानपि । असावञ्जनसंकाशस्त्वं तु चामीकरद्युतिः ॥ २१७ ॥ अभिप्रायं यो विदित्वा तु भर्तुः सर्वाणि कार्याणि करोत्यतन्द्रीः । वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ २१८ ॥ सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम् । भूतिः श्रीर्ह्रीर्धृतिः कीर्तिर्दक्षे वसति नालसे ॥ २१९ ॥ वाक्यं तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः । प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ २२० ॥ अभिमानवतां ब्रह्मन्युक्तायुक्तविवेकिनाम् । युज्यतेऽवश्यभोज्यानां दुःखानामप्रकाशनम् ॥ २२१ ॥ सुखमापतितं सेवेद्दुःखमापतितं वहेत् । कालप्राप्तमुपासीत सस्यानामिव कर्षकः ॥ २२२ ॥ अभिमान श्रियं हन्ति पुरुषस्याल्पमेधसः । गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ॥ २२३ ॥ अभियुक्तं बलवता दुर्बलं हीनसाधनम् । हृतस्वं कामिनं चौरमाविशन्ति प्रजागराः ॥ २२४ ॥ सुकरं सर्वथा मैत्रं दुष्करं प्रतिपालनम् । अनित्यत्वाद्धि चित्तानां प्रीतिरल्पेन भिद्यते ॥ २२५ ॥ अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते । उपहाराद्दते तस्मात्संधिरन्यो न विद्यते ॥ २२६ ॥ अभिलष्यं स्थिरं पुण्यं ख्यातं सिद्धैर्निषेवितम् । सेवेत सिद्धिमन्विच्छन् श्लाघ्यं विन्ध्यमिवेश्वरम् ॥ २२७ ॥ यथा शरीरमेवेदं जलबुद्बुदसंनिभम् । प्रवातदीपचपलास्तथा कस्य कृते श्रियः ॥ २२८ ॥ यथा हि पुरुषः कुर्याच्छरीरे यत्नमुत्तमम् । वसनाद्यैरुपायैस्तु तथा राज्ये नराधिपः ॥ २२९ ॥ अमित्रं नैव मुञ्चेत वदन्तं कारुणान्यपि । दुःखं तत्र न कर्तव्यं हन्या पूर्वापकारिणम् ॥ २३० ॥ अमित्रादुन्नतिं प्राप्य नोन्नतोऽस्मीति विश्वसेत् । तस्मात्प्राप्योन्नतिं नश्येत् प्रावार इव कीटकः ॥ २३१ ॥ यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम् । नानारूपाणि कुर्वाणस्तथात्मा कर्मजास्तनूः ॥ २३२ ॥ अमित्रो न विमोक्तव्यः कृपणो बह्वपि ब्रुवन् । कृपा न तस्मिन्कर्तव्या हन्यादेवापकारिणम् ॥ २३३ ॥ अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति । सामर्थ्ययोगात्कार्याणामनित्या वै सदागतिः ॥ २३४ ॥ बुद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च । व्यवसायश्च यस्य स्यात्तस्य वृत्तिभयं कुतः ॥ २३५ ॥ अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् । मृत्युरापद्यते

मोहात्सत्येनापद्यतेऽमृतम् ॥ २३६ ॥ बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम् । दान्तं जितेन्द्रियं चापि शाको न स्पृशते नरम् ॥ २३७ ॥ बुद्धिमन्तं च मूढं च शूरं भीरुं जडं कविम् । दुर्बलं बलवन्तं च भागिनं भजते सुखम् ॥ २३८ ॥ बुद्धिरूपगुणायुष्मत्पुत्रान्विद्याविशारदान् । प्राप्नुवन्ति नराः सर्वे सुकृतैः पूर्वजन्मनि ॥ २३९ ॥ बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत । तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ २४० ॥ दिशो वासः पात्रं करकुहरमेणाः प्रणयिनः समाधानं निद्रा शयनमवनी मूलमशनम् । कदैतत्संपूर्णं मम हृदयवृत्तेरभिमतं भविष्यत्यत्युग्रं परमपरितोषोपचितये ॥ २४१ ॥ तपःसीमा मुक्तिः सकलगुणसीमा वितरणं कलासीमा काव्यं जननसुखसीमा सुवदना । भियः सीमा मृत्युः सुकृतकुलसीमाश्रितभृतिः क्षुधासीमान्नान्तः श्रुतिमुखरसीमा हरिकथा ॥ २४२ ॥ यदा विनाशकालो वै लक्ष्यते दैवनिर्मितः । तदा वै विपरीतेषु मनः प्रकुरुते नरः ॥ २४३ ॥ व्यालाश्रयापि विफलापि सकण्टकापि वक्रापि पङ्किलभवापि दुरासदापि । गन्धेन बन्धुरसि केतकि सर्वजन्तोरेको गुणः खलु निहन्ति समस्तदोषान् ॥ २४४ ॥ प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवादस्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः । त्वं मे ते स्वामहमपि च यत्तच्च नो साधु राधे व्याहारे नौ नहि समुचितो युष्मदस्मत्प्रयोगः ॥ २४५ ॥ उत्थिता एव पूज्यन्ते जनाः कार्यार्थिभिर्नरैः । शत्रुवत्पतितं को नु वन्दते मानवं पुनः ॥ २४६ ॥ उत्पततोऽन्तरीक्षं वै गच्छतोऽपि महीतलम् । धावतः पृथिवीं सर्वां नादत्तमुपतिष्ठते ॥२४७॥ उत्पन्नमापदं यस्तु समाधत्ते स बुद्धिमान् । वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा ॥ २४८ ॥ उपशमफलाद्विद्याबीजात्फलान्तरमिच्छतां भवति विफलो यत्प्रारम्भस्तदत्र किमद्भुतम् । नियतविषया ह्येते भावा न यान्ति विपर्ययं जनयति यतः शालेर्बीजं न जातु यवाङ्कुरम् ॥ २४९ ॥ एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् । एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ २५० ॥ एकाकी गृहसंत्यक्तः पाणिपात्रो दिगम्बरः । सोऽपि संवाह्यते लोके तृष्णायाः पश्य कौतुकम् ॥ २५१ ॥ एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः । कदा शंभो भविष्यामि कर्मनिर्मूलनक्षमः ॥२५२॥ द्वाविमौ न विराजेते विपरीतेन कर्मणा । गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥२५३॥ आहारयति न स्वस्थो विनिद्रो न प्रबुध्यते । वक्ति न स्वेच्छया किंचित्सेवकः किं तु जीवति ॥ २५४ ॥ आयस्य तुर्यभागेन व्ययकर्म प्रवर्तयन् । अन्यूनतैलदीपोऽपि चिरं भद्राणि पश्यति ॥ २५५ ॥ आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः । अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥ २५६ ॥ आयत्यां च तदात्वे च यत्स्यादास्वादपेशलम् । तदेव तस्य कुर्वीत न लोकद्विष्टमाचरेत् ॥२५७॥ एतत्कामफलं लोके यद्द्वयोरेकचित्तता । अन्यचित्तकृते कामे शवयोरिव संगमः ॥२५८॥ एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रय श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् । आत्मीभावमुपैहि संत्यज निजां कल्लोललोलां गतिं मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ २५९ ॥ धैर्यं हि कार्यं सततं महद्भिः कृच्छ्रेऽपि कष्टेऽप्यतिसंकटेऽपि । कृच्छ्राण्यकृच्छ्रेण समुत्तरन्ति धैर्योच्छ्रिता ये प्रतिपत्तिदक्षाः ॥२६०॥ देहि देहीति जल्पन्ति त्यागिनोऽर्थार्थिनोऽपि च । आलोकयन्ति यावत्स्यादस्ति-नास्तीति न क्वचित् ॥ २६१ ॥ एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय विघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ २६२ ॥ देवस्याम्बुमुचश्च नास्ति नियमः कोऽप्यानुकूल्यं प्रति व्यञ्जन् यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम् । क्षिप्रं दीर्घनिदाघवासरवियत्संतापनिर्वापणां प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ॥ २६३ ॥ देवी श्रीजनकात्मजा दशमुखस्यासीद्गृहे रक्षसो नीता चैव रसातलं भगवती वेदत्रयी दानवैः । गन्धर्वस्य मदालसां च तनयां पातालकेतुश्छलाद्दैत्येन्द्रोऽपजहार हन्त विषमा वामा विधेर्वृत्तयः ॥२६४॥ किमशक्यं बुद्धिमतां किमसाध्यं निश्चयं दृढं दधताम् । किमशक्यं प्रियवचसां किमलभ्यमिहोद्यमस्थानाम् ॥ २६५ ॥ गन्धाप्यसौ भुवनविदिता केतकी स्वर्णवर्णा पद्मभ्रान्त्या चपलमधुपः पुष्पमध्ये पपात । अन्धीभूतः कुसुमरजसा कण्टकैर्लूनपक्षः स्थातुं गन्तुं द्वयमपि सखे नैव शक्तो द्विरेफः ॥ २६६ ॥ गवार्थे ब्राह्मणार्थे च स्वाम्यर्थे स्त्रीकृतेऽथ वा । स्थानार्थे यस्त्यजेत्प्राणांस्तस्य लोकाः सनातनाः ॥ २६७ ॥ गावो गन्धेन पश्यन्ति वेदेनैव द्विजातयः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ २६८ ॥ त्यागो गुणो गुणशताभ्यधिको मतो मे विद्यापि भूषयति तं यदि किं ब्रवीमि । शौर्यं च नाम यदि तत्र नमोऽस्तु तस्मै तच्च त्रयं न च यदीर्ष्यति चित्रमेतत् ॥ २६९ ॥ त्याज्यं सुखं विषयसंगमजन्म पुंसां दुःखोपसृष्टमिति मूर्ख विचारणैषा । व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान्को नाम भोस्तुषकणोपहितान्हितार्थी ॥२७०॥ दुर्गं त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्च वित्तम् । शास्त्रं च यस्योशनसा प्रणीतं स रावणो दैववशाद्विपन्नः

॥२७१॥ कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः । तस्मात्परोक्षवृत्तीनां फलैः कर्म विभावयेत् ॥२७२॥ किं गजेन प्रभिन्नेन राजकर्माण्यकुर्वता । स्थूलोऽपि यदि वाऽस्थूलः श्रेयान्कृत्यकरः पुमान् ॥२७३॥ किं चन्दनैः सकर्पूरैस्तुहिनैः शीतलैश्च किम् । सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ २७४ ॥ नोपभोक्तुं न च त्यक्तुं शक्नोति विषयाञ्जरी । अस्थि निर्दशनः श्वेव जिह्वया लेढि केवलम् ॥ २७५ ॥ नो सत्येन मृगाङ्क एष वदनीभूतो न चेन्दीवरद्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता । किं त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनः सेवते ॥ २७६ ॥ दायादा व्ययभीरुतापरिहृताऽर्धेर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केऽपि प्रियम् । राशीभूतधनस्य जीवितहृतौ शश्वद्यतेरन्निजा भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियम् ॥ २७७ ॥ कोकिलोऽहं भवान्काकः समानः कालिमावयोः । अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥२७८॥ क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद्गतः क्व स जलनिधेर्वेलां बद्ध्वा नृपः सगरस्तथा । क्व स करतलाज्जातो वैण्यः क्व सूर्यतनुर्मनुर्ननु बलवता कालेनैते प्रबध्य निमीलिताः ॥ २७९ ॥ आदीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना नीलाब्जद्युतिनाहिना वरमहं दष्टो न तच्चक्षुषा । दष्टे सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥ २८० ॥ आदौ चित्ते ततः काये सतां संजायते जरा । असतां च पुनः काये नैव चित्ते कदाचन ॥२८१॥ अत्युक्ति रहसि गतं विचित्रमत्येन भाषमाणं च । उचितप्रणयमपि नृपं सहसार्या नोपसर्पन्ति ॥ २८२ ॥ दुर्जनसंगतिरनर्थपरंपराया हेतुः सतामधिगतं वचनीयमत्र । लङ्केश्वरे हरति दाशरथेः कलत्रं प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥२८३॥ जलौकयोपमीयन्ते प्रमदा मन्दबुद्धिभिः । मृगीदृशां जलौकानां विचारान्महदन्तरम् ॥ २८४ ॥ जलौका केवलं रक्तमाददाना तपस्विनाम् । प्रमदा सर्वमादत्ते चित्तं वित्तं बलं सुखम् ॥ २८५ ॥ कुलं वृत्तं च शौर्यं च सर्वमेतन्न गण्यते । दुर्वृत्तेऽप्यकुलीनेऽपि जनो दातरि रज्यते ॥ २८६ ॥ दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्ध्या । कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः ॥ २८७ ॥ निःश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः । वरमाशीविषैः सङ्गं कुर्यान्न त्वेव दुर्जनैः ॥२८८॥ किं रुद्धः प्रियया कयाचिदथ वा सख्या ममोद्वेजितः किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः । इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥ २८९ ॥ कालिदासकविता नवं वयो माहिषं दधि सशर्करं पयः । ऐणमांसमबला च कोमला संभवन्तु मम जन्मजन्मनि ॥ २९० ॥ उपायो न जयो यादृग्रिपोस्तादृग्न हेतिभिः । उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥ २९१ ॥ आगतं विग्रहं विद्वानुपायैः प्रशमं नयेत् । विजयस्य ह्यनित्यत्वाद्रभसेन न संपतेत् ॥ २९२ ॥ नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ॥ अधोऽपि यत्सदर्शनधौतपातकः प्राप्तात्मसाम्यं त्वसतां सुदुर्लभम् ॥ २९३ ॥ ये बालभावान्न पठन्ति विद्यां ये यौवनस्था ह्यधनात्मदाराः ॥ ते शोचनीया इह जीवलोके मनुष्यरूपेण मृगाश्चरन्ति ॥ २९४ ॥ दमेन हीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः ॥ सांख्यं च योगश्च कुलं च जन्म तीर्थाभिषेकश्च निरर्थकानि ॥२९५॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ॥ तत्सङ्घातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधः प्रपद्ये ॥ २९६ ॥ शत्रोरपत्यानि प्रियंवदानि नोपेक्षितव्यानि बुधैर्मनुष्यैः ॥ तान्येव कालेषु विपत्कराणि विषस्य पात्राण्यपि दारुणानि ॥ २९७ ॥ ऋतेन जीवेदनृतेन जीन्मिवेतेन जीवेत्प्रमितेन जीवेत् ॥ सत्यानृताभ्यामथवापि जीवेत् श्ववृत्तिमेकां परिवर्जयेत्तु ॥ २९८ ॥ अक्रोधनः क्रोधनेभ्यो विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः ॥ अमानुषेभ्यो मानुषश्च प्रधानो विद्वांस्तथैवाविदुषः प्रधानः ॥ २९९ ॥ नास्तीदृशं संवननं त्रिषु लोकेषु किञ्चन ॥ यथा मैत्री च लोकेषु दानं च मधुरा च वाक् ॥ ३०० ॥ न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः ॥ यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ३०१ ॥ शूरत्वयुक्ता मृदुमन्दवाक्या जितेन्द्रियाः सत्यपराक्रमाश्च ॥ प्रागेव पश्चाद्विपरीतरूपा ये ते तु भृत्या न हिता भवन्ति ॥३०२॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ ३०३ ॥ कं योजयेन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते ॥ एवं नराणां विषयस्पृहा च निपातयन्निरये त्वन्धकूपे ॥ ३०४ ॥ कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ॥ द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुण्डमशेषदृग्घरिः ॥ ३०५ ॥ लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान्समीहेत निकामकमाः । अन्योऽन्यवैरः सुखलेशहेतोरनन्तदुःखं न च वेद मूढः ॥ ३०६ ॥ सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ॥ सत्यञ्जलौ किं पुरुधाऽन्नपात्र्या

दिग्वल्कलादौ सति किं दुकूलैः ॥ ३०७ ॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः । तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥३०८॥ प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः । ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥३०९॥ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ॥ न तेषु युज्यते देही गोभिर्गा इव गोपतिः ॥ ३१० ॥ महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥३११॥ नवनीतोपमा वाणी करुणाकोमलं मनः । धर्मबीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ ३१२ ॥ कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता । विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ३१३ ॥ किं जीवितेन धनमानविवर्जितेन मित्रेण किं भवति भीतिसशंकितेन । सिंहव्रतं चरत गच्छत मा विषादं काकोऽपि जीवति चिरं च बलिं च भुंक्ते ॥ ३१४ ॥ तन्मंगलं यत्र मनः प्रसन्नं तज्जीवनं यन्न परस्य सेवा । तदर्जितं यत्स्वजनेन भुक्तं तदर्जितं यत्समरे रिपूणाम् ॥ ३१५ ॥ वेदादिशास्त्रमखिलं प्रपठन्तु लोकाः कुर्वन्तु नाम सततं क्षितिपालसेवाम् । उग्रं तपः प्रतिदिनं प्रतिसाधयन्तु न श्रीस्तथापि च भजत्यतिभाग्यहीनम् ॥ ३१६ ॥ त्यक्त्वालसान्दैवपरान्मनुष्यान् उत्थानयुक्तान्पुरुषाद्धि लक्ष्मीः । अन्विष्य यत्नाद्वृणुयान्नृपेन्द्र तस्मात्सदोत्थानवता हि भाव्यम् ॥ ३१७ ॥ नित्यं छेदस्तृणानां धरणिविलिखनं पादयोश्चापमार्ष्टिर्दन्तानामल्पशौचं मलिनवसनता रूक्षता मूर्धजानाम् । द्वैसंध्ये चापि निद्रा विवसनशयनं ग्रासहासातिरेकः स्वांगे पीठे च वाद्यं हरति धनपतेः केशवस्यापि लक्ष्मीम् ॥ ३१८ ॥ कुचेलिनं दन्तमलोपधारिणं बह्वाशिनं निष्ठुरवाक्यभाषिणम् । सूर्योदये ह्यस्तमयेऽपि शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् ॥३१९॥ तद्वीर्यादधिकं यस्तु पुनरन्यत्स्वशक्तितः । निष्पादयति तं प्राज्ञाः प्रवदन्ति नरोत्तमम् ॥३२०॥ भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा दानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः । रथ्याकीर्णविशीर्णजीर्णवसनैरास्यूतकन्थाधरो निर्मानो निरहंकृतिः शमसुधाभोगैकबद्धस्पृहः ॥ ३२१ ॥ रोहते सायकैर्विद्धं वनं परशुना हतम् । वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ३२२ ॥ शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः सारंगाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः । येषां नैर्झरिणाम्बु पानमुचितं रत्यै च विद्याङ्गना मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥३२३॥ स्वामिनि गुणान्तरज्ञे गुणवति भृत्येऽनुवर्तिनि कलत्रे । मित्रे चानुपचर्ये निवेद्य दुःखं सुखी भवति ॥ ३२४ ॥ ताम्बूलं कटु तिक्तमिश्रमधुरं क्षारं कषायान्वितं वातघ्नं कफनाशनं कृमिहरं दौर्गन्ध्यदोषापहम् । वक्त्रस्याभरणं मलापहरणं कामाग्निसंदीपनं ताम्बूलस्य सखे त्रयोदश गुणाः स्वर्गेऽप्यमी दुर्लभाः ॥ ३२५ ॥ यः पित्रा समुपात्तानि धनवीर्ययशांसि वै । न्यूनतां नयति प्राज्ञस्तमाहुः पुरुषाधमम् ॥३२६॥ भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भवस्तत्कस्येह कृते परिभ्रमथ रे लोकाः कृतं चेष्टितैः । आशापाशशतोपशान्तिविशदं चेतः समाधीयतां काम्योत्पत्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ ३२७ ॥ लज्जां गुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाः । तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ३२८ ॥ शीघ्रकृत्येषु कार्येषु नरो यदि विलम्बते । तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥ ३२९ ॥ आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः । अर्थतः पुरुषो नारी या नारी साऽर्थतः पुमान् ॥ ३३० ॥ दक्षता भद्रता दार्ढ्यं क्षान्तिः क्लेशसहिष्णुता । संतोषः शीलमुत्साहो मण्डयन्त्यनुजीविनम् ॥ ३३१ ॥ यदुपात्तं यशः पित्रा धनं वीर्यमथापि वा । तन्न हापयते यस्तु स नरो मध्यमः स्मृतः ॥ ३३२ ॥ प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु च । शिखीव केकामधुरः प्रियवाक्कस्य न प्रियः ॥ ३३३ ॥ राज्ञो विपद्बन्धुवियोगदुःखं देशच्युतिर्दुर्गममार्गखेदः । आस्वाद्यतेऽस्याः कटु निष्फलायाः फलं मयैतच्चिरजीवितायाः ॥ ३३४ ॥ वीतव्यसनमश्रान्तं महोत्साहं महामतिम् । प्रविशन्ति सदा लक्ष्म्यः सरित्पतिमिवापगाः ॥ ३३५ ॥ स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः । तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ ३३६ ॥ के वा न सन्ति तामरसावतंसा हंसावलीवलयिनो जलसंनिवेशाः । किं चातकः फलमपेक्ष्य सवज्रपातां पौरंदरीमुपगतो नववारिधाराम् ॥३३७॥ मानमुद्वहतः पुंसो वरमापत्पदे पदे । मानहीनं सुरैः सार्धं विमानमपि संत्यजेत् ॥ ३३८ ॥ पुनर्दाराः पुनर्वित्तं पुनः क्षेत्रं पुनः पुनः । पुनः शुभाशुभं कर्म शरीरं न पुनः पुनः ॥ ३३९ ॥ रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः । तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ ३४० ॥ विधात्रा रचिता रेखा ललाटेऽक्षरमालिका । न तां मार्जयितुं शक्तः स्वबुद्ध्याप्यतिपण्डितः ॥३४१॥ सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेषु च तथ्यमेतत् । नान्यन्मनोहारि नितम्बिनीभ्यो दुःखस्य हेतुर्न च कश्चिदन्यः ॥३४२॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रधानं यदा तं मोहाच्छ्रयते मदः स च मदादालस्येन निर्विद्यते । निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभि-

द्रुह्यति ॥ ३४३ ॥ सत्यमेव व्रतं यस्य दया दीनेषु सर्वथा । कामक्रोधौ वशे यस्य तेन लोकत्रयं जितम् ॥ ३४४ ॥ परं क्षिपति दोषेण वर्तमानः स्वयं तथा । यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ३४५ ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । सन्निमित्तं वरं त्यागो विनाशे नियते सति ॥३४६॥ संनियच्छति यो वेगमुत्थितं क्रोधहर्षयोः । स श्रियो भाजनं राजन् यश्चापत्सु न मुह्यति ॥ ३४७ ॥ परिचरितव्याः सन्तो यद्यपि कथयन्ति नो सदुपदेशम् । यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ ३४८ ॥ श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते । दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥ ३४९ ॥ पञ्चभिः संभृतः कायो यदि पञ्चत्वमागतः । कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ३५० ॥ धनहेतोर्य ईहेत तस्यानीहा गरीयसी । भूयान्दोषो हि वित्तस्य यश्च धर्मस्तदाश्रयः ॥ ३५१ ॥ वाचाशौचं च मनसः शौचमिन्द्रियनिग्रहः । सर्वभूतदयाशौचमेतच्छौचं परार्थिनाम् ॥ ३५२ ॥ हृष्यन्ति देवताः सर्वा गायन्ति ऋषयस्तथा । नृत्यन्ति पितरः सर्वे ह्यतिथौ गृहमागते ॥ ३५३ ॥ दुर्वृत्तं वा सुवृत्तं वा सर्वपापरतं तथा । भर्तारं तारयत्येव भार्या धर्मेषु निष्ठिता ॥ ३५४ ॥ न भिक्षा दुष्प्रापा पथि मम महारामचरिते फलैः संपूर्णा भूरपि मृगसुचर्मापि वसनम् । सुखैर्वा दुःखैर्वा सदृशपरिपाकः खलु सदा त्रिनेत्रं कस्त्यक्त्वा धनलवमदान्धं प्रणमति ॥ ३५५ ॥ यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे । स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः ॥ ३५६ ॥ ललाटदेशे रुधिरं स्रवेद्यच्छूरस्य यस्य प्रविशेच्च वक्त्रे । तत्सोमपानेन समं भवेच्च संग्रामयज्ञे विधिवत्प्रदिष्टम् ॥३५७॥ मीनः स्नानपरः फणी पवनभुङ् मेषश्च पर्णाशनो गर्ते तिष्ठति मूषिकोऽपि विपिने सिंहो बको ध्यानवान् । शश्वद्भ्राम्यति चक्रिगौः परिचरन्दैवः सदा देवलः किं तेषां फलमस्ति तेन तपसा तद्भावशुद्धिं कुरु ॥ ३५८ ॥ बाहुवीर्यं बलं राज्ञो ब्राह्मणो ब्रह्मविद्बली । रूपयौवनमाधुर्यं स्त्रीणां बलमनुत्तमम् ॥३५९॥ नश्यतो युध्यतो वापि तावद्भवति जीवितम् । यावद्धाताऽसृजत्पूर्वं न यावन्मनसेप्सितम् ॥ ३६० ॥ पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते । जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ ३६१ ॥ दग्धं दग्धं त्यजति न पुनः काञ्चनं कान्तिवर्णं छिन्नं छिन्नं त्यजति न पुनः स्वादुतामिक्षुदण्डम् । घृष्टं घृष्टं त्यजति न पुनश्चन्दनं चारुगन्धं प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥३६२॥ नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः । येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ ३६३ ॥ छादयित्वात्मभावं हि चला हि शठबुद्धयः । प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान्भवेत् ॥ ३६४ ॥ नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् । नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव ॥ ३६५ ॥ तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् । निवर्तते तदा तर्षः पापमन्तगतं यदा ॥ ३६६ ॥ दिवसे संनिधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्यते ॥३६७॥ कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः । प्रत्यक्षं दृश्यते लोके कृतस्यापकृतस्य च ॥३६८॥ कं पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि । किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ ३६९ ॥ उर्वीपतेश्च स्फटिकाश्मनश्च शीलोज्झितस्त्रीहृदयस्य चान्तः । असंनिधानात्सततस्थितीनामन्योन्यरागः कुरुते प्रवेशम् ॥३७०॥ आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया । स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥३७१॥ कृतिनोऽपि प्रतीक्ष्यन्ते सहायं कार्यसिद्धये । चक्षुष्मानपि नालोकाद्विना वस्तु न पश्यति ॥ ३७२ ॥ किं देवकार्याणि नराधिपस्य कृत्वा विरोधं विषयस्थितानाम् । तद्देवकार्यं जपयज्ञहोमा यस्याश्रुपाता न पतन्ति राष्ट्रे ॥ ३७३ ॥ देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् । तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ३७४ ॥ राजत्रजन्युपाध्यायो देवी यच्छिक्षयेद्गृहः । तत्र प्रजागरः कर्तुमसर्वज्ञैर्न शक्यते ॥३७५॥ किं ते धनैर्बान्धवैर्वापि किं ते किं ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहस्ते क्व गतः पिता च ॥३७६॥ न व्याधयो नापि यमः प्राप्तं श्रेयः प्रतीक्षते । यावदेव भवेत्कल्यस्तावच्छ्रेयः समाचरेत् ॥ ३७७ ॥ न व्याधिर्न विषं तापस्तथान्यद्वापि भूतले । दुःखाय स्वशरीरोत्थं मौर्ख्यमेतद्यथा नृणाम् ॥ ३७८ ॥ सुखाद्बहुतरं दुःखं जीविते नास्ति संशयः । स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ ३७९ ॥ सामुद्रास्तिमयो नृपाश्च सदृशा एके हृतानम्भसः स्वस्यादेव कणान्धनस्य जहतो जानन्ति ये दातृताम् । सर्वस्वात्स्फुटलुण्ठिताद्धितरतो लेशान्किलान्येऽपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायिताम् ॥ ३८० ॥ सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च । पर्यायशः सर्वमेते स्पृशन्ति तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ३८१ ॥ कृषिका रूपनाशाय अर्थनाशाय वाजिनः । शालको गृहनाशाय सर्वनाशाय पावकः ॥ ३८२ ॥ एको बहूनां मूर्खाणां मध्ये निपतितो बुधः । पद्मः पयस्तरङ्गाणामिव विप्लवते ध्रुवम् ॥ ३८३ ॥ निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् । यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ३८४ ॥ ज्ञानं सतां मानमदादिनाशनं केषांचिदेतन्मदमानकारणम् । स्थानं विविक्तं यमिनां

विमुक्तये कामातुराणामतिकामकारणम् ॥ ३८५ ॥ तद्भोजनं यद्द्विजभुक्तशेषं तत्सौहृदं यत्क्रियते परस्मिन् । सा प्राज्ञता या न करोति पापं दम्भं विना यः क्रियते स धर्मः ॥ ३८६ ॥ धर्मात्पैजवनो राजा चिराय बुभुजे भुवम् । अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥ ३८७ ॥ कः स्वभावगभीराणां लक्षयेद्बहिरापदम् । बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥३८८॥ नास्ति धर्मसमो बन्धुर्नास्ति धर्मसमा क्रिया । नास्ति धर्मसमो देवः सत्यं सत्यं वदाम्यहम् ॥३८९॥ नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् । श्रुतिर्हि सत्यं धर्मश्च तस्मात्सत्यं न लोपयेत् ॥३९०॥ एष ते विद्रुमच्छायो मरुमार्ग इवाधरः । कस्य नो तनुते तन्वि पिपासाकुलितं मनः ॥ ३९१ ॥ नावज्ञया प्रदातव्यं किंचिद्वा केनचित्क्वचित् । अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत् ॥ ३९२ ॥ एकीभूय स्फुटमिव किमप्याचरद्भिः प्रलीनैरेभिर्भूतैः स्मर कति कृताः स्वान्त ते विप्रलम्भाः । तस्माद्देषां त्यज परिचयं चिन्तय स्वव्यवस्थामाभाषस्ते किमु न विदितः पण्डितः खण्डितः स्यात् ॥३९३॥ नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः । अतो यदात्मनोऽपथ्यं परेषां न तदाचरेत् ॥ ३९४ ॥ जलाहतौ विशेषेण वैद्युताग्नेरिव द्युतिः । आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि ॥ ३९५ ॥ नाभूतिकालेषु फलं ददन्ति शिल्पानि मन्त्रश्च तथौषधानि । तान्येव कालेन समाहितानि सिद्ध्यन्ति वर्धन्ति च भूतिकाले ॥ ३९६ ॥ देशकालविहीनानि कर्माणि विपरीतवत् । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३९७ ॥ ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः । ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥३९८॥ कुलोद्गतं सत्यमुदारविक्रमं स्थिरं कृतज्ञं धृतिमन्तमूर्जितम् । अतीव दातारमुपेतवत्सलं सुदुष्प्रसाध्यं प्रवदन्ति विद्विषम् ॥ ३९९ ॥ ऐश्वर्यात्सहसंबन्धं न कुर्याच्च कदाचन । गते च गौरवं नास्ति आगते च धनक्षयः ॥४००॥ कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ४०१ ॥ नारभेतान्यसामर्थ्यात्पुरुषः कार्यमात्मनः । मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ ४०२ ॥ एष स्वभावो नारीणामनुभूय पुरा सुखम् । अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥४०३॥ धनेन वाससा प्रेम्णा श्रद्धयामृतभाषणैः । सततं तोषयेद्दारान्नाप्रियं क्वचिदाचरेत् ॥ ४०४ ॥ का तव कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः । कस्य त्वं वा कुत आयातस्तत्त्वं चिन्तय तदिदं भ्रातः ॥ ४०५ ॥ ते चापि निपुणा वैद्याः कुशलाः संभृतौषधाः । व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्दिताः ॥ ४०६ ॥ काले सहिष्णुर्गिरिवदसहिष्णुश्च वह्निवत् । स्कन्धेनापि वहेच्छत्रून्प्रियाणि समुदाहरन् ॥ ४०७ ॥ ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् । अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥ ४०८ ॥ पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही । एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ ४०९ ॥ कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति । पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ४१० ॥ देवो राजा गुरुर्भार्या वैद्यनक्षत्रपाठकाः । रिक्तहस्ता न गच्छन्ति गते कार्यं न सिध्यति ॥ ४११ ॥ त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदा । कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥ ४१२ ॥ परोऽप्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत्सुतोऽहितः । छिन्द्यात्तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥ ४१३ ॥ कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति । शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ ४१४ ॥ पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः । पश्चाद्धर्मं निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥ ४१५ ॥ तरुणिमसमारम्भे तस्याः शरीरसरोवरं सरभस मनोहंस श्रीमन्प्रयासि कथं पुनः । श्रवणलतिकापाशौ पार्श्वे प्रसारितपातितौ हतविधिवशाद्धन्धायान्धो न पश्यति किं भवान् ॥ ४१६ ॥ पीतः क्रुद्धेन तातश्चरणतलहतो वल्लभोऽन्येन रोषादाऽऽबाल्याद्विप्रवर्यैः स्ववदनविवरे धार्यते वैरिणी मे । गेहं मे छेदयन्तिं प्रतिदिवसमुमाकान्तपूजानिमित्तात्तस्मात्खिन्ना सदाहं द्विजकुलनिलयं नाथ युक्तं त्यजामि ॥ ४१७ ॥ दूर्वाया भूषणं पत्रं वृक्षाणां भूषणं सुमम् । स्ववृत्तिर्भूषणं पुंसां नारीणां भूषणं पतिः ॥ ४१८ ॥ कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि । छन्नं संतिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ४१९ ॥ द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी । क्षत्रियः शीलमात्राजश्चिरं पालयते महीम् ॥ ४२० ॥ धनहीनो न हीनश्च धनिकः स सुनिश्चयात् । विद्यारत्नेन यो हीनः स हीनः सर्ववस्तुषु ॥ ४२१ ॥ परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ॥ ४२२ ॥ धननाशेऽधिकं दुःखं मन्ये सर्वमहत्तरम् । ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनाच्च्युतम् ॥ ४२३ ॥ तीर्थसेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने वाताशान्ग्रसते शिखी घनपयोमात्राशनोऽप्यन्वहम् । विश्वस्ताञ्जलचारिणः प्रकटितध्यानोऽपि भुङ्क्ते बकः सत्कर्माचरणेऽपि दोषविकृतौ न प्रत्ययः पापिनाम् ॥ ४२४ ॥ कृतविद्योऽपि बलिना व्यक्तं रागेण रज्यते । रागानुरक्तचित्तस्तु किं न कुर्यादसांप्रतम् ॥ ४२५ ॥ त्वया

नीलोत्पलं कर्णे स्मरेणास्त्रं शरासवे । मयापि मरणे चेतस्त्रयमेतत्समं कृतम् ॥ ४२६ ॥ धनक्षयः शिष्टगर्हा सदाचारविवर्जनम् । ज्ञातिभिः पीडनं चैव द्यूतासक्तधियां नृणाम् ॥ ४२७ ॥ त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया । पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥ ४२८ ॥ निर्दहति कुलशेषं ज्ञातीनां वैरसंभवः क्रोधः । वनमिव घनपवनाहततरुवरसंघट्टसंभवो दहनः ॥ ४२९ ॥ पयोमुचः परीतापं हरन्त्येव शरीरिणाम् । नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ ४३० ॥ त्यजेद्धर्मं दयाहीनं विद्याहीनं गुरुं त्यजेत् । त्यजेत्क्रोधमुखीं भार्यां निःस्नेहान्बान्धवांस्त्यजेत् ॥ ४३१ ॥ त्यजेत संचयांस्तस्मात्तज्जान्क्लेशान्सहेत वा । नहि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ॥ ४३२ ॥ नौका च खलजिह्वा च प्रतिकूलप्रवर्तिनी । प्रतारणाय लोकानां दारुणा केन निर्मिता ॥ ४३३ ॥ तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव । न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ॥ ४३४ ॥ नोपभोगो न वा दानं बन्धुना भरणं न वा । तथापि गुरुतां धत्ते नृणां संरक्षितं धनम् ॥ ४३५ ॥ द्वावेव कथितौ सद्भिः पन्थानौ वदतां वर । अहिंसा चैव सत्यं च यत्र धर्मः प्रतिष्ठितः ॥ ४३६ ॥ तृणोल्कया जायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः । शूरो भयेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रास्वापत्सु सुहृदश्चारयश्च ॥ ४३७ ॥ निर्गुणस्य हतं रूपं दुःशीलस्य हतं कुलम् । असिद्धस्य हता विद्या अभोगेन हतं धनम् ॥ ४३८ ॥ दोग्ध्री धान्यं हिरण्यं च मही राज्ञा सुरक्षिता । नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ॥ ४३९ ॥ मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा । ददात्यमित्रेष्वभियाचितः स्वं तमात्मवन्तं प्रजहत्यनर्थाः ॥ ४४० ॥ यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन । न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायकः ॥ ४४१ ॥ भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणाम् । यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ४४२ ॥ मूर्खस्तु परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः । भिनत्ति वाक्यशल्येन अदृशं कण्टको यथा ॥ ४४३ ॥ यत्रोदकं तत्र वसन्ति हंसास्तथैव शुष्कं परिवर्जयन्ति । न हंसतुल्येन नरेण भाव्यं पुनस्त्यजन्ते पुनराश्रयन्ते ॥ ४४४ ॥ भूतानामपरः कश्चिद्धिंसायां सततोत्थितः । वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ ४४५ ॥ मृत्योर्वा गृहमेतद्वै या ग्रामे वसतो रतिः । देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ ४४६ ॥ यः सर्वकालमबुधैः परिहस्यमानो मूलाङ्कुरावपि न जातु पुरस्करोति । व्यापत्सु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीम् ॥ ४४७ ॥ भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् । चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ ॥ ४४८ ॥ पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । मालाकार इवारामे न यथाङ्गारकारकः ॥ ४४९ ॥ भक्तद्वेषो जडे प्रीतिः सुरुचिर्गुरुलङ्घने । मुखे कटुकता नित्यं धनिनां ज्वरिणामिव ॥ ४५० ॥ यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानम् । त्यागेन तद्यस्य भवेन्नमोऽस्तु चित्रप्रभावाय धनाय तस्मै ॥ ४५१ ॥ उपकारं करोम्यस्य ममाप्येष करिष्यति । अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ ४५२ ॥ महाबलान्पश्य महानुभावान्प्रशास्य भूमिं धनधान्यपूर्णाम् । राज्यानि हित्वा विपुलांश्च भोगान्गतान्नरेन्द्रान्वशमन्तकस्य ॥ ४५३ ॥ यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य । एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति ॥ ४५४ ॥ फेनमात्रोपमे देहे जीवे शकुनिवत्स्थिते । अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक ॥ ४५५ ॥ यदा विनाशो भूतानां दृश्यते कालचोदितः । तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥ ४५६ ॥ प्रिया वा मधुरा वा तु स्वाम्येष्वेव विराजते । श्रीरक्षणे प्रमाणं तु वाचः सुनयकर्कशाः ॥ ४५७ ॥ महादेवो देवः सरिदपि च सैवामरसरिद्गुहा एवागारं वसनमपि ता एव हरितः । सुहृद्वा कालोऽयं व्रतमिदमदैन्यव्रतमिदं कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ४५८ ॥ यथा तैलक्षयाद्दीपः प्रह्रासमुपगच्छति । तथा कर्मक्षयाद्दैवं प्रह्रासमुपगच्छति ॥ ४५९ ॥ प्राप्य कार्यं गरीयस्तु प्रियमुत्सृज्य दूरतः । हितमेव हि वक्तव्यं सुहृदा मंत्रिणा सदा ॥ ४६० ॥ मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत् । श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥ ४६१ ॥ यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् । तस्यां तस्यामवस्थायां तत्फलं समुपाश्नुते ॥ ४६२ ॥ भर्तारं किल या नारी छायेवानुगता सदा । अनुगच्छति गच्छन्तं तिष्ठन्तं चानुतिष्ठति ॥ ४६३ ॥ महान्तमप्यर्थमधर्मयुक्तं यः संत्यजत्यनपाकृष्ट एव । सुखं सुदुःखान्यवमुच्य शेते जीर्णां त्वचं सर्प इवावमुच्य ॥ ४६४ ॥ यस्य चित्तं द्रवीभूतं कृपया सर्वजन्तुषु । तस्य ज्ञानेन मोक्षेण किं जटाभस्मलेपनैः ॥ ४६५ ॥ मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः । हरन्ति न तथा वाचो यथा साधु-

विपश्चिताम् ॥ ४६६ ॥ प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा । सर्वः कालवशं याति शुभाशुभसमन्वितः ॥ ४६७ ॥ यदा शरीरस्य शरीरिणश्च पृथक्त्वमेकान्तत एव भावि । आहार्ययोगेण वियुज्यमानः परेण को नाम भवेद्विषादी ॥ ४६८ ॥ मधुरेणदृशां मानं मधुरेण सुगन्धिना । सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ ४६९ ॥ तद्भावभावनिरता तत्संयोगपरायणा । तमेव भूयो भर्तारं सा प्रेत्याप्यनुगच्छति ॥ ४७० ॥ मूर्खश्चिरायुर्जातोऽपि तस्माज्जातमृतो वरः । मृतः स चाल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ४७१ ॥ प्राकृतो हि प्रशंसन्वा निन्दन्वा किं करिष्यति । वने काक इवाबुद्धिर्वाशमानो निरर्थकम् ॥ ४७२ ॥ यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः । मायाचारो मायया बाधितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥ ४७३ ॥ मयास्योपकृतं पूर्वं ममाप्येष करिष्यति । इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥ ४७४ ॥ युगान्ते चलते मेरुः कल्पान्ते सप्त सागराः । साधवः प्रतिपन्नार्थान्न चलन्ति कदाचन ॥ ४७५ ॥ भवने सुहृदो यस्य समागच्छन्ति नित्यशः । चित्ते च सौख्येन न किंचित्सदृशं भुवि ॥ ४७६ ॥ वणिक्प्रमादी भृतकश्च मानी भिक्षुर्विलासी ह्यधनश्च कामी । वराङ्गना चाप्रियवादिनी च न ते च कर्माणि समारभन्ते ॥ ४७७ ॥ चिंतासहस्रेषु च तेषु मध्ये चिंताश्चतस्रोऽप्यसिधारतुल्याः । नीचापमानं क्षुधितं कलत्रं भार्या विरक्ता सहजोपरोधः ॥ ४७८ ॥ कान्तावियोगः स्वजनापमानं ऋणस्य शेषः कुजनस्य सेवा । दारिद्र्यभावाद्विमुखाश्च मित्रा विनाग्निना पञ्च दहन्ति तीव्राः ॥ ४७९ ॥ यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग । अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिको यत्र न मृत्युहासः ॥ ४८० ॥ गृहेश्वरीं सद्गुणभूषितां शुभां पङ्ग्वन्धयोगेन पतिं समेताम् । न लालयेत्पूरयेन्नैव कामं स किं पुमान्न पुमान्मे मृतोऽस्ति ॥ ४८१ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ४८२ ॥ एकान्तशीलस्य दृढव्रतस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य । अध्यात्मयोगे गतमानसस्य मोक्षो ध्रुवं नित्यमहिंसकस्य ॥ ४८३ ॥ न शब्दशास्त्रे निरतस्य मोक्षो न वर्णसङ्गे निरतस्य चैव । न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥ ४८४ ॥ बालातपः प्रेतधूमः स्त्री वृद्धा तरुणं दधि । आयुष्कामो न सेवेत तथा संमार्जनी रजः ॥ ४८५ ॥

नाश्नन्ति पितरो देवाः क्षुद्रस्य वृषलीपतेः । भा नाश्नन्ति यस्य चोपपतिर्गृहे ॥ ४८६ ॥ सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि । एकश्चरन्रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥ ४८७ ॥ धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरं गतं पृथ्वी वन्ध्यफला जनः कपटिनो लौल्ये स्थिता ब्राह्मणाः । मर्त्याः स्त्रीवशगाः स्त्रियश्च चपला नीचा जना उन्नता हा कष्टं खलु जीवितं कलियुगे धन्या जना ये स्मृताः ॥ ४८८ ॥ यस्मिन्यदा पुष्करनाभमायया दुरन्तया स्पृष्टधियः पृथग्यशः । कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृते क्रमम् ॥ ४८९ ॥ यो धर्मशीलो जितमानरोषो विद्याविनीतो न परोपतापी ॥ स्वदारतुष्टः परदारवर्जितो न तस्य लोके भयमस्ति किंचित् ॥ ४९० ॥ अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः । सिद्धेऽन्यथार्थे न यतेत भूयः परिश्रमं तत्र समीक्षमाणः ॥ ४९१ ॥ भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सह षट्सपत्नः । जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम् ॥ ४९२ ॥ यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ ४९३ ॥ पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही । एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ ४९४ ॥ यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे । कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ४९५ ॥ ममत्वं हि न कर्तव्यमैश्वर्ये वा धनेऽपि वा । पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः ॥ ४९६ ॥ प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया । उदयास्तमनज्ञो हि न हृष्यति न शोचति ॥ ४९७ ॥ यस्य पुत्रो वशीभूतो भार्या छन्दानुगामिनी । विभवे यश्च संतुष्टस्तस्य स्वर्ग इहैव हि ॥ ४९८ ॥ भोक्तुं पुरुषकारेण दुष्टस्त्रियमिव श्रियम् । व्यवसायं सदैवेच्छेन्न हि क्लीबवदाचरेत् ॥ ४९९ ॥ मार्दवं सर्वभूतानामनसूया क्षमा धृतिः । आयुष्याणि बुधा प्राहुर्मित्राणां चापि मानना ॥ ५०० ॥ पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ५०१ ॥ यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ५०२ ॥ भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति । रजसा शुध्यते नारी नदी वेगेन शुध्यति ॥५०३॥ मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन् वनात् । वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ॥ ५०४ ॥ यत्क्रोधनो यजति यद्ददाति यद्वा तपस्तप्स्यति यज्जुहोति ।

वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति हि क्रोधनस्य ॥ ५०५ ॥ पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च । न तेषु निवसेत्प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु ॥ ५०६ ॥ भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च । भार्या धर्मफलावाप्त्यै भार्या संतानहेतवे ॥ ५०७ ॥ ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन वा । तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ॥ ५०८ ॥ वध्यन्ते न ह्यविश्वस्ता शत्रुभिर्दुर्बला अपि । विश्वस्तास्तेषु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ५०९ ॥ पुरतः कृच्छ्रकालस्य धीमान् जागर्ति पूरुषः । स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित् ॥ ५१० ॥ बन्धनानि खलु सन्ति बहूनि प्रेमरज्जु दृढबन्धनमुक्तम् । दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोशे ॥ ५११ ॥ यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते । स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत् ॥ ५१२ ॥ ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च । वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ५१३ ॥ यत्त सम्यगुपक्रान्तं कार्यमेति विपर्ययम् । पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः ॥ ५१४ ॥ पुष्पे गन्धं तिले तैलं काष्ठेऽग्निं पयसि घृतम् । इक्षौ गुडं तथा देहे पश्यात्मानं विवेकतः ॥ ५१५ ॥ मुखं पद्मदलाकारं वाक्यं चन्दनशीतलम् । हृदयं वह्निसदृशं त्रिविधं धूर्तलक्षणम् ॥ ५१६ ॥ भार्या पतिं संप्रविश्य स यस्माज्जायते पुनः । जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥ ५१७ ॥ पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ । भ्राजते न सभामध्ये जारगर्भ इव स्त्रियाः ॥ ५१८ ॥ यस्य स्नेहो भयं तस्य स्नेहो दुःखस्य भाजनम् । स्नेहमूलानि दुःखानि तानि त्यक्त्वा वसेत्सुखम् ॥ ५१९ ॥ ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा । अमात्यं नृपतिर्वेद राजा राजानमेव च ॥५२०॥ यस्य स्त्रीषु रतेः शक्तिर्जीर्णशक्तिश्च भोजने । देहेऽधिकबला शक्तिस्तस्यारोग्यं प्रचक्षते ॥५२१॥ प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम् । ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम् ॥ ५२२ ॥ प्रकुप्यत्यप्रतीकार्ये स्वतेजस्तप्तचेतसाम् । शरणं मरणं त्यक्त्वा किमिवान्यद्यशोऽर्थिनाम् ॥ ५२३ ॥ सज्जमानमकार्येषु सुहृदो वारयन्ति ये । सत्यं ते नैव सुहृदो गुरवो गुरवो हि ते ॥ ५२४ ॥ फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् । न नामग्रहणादेव तस्य वारि प्रसीदति ॥ ५२५ ॥ प्राप्ते भार्ये परित्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ ५२६ ॥ सत्यं वक्तुमशेषमस्ति सुलभा वाणी मनोहारिणी दातुं दानवरं शरण्यमभयं स्वच्छं पितृभ्यो जलम् । पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं क्षुद्व्याधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः ॥ ५२७ ॥ फलतीह पूर्वसुकृतं विद्यावन्तोऽपि कुलसमुद्भूताः । यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ५२८ ॥ सर्वनाशे च संजाते प्राणानामपि संशये । अपि शत्रुं प्रणम्योच्चै रक्षेत्प्राणान्धनानि च ॥५२९॥ प्रमाणाभ्यधिकस्यापि गण्डश्याममदच्युते । पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ ५३० ॥ संचये च विनाशान्ते मरणान्ते च जीविते । संयोगे च वियोगान्ते को नु विप्रणयेन्मनः ॥५३१॥ प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम् । क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ५३२ ॥ सतां मतमतिक्रम्य योऽसतां वर्तते मते । कालेन व्यसनं प्राप्य पश्चात्तापं स गच्छति ॥ ५३३ ॥ पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ५३४ ॥ व्यथयन्ति परं चेतो मनोरथशतैर्जनाः । अनुष्ठानैर्विहीनाः स्युः कुलजा विधवा इव ॥ ५३५ ॥ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ ५३६ ॥ प्रदह्यमानास्तीक्ष्णेन नीचाः परयशोग्निना । अशक्तास्तत्पदं गन्तुमतो निन्दां प्रकुर्वते ॥ ५३७ ॥ फलं धर्मस्य विभवो विभवस्य फलं सुखम् । सुखमूलं तु तन्वङ्ग्यो विना ताभिः कुतः सुखम् ॥ ५३८ ॥ वणिगालोक्य निजे हृदि सोत्साहं परिचितग्रहीतारम् । हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन ॥ ५३९ ॥ बहुधा बहुभिः सार्धं चिन्तिताः सुनिरूपिताः । न कथंचिद्विलीयन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ५४० ॥ श्यामा प्रिया केशव एव देवो मानो धनं मन्मथ एव धन्वी । वाणी सखी वारण एव यानं कालो वसन्तः कवितैव विद्या ॥ ५४१ ॥ बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति । प्राणार्थमेते हि समाचरन्ति मतं सतां यन्न मतं यदेषाम् ॥ ५४२ ॥ प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते । जीर्यन्त्यपि तु काष्ठानि दरिद्राणां महीपते ॥ ५४३ ॥ शत्रुणा योजयेच्छत्रुं बलिना बलवत्तरम् । स्वकार्याय यतो स्यात्काचित्पीडात्र तत्क्षये ॥ ५४४ ॥ प्रायः कन्दुकपातेनोत्पतत्यार्यः पतन्नपि । तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ५४५ ॥ बहूनामप्यसाराणां समवायो बलावहः । तृणैरावेष्ट्यते रज्जुस्तया नागोऽपि वध्यते ॥ ५४६ ॥ वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः । आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ ५४७ ॥ प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य

विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति ॥ ५४८ ॥ शक्याशक्यमविज्ञाय यस्त्वसाध्ये प्रवर्तते । स केवलमवाप्नोति निजजीवितसंक्षयम् ॥ ५४९ ॥ प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु । स सुप्त इव वृक्षाग्रे पतितः प्रतिबुध्यते ॥ ५५० ॥ विप्रो वृक्षस्तस्य मूलं च संध्या वेदः शाखा धर्मकर्मादि पत्रम् । तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने मूले नैव शाखा न पत्रम् ॥५५१॥ शक्ष्यामि कर्तुमिदमल्पमयत्न-साध्यमत्रादरः क इति कृत्यमुपेक्षमाणाः । केचित्प्रमत्तमनसः परितापदुःखमापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ ५५२ ॥ विश्राम्यन्ति महात्मानो यत्र कल्पतराविव । स श्लाघ्यं जीवति श्रीमान्सत्संभोगफलाः श्रियः ॥ ५५३ ॥ संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षाम्बुसिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ५५४ ॥ प्रविष्टः सर्वभूतानि यथा चरति मारुतः । चारेणैवं चरेद्राजा स्मृतं तन्मारुतं व्रतम् ॥ ५५५ ॥ विहितस्याननुष्ठानान्निन्दि-तस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ ५५६ ॥ शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ५५७ ॥ व्यञ्जनं हन्ति वै पूर्वं चैव पयोधरौ । रतिरिष्टांस्तथा लोकान्हन्याच्च पितरं रजः ॥ ५५८ ॥ प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः । मज्जन्ति पाप-गुरवः शस्त्रं स्कन्नमिवोदके ॥ ५५९ ॥ सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते । वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न संदधे ॥ ५६० ॥ शठस्तु समयं प्राप्य नोपकारं हि मन्यते । वरं तमुपकर्तारं दोषदृष्ट्या च दूषयेत् ॥ ५६१ ॥ सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते । सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ ५६२ ॥ प्रयाति शमनं यस्य तेजस्तेजस्वितेजसा । वृथाजातेन किं तेन मातुर्यौवनहारिणा ॥ ५६३ ॥ साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः । पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥ ५६४ ॥ विकारं याति नो चित्तं वित्ते यस्य कदाचन । मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम् ॥ ५६५ ॥ सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः । प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५६६ ॥ विपुलमपि धनौघं प्राप्य भोगान्स्त्रियो वा पुरुष इह न शक्तः कर्महीनो हि भोक्तुम् । मुनिहितमपि चार्थं दैवतं रक्ष्यमाणं पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ॥ ५६७ ॥ योऽभ्यर्थितः सद्भिरसज्जमानः करोत्यर्थं शक्तिमहापयित्वा । क्षिप्रं यशस्तं समुपैति सन्तमलं प्रसन्ना हि सुखाय सन्तः ॥ ५६८ ॥ षण्णामात्मनि युक्तानामिन्द्रियाणां प्रमाथिनाम् । यो धीरो धारयेद्रश्मीन्स स्यात्परमसारथिः ॥ ५६९ ॥ वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् । यस्य प्रमाणं न भवेत्प्रमाणंक स्तस्य कुर्याद्वचनं प्रमाणम् ॥ ५७० ॥ सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः । अन्योऽन्यबन्धनावेतौ विनान्योऽन्यं न सिध्यतः ॥ ५७१ ॥ वैराग्ये संचरत्येको नीतौ भ्रमति चापरः । शृङ्गारे रमते कश्चिद्भुवि भेदाः परस्परम् ॥ ५७२ ॥ हृदि विद्ध इवात्यर्थं यथा संतप्यते जनः । पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥ ५७३ ॥ विद्वद्भिः सुहृदामत्र चिह्नैरेतै-र्विसंशयम् । परीक्षाकरणं प्रोक्तं होमाग्नेरिव भूतले ॥५७४॥ संतोषस्त्रिषु कर्तव्यो स्वदारे भोजने । त्रिषु चैव न कर्तव्योऽध्येन तपदानयोः ॥ ५७५ ॥ प्रसारितकरे मित्रे जगदुद्द्योतकारिणि । किं न कैरव लज्जा ते कुर्वतः कोशसंवृतिम् ॥ ५७६ ॥ यो यत्र सततं याति भुङ्क्ते चैव निरन्तरम् । स तत्र लघुतां याति यदि शक्रसमो भवेत् ॥५७७॥ लब्धव्यमर्थं लभते मनुष्यो देवोऽपि तं वारयितुं न शक्तः । अतो न शोचामि न विस्मयो मे ललाटलेखा न पुनः प्रयाति ॥ ५७८ ॥ ये च मूढतमा लोके ये च बुद्धेः परं गताः । त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ॥५७९॥ वरं न राज्यं न कुराजराज्यं वरं न मित्रं न कुमित्रमित्रम् । वरं न शिष्यो न कुशिष्यशिष्यो वरं न दारा न कुदारदाराः ॥ ५८० ॥ यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा । आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५८१ ॥ प्रालेय-लेशमिश्रे मरुति प्राभातिके च वाति जडे । गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति ॥ ५८२ ॥ प्राणत्यागे समुत्पन्ने यदा स्यान्मित्रदर्शनम् । तद्वाभ्यां सुखदं पश्चा-ज्जीवतोऽपि मृतस्य च ॥ ५८३ ॥ सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाधीयतां शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् । सद्विद्यो ह्युपसर्प्यतां प्रतिदिनं तत्पादुका सेव्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ ५८४ ॥ विरहोऽपि संगमः खलु परस्परं संगतं मनो येषाम् । यदि हृदयं तु विघटितं समागमोऽपि विरहं विशेषयति ॥ ५८५ ॥ प्रणयमधुराः प्रेमोद्गाढा रसादलसा-स्तथा भणितिमधुरा मुग्धप्रायाः प्रकाशितसंमदाः । प्रकृति-सुभगा विश्रम्भार्हाः स्मरोदयदायिनो रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ५८६ ॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् । हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ५८७ ॥ यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् । न मूर्च्छितः कटुकान्याह

किंचित्प्रियं सदा तं कुरुते जनो हि ॥ ५८८ ॥ प्रतीपं कृष्यमाणो हि नोत्तरेदुत्तरेन्नरः । वाह्यमानोऽनूकूलं तु नद्योघाद्व्यसनात्तथा ॥ ५८९ ॥ संप्राप्य पण्डितः कृच्छ्रं प्रज्ञामेवावगाहते । बालस्तु कृच्छ्रमासाद्य शिलेवाम्भसि मज्जति ॥ ५९० ॥ प्रणिपातेन हि गुरून्सतोऽनूचानचेष्टितैः । कुर्वीताभिमुखान्भूत्यै देवान्सुकृतकर्मणा ॥ ५९१ ॥ संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव । अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ ५९२ ॥ प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः । भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ ५९३ ॥ सर्वौषधीनाममृता प्रधाना सर्वेषु सौख्येष्वशनं प्रधानम् । सर्वेन्द्रियाणां नयनं प्रधानं सर्वेषु गात्रेषु शिरः प्रधानम् ॥ ५९४ ॥ राजा राष्ट्रकृतं पापं राज्ञः पापं पुरोहितः । भर्ता च स्त्रीकृतं पापं शिष्यपापं गुरुस्तथा ॥ ५९५ ॥ यो नात्युक्तः प्राह रूक्षं प्रियं वा यो वा हतो न प्रतिहन्ति धैर्यात् । पापं च यो नेच्छति तस्य हन्तुस्तस्येह देवाः स्पृहयन्ति नित्यम् ॥ ५९६ ॥ प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते । आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥ ५९७ ॥ वित्तं देहि गुणान्वितेषु मतिमन्नान्यत्र देहि क्वचित्प्राप्तं वारिनिधेर्जलं घनमुखे माधुर्ययुक्तं सदा । जीवान्स्थावरजङ्गमांश्च सकलान्संजीव्य भूमण्डलं भूयः पश्य तदेव कोटिगुणितं यच्छत्तमम्भोनिधिम् ॥५९८॥ प्रियमनुचितं क्ष्मापण्यस्त्रीक्षणप्रभुरीश्वरो रमयति यतो धिक्तान्भृत्यान्स्ववृत्तिसुखार्थिनः । नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्वरी ॥ ५९९ ॥ प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् । एवं विद्वानविद्वांश्च ब्राह्मणो दैवतं परम् ॥ ६०० ॥ संसारश्रान्तचित्तानां तिस्रो विश्रान्तिभूमयः । अपत्यं च कलत्रं च सतां संगतिरेव च ॥ ६०१ ॥ वाति गन्धः सुमनसां प्रतिवातं कथंचन । धर्मजस्तु मनुष्याणां वाति गन्धः समन्ततः ॥ ६०२ ॥ शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति । अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ ६०३ ॥ विद्वानृजुरभिगम्यो विदुषि शठे चाप्रमादिना भाव्यम् । ऋजुमूर्खस्त्वनुकम्प्यो मूर्खशठः सर्वथा त्याज्या ॥ ६०४ ॥ यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् । अवसीदेत्सुदुर्बुद्धिरामो घट इवोदके ॥ ६०५ ॥ राजा वेश्या यमश्चाग्निस्तस्करो बालयाचकौ । परदुःखं न जानन्ति अष्टमो ग्रामकण्टकः ॥ ६०६ ॥ प्राणवद्रक्षयेद्भृत्यान्स्वकायमिव पोषयेत् । सदैकदिवसस्यार्थे यत्र स्याद्रिपुसंगमः ॥ ६०७ ॥ तं शोकवेगाभिहतं व्याधिः स्पृशति दारुणः । तस्मात्मा संप्रमुह्येत न शोकाद्विप्रमुच्यते ॥६०८॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ ६०९ ॥ विद्यार्थी सेवकः पान्थः क्षुधार्तो भयकातरः । भाण्डारी प्रतिहारी च सप्त सुप्तान्प्रबोधयेत् ॥ ६१० ॥ शोकेन रोगा वर्धन्ते पयसा वर्धते तनुः । घृतेन वर्धते वीर्यं मांसान्मांसं प्रवर्धते ॥ ६११ ॥ श्लाध्यं जन्म सुरूपता धनिकता नीरोगता प्राज्ञता स्वाचारस्थिरता दया सुकुलता दाक्षिण्यवद्दारता । आयुष्मद्गुणिपुत्रता स्ववशता सौजन्यवन्मित्रता श्रीशे भक्तिरती च यस्य स नरः स्यान्मानवानन्दवान् ॥ ६१२ ॥ वयसः परिणामेऽपि यः खलः खल एव सः । सुपक्वमपि माधुर्यं नोपयातीन्द्रवारुणम् ॥ ६१३ ॥ शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया । प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ६१४ ॥ यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः । न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ ६१५ ॥ रुजन्ति हि शरीराणि रोगाः शारीरमानसाः । सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ॥ ६१६ ॥ भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः । वस्तुग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥ ६१७ ॥ रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्पर्युत्सुकीभवति यत्सुखितेऽपि जन्तुः । तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि ॥ ६१८ ॥ संतुष्टो भायया भता भर्त्रा भार्या तथैव च । यस्मिन्नेवं कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ६१९ ॥ शीतभीताश्च ये विप्रा रणभीताश्च क्षत्रियाः । अग्निभीता च या नारी त्रयः स्वर्गं न यान्ति हि ॥ ६२० ॥ विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः । अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ ६२१ ॥ रसायनविदश्चैव सुप्रयुक्तरसायनाः । दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ६२२ ॥ योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते । शृणोति चानुकूलानि द्विषतां वशमेति सः ॥ ६२३ ॥ लक्ष्म्या लक्ष्मीवतां. लोके विकाशिन्या च किं तया । बन्धुभिश्च सुहृद्भिश्च विश्रब्धं या न भुज्यते ॥६२४॥ रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके । अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः ॥ ६२५ ॥ लक्ष्मीर्धर्मश्च संतानः कीर्तिश्चायुष्यवैभवम् । वर्धते दयया नित्यं राजन्भूतदयां कुरु ॥ ६२६ ॥ प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः । बुद्धिर्बुद्धिमतामपि कुटुम्बभारस्य चिन्ताभिः ॥ ६२७ ॥ रम्या रामा यदि कुलवधूस्त्यागभोगाय वित्तं वक्त्रे वाणी सरलकविता केशवे चित्तवृत्तिः । सद्भिः सङ्गो वपुषि दृढता सत्कुले जन्म पुंसां

धिग्धिग्दूरादनशनपथं सर्गमेकान्तदुर्गम् ॥ ६२८ ॥ पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यम् । मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात्किराटानाम् ॥ ६२९ ॥ विवेकिनमनुप्राप्ता गुणा यान्ति मनोज्ञताम् । सुतरां रत्नमाभाति चामीकरनियोजितम् ॥ ६३० ॥ पूर्णेन्दुमालोक्य यथा प्रीतिमाञ्जायते नरः । एवं यत्र प्रजाः सर्वा निर्वृतास्तच्छशिव्रतम् ॥ ६३१ ॥ सत्कृता लालिताश्चैव वैदेहि प्राकृताः स्त्रियः । दरिद्रमवमन्यन्ते भर्तारं न तु सत्स्त्रियः ॥ ६३२ ॥ कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम् । स तारयति तत्काष्ठं स च काष्ठेन तार्यते ॥६३३॥ कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव । वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ६३४ ॥ निर्गत्य न विशेद्भूयो महतां दन्तिदन्तवत् । कूर्मग्रीवेव नीचानां वच आयाति याति च ॥६३५॥ बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते । स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ ६३६ ॥ कुपुत्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः । कुराज्ये निर्वृतिर्नास्ति कुदेशे नास्ति जीविका ॥६३७॥ जीवितं च शरीरेण जात्यैव सह जायते । उभे सह विवर्तेते उभे सह विनश्यतः ॥६३८॥ प्रज्ञाशरेणाभिहतस्य जन्तोश्चिकित्सकाः सन्ति न चौषधानि । न होममन्त्रा न च मङ्गलानि नाथर्वणा नाप्यगदाः सुसिद्धाः ॥६३९॥ बन्धनानि खलु सन्ति बहूनि प्रेमरज्जु दृढबन्धनमुक्तम् । दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोशे ॥६४०॥ भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते । असहायस्य लोकेऽस्मिँल्लोकयात्रासहायिनी ॥ ६४१ ॥ कोशद्वंद्वमियं दधाति नलिनी कादम्बचञ्चूक्षतं धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् । इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घकायास्तते चैलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥ ६४२ ॥ जानाति विश्वासयितुं मनुष्यान्विज्ञातदोषेषु दधाति दण्डम् । जानाति मात्रां च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ॥ ६४३ ॥ एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः । राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ॥ ६४४ ॥ कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् । अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ ६४५ ॥ न किंचित्सहसा कार्यं कार्यं कार्यविदा क्वचित् । क्रियते चेद्विविच्यैव तस्य श्रेयः करस्थितम् ॥ ६४६ ॥ दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैर्ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया संसारे नसतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ ६४७ ॥ एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां प्राणात्मा सुसमीक्ष्यतां जगदिदं तद्यापितं दृश्यताम् । प्राक्कर्म प्रविलोप्यतां चितिबलान्नाप्युत्तरे श्लिष्यतां प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मनास्थीयताम् ॥ ६४८ ॥ धूमाद्गाढमलीमसाच्छुचि पयः सूते घनस्योद्गमो लोहस्यातिशितस्य जातिरचलात्कुष्ठाश्ममालामयात् । किं चात्यन्तजडाज्ज्वलाद्युतिमतो ज्वालाध्वजस्योद्भवो जन्मावध्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित् ॥ ६४९ ॥ भूतानामपरः कश्चिद्धिंसायां सततोत्थितः । वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ ६५० ॥ एकामिषप्रभवमेव सहोदराणामुज्जृम्भते जगति वैरमिति प्रसिद्धम् । पृथ्वीनिमित्तमभवत्कुरुपांडवानां तीव्रस्तथा हि भुवनक्षयकृद्विरोधः ॥ ६५१ ॥ ते पिबन्तः कषायांश्च सर्पींषि विविधानि च । दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ६५२ ॥ न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम । न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ ६५३ ॥ एकाकिना न गन्तव्यं यदि कार्यशतान्यपि । कर्कटीजन्तुमात्रेण कालसर्पो निपातितः ॥ ६५४ ॥ न दानैः शुध्यते नारी नोपवासशतैरपि । न तीर्थसेवया तद्वद्भर्तुः पादोदकैर्यथा ॥ ६५५ ॥ भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् । चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ ६५६ ॥ न दिष्टमप्यतिक्रान्तुं शक्यं भूतेन केनचित् । दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ६५७ ॥ भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणाम् । यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ६५८ ॥ भार्या यस्य गृहे नित्यमतीव परिगर्विता । तस्य लक्ष्मीः क्षयं याति कृष्णपक्षे यथा शशी ॥ ६५९ ॥ न कर्मणा लभ्यते नेज्यया वा नाप्यस्ति दाता पुरुषस्य कश्चित् । पर्याययोगाद्विहितं विधात्रा कालेन सर्वं लभते मनुष्यः ॥ ६६० ॥ भोक्तुं पुरुषकारेण दुष्टस्त्रियमिव श्रियम् । व्यवसायं सदैवेच्छेन्नहि क्लीबवदाचरेत् ॥६६१॥ धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च । धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ६६२ ॥ कुर्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात्स्वैरिण्यः क्षितिपाश्च धिक्चपलतां क्रौर्यं च कुर्युः सकृत् । पापाक्रान्तधियो भवन्त्यथ यथा नान्यान्स्पृशन्त्योऽपि ता दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोऽपि शान्तत्रपाः ॥ ६६३ ॥ दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् । मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः ॥ ६६४ ॥ बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः । वनस्था अपि राज्यानि विनयात्प्रतिपेदिरे ॥ ६६५ ॥ जलरेखा खलप्रीतिरधर्वारिघटस्थता । शिरसा धार्यमाणोऽपि खलः खलखलायते ॥ ६६६ ॥ जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम् । मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः ॥ ६६७ ॥ न वाचा दुर्गमः पारः कार्याणां राक्षसाधम ।

१ वणिजाम्.

कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ॥ ६६८ ॥ नयेन जाग्रत्यनिशं नरेश्वरे सुखं स्वपन्तीह निराधयः प्रजाः । प्रमत्तचित्ते स्वपतीह संभ्रमात्प्रजागरेणास्य जगत्प्रबुध्यते ॥ ६६९ ॥ चिता दहति निर्जीवं चिन्ता जीवं दहत्यहो । बिन्दुनैवाधिका चिंता चितात्यल्पा हि भूतले ॥ ६७० ॥ न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः । अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ६७१ ॥ दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव । विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥ ६७२ ॥ न सा प्रीतिर्दिविस्थस्य सर्वकामानुपाश्नुतः । संभवेद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम् ॥ ६७३ ॥ तीर्थस्थितः स्वकुलजांस्तिमिरत्ति भुङ्क्ते मौनी बकस्तिमिमुपेत्य वनान्तवासी । व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाम् ॥ ६७४ ॥ एतल्लब्धमिदं च लभ्यमधिकं तन्मूललभ्यं ततो लभ्यं चापरमित्यनारतमहो लभ्यं धनं ध्यायसि । नैतद्वेत्सि पुनर्भवन्तमचिरादाशापिशाची बलात्सर्वग्रासमियं ग्रसिष्यति महामोहान्धकारावृतम् ॥ ६७५ ॥ पूर्वं संमानना यत्र पश्चाच्चैव विमानना । जह्यात्तत्सत्त्ववान्स्थानं शत्रोः संमानितोऽपि सन् ॥ ६७६ ॥ धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् । धर्मेण लभ्यते सर्वं धर्मसारमिदं जगत् ॥ ६७७ ॥ न वैराण्यभिजानन्ति गुणान्पश्यन्ति नागुणान् । विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ॥ ६७८ ॥ क्षीणो रविमवति शशी वृद्धौ च वर्धयति पयसां नाथम् । अन्ये विपदि सहाया धनिनां श्रियमनुभवन्त्यन्ये ॥६७९॥ कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् । कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ॥ ६८० ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ६८१ ॥ नहि कस्य प्रियः को वा विप्रियो वा जगत्त्रये । काले कार्यवशात्सर्वे भवन्त्येवाप्रियाः प्रियाः ॥ ६८२ ॥ तीक्ष्णोपायप्रान्तगम्योऽपि योऽर्थस्तस्याप्यादौ संश्रयः साधुयुक्तः । उत्तुङ्गाग्रः सारभूतो वनानां सालोऽभ्यर्च्य च्छिद्यते पादपेन्द्रः ॥ ६८३ ॥ नापितस्य गृहे क्षौरं पाषाणे गन्धलेपनम् । आत्मरूपं जले पश्यन् शक्रस्यापि श्रियं हरेत् ॥ ६८४ ॥ पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ६८५ ॥ धर्माख्याने श्मशाने च रोगिणां या मतिर्भवेत् । सा सर्वदैव तिष्ठेच्चेत्को न मुच्येत बन्धनात् ॥ ६८६ ॥ कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते । स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते ॥ ६८७ ॥ न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः । दत्वा न पश्चात्कुरुतेऽनुतापं स कथ्यते सत्पुरुषार्यशीलः ॥ ६८८ ॥ तिलार्धं स्त्रीयभागश्च निःसारं बदरीफलम् । आहारात्परतः श्रेयो धूलिः परगृहादपि ॥ ६८९ ॥ धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् । सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ ६९० ॥ न स्कन्दते न व्यथते न विनश्यति कर्हिचित् । वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ॥ ६९१ ॥ दोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् । येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः ॥ ६९२ ॥ किं करिष्यति संसर्गः स्वभावो दुरतिक्रमः । पश्याम्रफलसंसर्गी कषायो मधुरः कुतः ॥६९३॥ धार्मात्मनः शुभैर्वृत्तैः क्रतुभिश्चाप्तदक्षिणैः । धूतपापा गताः स्वर्गं पितामहनिषेवितम् ॥ ६९४ ॥ न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयानो विकाले । न चत्वरे निशि तिष्ठेन्निगूढो न राजकाम्यां योषितं प्रार्थयीत ॥ ६९५ ॥ बध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि । विश्वस्तास्तेषु बध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ६९६ ॥ न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्ति मेति । न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ॥ ६९७ ॥ काले मृदुर्यो भवति काले भवति दारुणः । प्रसाधयति कृत्यानि शत्रुं चाप्यधितिष्ठति ॥ ६९८ ॥ चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानन्ति किंचित् । मन्त्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ ६९९ ॥ धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते । असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ७०० ॥ मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः । हरन्ति न तथा वाचो यथा साधु विपश्चिताम् ॥ ७०१ ॥ न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम् । अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः ॥ ७०२ ॥ कोशमूलो हि राजेति प्रवादः सार्वलौकिकः । एतत्सर्वं जहातीह कोशव्यसनवान्नृपः ॥ ७०३ ॥ कालेन शीघ्राः प्रवहन्ति वाताः कालेन वृष्टिर्जलदानुपैति । कालेन पद्मोत्पलवज्जलं च कालेन पुष्प्यन्ति नगा वनेषु ॥ ७०४ ॥ त्वमेव धातुः पूर्वोऽसि त्वमेव प्रत्ययः परः । अनाख्यातं न ते किंचिन्नाथ केनोपमीयसे ॥७०५॥ क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसंपन्नसस्या पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः । मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः ॥ ७०६ ॥

**इति श्रीसुभाषितरत्नभाण्डागारे सप्तमं संकीर्णप्रकरणम् ॥**

## समाप्तोऽयं ग्रन्थः

# सुभाषितरत्नखण्डमञ्जूषा

अकाण्डपातोपनता न कं लक्ष्मीर्विमोहयेत् । (क[1]० स०)
अकालमेघवद्वित्तमकस्मादेति याति च । (क० स०)
अकृत्यं मन्यते कृत्यम् । (प० त०)
अक्षोभ्यतैव महतां महत्त्वस्य हि लक्षणम् । (क० स०)
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ।
अगम्यं मन्यते सुगम् ।
अगाधजलसंचारी न गर्वं याति रोहितः । (प० त०)
अगुणस्य हतं रूपम् ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ।
अङ्गीकृतं सुकृतिनः परिपालयन्ति ।
अचिन्त्यं शीलगुप्तानां चरितं कुलयोषिताम् । (क० स०)
अचिन्त्यं हि फलं सूते सद्यः सुकृतपादपः । (क० स०)
अचिन्त्यो बत दैवेनाप्यापातः सुखदुःखयोः । (क० स०)
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् । (प० त०)
अजानतो हठात्कुर्वन्प्राज्ञमानी विनश्यति । (क० स०)
अजीर्णे भोजनं विषम् । (हि०)
अज्ञता कस्य नामेह नोपहासाय जायते । (क० स०)
अज्ञानामृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ।
अतर्क्या कुट्टनी कूटरचना हि विधेरपि । (क० स०)
अतिदानाद्बलिर्बद्धः । (भाग०)
अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी ।
अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके । (प० त०)
अति सर्वत्र वर्जयेत् । (प० त०)
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति । (प० त०)
अत्यारूढो हि नारीणामकालज्ञो मनोभवः । (र० व०)
अत्युच्चैर्भवति लघीयसां हि धाष्ट्यम् । (शि० व०)
अथास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः ।
अदाता वंशदोषेण ।
अधरेष्वमृतं हि योषितां हृदि हालाहलमेव केवलम् ।
अधर्मयुद्धेन जयं को हीच्छेत्क्षत्रियो भवन् । (क० स०)
अधर्मविषवृक्षस्य पच्यते स्वादु किं फलम् । (क० स०)
अधिकस्याधिकं फलम् ।
अनध्वा वाजिनां जरा । (प० त०)
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ।
(कु० सं०)
अनन्यगामिनी पुंसां कीर्तिरेका पतिव्रता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी । (कु०सं०)

अनपेक्ष्य गुणागुणौ जनः स्वरुचिं निश्चयतोऽनुधावति ।
(शि० व०)
अनवसरे याचितमिति सत्पात्रमपि कुप्यते दाता ।
अनाथा कृच्छ्रपतिता विदेशे स्त्री करोति किम् । (क०स०)
अनार्यः परदारव्यवहारः । (अ० शा०)
अनार्यजुष्टेन पथा प्रवृत्तानां शिवं कुतः । (क० स०)
अनार्यसंगमाद्वरं विरोधोऽपि समं महात्मभिः । (कि० अ०)
अनाश्रया न शोभन्ते पण्डिता वनिता लताः ।
अनियुक्तोऽपि च ब्रूयाद्यदीच्छेत्स्वामिनो हितम् । (क० स०)
अनिर्वर्णनीयं परकलत्रम् । (अ० शा०)
अनिश्चितावधिं धीराः सहन्ते विरहं चिरम् । (क० स०)
अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ।
अनुगृह्णन्ति हि प्रायो देवता अपि तादृशम् । (क० स०)
अनुत्सेकः खलु विक्रमालंकारः ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् । (अ० शा०)
अनुरागपरायत्ताः कुर्वते किं न योषितः । (क० स०)
अनुरागान्धमनसां विचारः सहसा कुतः । (क० स०)
अनुसृत्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ।
अनुहुंकुरुते घनध्वनिं नहि गोमायुरुतानि केसरी ।
(शि० व०)
अन्तरापाति हि श्रेयः कार्यसंपत्तिसूचकम् । (क० स०)
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः । (प० त०)
अन्तःसारविहीनानामुपदेशो न विद्यते ।
अन्धस्य दीपो बधिरस्य गीतम् ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ।
अन्यायं कुरुते यदा क्षितिपतिः कस्तं निरोद्धुं क्षमः ।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ।
(र० वं०)
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ।
अपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ।
अपायो मस्तकस्थो हि विषयग्रस्तचेतसाम् । (क० स०)
अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा । (नै० च०)
अपि गङ्गाजलस्नानादधःकेशः कुशायते ।
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् । (मा० मा०)
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ।
अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः ।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ।
(र० वं०)

१ एतत्सांकेतिकचिह्नानां विवरणं 'साङ्केतिकचिह्नपरिचयात्' अवसेयम् ।

अपुत्रस्य गृहं शून्यम् ।
अपृष्टोऽपि हितं ब्रूयात् यस्य नेच्छेत् पराभवम् ।
अपेक्षन्ते हि विपदः किं पेलवमपेलवम् । (क० स०)
अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म । (कु० सं०)
अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः । (क० स०)
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः । (प० त०)
अबला यत्र प्रबला ।
अबुद्धा चित्तमप्राप्यं विस्रम्भं प्रभविष्णुषु । (क० स०)
अभक्ष्यं मन्यते भक्ष्यम् ।
अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु । (र० वं०)
अभोगस्य हतं धनम् । (प० त०)
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे । (कु० सं०)
अभ्यागतो यत्र न तत्र लक्ष्मीः ।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः । (र० वं०)
अमृतं क्षीरभोजनम् ।
अमृतं प्रियदर्शनम् ।
अमृतं राजसंमानम् ।
अमृतं शिशिरे वह्निः ।
अमृतायते हि स्तुतयः सुकर्मणाम् । (कि० अ०)
अमोघो देवतानां च प्रसादः किं न साधयेत् । (क० स०)
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते । (र० वं०)
अयमश्वः पताकेयमथवा वीरघोषणम् ।
अयशोभीरवः किं न कुर्वते बत साधवः । (क० स०)
अयाच्यो नार्तानामनुपकरणीयो न महताम् ।
अयातपूर्वा परिवादगोचरं सतां हि वाणी गुणमेव भाषते । (कि० अ०)
अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ।
अयोविकारे स्वरितत्वमिष्यते कुतोऽयसां सिद्धरसस्पृशामपि । (नै० च०)
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि संधिदूषणानि । (कि० अ०)
अरुंतुदत्वं महतां ह्यगोचरः । (कि० अ०)
अर्थभारवती वाणी भजते कामपि श्रियम् ।
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । (च० पं०)
अर्थार्थी जीवलोकोऽयं । (प० त०)
अर्थातुराणां न गुरुर्न बन्धुः ।

अर्थिनि जने त्यागं विना श्रीश्च का ।
अर्थेन बलवान् सर्वः । (प० त०)
अर्थो हि कन्या परकीय एव । (अ० शा०)
अर्धमात्रालाघवेनापि पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।
अर्धो घटो घोषमुपैति नूनम् ।
अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्त ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् । (कु० सं०)
अल्पबीजं हतं क्षेत्रम् ।
अल्पविद्यो महागर्वी ।
अल्पश्च कालो बहवश्च विघ्नाः ।
अल्पसत्त्वेषु धीराणामवज्ञैव हि शोभते । (क० स०)
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् । (र० वं०)
अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी ।
अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्विवृद्धिः । (कि० अ०)
अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसंपदः । (कि० अ०)
अवस्तुनि कृतक्लेशो मूर्खो यात्यवहास्यताम् । (क० स०)
अविचार्य प्रभूणां हि शुचेर्वाक्यं स्वमन्त्रिणः । (क० स०)
अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः । (कि० अ०)
अविद्याजीवनं शून्यम् ।
अविनीता रिपुर्भार्या ।
अविश्रमो लोकतन्त्राधिकारः । (अ० शा०)
अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः । (भर्तृ०)
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् । (र० वं०)
अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति । (प० त०)
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः । (कु० सं०)
अशीलं कस्य नाम स्यान्न खलीकारकारणम् । (क० स०)
अशीलं कस्य भूतये । (क० स०)
अशीलस्य हतं कुलम् ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता । (कु० सं०)
अश्नुते स हि कल्याणं व्यसने यो न मुह्यति । (क० स०)
अश्रेयसे न वा कस्य विश्वासो दुर्जने जने । (क० स०)
अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । (प० त०)
अश्वा यस्य जयस्तस्य । (चा० नी०)
अश्वा यस्य यशस्तस्य ।
असंतुष्टा द्विजा नष्टाः । (प० त०)
असन्मैत्री हि दोषाय कूलच्छायेव सेविता । (कि० अ०)
असंभाव्या अपि नृणां भवन्तीह समागमाः । (क० स०)

असंभोगो जरा स्त्रीणाम् ।
असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
असाध्यं सत्यसाध्वीनां किमस्ति हि जगत्त्रये । (क० स०)
असाध्यं साधयत्यर्थं हेलयाभिमुखो विधिः । (क० स०)
असारे दग्धसंसारे सारं सारङ्गलोचनाः ।
असारेऽस्मिन्भवे तावद्भावाः पर्यन्तनीरसाः । (क० स०)
असिद्धार्था निवर्तन्ते न हि धीराः कृतोद्यमाः । (क० स०)
असिद्धेस्तु हता विद्या ।
अस्थाने पतिता सतीव महतामेतादृशी स्याद्गतिः ।
अस्थिरं जीवितं लोके । (हि०)
अस्थिराः पुत्रदाराश्च । (हि०)
अस्थिरे धनयौवने । (हि०)
अस्वर्ग्यं लोकविद्विष्टम् ।
अहह कलिकालः प्रभवति ।
अहह कष्टमपण्डितता विधेः । (भर्तृ०)
अहह महतां निःसीमानश्चरित्रविभूतयः । (भर्तृ०)
अहितो देहजो व्याधिः ।
अहो अतीव भोगाशा कं नाम न विडम्बयेत् । (क० स०)
अहो चित्राकारा नियतिरिव नीतिर्नयविदः ।
अहो दुरन्ता बलवद्विरोधिता । (कि० अ०)
अहो दैवाभिशप्तानां प्राप्तोऽप्यर्थः पलायते । (क० स०)
अहो नवनवाश्चर्यनिर्मागे रसिको विधिः । (क० स०)
अहो रूपमहो ध्वनिः । (हि०)
अहो विधेरचिन्त्यैव गतिरद्भुतकर्मणाम् । (क० स०)
अहो विधौ विपर्यस्ते न विपर्यस्यतीह किम् । (क० स०)
अहो विनेन्द्रजालेन स्त्रीणां चेष्टा न विद्यते । (क० स०)
अहो विश्वास्य वञ्चयन्ते धूर्तैश्छद्मभिरीश्वराः । (क० स०)
अहो सहन्ते बत नो परोदयम् ।
आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ।
आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः (नै० च०)
आकृष्टः कामलोभाभ्यामपायः को हि पश्यति । (क० स०)
आचारः प्रथमो धर्मः । (म० स्मृ०)
आज्ञा गुरूणां ह्यविचारणीया । (र० वं०)
आत्मबुद्धिः सुखायैव ।
आत्मार्थे पृथिवीं त्यजेत् । (प० त०)
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति । (कु० सं०)
आदानं हि विसर्गाय सतां वारिमुचामिव । (र० वं०)
आदावसत्यवचनं पश्चाज्जाता हि कुस्त्रियः । (क० स०)
आदौ साम प्रयोक्तव्यम् । (प० त०)
आपत्काले च कष्टेऽपि नोत्साहस्त्यज्यते बुधैः । (क० स०)
आपत्काले तु संप्राप्ते यन्मित्रं मित्रमेव तत् । (प० त०)
आपत्सु धीरान्पुरुषान्स्वयमायान्ति संपदः । (क० स०)
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि । (प० त०)
आपदि येनापकृतं येन च हसितं दशासु विषमेषु । (प०त०)
आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि । (क० स०)
आपदेत्युभयलोकदूषणी वर्तमानमपथे हि दुर्मतिम् । (कि० अ०)
आपद्यपि त्याज्यं न सत्त्वं संपदेषिभिः । (क० स०)
आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः । (क० स०)
आपन्नत्राणविकलैः किं प्राणैः पौरुषेण वा । (क० स०)
आपन्नस्य विषयवासिन आर्तिहरेण राज्ञा भवितव्यम् । (अ० शा०)
आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् । (मे०दू०)
आपो वहन्तीह हि लोकयात्रां यथा न भूतानि तथा-पराणि । (नै० च०)
आमुखापाति कल्याणं कार्यसिद्धिं हि शंसति । (क० स०)
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः । (प० त०)
आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया । (क० स०)
आरब्धे हि सुदुष्करेऽपि महतां मध्ये विरामः कुतः । (क० स०)
आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । (प० त०)
आर्जवं हि कुटिलेषु न नीतिः । (नै० च०)
आलस्योपहता विद्या । (हि०)
आवेष्टितो महासर्पैश्चन्दनः किं विषायते ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि । (मे० दू०)
आशु बध्नाति हि प्रेम प्राग्जन्मान्तरसंस्तवः । (क० स०)
आश्वस्तो वेत्ति कुसृतिं प्रभुः को हि स्वमन्त्रिणाम् । (क० स०)
आसुरं कुलमनादरणीयम् ।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ।
आहुः सप्तपदी मैत्री ।
आहृता हि विषयैकतानतां ज्ञानधौतमनसं न लिम्पति । (नै० च०)
इच्छादानपरोपकारकरणं पात्रानुरूपं फलम् ।
इतो भ्रष्टस्ततो भ्रष्टः ।
इदं च नास्ति न परं च लभ्यते ।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः । (प० त०)
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् । (शि० व०)
इष्टं धर्मेण योजयेत् । (प० त०)
इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रा-सुदुःसहानि । (अ० शा०)
इष्टमूलानि शोकानि ।
इहामुत्र च नारीणां परमा हि गतिः पतिः । (क० स०)
ईर्ष्या हि विवेकपरिपन्थिनी । (क० स०)

ईश्वराणां हि विनोदरसिकं मनः। (कि० अ०)
उच्छ्रायं नयति यदृच्छयापि योगः। (क० स०)
उत्पद्यन्ते विलीयन्ते।
उत्तरोत्तरशुभो हि विभूनां कोऽपि मञ्जुलतमः क्रमवादः। (नै० च०)
उत्सवप्रियाः खलु मनुष्याः। (अ० शा०)
उत्सहन्ते नहि द्रष्टुमुत्तमाः स्वजनापदम्। (क० स०)
उत्साहैकधने हि वीरहृदये नाप्नोति खेदोऽन्तरम्। (क० स०)
उदारचरितानां तु वसुधैव कुटुम्बकम्। (हि०)
उदारसत्त्वं वृणुते स्वयं हि श्रीरिवाङ्गना। (क० स०)
उदारस्य तृणं वित्तम्।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः।
उदिते परमानन्दे नाहं न त्वं न वै जगत्।
उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः। (अ० शा०)
उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता। (शि० व०)
उद्यमेन विना राजन्न सिद्ध्यन्ति मनोरथाः। (प० त०)
उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः। (प० त०)
उद्योगः पुरुषलक्षणम्।
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः। (प० त०)
उद्वृत्तः क इव सुखावहः परेषाम्। (शि० व०)
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्।
उन्नतो न सहते तिरस्क्रियाम्।
उन्मादो मातृदोषेण।
उपकृत्य निसर्गतः परेषामुपरोधं नहि कुर्वते महान्तः। (शि० व०)
उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः। (शि० व०)
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये। (प० त०)
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी। (अ० शा०)
उपभुक्ते हि तारुण्ये प्रशमः सन्निरिष्यते। (क० स०)
उपहितपरमप्रभावधाम्नां न हि जयिनां तपसामलङ्घ्यमस्ति। (कि० अ०)
उपायं चिन्तयेत् प्राज्ञः। (प० त०)
उपायेन हि यत्कुर्यात् तन्न शक्यं पराक्रमैः। (प० त०)
उपार्जितानामर्थानां त्याग एव हि रक्षणम्। (प०त )
उप्तं सुकृतबीजं हि सुक्षेत्रेषु महत्फलम्। (क० स०)
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य। (र० वं०)
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्। (प० त०)
ऋणकर्ता पिता शत्रुः। (प० त०)

ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम्। (कु० सं०)
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः। (शि० व०)
ऋद्धिश्चित्तविकारिणी।
एकं मित्रं भूपतिर्वा यतिर्वा। (भर्तृ०)
एकाग्रो हि बहिर्वृत्तिनिवृत्तस्तत्त्वमीक्षते। (क० स०)
एका भार्या सुन्दरी वा दरी वा। (भर्तृ०)
एको देवः केशवो वा शिवो वा। (भर्तृ०)
एकोऽप्याश्रमहीनोऽपि लक्ष्मीं प्राप्नोति सत्त्ववान्। (क० स०)
एको वासः पत्तने वा वने वा। (भर्तृ०)
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः। (कु० सं०)
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः। (हि०)
ऐकचित्ते द्वयोरेव किमसाध्यं भवेदिति। (क० स०)
औचित्यं गणयति को विशेषकामः। (शि० व०)
क उष्णोदकेन नवमल्लिकां सिञ्चति। (अ० शा०)
कठिनाः खलु स्त्रियः। (कु० सं०)
कणशः क्षणशश्चैव विद्यामर्थं च साधयेत्।
कण्ठे सुधा वसति वै खलु सज्जनानाम्।
कथं हि लङ्घ्यते भृत्यैर्ग्रहिकस्य प्रभोर्वचः। (क० स०)
कथंचिन्न हि दिव्यानां वीर्यं भजति मोघताम्। (क० स०)
कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति। (मृ०)
कदर्याणां परे प्राणाः प्रायेण ह्यर्थसंचयाः। (क० स०)
कदापि सत्पुरुषाः शोकवास्तव्या न भवन्ति। (अ० शा०)
कन्या नाम महद्दुःखं धिगहो महतामपि। (क० स०)
कमलवनभूषा मधुकरः।
कमिवेशते रमयितुं न गुणाः। (कि० अ०)
करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः। (क० स०)
कर्तव्यं हि सतां वचः। (क० स०)
कर्तव्यो महदाश्रयः। (प० त०)
कर्मणो ज्ञानमतिरिच्यते।
कर्मदोषाद्दरिद्रता।
कर्मानुगो गच्छति जीव एकः। (भाग०)
कर्मायत्तं फलं पुंसाम्।
कलहान्तानि हर्म्याणि। (प० त०)
कलारत्नं गाने। (प्र० भ०)
कलासीमा काव्यम्। (प्र० भ०)
कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव।
कल्पवृक्षोऽप्यभव्यानां प्रायो याति पलाशताम्। (क० स०)
कवयः किं न पश्यन्ति।

कवले पतिता सद्यो वमयति ननु मक्षिकान्नभोक्तारम् ।
कष्टं शिष्टक्षतिकृति कलौ कार्श्यमृच्छन्ति विद्याः ।
कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ।
कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम् ।
कष्टः खलु पराश्रयः ।
कष्टाः कुलखलीकारहेतवो बत कुस्त्रियः । (क० स०)
कष्टादपि कष्टतरं परगृहवासः परान्नं च ।
कष्टा हि कुटिलश्वश्रूपरतन्त्रवधूस्थितिः । (क० स०)
कष्टो हि बान्धवस्नेहं राज्यलोभोऽतिवर्तते । (क० स०)
कष्टो ह्यविनयक्रमः । (क० स०)
कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः ।
कस्मिन्वा सजलगुणे गिरां पटुत्वम् । (शि० व०)
कस्य नेष्टं हि यौवनम् । (क० स०)
कस्यचित्किमपि नो हरणीयम् ।
कस्य नाभ्युदये हेतुर्भवेत्साधुसमागमः । (क० स०)
कस्य नोच्छृङ्खलं बाल्यं गुरुशासनवर्जितम् । (क० स०)
कस्य सत्सङ्गो न भवेच्छुभः । (क० स०)
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण । (मे० दू०)
कस्याश्वसिति चेतो हि विहितस्वैरसाहसम् । (क० स०)
कः कालस्य न गोचरान्तरगतः । (भर्तृ०)
कः परः प्रियवादिनाम् । (हि०)
कः पैतामहगोलकेऽत्र निखिलैः संमानितो वर्तते ।
कः प्राज्ञो वाञ्छति स्नेहं वेश्यासु सिकतासु च । (क० स०)
कः शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयिष्यति । (अ० शा०)
कः सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते । (अ० शा०)

कः सूनुर्विनयं विना ।
कः स्थानलाभे गुणः । (हि०)
का कस्य परिदेवना ।
काकाः किमपराध्यन्ति हंसैर्जग्धेषु शालिषु । (क० स०)
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते । (प० त०)
का नाम कुलजा हि स्त्री भर्तृद्रोहं करिष्यति । (क० स०)
कान्ता रूपवती शत्रुः ।
कान्ते कथं घटितवानुपलेन चेतः ।
कामक्रोधौ हि विप्राणां मोक्षद्वारार्गलावुभौ । (क० स०)
कामं न श्रेयसे कस्य संगमः पुण्यकर्मभिः । (क० स०)
कामं व्यसनवृक्षस्य मूलं दुर्जनसंगतिः । (क० स०)
कामातुराणां न भयं न लज्जा । (भर्तृ०)
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु । (मे० दू०)
कामिनश्च कुतो विद्या ।
कायः कस्य न वल्लभः ।
कार्यं निदानाद्धि गुणानधीते । (नै० च०)
कार्यान्ते ते च शष्पवत् ।
कालप्रयुक्ता खलु कर्मविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति । (कु० सं०)
कालयुक्त्या ह्यरिर्मित्रं जायते न च सर्वदा । (क० स०)
कालस्य कुटिला गतिः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः । (र० वं०)
काले दत्तं वरं ह्यल्पमकाले बहुनापि किम् । (क० स०)
कालेन फलते तीर्थं सद्यः साधुसमागमः । (भाग०)
कालो ह्ययं निरवधिर्विपुला च पृथ्वी । (मा० मा०)
का विद्या कवितां विना ।
काश्मीरजस्य कटुतापि नितान्तरम्या ।
का ह्यब्जिनी विना हंसं कश्च हंसोऽब्जिनीं विना । (क०स०)
किं वा धाराधिरूढं हि जाड्यं वेदजडे जने । (क० स०)
किं वा भविष्यदरुणस्तमसां विभेत्ता तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् । (अ० शा०)
किं वा सुलभपापा हि भवन्त्युन्मार्गवृत्तयः । (क० स०)
किं हि न भवेदीश्वरेच्छया । (क० स०)
किं किं करोति न निरर्गलतां गता स्त्री ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ।
किं जीवितेन पुरुषस्य निरक्षरेण । (भर्तृ०)
किं तदस्ति हि संसारे पर्यन्तविरसं हि यत् । (क० स०)
किं दूरं व्यवसायिनाम् । (चा० नी०)
किं न कुर्वन्ति योषितः । (भर्तृ०)
किं न भक्षन्ति वायसाः ।
किं नाम न सहन्ते हि भर्तृभक्ताः कुलाङ्गनाः । (क० स०)
किमज्ञेयं हि धीमताम् । (क० स०)
किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते । (अ० शा०)

किमदेयमुदाराणामुपकारिषु तुष्यताम् । (क० स०)
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।
किमिव हि मधुराणां मण्डनं नाकृतीनाम् । (अ० शा०)
किमिव हि शक्तिहरं ससाध्वसानाम् । (शि० व०)
किमिवावसादकरमात्मवताम् । (कि० अ०)
किमिवास्ति यन्न सुकरं मनस्विभिः । (कि० अ०)
किमु चोदिताः प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुहृदाम् । (शि० व०)
किं परस्य स गुणः समश्नुते पथ्यवृत्तिरपि यद्यरोगिताम् । (शि० व०)

किं मर्दितोऽपि कस्तूर्यां लशुनो याति सौरभम् ।
किं मिष्टमन्नं खरसूकराणाम् ।
कुकर्मान्तं यशो नृणाम् ।
कुकृत्ये को न पण्डितः ।
कुगेहिनीं प्राप्य गृहे कुतः सुखम् ।
कुण्डे कुण्डे नवं पयः ।

कुतः परस्मिन्पुरुषे विकारः । (कि० अ०)
कुतः शङ्का कलङ्किनः ।
कुतः सत्यं च कामिनाम् ।
कुतो विद्यार्थिनः सुखम् ।
कुदेशमासाद्य कुतोऽर्थसंचयः ।
कुदेशेष्वपि जायन्ते क्वचित्केचिन्महाशयाः । (क० स०)
कुपात्रदानाच्च भवेद्दरिद्रः ।
कुपुत्रमासाद्य कुतो जलाञ्जलिः ।
कुपुत्रेण कुलं नष्टम् ।
कुप्येत्को नातियाचितः ।
कुभोजनं चोष्णतया विराजते ।
कुभोज्येन दिनं नष्टम् ।
कुरहस्यसहाये हि भृत्ये भृत्यायते प्रभुः । (क० स०)
कुराजान्तानि राष्ट्राणि । (प० त०)
कुरूपता शीलतया विराजते ।
कुरूपी बहुचेष्टिकः ।
कुर्वन्त्यकालेऽभिव्यक्तिं न कार्यापेक्षिणो बुधाः । (क० स०)
कुलवधूः का स्वामिभक्तिं विना ।
कुले कश्चिद्धन्यः प्रभवति नरः श्लाघ्यमहिमा ।
कुवस्त्रता शुभ्रतया विराजते ।
कुवाक्यान्तं च सौहृदम् । (प० त०)
कुशिष्यमध्यापयतः कुतो यशः ।
कृतघ्ना धनलोभान्धा नोपकारेक्षणक्षमाः । (क० स०)
कृतघ्नानां शिवं कुतः । (क० स०)
कृतघ्नाश्चिरसिद्धार्था अपि भ्रश्यन्ति हि ध्रुवम् । (क० स०)
कृतज्ञे सत्परीवारे प्रभौ सेवाऽफला कुतः । (क० स०)
कृतार्थः स्वामिनं द्वेष्टि । (प० त०)
कृपणानुसारि च धनम् ।
कृशे कस्यास्ति सौहृदम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति । (र० वं०)
केचिदज्ञानतो नष्टाः ।
केचिन्नष्टाः प्रमादतः ।
केचिन्नष्टैस्तु नाशिताः ।
केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः । (र० वं०)
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः । (मे० दू०)
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु । (मे० दू०)
केषां नैषा कथय कविताकामिनी कौतुकाय ।
केषां हि नापदां हेतुरतिलोभान्धबुद्धिता । (क० स०)
को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी ।
कोऽतिभारः समर्थानाम् । (प० त०)

को धर्मः कृपया विना ।
को न तृप्यति वित्तेन ।
को न याति वशं लोके मुखे पिण्डेन पूरितः ।
को नाम राज्ञां प्रियः । (प० त०)
कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति । (अ० शा०)
कोऽर्थान्प्राप्य न गर्वितः । (प० त०)
कोऽर्थी गतो गौरवम् । (प० त०)
कोऽवकाशो विवेकस्य हृदि कामान्धचेतसः । (क० स०)
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् । (प० त०)
को विदेशः समर्थानाम् । (प० त०)
को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ । (शि० व०)
को हि मार्गममार्गं वा व्यसनान्धो निरीक्षते । (क०स०)
को हि वित्तं रहस्यं वा स्त्रीषु शक्नोति गूहितुम् । (क०स०)
को हि संपत्सु चपलास्वाश्वास्ये वनितासु च । (क० स०)
को हि स्वशिरसश्छायां विधेश्चोल्लङ्घयेद्गतिम् । (क० स०)
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् । (कु०सं०)
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे । (भर्तृ०)
क्रिया हि वस्तूपहिता प्रसीदति । (र० वं०)
क्रुद्धे विधौ भजति मित्रममित्रभावम् ।
क्रोधः संसारबन्धनम् ।
क्रोधो मूलमनर्थानाम् । (हि०)
क्लेशः फलेन हि पुनर्नवतां विधत्ते । (कु० सं०)
क्वचिद्वै नास्ति विश्वासः क्षुद्रकर्मणि दुर्जने । (क० स०)
क्व वा निधिर्निर्धनमेति किं च तं स वाक्कपाटं घटयन्निरस्यति । (नै० च०)
क्वाश्रयोऽस्ति दुरात्मनाम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः । (शि० व०)
क्षमन्ते न विचारं हि मूर्खा विषयलोलुपाः । (क० स०)
क्षमया किं न सिध्यति ।
क्षान्तितुल्यं तपो नास्ति ।
क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ।
क्षितितले किं जन्म कीर्तिं विना ।
क्षितिपतिः को नाम नीतिं विना ।
क्षीणा नरा निष्करुणा भवन्ति । (प० त०)
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् । (भर्तृ०)
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव । (कु० सं०)
क्षुधातुराणां न रुचिर्न पक्वम् ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतोर्लीलाभिः किमु सति कारणे रमण्यः । (शि० व०)

ख(फ)टाटोपो भयंकरः । (प० त०)
खण्डिता एव शोभन्ते वीराधरपयोधराः ।
खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ।
गणयन्ति न राज्यार्थेऽपत्यस्नेहं महीभुजः । (क० स०)
गतं न शोचामि कृतं न मन्ये ।
गतस्य शोचनं नास्ति ।
गतानुगतिको लोको न लोकः पारमार्थिकः ।
गन्तव्यं राजपथे ।
गहना कर्मणो गतिः । (भ० गी०)
गुणलुब्धाः स्वयमेव संपदः । (कि० अ०)
गुणसंहतेः समतिरिक्तमहो निजमेव सत्त्वमुपकारि सताम् । (कि० अ०)
गुणान्भूषयते रूपम् ।
गुणार्जुनोच्छ्रायविरुद्धबुद्धयः प्रकृत्यमित्रा हि सतामसाधवः । (कि० अ०)
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः । (उ० च०)
गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
गुणी गुणं वेत्ति न वेत्ति निर्गुणः । (म० स्मृ०)
गुणैर्विहीना बहु जल्पयन्ति ।
गुरुतां नयन्ति हि गुणा न संहतिः । (कि० अ०)
गुर्वपि विरहदुःखमाशाबन्धः साहयति । (अ० शा०)
गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः । (शि० व०)
गृहे या पुण्यनिष्पत्तिः साध्वनि भ्रमतः कुतः । (क० स०)
ग्रसते हि तमोपहं मुहुर्नं तु राह्वाह्नमहर्पतिं तमः । (शि० व०)
ग्रहीतुमार्यान्परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः । (शि० व०)
ग्रामनाशाय कुञ्जरः । (वृ० चा०)
ग्रामस्यार्थे कुलं त्यजेत् । (प० त०)
ग्रावाणोऽप्यार्द्रतां सम्यग्भजन्त्यभिमुखे विधौ । (क० स०)
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः । (अ० शा०)
घनाम्बुना राजपथे हि पिच्छिले क्वचिद्बुधैरप्यपथेन गम्यते । (नै० च०)
घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलं नहि व्रजति विकारमम्बुधेः । (शि० व०)
घ्नन्ति सहजमपि भूरिभियः सममागताः सपदि वैरमापदः । (कि० अ०)
चकास्ति योग्येन हि योग्यसंगमः । (नै० च०)
चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च । (यो० वा०)
चक्षुःपूतं न्यसेत्पादम् । (चा० नी०)
चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ।
चपलौ किल शूराणां रणे जयपराजयौ । (क० स०)
चाण्डालः पक्षिणां काकः ।
चाण्डालोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
चाराञ्जानन्ति राजानः ।
चित्तं जानाति जन्तूनां प्रेम जन्मान्तरार्जितम् । (क० स०)
चित्तमेतदमलीकरणीयम् ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ।
चित्रा गतिः कर्मणाम् ।
चिन्ता जरा मनुष्याणाम् ।
चिन्तासमं नास्ति शरीरशोषणम् ।
चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । (अ० शा०)
चोराणामनृतं बलम् ।
चौरे गते या किमु सावधानम् ।
छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा । (अ० शा०)
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः । (र० वं०)
छायेव मैत्री खलसज्जनानाम् । (प० त०)
छिद्रेष्वनर्था बहुलीभवन्ति । (प० त०)
जगति बहुमताः कस्य नाभ्यर्चनीयाः ।
जठरं को न बिभर्ति केवलम् ।
जनानने कः करमर्पयिष्यति । (नै० च०)
जनानुरागप्रभवा हि संपदः ।
जनो बहु क्षपयति स्वल्पस्यार्थे धनान्धधीः । (क० स०)
जपतो नास्ति पातकम् ।
जरा रूपं हरति ।
जलदसमय एष प्राणिनां प्राणभूतः । (का० दा०)
जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
जातं तु जातं न पुनः प्रयाति ।
जातस्य हि ध्रुवो मृत्युः । (यो० वा०)
जातापत्या पतिं द्वेष्टि ।
जातौ जातौ नवाचाराः ।
जानन्ति पशवो गन्धात् ।
जामाता दशमो ग्रहः ।
जायन्ते बत मूढानां संवादा अपि तादृशाः । (क० स०)
जारस्त्रीणां पतिः शत्रुः ।
जितक्रोधेन सर्वं हि जगदेतद्विजीयते । (क० स०)
जितक्रोधो न दुःखस्यास्पदीभवेत् । (क० स०)
जितशान्तेषु धीराणां स्नेह एवोचितोऽरिषु । (क० स०)
जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ।
जीवन्तमेव कुष्णाति काकीव कुकुटुम्बिनी । (क० स०)
जीवन्तोऽसति मूढोऽर्थान्यावदर्थैः स नोज्झितः । (क० स०)
जीवन्हि धीरोऽभिमतं किं नाम न यदाप्नुयात् । (क० स०)
जीवो जीवस्य जीवनम् ।
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः । (मे० दू०)

ज्ञानमार्गे ह्यहंकारः परिघो दुरतिक्रमः । (क० स०)
ज्ञानमेव शक्तिः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति । (भर्तृ०)
ज्ञानस्याभरणं क्षमा ।
ज्येष्ठभ्राता पितुः समः ।
ज्वलयति महतां मनांस्यमर्षे न हि लभतेऽवसरं सुखाभिलाषः । (कि० अ०)
झटिति पराशयवेदिनो हि विज्ञाः । (नै० च०)
तक्रान्तं खलु भोजनम् ।
तत्कार्मुकं कर्मसु यस्य शक्तिः ।
तत्क्षणं किं नु कुर्याद्धि प्रसादः पारमेश्वरः । (क० स०)
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः । (उ० च०)
तत्र सौरभनिर्माणे चतुरश्चतुराननः ।
तदेव दुःसहं स्त्रीणामिह प्रणयखण्डनम् । (क० स०)
तपःसीमा मुक्तिः । (प्र० भ०)
तपोधीनानि श्रेयांसि ह्युपायोऽन्यो न विद्यते । (क० स०)
तपोधीना हि संपदः । (क० स०)
तमस्तपति घर्मांशौ कथमाविर्भविष्यति । (अ० शा०)
तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ।
तस्करस्य कुतो धर्मः ।
तस्माच्छेषं न रक्षयेत् ।
तस्माज्जात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ।
तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ।
तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ।
तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ।
तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ।
तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः ।
तीव्रसत्त्वस्य न चिराद्भवन्त्येव हि सिद्धयः । (क० स०)
तुदति कुसुममासो मन्मथोद्वेजनाय । (का० दा०)
तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ।
तुष्यन्ति भोजनैर्विप्राः ।
तृष्णैका तरुणायते । (प० त०)
तेजसां हि न वयः समीक्ष्यते । (र० वं०)
ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ।
तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम् ।
त्यजन्त्युत्तमसत्त्वा हि प्राणानपि न सत्पथम् । (क० स०)
त्यजेदेकं कुलस्यार्थे । (प० त०)
त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् । (र० वं०)
त्रिभुवनविषये कस्य दोषो न चास्ति ।
त्रैलोक्ये दीपको धर्मः ।
ददाति तीव्रसत्त्वानामिष्टमीश्वर एव हि । (क० स०)
दया मांसाशिनः कुतः । (प० त०)
दयितं जनः खलु गुणीति मन्यते । (शि० व०)
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने । (कु० सं०)
दरिद्रता धीरतया विराजते ।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ।
दशाननोऽहरत्सीतां बन्धनं च महोदधेः ।
दारिद्र्यदोषेण करोति पापम् ।
दारिद्र्यदोषो गुणराशिनाशी । (घ० ख०)
दारिद्र्यं परमाञ्जनम् । (भा० व०)
दावानलप्लोषविपत्तिमन्योऽरण्यस्य हर्तुं जलदात्प्रभुः किम् । (कु० सं०)
दिक्शून्या चेदबान्धवा ।
दिवि गगनरत्नं दिनकरः । (प्र० भ०)
दिशत्यपायं हि सतामतिक्रमः । (कि० अ०)
दुःखान्धा हि पतन्त्येव विपच्छ्वभ्रेषु कातराः । (क० स०)
दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ।
दुरधिगमा हि गतिः प्रयोजनानाम् । (कि० अ०)
दुरधीता विषं विद्या । (हि०)
दुरितघ्नतपःशुद्धिसव्यपेक्षा हि सिद्धयः । (क० स०)
दुर्गहीनस्तथा नृपः । (हि०)
दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् ।
दुर्जनस्य कुतः क्षमा ।
दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ।
दुर्जया हि विषया विदुषापि । (नै० च०)
दुर्बलस्य बलं राजा । (हि०)
दुर्मन्त्री राज्यनाशाय । (प० त०)
दुर्लक्ष्यचिह्ना महतां हि वृत्तिः । (कि० अ०)
दुर्लभं क्षेमकृत्सुतः ।
दुर्लभं भारते जन्म मानुष्यं तत्र दुर्लभम् ।
दुर्लभः स गुरुर्लोके शिष्यचिन्तापहारकः ।
दुर्लभः स्वजनप्रियः ।
दुष्टं हि जन्तुमुत्थाप्य कस्यात्मनि सुखं भवेत् । (क० स०)
दुष्टेऽपि पत्यौ साध्वीनां नान्यथावृत्ति मानसम् । (क० स०)
दूरतः पर्वता रम्याः ।
दूरारोहपरिभ्रंशविनिपातो हि दारुणः ।
दृष्टतत्त्वश्च न पुनः कर्मजालेन बध्यते । (क० स०)
दृष्टो हि वृण्वन्कलभप्रमाणोऽप्याशाः पुरोवातमवाप्य मेघः । (र० वं०)
देवद्विजसपर्या हि कामधेनुर्मता सताम् । (क० स०)
देवा हि नान्यद्वितरन्ति किं तु प्रसह्य ते साधुधियं ददन्ते । (नै० च०)
देवो दुर्बलघातकः ।
देहपातमपीच्छन्ति सन्तो नाविनयं पुनः । (क० स०)
देहस्नेहो हि दुस्त्यजः । (क० स०)
दैवमेव हि साहाय्यं कुरुते सत्त्वशालिनाम् । (क० स०)

दैवी विचित्रा गतिः ।
दैवे दुर्जनतां गते तृणमपि प्रायेण वज्रायते ।
दैवेनैव हि साध्यन्ते सदर्थाः शुभकर्मणाम् । (क० स०)
दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः । (प० त०)
दोषाय निर्विमर्शोयं श्रौतप्रश्नोत्तरक्रिया । (क० स०)
दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा ।
द्यौर्न काचिदथवास्ति निरूढा सैव सा चलति यत्र हि चित्तम् । (नै० च०)
द्रव्येण सर्वे वशाः ।
धनं सर्वप्रयोजनम् ।
धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । (प० त०)
धनिनामितरः सतां पुनर्गुणवत्संनिधिरेव संनिधिः । (शि० व०)
धन्यास्ते भुवि ये निवृत्तमनसो धिग्दुःखितान्कामिनः ।
धर्मक्षयकरः क्रोधः ।
धर्मः कीर्तिर्द्वयं स्थिरम् । (म० भा०)
धर्मः सत्येन वर्धते ।
धर्मः स नो यत्र न सत्यमस्ति ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः । (र० वं०)
धर्मस्य तत्त्वं निहितं गुहायाम् । (म० भा०)
धर्मस्य त्वरिता गतिः । (प० त०)
धर्मेण चरतां सत्ये नास्त्यनभ्युदयः क्वचित् । (क० स०)
धर्मेण हीनाः पशुभिः समानाः ।
धर्मो मित्रं मृतस्य च ।
धर्मो हि सांनिध्यं कुरुते सताम् । (क० स०)
धर्मो ह्यसम्यङ्निर्णीतो निहन्त्युभयलोकयोः । (क० स०)
धिक्कलत्रमपुत्रकम् ।
धिक्पुत्रमविनीतं च ।
धिगाशा सर्वदोषभूः ।
धिगिमां देहभृतामसारताम् । (र० वं०)
धिग्गृहं गृहिणीशून्यम् ।
धिग्जीवितं चोद्यमवर्जितस्य ।
धिग्जीवितं ज्ञातिपराजितस्य ।
धिग्जीवितं व्यर्थमनोरथस्य ।
धिग्जीवितं शास्त्रकलोज्झितस्य ।
धिग्ज्योतिषमजातकम् ।
धीराणां व्रजति हि सर्व एव नान्तःपातित्वादभिभवनीयतां परस्य । (शि० व०)
धीराश्च सोढविरहाः प्राप्नुवन्तीष्टसंगमम् । (क० स०)
धीर्न चित्रीयते कस्मादभित्तौ चित्रकर्मणा । (क० स०)
धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः । (र० वं०)
धूर्ताः क्रीडन्त्येव हि बालिशैः । (क० स०)
ध्रुवमभिमते को वा पूर्णे मुदा न हि माद्यति । (कु० सं०)
ध्रुवं फलाय महते महतां सह संगमः । (क० स०)
न कस्य वीर्याय वरस्य संगतिः । (कु० सं०)
न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः । (क० स०)
न कामसदृशो रिपुः । (यो० वा०)
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे । (हि०)
नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति । (प० त०)
न क्वापि सौख्यमपराधकृतां प्रभूणाम् ।
नक्षत्रभूषणं चन्द्रः । (चा० नी०)
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय प्राप्ते मित्रे भवति विमुखः । (मे० दू०)
न खलु धीमतां कश्चिदविषयो नाम । (अ० शा०)
न खलु वयस्तेजसो हेतुः । (भर्तृ० )
न खलु स उपरतो यस्य वल्लभो जनः स्मरति ।
न च दैवात्परं बलम् ।
न च धर्मो दयापरः ।
न चलति खलु वाक्यं सज्जनानां कदाचित् ।
न च विद्यासमो बन्धुः ।
न च व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहः ।
न जात्ववसरे प्राप्ते सत्त्ववानवसीदति । (क० स०)
न जाने संसारः किममृतमयः किं विषमयः ।
न ज्ञानात्परमं चक्षुः ।
न तथा कृतवेदिनां करिष्यन्प्रियतामेति यथा कृतावदानः । (कि० अ०)
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ।
न तोषात्परमं सुखम् ।
न तोषो महतां मृषा । (क० स०)
न दयासदृशं ज्ञानम् ।
न दरिद्रस्तथा दुःखी लब्धक्षीणधनो यथा ।
न दुष्प्रापं परच्छिद्रं जाग्रद्भिर्निपुणैर्यतः । (क० स०)
न देवः परमो विष्णोः ।
न धर्मवृद्धेषु वयः समीक्ष्यते । (कु० सं०)
न धर्मसदृशं मित्रम् ।
न धर्मात्परमं मित्रम् ।
न नन्दनालोकनमङ्गलेषु क्षणं क्षणं हृष्यति कस्य चेतः । (कु० सं०)
न नश्यति तमो नाम कृतया दीपवार्तया ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् । (र० वं०)
ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ।
ननु प्रवातेऽपि निष्कम्पा गिरयः । (अ० शा०)
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः । (कि० अ०)
ननु विमृश्य कृती कुरुतेऽखिलम् ।

न पत्लिव्यतिरेकेण सुस्त्रीणामपरा गतिः । (क० स०)
न परिचयो मलिनात्मनां प्रधानम् । (शि० व०)
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव । (शि० व०)
न परोदितं हि कलयन्ति कुमाराः । (ह० वि०)
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य । (र० वं०)
न पुत्रात्परमो लाभः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् । (अ० शा०)
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ।
न भयं चास्ति जाग्रतः ।
न भवति पुनरुक्तं भाषितं सज्जनानाम् ।
न भवति महतां हि क्वापि मोघः प्रसादः । (ह० वि०)
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः । (र० वं०)
न भार्यायाः परं सुखम् ।
न भूतो न भविष्यति ।
न भेकः कोकनदिनीकिंजल्कास्वादकोविदः । (क० स०)
नभोभूषा पूषा । (प्र० भ०)
न मुक्तेः परमा गतिः । (यो० वा०)
नयनसुखं को निवारयति ।
नयवर्त्मगाः प्रभवतां हि धियः ।
न युक्तं ते रोषादतिथिमिव धिक्कृत्य गमनम् ।
नये च शौर्ये च वसन्ति संपदः ।
नयेन चालंक्रियते नरेन्द्रता ।
नरः प्रत्युपकारार्थं विपत्तिमभिवाञ्छति ।
न रत्नमन्विष्यति मृग्यते हि तत् । (कु० सं०)
नरपति हितकर्ता द्वेष्यतां याति लोके । (प० त०)
नराणां नापितो धूर्तः । (प० त०)
नर्मैकसादरं हि नवं वयः । (क० स०)
न वस्तु दैवस्वरसाद्विनश्वरं सुरेश्वरोऽपि प्रतिकर्तुमीश्वरः । (नै० च०)
नवाङ्गनानां नव एव पन्थाः ।
नवा वाणी मुखे मुखे ।
न विवेकं विना ज्ञानम् ।
न वैराग्यात्परं भाग्यम् ।
न शरीरं पुनः पुनः ।
न शान्ते परमं सुखम् ।
न शास्त्रं वेदतः परम् ।
न शिक्षितः प्रयत्नो हि धीराणां हृदये भिया । (क० स०)
न शूरा विसहन्ते हि स्त्रीनिमित्तं पराभवम् । (क० स०)
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते । (कु० सं०)
न स शक्नोति किं यस्य प्रज्ञा नापदि हीयते । (क० स०)

न सा सभा यत्र न सन्ति वृद्धाः ।
न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ।
न स्त्री चलितचारित्रा निम्नोन्नतमवेक्षते । (क० स०)
न स्त्री स्वातन्त्र्यमर्हति । (म० भा०)
न स्नेहो न च दाक्षिण्यं स्त्रीष्वहो चापलादृते । (क० स०)
न स्पृशति पल्वलाम्भः पञ्जरशेषोऽपि कुञ्जरः क्वापि ।
न स्वेच्छं व्यवहर्तव्यमात्मनो भूतिमिच्छता । (क० स०)
नहि कृतमुपकारं साधवो विस्मरन्ति ।
नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ।
नहि तापयितुं शक्यं सागराम्भस्तृणोल्कया ।
नहि दुर्बलदग्धानां काले किंचित्प्ररोहति ।
नहि दुष्करमस्तीह किंचिदध्यवसायिनाम् । (क० स०)
नहि नार्यो विनेर्ष्यया ।
नहि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली । (र० वं०)
नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः । (कि० अ०)
नहि मूला प्रसिध्यति ।
नहि वन्ध्याश्नुते दुःखं यथा हि मृतपुत्रिणी ।
नहि विचलति मैत्री दूरतोऽपि स्थितानाम् ।
नहि सत्त्वावसादेन स्वल्पाप्यापद्विलङ्घ्यते । (क० स०)
नहि सर्वविदः सर्वे ।
नहि सर्वेऽपि कुर्वन्ति सभ्या युक्तिविवेचनम् ।
नहि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः । (र० वं०)
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।
नहीङ्गितज्ञोऽवसरेऽवसीदति । (कि० अ०)
नहीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् । (कु० सं०)
नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि । (घ० ख०)
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः । (कि० अ०)
नाधर्मश्चिरमृद्धये । (क० स०)
नानातत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ।
नानाफलैः फलति कल्पलतेव भूमिः । (भर्तृ०)
नानृतात्पातकं परम् ।
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ।
नारीणां भूषणं पतिः ।
नार्कातपैर्जलजमेति हिमैस्तु दाहम् । (नै० च०)
नार्यः समाश्रितजनं हि कलङ्कयन्ति ।
नालं सुखाय सुहृदो नालं दुःखाय शत्रवः । (म० भा०)
नाल्पीयान्बहु सुकृतं हिनस्ति दोषः । (कि० अ०)
नाऽविष्णुः पृथिवीपतिः । (म० भा०)
नासद्भिः किंचिदाचरेत् ।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ।
नास्ति कामसमो व्याधिः ।
नास्ति क्रोधसमो वह्निः ।

नास्ति चक्षुःसमं तेजः ।
नास्ति चात्मसमं बलम् ।
नास्ति ज्ञानात्परं सुखम् ।
नास्ति तृष्णासमो व्याधिः ।
नास्ति धान्यसमं प्रियम् ।
नास्ति प्राणसमं भयम् ।
नास्ति बन्धुसमं बलम् ।
नास्ति भर्तुः समो बन्धुः । (विक्र०)
नास्ति मेघसमं तोयम् ।
नास्ति मोहसमो रिपुः ।
नास्ति व्यसनिनां किंचिद्भुवि पर्याप्तये धनम् । (क० स०)
नास्ति सत्यसमो धर्मः । (म० भा०)
नास्ति हस्तिसमः सखा ।
नास्ति हस्तिसमो बन्धुः ।
नास्त्यदेयं महात्मनाम् ।
नास्त्यहो स्वामिभक्तानां पुत्रे वात्मनि वा स्पृहा ।
(क० स०)
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।
निजामृतैर्लोचनसेचनाद्वा पृथक्किमिन्दुः सृजति प्रजानाम् ।
(नै० च०)
निपातनीया हि सतामसाधवः । (शि० व०)
निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः । (प्र० रा०)
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते । (हि०)
निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि । (र० वं०)
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये ।
(र० वं०)
निर्द्रव्यं पुरुषं त्यजन्ति गणिकाः । (भर्तृ०)
निर्धनता सर्वापदामास्पदम् ।
निर्धनस्य कुतः सुखम् ।
निर्वाणदीपे किमु तैलदानम् ।
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ।
निर्विमर्शा हि सौरवः । (क० स०)
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ।
(कि० अ०)
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ।
निवृत्तपापसंपर्काः सन्तो यान्ति हि निर्वृतिम् । (क० स०)
निवृत्तरागस्य गृहं तपोवनम् । (हि०)
निशारत्नं चन्द्रः । (प्रसंगा०)
निष्प्रज्ञास्त्ववसीदन्ति लोकोपहसिताः सदा । (क० स०)
निष्प्रज्ञो नाशयत्येव प्रभोरर्थमथात्मनः । (क० स०)
निसर्गः स हि धीराणां यदापद्यधिकं दृढम् । (क० स०)
निसर्गचपलानां हि मादृशां संयमः कुतः । (क० स०)
निसर्गतोऽन्तर्मलिना ह्यसाधवः ।

निसर्गसिद्धो नारीणां सपत्नीषु हि मत्सरः । (क० स०)
निस्पृहस्य तृणं जगत् ।
निःसङ्गाद्भवति महतां मानपूजापहारः ।
नीचाश्रयो हि महतामपमानहेतुः ।
नीचैर्गच्छत्युपरि च दशाचक्रनेमिक्रमेण । (मे० दू०)
नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव साध्यम् ।
नीचो वदति न कुरुते वदति न साधुः करोत्येव ।
नूनं विरूपैरधिकं हासनैः क्रीडति स्मरः । (क० स०)
नृपति जनपदाना दुर्लभः । (प० त०)
नृपस्य वर्णाश्रमपालनं यत्स एव धर्मः । (र० वं०)
नेन्दुः क्षिपति किं कालं परिक्षीणोऽर्कमण्डले । (क० स०)
नेर्ष्यां भर्तृहितैषिण्यो गणयन्ति हि सुस्त्रियः । (क० स०)
नैकत्र सर्वो गुणसंनिपातः ।
नैवाकृतिः फलति नैव कुलं न शील । (भर्तृ०)
नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः । (हि०)
नैवात्मनीनमथवा क्रियते मदान्धैः । (शि० व०)
नैवान्यथा भवति यल्लिखितं विधात्रा ।
नैवाश्रितेषु महतां गुणदोषशङ्का ।
न्याय्यमुपेक्षते हि कः । (नै० च०)
न्याय्यां वृत्तिं समाचरेत् ।
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः । (भर्तृ०)
पङ्को हि नभसि क्षिप्तः क्षेप्तुः पतति मूर्धनि । (क० स०)
पञ्चभिर्मिलितैः किं यज्जगतीह न साध्यते । (नै० च०)
पठतो नास्ति मूर्खत्वम् ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ।
(र० वं०)
पदं हि सर्वत्र गुणैर्विधीयते ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ।
(कु० सं०)
पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ।
पद्मानां शिशिराद्भयम् ।
पयःपानं भुजंगानां केवलं विषवर्धनम् । (प० त०)
पयो गते किं खलु सेतुबन्धः ।
पयो मुचां पङ्क्तिषु विद्युतेव ।
परदुःखेनापि दुःखिता विरलाः ।
परबुद्धिर्विनाशाय ।
परबुद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ।
(कि० अ०)
परभुक्ते हि कमले किमलेर्जायते रतिः । (क० स०)
परमं लाभमरातिभङ्गमाहुः । (कि० अ०)
परमार्थमविज्ञाय न भेतव्यं क्वचिन्नृभिः । (क० स०)
परलोकगतस्य को बन्धुः ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ।
(र० वं०)

परवृद्धिमत्सरि मनो हि मानिनाम् । (शि० व०)
परसदननिविष्टः को लघुत्वं न याति । (भर्तृ०)
परसेवैकसक्तानां को हि स्नेहो निजे जने । (क० स०)
परहस्तगताः स्त्रियः ।
परहितनिरतानामादरो नात्मकार्ये ।
पराभवोऽप्युत्सव एव मानिनाम् ।
परार्थप्रतिपन्ना हि नेक्षन्ते स्वार्थमुत्तमाः । (क० स०)
परिजनतापि गुणाय सद्गुणानाम् । (कि० अ०)
परिवर्तिनि संसारे मृतः को वा न जायते ।
परेङ्गितज्ञानफला हि बुद्धयः ।
परैरनिन्द्यं चरितं मनस्विनां पयोनुसारोचितमेव शोभते । (क० स०)
परैरपर्यासितवीर्यसंपदां पराभवोऽप्युत्सव एव मानिनाम् । (कि० अ०)
परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ।
परोपकाराय सतां विभूतयः ।
परोपकारार्थमिदं शरीरम् ।
परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै ।
परोऽपि हितवान्बन्धुः । (प० त०)
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः । (र० वं०)
पर्वतानां भयं वज्रात् । (चा० नी०)
पलालजालैः पिहितः स्वयं हि प्रकाशमासादयतीक्षुडिम्भः । (नै० च०)
पवनः परागवाही रथ्यासु वहन्रजस्वलो भवति ।
पश्यन्तु लोकाः कलिकौतुकानि ।
पश्यन्तु लोकाः कलिदोषकानि ।
पाणौ पयसा दग्धे तक्रं फूत्कृत्य पामरः पिबति ।
पात्रत्वाद्धनमाप्नोति ।
पात्रानुसारं फलम् ।
पादपानां भयं वातात् । (चा० नी०)
पापप्रभावान्नरकं प्रयाति ।
पापे कर्मण्यवज्ञातहितवाक्ये कुतः सुखम् । (क० स०)
पिण्डे पिण्डे मतिर्भिन्ना ।
पिण्डेष्वनास्था खलु भौतिकेषु ।
पितृदोषेण मूर्खता ।
पिपासितैः काव्यरसो न पीयते ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान् ।
पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ।
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ।
पुंसामदृष्टे दृष्टे वा श्रेयोऽहंकारिणां कुतः । (क० स०)
पुण्यवन्तो हि संतानं पश्यन्त्युच्चैः कृतान्वयम् । (क० स०)
पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा ।
पुत्रः पिण्डप्रयोजनः । (चा० नी०)
पुत्रः शत्रुरपण्डितः । (चा० नी०)
पुत्रप्रयोजना दाराः ।
पुत्रहीनं गृहं शून्यम् ।
पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम् ।
पुत्रोदये माद्यति का न हर्षात् । (कु० सं०)
पुनर्दरिद्री पुनरेव पापी ।
पुनर्दाराः पुनर्वित्तं । (विक्र० च०)
पुनर्धनाढ्यः पुनरेव भोगी ।
पुरुषा अपि बाणा अपि गुणच्युताः कस्य न भयाय ।
पुष्पं पर्युषितं त्यजन्ति मधुपाः ।
पुस्तकप्रत्ययाधीतं । (नारद०)
पूज्यं वाक्यं समृद्धस्य ।
पूर्वपुण्यतया विद्या ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते । (अ० शा०)
पृथिवीभूषणं राजा ।
पेशलं हि सतीमनः । (क० स०)
प्रकृतिः खलु सा महीयसां सहते नान्यसमुन्नतिं यया ।
प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ।
प्रकृतिरियं सत्त्ववताम् ।
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ।
प्रकृतिसिद्धमिदं हि महात्मनाम् । (भर्तृ०)
प्रकृत्या ह्यमणिः श्रेयान्नालंकारश्च्युतोपलः । (कि० अ०)
प्रच्छन्नमप्यूहयते हि चेष्टा । (कि० अ०)
प्रजानामपि दीनानां राजैव सदयः पिता ।
प्रजापतेर्विसर्गो हि प्राणिसर्गोऽधिकाधिकः । (क० स०)
प्रज्ञा नाम बलं ह्येवं निष्प्रज्ञस्य बलेन किम् । (क० स०)
प्रज्ञाबलं च सर्वेषु मुख्यं कार्येषु साधनम् । (क० स०)
प्रणामान्तः सतां कोपः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् । (र० वं०)
प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते । (र० वं०)
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । (शि० व०)
प्रतिक्षणं यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।
प्रतिपन्नसुहृत्कार्यनिर्वाहं धीरसत्त्वता । (क० स०)
प्रतिपन्नार्थनिर्वाहं सहजं हि सतां व्रतम् । (क० स०)
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः । (र० वं०)
प्रतिभातश्च पश्यन्ति सर्वं प्रज्ञावतां धियः । (क० स०)
प्रतीयन्ते न नीतिज्ञाः कृतावज्ञस्य वैरिणः । (क० स०)
प्रत्ययः स्त्रीषु मुष्णाति विमर्शं विदुषामपि । (क० स०)
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ।
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव । (मे० दू०)
प्रत्युत्पन्नमतिस्त्रैणम् । (अ० शा०)
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ।

प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः स्रजमपि शिरस्यन्धक्षिप्तां धुनोत्यहिशङ्कया । (अ० शा०)
प्रभुचित्तमेव हि जनोऽनुवर्तते । (शि० व०)
प्रभुप्रसादो हि मुदे न कस्य । (कु० सं०)
प्रभुश्च निर्विचारश्च नीतिज्ञैर्न प्रशस्यते । (क० स०)
प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिंभराः ।
प्रभूणां हि विभूत्यन्धा धावत्यविषये मतिः । (क० स०)
प्रभौ हठप्रवृत्ते हि कस्य प्रत्यायना भवेत् । (क० स०)
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम् ।
प्रमाणं परमं श्रुतिः । (म० भा०)
प्रमाद्यतां संवृणोति खलु दोषमसङ्गता । (कि० अ०)
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु । (कु० सं०)
प्रलयोल्लसितस्य वारिधेः परिवाहो जगतः करोति किम् । (शि० व०)
प्रवादमोहितः प्रायो न विचारक्षमो जनः । (क० स०)
प्रसन्नतोयानि सुशीतलानि सरांसि चेतांसि हरन्ति पुंसाम् । (का० द०)
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ।
प्रसन्ने हि किमप्राप्यमस्तीह परमेश्वरे । (क० स०)
प्रसादचिह्नानि पुरःफलानि ।
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः । (अ० शा०)
प्रसूत्यन्तं च यौवनम् ।
प्रस्तुतार्थविरुद्धं हि कोऽभिदध्यादबालिशः । (क० स०)
प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहम् ।
प्रह्वेष्वनिर्बन्धरुषो हि सन्तः । (र० वं०)
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम् । (र० वं०)
प्राचीनकर्म बलवन्मुनयो वदन्ति । (म० भा०)
प्राज्ञा सत्त्वहितं कुर्यात्सम्यक्संबोधलब्धये । (क० स०)
प्राणव्ययाय शूराणां जायते हि रणोत्सवः । (क० स०)
प्राणानुदारा विसृजन्त्यर्थिनो न पराङ्मुखाः । (क० स०)
प्राणिनां हि निकृष्टापि जन्मभूमिः परा प्रिया । (क० स०)
प्राणेभ्योऽपि हि धीराणां प्रिया शत्रुप्रतिक्रिया । (नै० च०)
प्राणेभ्योऽप्यर्थमात्रा हि कृपणस्य गरीयसी । (क० स०)
प्राणैरपि हि भृत्यानां स्वामिसंरक्षणं व्रतम् । (क० स०)
प्राप्तोऽप्यर्थः क्षणादेव हार्यते मन्दबुद्धिना । (क० स०)
प्राप्नोतीष्टमविक्लवः । (क० स०)
प्राप्यते किं यशः शुभ्रमनङ्गीकृत्य साहसम् । (क० स०)
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः । (कु० सं०)
प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ।
प्रायः सज्जनसंगतौ हि लभते दैवानुरूपं फलम् ।
प्रायः सत्पुरुषाश्रितोऽपि लभते दैवानुरूपं फलम् ।

प्रायः समानविद्याः परस्परयशः पुरोभागाः ।
प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ।
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा । (मे० दू०)
प्रायः स्त्रियो भवन्तीह निसर्गविषमाः शठाः । (क० स०)
प्रायः स्वं महिमानं क्रोधात्प्रतिपद्यते हि जनः ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः । (कु० सं०)
प्रायेण भार्यादौःशील्यं स्नेहान्धो नेक्षते जनः । (क० स०)
प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति । (प० त०)
प्रायेण सत्यपि हितार्थकरे विधौ हि श्रेयांसि लब्धुमसुखानि विनान्तरायैः । (कि० अ०)
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः । (कु० सं०)
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते । (भर्तृ०)
प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् । (भर्तृ०)
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः । (भर्तृ०)
प्रायो वारितवामा हि प्रवृत्तिर्मनसो नृणाम् । (क० स०)
प्रायोऽशुभस्य कार्यस्य कालहारः प्रतिक्रिया । (क० स०)
प्रारभ्य चोत्तमजना न परित्यजन्ति । (भर्तृ०)
प्रासादशिखरस्थोऽपि काकः किं गरुडायते । (प० त०)
प्रियबन्धुविनाशोत्थः शोकाग्निः कं न तापयेत् । (क० स०)
प्रियमनु सुकृतां हि स स्पृहाया विलम्बः । (नै० च०)
प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः । (शि० व०)
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति । (मे० दू०)
प्रियेषु सौभाग्यफला हि चारुता । (कु० सं०)
प्रिये सीमाह्लादः ।
प्रौढं विक्रान्तमासीद्वन इव भवता शूरशून्ये रणेऽस्मिन् ।
फलं भाग्यानुसारतः । (म० भा०)
फलेन फलमादिशेत् ।
बत स्त्रीणां चञ्चलाश्चित्तवृत्तयः । (क० स०)
बताश्रितानुरोधेन किं न कुर्वन्ति साधवः । (क० स०)
बधिरस्य गानम् ।
बधिरान्मन्दकर्णः श्रेयान् ।
बध्नात्यार्यपरीवादं खलसंवादशृङ्खला । (क० स०)
बन्धुः को नाम दुष्टानाम् ।
बन्धुरप्यहितः परः ।
बलवति सति दैवे बन्धुभिः किं विधेयम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः । (अ० शा०)
बलं मूर्खस्य मौनित्वम् ।
बली बलं वेत्ति न वेत्ति निर्बलः ।

बलीयसी केवलमीश्वरेच्छा । (म० भा०)
बहुरत्ना वसुंधरा ।
बहुवचनमल्पसारं यः कथयति विप्रलापी सः ।
बहुविघ्नास्तु सदा कल्याणसिद्धयः । (क० स०)
बह्वाश्चर्या हि मेदिनी । (क० स०)
बालानां रोदनं बलम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ।
बुद्धिः कर्मानुसारिणी । (चा० नी०)
बुद्धिर्नाम च सर्वत्र मुख्यं मित्रं न पौरुषम् । (क० स०)
बुद्धेः फलमनाग्रहः ।
बुद्ध्वा वा जितमपरेण काममाविष्कुर्वीत स्वगुणमपत्रपः क एव । (शि० व०)
बुभुक्षितः किं न करोति पापम् । (प० त०)
बुभुक्षितं न प्रतिभाति किंचित् ।
बुभुक्षितैर्व्याकरणं न भुज्यते ।
बोधे बोधे सच्चिदानंदभासः ।
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् । (नै० च०)
भक्तानामनिर्वाच्यं हि चेष्टितम् । (क० स०)
भक्त्या कार्यधुरं वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ।
भक्त्या हि तुष्यन्ति महानुभावाः ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः । (प० त०)
भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः ।
भजन्ति वैतसीं वृत्तिं राजानः कालवेदिनः । (क० स०)
भजन्त्यात्मंभरित्वं हि दुर्लभेऽपि न साधवः । (क० स०)
भद्रकृत्प्राप्नुयाद्भद्रमभद्रं चाप्यभद्रकृत् । (क० स०)
भद्रमभद्रं वा कृतमात्मनि कल्प्यते । (क० स०)
भयकार्कश्यकोपानां गृहं हिं छान्दसा द्विजाः । (क० स०)
भये सीमा मृत्युः । (घ० ख०)
भर्ता च स्त्रीकृतं पापम् ।
भर्तारं हि विना नान्यः सतीनामस्ति बान्धवः । (क० स०)
भर्तृमार्गानुसरणं स्त्रीणां च परमं व्रतम् । (क० स०)
भवति महत्सु न निष्फलः प्रयासः । (शि० व०)
भवति योजयितुर्वचनीयता ।
भवति हि विक्लवता गुणोऽङ्गनानाम् । (शि० व०)
भवति हृदयदाही शल्यतुल्यो विपाकः ।
भवन्ति क्लेशबहुलाः सर्वस्यापीह सिद्धयः । (क० स०)
भवन्ति वाचोवसरे प्रयुक्ता ध्रुवं प्रविस्पष्टफलोदयाय । (कु० सं०)
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः । (कु० सं०)
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः । (कु० सं०)
भवन्त्युदयकाले हि सत्कल्याणपरम्पराः । (क० स०)
भवन्त्येव हि भद्राणि धर्मादेव यदादरात् । (क० स०)

भवितव्यता बलवती । (अ० शा०)
भवितव्यं भवत्येव कर्मणामीदृशी गतिः । (म० भा०)
भवितव्यस्य नासाध्यं दृश्यते बत दृश्यताम् । (क० स०)
भवितव्यानां द्वाराणि भवन्ति सर्वत्र । (अ० शा०)
भवेद्य यस्य यत्कर्म स तत्कुर्वन्विनश्यति । (क० स०)
भवो हि लोकाभ्युदयाय तादृशाम् ।
भस्मीभूतस्य जीवस्य पुनरागमनं कुतः । (नै० च०)
भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ।
भार्या मूलं गृहस्थस्य । (दम्पती०)
भार्यासमं नास्ति शरीरतोषणम् ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं मतम् ।
भावस्थिराणि जननान्तरसौहृदानि । (अ० शा०)
भिक्षुको भिक्षुकं दृष्ट्वा श्वानवद्गुर्गुरायते ।
भिन्नरुचिर्हि लोकः । (र० वं०)
भीता इव हि धीराणां यान्ति दूरे विपत्तयः । (क० स०)
भूतार्थकथने यस्य स्थेयस्येव सरस्वती ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ।
भूभृद्रत्नं कनकशिखरी । (प्र०भ०)
भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ।
भोगरत्नं मृगाक्षी । (प्र०भ०)
भोगो भूषयते धनम् ।
भोग्यं किं रमणीं विना ।
भ्रष्टस्य का वा गतिः ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः । (भर्तृ०)
मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ।
मतिरेव बलाद्गरीयसी ।
मदमूढबुद्धिषु विवेकिता कुतः । (शि० व०)
मद्यपस्य कुतः सत्यम् ।
मद्यपाः किं न जल्पन्ति ।
मद्ये मारकसुहृदि प्रसक्ता स्त्री सती कुतः । (क० स०)
मधुसमयभूषा मनसिजः । (प्र०भ०)
मधुरविधुरमिश्राः सृष्टयो हा विधातुः । (प्र० रा०)
मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ।
मनःपूतं समाचरेत् । (का० नी०)
मन एव मनुष्याणां कारणं बन्धमोक्षयोः । (भ०गी०)
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । (शा० प०)
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् । (भर्तृ०)
मनीषिणः सन्ति न ते हितैषिणः ।
मनोभूषा मैत्री । (प्र० भ०)
मनोरथानामगतिर्न विद्यते । (कु० सं०)
मनो हि जन्मान्तरसंगतिज्ञम् । (र० वं०)
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः । (मे० दू०)
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ।
मयि तु कृतनिघाते किं विदध्याः परेण ।

मय्युल्लङ्घितमर्यादे को हि तिष्ठेत्स्ववर्त्मनि । (क० स०)
मरणं प्रकृतिः शरीरिणाम् । (र० वं०)
मर्दनं गुणवर्धनम् ।
मर्मवाक्यमपि नोच्चरणीयम् ।
महतां हि धैर्यमभिभाव्यवैभवम् । (कि० अ०)
महतां हि सर्वमथवा जनातिगम् । (शि० व०)
महतामनुकम्पा हि विरुद्धेषु प्रतिक्रिया । (क० स०)
महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किंचन । (शि० व०)
महते रुजन्नपि गुणाय महान् । (कि० अ०)
महाजनो येन गतः स पन्थाः । (प० त०)
महानपि प्रसङ्गेन नीचं सेवितुमिच्छति ।
महानुभावः प्रतिहन्ति पौरुषम् । (कि० अ०)
महान्महत्येव करोति विक्रमम् । (प० त०)
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः । (र० वं०)
महीपतीनां विनयो हि भूषणम् ।
महेश्वरमनाराध्य न सन्तीप्सितसिद्धयः । (क० स०)
महोदयानामपि संघवृत्तिता सहायसाध्याः प्रदिशन्ति सिद्धयः । (कि० अ०)
मातर्लक्ष्मि तव प्रसादवशतो दोषा अपि स्युर्गुणाः ।
माता च व्यभिचारिणी । (चा० नी०)
मातापितृभ्यां शप्तः सन्न जातु सुखमश्नुते । (क० स०)
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने । (प० त०)
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि । (कि० अ०)
मात्सर्येण दुरात्मकोऽपि सुजनं दृष्ट्वा सदा हासते ।
मात्रा समं नास्ति शरीरपोषणम् ।
मादृशो हि कथं कुर्युः सत्त्वोल्लङ्घनसाध्वसम् । (क० स०)
माने म्लाने कुतः सुखम् ।
मासरत्नं वसन्तः । (प्र० भ०)
मितं च सारं च वचो हि वाग्मिता । (नै० च०)
मित्रार्थगणितप्राणा दुर्लभा हि महोदयाः । (क० स०)
मिथ्या परोपकारो हि कुतः स्यात्कस्य शर्मणे । (क० स०)
मिष्टान्नमितरे जनाः । (नै० च०)
मुक्त्वा बलिभुजं काकी कोकिले रमते कथम् । (क० स०)
मुखं विमुच्य श्वसितस्य धारया वृथैव नासापथधावनश्रमः । (नै० च०)
मुखरतावसरे हि विराजते । (कि० अ०)
मुख्यमङ्गं हि मन्त्रस्य विनिपातप्रतिक्रिया । (क० स०)
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः । (कि० अ०)
मुह्यन्मार्गममार्गं वा रागान्धः को हि पश्यति । (क० स०)
मूढः परप्रत्ययनेयबुद्धिः । (प० त०)
मूर्खस्य किं शास्त्रकथाप्रसङ्गः ।
मूर्खस्य हृदयं शून्यम् ।
मूर्खाणां बोधको रिपुः ।
मूर्खैर्हि सङ्गः कस्यास्ति शर्मणे । (क० स०)
मूर्खो दृष्टव्यलीकोऽपि व्याजसान्त्वेन तुष्यति । (क० स०)
मूर्खोऽनुभवति क्लेशं न कार्यं कुरुते पुनः । (क० स०)
मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु । (अ० शा०)
मृत्योः सर्वत्र तुल्यता ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे । (मे० दू०)
मेघो गिरिजलधिवर्षी च । (प० त०)
मोघा हि नाम जायेत महत्सूपकृतिः कुतः । (क० स०)
मोहान्धमविवेकं हि श्रीश्चिराय न सेवते । (क० स०)
मौनं विधेयं सततं सुधीभिः ।
मौनं सर्वार्थसाधकम् ।
मौनिनः कलहो नास्ति ।
म्लायति श्रीः कुलस्त्रीव गृहे बन्धक्यधिष्ठिते । (क० स०)
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः । (भर्तृ०)
यतः सतां हि संगतं मनीषिभिः साप्तपदीनमुच्यते । (कु० स०)
यतः सत्यं ततो धर्मः ।
यतो धर्मस्ततो धनम् ।
यतो नागास्ततो जयः ।
यतो रूपं ततः शीलम् ।
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ।
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ।
यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
यत्राकृतिस्तत्र गुणा वसन्ति ।
यत्रास्ति लक्ष्मीर्विनयो न तत्र ।
यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
यथा देशस्तथा भाषा ।
यथा बीजं तथाङ्कुरः ।
यथा भूमिस्तथा तोयम् ।
यथा राजा तथा प्रजा ।
यथा वृक्षस्तथा फलम् ।
यथाशक्त्यतिथेः पूजा धर्मो हि गृहमेधिनाम् । (क० स०)
यथोत्तरेच्छा हि गुणेषु कामिनः । (कि० अ०)
यथौषधं स्वादु हितं च दुर्लभम् ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते । (कु० स०)
यदनुद्वेगतः साध्यः पुरुषार्थः सदा बुधैः । (क० स०)
यदन्नं भक्षयेन्नित्यं जायते तादृशी प्रजा ।
यदि वात्यन्तमृदुता न कस्य परिभूतये । (क० स०)
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ।
यद्देवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ।

यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः ।
यद्भाविताात्मा म्रियते जन्तुस्तद्रूपमश्नुते । (क० स०)
यद्यपि शुद्धं लोकविरुद्धं नाकरणीयं नाचरणीयम् ।
यद्वा तद्वा भविष्यति ।
यशः पुण्यैरवाप्यते । (चा० नी०)
यशस्तु रक्ष्यं परतो यशोधनैः । (र० वं०)
यस्याश्वास्तस्य काञ्चनम् ।
यस्याश्वास्तस्य मेदिनी ।
यः क्रियावान्स पण्डितः ।
यो गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी ।
याचको याचकं दृष्ट्वा श्वानवद्गुर्गुरायते ।
याचनान्तं हि गौरवम् ।
याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा । (मे० दू०)
यादृशो यः कृतो धात्रा भवेत्तादृश एव सः । (क० स०)
यादृशास्तन्तवः कामं तादृशो जायते पटः । (क० स०)
यानरत्नं हि तुरगः । (प्र० भ०)
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । (अ० रा०)
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ।
या राका शशिशोभना गतघना सा यामिनी यामिनी ।
या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ।
या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी ।
युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् ।
युक्तानां खलु महतां परोपकारे कल्याणी भवति रुजत्स्वपि प्रवृत्तिः । (कि० अ०)
युक्तानां विमलतया तिरस्क्रियायै नाक्रामन्नपि हि भवत्यलं जलौघः । (शि० व०)
युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः ।
युद्धस्य वार्ता रम्या स्यात् ।
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे । (भर्तृ०)
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ।
येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ।
ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्तु ते किमपि तान्प्रति नैष यत्नः । (मा० मा०)
येनेष्टं तेन गम्यताम् ।
योगस्तडित्तोयदयोरिवास्तु ।
योजकस्तत्र दुर्लभः ।
यो यद्वपति बीजं हि लभते सोऽपि तत्फलम् । (क० स०)
रक्षन्ति पुण्यानि पुरा कृतानि ।
रङ्गः शुक्लपटे यथा ।
रत्नदीपस्य हि शिखा वात्ययापि न नश्यति ।
रत्नव्ययेन पाषाणं को हि रक्षितुमर्हति । (क० स०)
रत्नं समायुज्यतु काञ्चनेन ।
रत्नाकरे युज्यत एव रत्नम् । (कु० सं०)
रन्ध्रोपनिपातिनोऽनर्थाः । (अ० शा०)
रम्याणां विकृतिरपि श्रियं तनोति । (कि० अ०)
रविपीतजला तपात्यये पुनरोधेन हि युज्यते नदी । (कु० सं०)
रसमूला हि व्याधयः ।
रहस्यं साधूनामनुपधि विशुद्धं विजयते ।
राजा राष्ट्रकृतं पापम् । (वृ० चा०)
राजा सहायवाञ्शूरः सोत्साहो जयति द्विषः । (क० स०)
राज्ञः पापं पुरोहितः । (वृ० चा०)
रामधाम शरणीकरणीयम् ।
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय । (मे० दू०)
रिक्तपाणिर्न पश्येत राजानं देवतां गुरुम् ।
रिपुष्वपि हि भीतेषु सानुकम्पा महाशयाः । (क० स०)
लक्ष्मीरनुसरति नयगुणसमृद्धिम् ।
लक्ष्मीर्यस्य गृहे स एव भजति प्रायो जगद्वन्द्यताम् ।
लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ।
लब्धदिव्यरसास्वादः को हि रज्येद्रसान्तरे । (क० स०)
लब्धस्पर्शानां भवति कुतोऽथवा व्यवस्था । (शि० व०)
लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत् । (अ० शा०)
ललितान्तानि गीतानि ।
लाभः परं खलु सुखे तव भस्मपातः ।
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ।
लीलया भवजलं तरणीयम् ।
लुब्धमर्थेन गृह्णीयात् । (प० त०)
लुब्धानां याचकः शत्रुः ।
लोके पशुश्च मूर्खश्च निर्विवेकमती समौ । (क० स०)
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ।
लोकोपहसिताः शश्वत्सीदन्त्येव ह्यबुद्धयः । (क० स०)
लोभः पापस्य कारणम् ।
लोभमूलानि पापानि ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ।
वक्ति जन्मान्तरप्रीतिं मनः स्निह्यदकारणम् । (क० स०)
वक्रे विधौ वद कथं व्यवसायसिद्धिः ।
वचने किं दरिद्रता ।
वचोभूषा सत्यम् । (प्र० भ०)
वञ्च्यन्ते हेलयैवेह कुस्त्रीभिः सरलाशयाः । (क० स०)
वज्रादपि हि वीराणां चित्तरत्नमखण्डितम् । (क० स०)
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते । (कु० सं०)
वनेऽपि दोषाः प्रभवन्ति रागिणाम् ।
वयोगते किं वनिताविलासः ।
वरं हि मानिनो मृत्युर्न दैन्यं स्वजनाग्रतः । (क० स०)

वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । (भर्तृ०)
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिः ।
वरं भिक्षाशित्वं न मानपरिखण्डनम् । (वृ० चा०)
वरं मौनं कार्यं न च वचनमुक्तं यदनृतम् ।
वरविभवभूषा वितरणम् ।
वरयेत्कुलजां प्राज्ञो विरूपामपि कन्यकाम् । (वृ० चा०)
वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ।
वशिनां न निहन्ति धैर्यमनुभावगुणः । (कि० अ०)
वसुमत्या हि नृपाः कलत्रिणः । (र० वं०)
वस्त्रपूतं पिबेज्जलम् । (का० नी०)
वस्त्राणामातपो जरा । (प० त०)
वाङ्मात्रोत्पादितासह्यवैरात्को नानुतप्यते । (क० स०)
वाञ्छारत्नं परमपदवी । (प्र० भ०)
वाते वाति कदम्बपुष्पसुरभौ केन प्रतारिष्यते ।
वामे विधौ न हि फलन्त्यभिवाञ्छितानि ।
वाराङ्गनेव नृपनीतिरनेकरूपा । (भर्तृ०)
वासः प्रधानं खलु योग्यतायाः ।
वासोविहीनं विजहाति लक्ष्मीः ।
विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य । (अ० शा०)
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः । (कु० सं०)
विक्रियायै न कल्पंते संबन्धाः सदनुष्ठिताः । (कु० सं०)
विक्रीते करिणि किमङ्कुशे विवादः ।
विघ्नवत्यः प्रथितार्थसिद्धयः । (अ० शा०)
विचित्रमायाः कितवा ईदृशा एव सर्वदा । (क० स०)
विचित्ररूपाः खलु चित्तवृत्तयः । (कि० अ०)
विचित्रविधये तस्मै सर्वदा विधये नमः । (क० स०)
विचित्राः खलु वासनाः ।
विचित्रो बत कायस्य विपाकविषमः क्रमः । (क० स०)
विजानतोऽपि ह्यनयस्य रौद्रतां भवत्यपाये परिमोहिनां मतिः । (कि० अ०)
वित्तेन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते । (वृ० चा०)
विदग्धा अपि वञ्च्यन्ते विटवर्णनया स्त्रियः । (क० स०)
विदेशे बन्धुलाभो हि मरावमृतनिर्झरः । (क० स०)
विद्यातुराणां न सुखं न निद्रा ।
विद्या ददाति विनयम् । (हि०)
विद्या मित्रं प्रवासे च । (वृ० चा०)
विद्या रूपं कुरूपिणाम् ।
विद्या विवादाय धनम् । (गु० र०)
विद्यासमं नास्ति शरीरभूषणम् ।
विद्या सर्वस्य भूषणम् ।
विद्या स्तब्धस्य निष्फला ।
विद्वान्कुलीनो न करोति गर्वम् ।
विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ।
विद्वान्सर्वत्र पूज्यते । (चा० नी०)
विधिरहो बलवानिति मे मतिः । (भाग०)
विधिरुच्छृङ्खलो नृणाम् ।
विधिर्हि घटयत्यर्थानचिन्त्यानपि संमुखः । (क० स०)
विधिलिखितं बुद्धिरनुसरति ।
विधेर्विचित्राणि विचेष्टितानि ।
विधेर्विलासानब्धेश्च तरङ्गान्को हि तर्कयेत् । (क० स०)
विनयाद्याति पात्रताम् ।
विनयो हि सतीव्रतम् । (क० स०)
विनाप्यर्थैर्धीरः स्पृशति बहुमानोन्नति पदं । (हि०)
विना मलयमन्यत्र चन्दनं न प्ररोहति ।
विनाशकाले विपरीतबुद्धिः ।
विनाश्रया न शोभन्ते पण्डिता वनिता लताः ।
विना हि गुर्वादेशेन संपूर्णाः सिद्धयः कुतः । (क० स०)
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु । (कु० सं०)
विनीतनागः किल सूत्रधारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते । (र० वं०)
विपदा परिभूताः किं व्यवस्यन्ति विलम्बितुम् । (कु० सं०)
विपदि न दूषितातिभूमिः । (शि० व०)
विपदोऽपि पदं श्लाघ्योऽपकारयति नो हि सः । (कु० सं०)
विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः ।
विभूषणं मौनमपण्डितानाम् । (भर्तृ०)
विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा । (कि० अ०)
विरक्तस्य तृणं जगत् ।
विरक्तस्य तृणं भार्या ।
विलम्बितुं न खलु सदा मनस्विनो विधित्सवः कलहम-वेक्ष्य विद्विषः । (शि० व०)
विलासिनी हि सर्वस्य संध्येव क्षणरागिणी । (क० स०)
विवक्षितं ह्यनुक्तमनुतापं जनयति । (अ० शा०)
विवेकधाराशतधौतमन्तः सतां न कामः कलुषीकरोति । (नै० च०)
विशाखान्तानि मेघानि ।
विश्वासं स्त्रीषु वर्जयेत् । (वृ० चा०)
विश्वासः कुटिलेषु कः । (क० स०)
विश्वासयत्याशु सतां हि योगः । (कि० अ०)
विषं गोष्ठी दरिद्रस्य ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया । (र० वं०)
विषयाकृष्यमाणा हि तिष्ठन्ति सुपथे कथम् । (क० स०)
विषयिणः कस्यापदोऽस्तं गताः । (शि० पु०)
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् । (कु० सं०)
वीरसाहाय्यनिर्विघ्नाः सुखलभ्या हि सिद्धयः । (क० स०)
वीरो हि स्वाम्यमर्हति । (क० स०)
वृक्षं क्षीणफलं त्यजन्ति विहगाः । (स० र०)

 

वृत्तं हि राज्ञामुपरुद्धवृत्तम् । (र० वं०)
वृथा सुतस्य भोजनम् ।
वृथा दानं समर्थस्य ।
वृथा दीपो दिवापि च ।
वृथा भवेदसङ्गहान्धस्य हितोपदेशना । (कु० सं०)
वृथा वृष्टिः समुद्रेषु ।
वृद्धस्य तरुणी विषम् ।
वृद्धा जना निष्करुणा भवन्ति ।
वृद्धा न ते ये न वदन्ति धर्मम् ।
वृद्धा नारी पतिव्रता ।
वेदाज्जानन्ति पण्डिताः ।
वेश्याङ्गनेव नृपनीतिरनेकरूपा ।
वेश्यानां च कुतः स्नेहः ।
व्याघ्रस्य चोपवासस्य पारणं पशुमारणम् ।
व्याजसप्रणयैर्वाक्यैर्जनन्या को न वञ्चयते । (क० स०)
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ।
(कु० सं०)
व्याधितस्यौषधं मित्रम् ।
व्रताभिरक्षा हि सतामलंक्रिया । (कि० अ०)
शक्तयो नियता वारि वैद्युताग्निं नु हन्ति किम् (क० स०)
शक्या हि केन निश्चेतुं दुर्ज्ञाना नियतेर्गतिः । (क० स०)
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
शयनतलरत्नं शशिमुखी । (प्र० भ०)
शरीरमूला हि नृपा मन्त्रमूला च राजता । (क० स०)
शरीरमाद्यं खलु धर्मसाधनम् । (कु० सं०)
शस्त्राघाता न तथा सूचीक्षतवेदना यादृक् ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ।
(र० वं०)
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः । (कु० सं०)
शास्त्रं हि निश्चितधियां क न सिद्धिमेति । (शि० व०)
शास्त्राद्रूढिर्बलीयसी ।
शिरसि लिखितं लङ्घयति कः ।
शिष्यपापं गुरुस्तथा ।
शीलं परं भूषणम् ।
शीलं भूषयते कुलम् ।
शीलं हि विदुषां धनम् । (क० स०)
शीलं हि सर्वस्य नरस्य भूषणम् ।
शुचिः क्षेमकरो राजा ।
शुचिर्नारी पतिव्रता ।
शुचिर्भूमिगतं तोयम् ।
शुभकृन्नहि सीदति । (क० स०)
शुभस्य शीघ्रमशुभस्य कालहरणम् ।
शुभाचारस्य कः कुर्यादशुभं हि सचेतनः । (क० स०)
शुष्केन्धने वह्निरुपैति वृद्धिम् ।

शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ।
(प० त०)
शूरस्य मरणं तृणम् ।
शूराणां मृतमारणे नहि परो धर्मः प्रयुक्तो बुधैः ।
शूरा हि प्रणतिप्रियाः । (क० स०)
शोककन्दः क कन्या हि क्वानन्दः कायवान्सुतः । (क० स०)
शोभन्ते विद्यया विप्राः ।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः ।
श्यालको गृहनाशाय । (चा० नी०)
श्रद्धया न विना दानम् ।
श्रवणपुटरत्नं हरिकथा । (प्र० भ०)
श्रवणसुखसीमा हरिकथा । (प्र० भ०)
श्रीकृष्णस्य कृपालवो यदि भवेत्कः कं निहन्तुं क्षमः ।
श्रीपतेः पदयुगं स्मरणीयम् ।
श्रीर्मङ्गलात् प्रभवति । (म० भा०)
श्रेयसि केन तृप्यते । (शि० व०)
श्रेयान्हि मानिनो मृत्युर्नेदृगात्मप्रकाशनम् । (क० स०)
श्रोत्रस्य भूषणं शास्त्रम् ।
संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
संसर्गजा दोषगुणा भवन्ति । (भर्तृ०)
संहर्षिणा सह गुणाभ्यधिकैर्दुरासम् । (शि० व०)
सकलं शीलेन कुर्याद्वशम् ।
सकलकृतिसीमा श्रुतिभृतिः । (प्र० भ०)
सकलगुणभूषा च विनयः ।
सकलगुणसीमा वितरणम् ।
सकलसुखसीमा सुवदना । (प्र० भ०)
सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान्ग्रहीतुम् ।
(र० वं०)
स क्षत्रियस्त्राणसहः सतां यः ।
सखि साहजिकं प्रेम दूरादपि विजायते ।
संकटे हि परीक्ष्यन्ते प्राज्ञाः शूराश्च संगरे । (क० स०)
संकल्पैकप्रधाना हि दिव्यानामखिलाः क्रियाः । (क० स०)
सङ्गः सतां किमु न मङ्गलमातनोति । (भाग०)
सङ्गात्संजायते कामः । (भ० गी०)
सङ्ग्रामो नाम शूराणामुत्सवो हि महानयम् । (क० स०)
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ।
सतां महत्संमुखधावि पौरुषम् । (नै० च०)
सतां हि चेतःशुचितात्मसाक्षिका । (नै० च०)
सतां हि सङ्गः सकलं प्रसूयते । (भाग०)
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।
(अ० शा०)
सतां हि साधुशीलत्वात्स्वभावो न निवर्तते ।
सतां गुरुजिगीषे हि चेतसि स्त्रीतृणं कियत् । (क० स०)
सतीधर्मो हि सुस्त्रीणां चिन्त्यो न सुहृदादयः । (क० स०)
स तु निरवधिरेकः सज्जनानां विवेकः ।
सत्यमोघो हि सिद्धः ।
(क० स०)

सत्त्वानुरूपं सर्वस्य धाता सर्वं प्रयच्छति। (क० स०)
सत्पुत्र एव कुलसद्मनि कोऽपि दीपः।
सत्यः प्रवादो यच्छिद्रेष्वनर्था यान्ति भूरिताम्। (क० स०)
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते। (शि० व०)
सत्यपूतां वदेद्वाणीम्।
सत्यं सम्यक्कृतोऽल्पोऽपि धर्मो भूरिफलो भवेत्। (क० स०)
सत्यं कण्ठस्य भूषणम्।
सत्यं न तद्यच्छलमभ्युपैति।
सत्यमेव जयते। (वृ० चा०)
सत्येन तपते रविः। (वृ० चा०)
सत्येन धार्यते पृथ्वी। (वृ० चा०)
सत्येन पूर्यते साक्षी।
सत्येन वाति वायुश्च। (वृ० चा०)
सत्संगतिः कथय किं न करोति पुंसाम्। (भर्तृ०)
सदसद्वा नहि विदुः कुस्त्रीवचनमोहिताः। (क० स०)
सदाभिमानैकधना हि मानिनः। (शि० व०)
सदा स्याद्योऽत्र यच्चित्तस्तन्मयत्वमुपैति सः। (क० स०)
सदोभूषा सूक्तिः।
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु। (मे० दू०)
सद्भिः कुर्वीत संगतिम्।
सद्भिरेव सहासीत।
सद्भिर्विवादं मैत्रीं च।
सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम्।
सद्यः फलति गान्धर्वम्।
सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि काङ्क्षितम्। (र० वं०)
स धार्मिको यः परमर्म न स्पृशेत्।
स धीरो यो न संमोहमापत्कालेऽपि गच्छति। (क० स०)
सन्तः परीक्ष्यान्यतरद्भजन्ते।
सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम्। (म० भा०)
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे। (र० वं०)
संतोष एव पुरुषस्य परं निधानम्।
संतोषतुल्यं धनमस्ति नान्यत्।
संतोषे ब्राह्मणः शुचिः।
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः। (भर्तृ०)
संधत्ते भृशमरतिं हि सद्वियोगः।
संधिं कृत्वा तु हन्तव्यः संप्राप्तेऽवसरे पुनः। (क० स०)
संनिकृष्टे निकृष्टेऽपि कष्टं रज्यन्ति कुस्त्रियः। (क० स०)
सभारत्नं विद्वान्। (प्र० भ०)
समये हि सर्वमुपकारि कृतम्। (शि० व०)
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः।
समानशीलव्यसनेषु सख्यम्। (हि० प०)

समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य। (कु० सं०)
संपत्सु हि सुसत्त्वानामेकहेतुः स्वपौरुषम्। (क० स०)
संपूर्णकुम्भो न करोति शब्दम्।
संभवत्यभिजातानामभिमानो ह्यकृत्रिमः। (क० स०)
संभावना ह्यधिकृतस्य तनोति तेजः। (कि० अ०)
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते। (भ० गी०)
संमुखीनो हि जयो रन्ध्रप्रहारिणाम्। (र० वं०)
सरित्पतिर्नहि समुपैति रिक्तताम्। (शि० व०)
सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते। (यो० वा०)
सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः। (चा० नी०)
सर्वं स्नेहात्प्रवर्तते। (म० भा०)
सर्वः कान्तमात्मीयं पश्यति। (अ० शा०)
सर्वः कालवशेन नश्यति।
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्। (भर्तृ०)
सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः।
राज्ञां तु चरितार्थता दुःखोत्तरैव। (अ० शा०)
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः। (शि० व०)
सर्वं कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभः। (भर्तृ०)
सर्वं जीवद्भिराप्यते। (क० स०)
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः।
सर्वं रत्नमुपद्रवेण सहितं निर्दोषमेकं यशः।
सर्वं शून्यं दरिद्रस्य। (प० त०)
सर्वं सत्ये प्रतिष्ठितम्। (चा० नी०)
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम्।
सर्वनाशाय मातुलः। (चा० नी०)
सर्वमत्यन्तगर्हितम्।
सर्वलोकप्रतिष्ठायां यतन्ते बहवो जनाः।
सर्वशून्या दरिद्रता।
सर्वश्चित्तप्रमाणेन सदसद्वाभिवाञ्छति। (क० स०)
सर्वस्यौषधमस्ति शास्त्रविहितं, मूर्खस्य नास्त्यौषधम्। (प० त०)
सर्वाङ्गे दुर्जनो विषम्।
सर्वारम्भास्तण्डुलप्रस्थमूलाः।
सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्। (अ० शा०)
सर्वे गुणाः काञ्चनमाश्रयन्ते। (भर्तृ०)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। (म० भा०)
सर्वो हि नोपगतमप्यपचीयमानं वर्धिष्णुमाश्रयमनागतमभ्युपैति। (शि० व०)
सलज्जा गणिका नष्टा।
स सुहृद्व्यसने यः स्यात्। (प० त०)
सहते मादृशः को हि तादृशं धर्मविप्लवम्। (क० स०)
सहते विपत्सहस्रं मानी नैवापमानलेशमपि। (म० भा०)
सहते विरहक्लेशं यशस्वी नायशः पुनः। (क० स०)

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
(कि० अ०)
सहसा हि कृतं पापं कथं मा भूद्विपत्तये । (क० स०)
सहसि प्लवगैरुपासितं नहि गुञ्जाफलमेति सोष्मताम् ।
(शि० व०)
सहस्रेषु च पण्डितः ।
सहायकृच्छ्रैर्महतां न संगतं भवन्ति गोमायुसखा न दन्तिनः । (कि० अ०)
सागरं वर्जयित्वा कुत्र महानद्यवतरति । (अ० शा०)
साधनेषु हि रतेरुपधत्ते रम्यतां प्रियसमागम एव ।
(कि० अ०)
साधने हि नियमोऽन्यजनानां योगिनां तु तपसाखिलसिद्धिः । (नै० च०)
साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ।
साधूनां दुर्जनाद्भयम् । (प० त०)
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ।
साध्यासाध्यविचारं हि नेक्षते भवितव्यता । (क० स०)
सानुकूले जगन्नाथे विप्रियः सुप्रियो भवेत् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः । (शि० व०)
सारं गृह्णन्ति पण्डिताः ।
साहसं नैरपेक्ष्यं च कितवानां निसर्गजम् । (क० स०)
सिते हि जायेत शितेः सुलक्ष्यता । (नै० च०)
सिद्धिं वा यदि वाऽसिद्धिं चित्तोत्साहो निवेदयेत् । (प०त०)
सिध्यन्ति कुत्र सुकृतानि विना श्रमेण ।
सीमन्तिनीनां कान्तोदन्तः सुहृदुपगतः संगमात्किंचिदूनः । (मे० दू०)
सुकविता यद्यस्ति राज्येन किम् ।
सुकृती चानुभूयैव दुःखमप्यश्नुते सुखम् । (क० स०)
सुखं च मे शयनं च मे ।
सुखमास्ते निःस्पृहः पुरुषः ।
सुखार्थिनः कुतो विद्या ।
सुतप्तमपि पानीयं शमयत्येव पावकम् । (प० त०)
सुदुर्ग्रहान्तःकरणा हि साधवः । (कि० अ०)
सुदुर्लभे नार्हति कोऽभिनन्दितुं प्रकर्षलक्ष्मीमनुरूपसंगमे ।
(कि० अ०)
सुपर्वणो हि स्फुटभावना या सा पूर्वरूपं फलभावनायाः ।
(शि० व०)
सुरेषु हि श्रद्दधतां नभस्या सर्वार्थसिद्ध्यङ्गमिथः समस्या ।
(शि० व०)
सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् । (कि० अ०)
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ।
(कि० अ०)
सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि ।
(शि० व०)
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् । (मे० दू०)

सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ।
(र० वं०)
सेवाधर्मः परमगहनो योगिनामप्यगम्यः । (भर्तृ०)
सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ।
स्तवे रवेरप्सु कृताप्लवैः कृते न मुद्वती जातु भवेत्कुमुद्वती ।
(नै० च०)
स्तोत्रं कस्य न तुष्टये । (कु० सं०)
स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ।
स्त्रियो नष्टा ह्यभर्तृकाः । (वृ० चा०)
स्त्रियो यथा विचेष्टन्तां निष्कम्पं हि सतां मनः । (क० स०)
स्त्रीचित्तमहो विचित्रमिति । (क० स०)
स्त्रीचित्तस्येव दैवस्य को वेत्ति गहनां गतिम् । (क० स०)
स्त्रीणां पतिः प्राणा न बान्धवाः । (क० स०)
स्त्रीणां प्रियालोकफलो हि वेषः । (कु० सं०)
स्त्रीणां भावानुरक्तं हि विरहासहनं मनः । (क० स०)
स्त्रीणामलीकमुग्धं हि वचः को मन्यते मृषा । (क० स०)
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु । (मे० दू०)
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् । (कु० सं०)
स्त्री पुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ।
स्त्रीबुद्धिः प्रलयावहा । (का० नी०)
स्त्रीभिः कस्य न खण्डितं भुवि मनः । (भर्तृ०)
स्त्रीवचः प्रत्ययो हन्ति विचारं महतामपि । (क० स०)
स्त्री विनश्यति रूपेण । (शा० प०)
स्त्रीषु वाक्संयमः कुतः । (क० स०)
स्त्रीष्वनर्गलचेष्टासु कस्येच्छा नोपजायते । (क० स०)
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ।
(र० वं०)
स्थितः पृथिव्या इव मानदण्डः । (कु० सं०)
स्थिरा शैली गुणवतां । (कुव० न०)
स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्क्वचित् ।
स्निग्धमुग्धा हि सत्स्त्रियः । (क० स०)
स्निग्धो हि विरहायासे साधुवादं ददाति किम् । (क० स०)
स्नुषात्वं पापानां फलमधनगेहेषु सुदृशाम् ।
स्नेहमूलानि दुःखानि । (म० भा० )
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगादिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति । (मे० दू०)
स्नेहः खलु पापशङ्की । (अ० शा०)
स्पृशन्ति न नृशंसानां हृदयं बन्धुबुद्धयः । (नै० च०)
स्पृशन्त्यास्तारुण्यं किमिव नहि रम्यं मृगदृशः ।
स्पृशन्नपि गजो हन्ति । (प० त०)
स्मर्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः ।
(शि० व०)
स्रोतोरत्नं विबुधतटिनी । (प्र० भ०)
स्वं जीवितमपि सन्तो न गणयन्ति मित्रार्थे । (प० त०)
स्वकर्मसूत्रग्रथितो हि लोकः ।

स्वगृहे पूज्यते मूर्खः ।
स्वग्रामे पूज्यते प्रभुः ।
स्वचित्तकल्पितो गर्वः कस्य केन प्रशाम्यति । (प० त०)
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते । (कु० सं०)
स्वजनालोकवातेद्धो दुःखाग्निः कं न तापयेत् । (क० स०)
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् ।
स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता । (शि० व०)
स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा ।
स्वदेशे पूज्यते राजा । (चा० नी०)
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । (भ० गी०)
स्वधियो निश्चयो नास्ति यस्य स भ्रमति स्वयम् । (वृ० श०)
स्वपन्त्यज्ञा हि निश्चेष्टाः कुतो निद्रा विवेकिनाम् । (क० स०)
स्वपदाच्यवमानस्य कस्याज्ञां को हि मन्यते । (क० स०)
स्वभाव एवैष परोपकारिणाम् । (भर्तृ०)
स्वभावतः सर्वमिदं हि सिद्धम् ।
स्वभावस्वच्छानां पतनमपि भाग्यं हि भवति ।
स्वभावो दुरतिक्रमः । (प० त०)
स्वभावो यादृशो यस्य न जहाति कदाचन । (चा० नी०)
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः । (कि० अ०)
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते । (र० वं०)
स्ववीर्यगुप्ता हि मनोः प्रसूतिः । (र० वं०)
स्वसुखं नास्ति साध्वीनां तासां भर्तृसुखं सुखम् । (क० स०)
स्वस्थे को वा न पण्डितः । (प० त०)
स्वस्थे चित्ते बुद्धयः संभवन्ति ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते (र० वं०)
स्वाधीनकुशलाः सिद्धिमन्तः । (अ० शा०)
स्वाधीना दयिता सुतावधि ।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं शोचन्ति सन्तो ह्युपकारिपक्षम् । (कि० अ०)
स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः । (क० स०)
स्वामिवत्पञ्च वर्षाणि दश वर्षाणि दासवत् । प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ (प्र० भ०)
स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः । (प० त०)
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति । (शि० व०)
स्वेनानलस्य स्फुटतां यियासोः फूत्कृत्यपेक्षा कियती खलु स्यात् । (शि० व०)
हंसो यथा क्षीरमिवाम्बुमध्यात् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयन्त्यपः । (अ० शा०)
हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ।
हतं ज्ञानं क्रियाहीनम् । (वृ० चा०)
हतमश्रोत्रियं श्राद्धं । (चा० नी०)
हतं सैन्यमनायकम् । (चा० नी०)
हतश्चाज्ञानतो नरः । (वृ० चा०)
हतविधिपरिपाकः केन वा लङ्घनीयः । (मे० दू०)
हरति मनो मधुरा हि यौवनश्रीः । (कि० अ०)
हसन्नपि नृपो हन्ति ।
हस्तस्य भूषणं दानम् ।
हस्तौ दानविवर्जितौ । (वृ० चा०)
हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ।
हास्यादृते किमन्यत्स्यादतिलौल्यवतां फलम् । (क० स०)
हा हा तथापि विषयान्न जहाति चेतः । (भर्तृ०)
हिंसा बलमसाधूनां । (म० भा०)
हितप्रयोजनं मित्रम् ।
हितभुङ्मितभुक् शाकभुक् ।
हितमारण्यमौषधम् ।
हितं मनोहारि च दुर्लभं वचः । (कि० अ०)
हितैषिणः सन्ति न ते मनीषिणः ।
हितोपदेशो मूर्खस्य कोपायैव न शान्तये । (क० स०)
हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते·········मित्राणि । (र० वं०)
हीयते हि मतिस्तात हीनैः सह समागमात् ॥ (हि०)
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा । (र० वं०)
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः । (प० त०)
ह्यर्थो हि लोके पुरुषस्य बन्धुः । (भर्तृ०)
ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः । (नै० च०)

इति सुभाषितरत्नखण्डमञ्जूषा संपूर्णा ॥

## ग्रन्थसमाप्तिः

इति विरचितबन्धा पद्धतिर्या मयेयं सकलगुणिगणानां प्रीतये सास्तु नित्यम् ।
विपुलविमलदीव्यत्सत्कलानां निधानं तरुणतरणिरुद्धा विद्विषत्कौशिकानाम् ॥

अस्याभ्यासाद्ग्रन्थवर्यस्य शिष्यः सर्वज्ञः स्याद्विस्फुरच्चारुबुद्धिः ।
अर्थं कामं वेत्ति धर्मं च मोक्षं निःसंदेहं शीलितुं पण्डितोऽपि ॥

शास्त्राब्धिं सकलं विलोड्य नितरां ग्रन्थः कृतोऽयं मया
लोकानन्दकरः समस्तसुकलासंतानजैवातृकः ।
अस्यास्वाद्य सुभाषितामृतरसानानन्दपूर्णान्तराः
सन्तः संप्रति नाकवासनिरतान्देवान्हसन्तु ध्रुवम् ॥

---

## विज्ञप्तिः

दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम् ।
आवृणुध्वमतो दोषान्विवृणुध्वं गुणान्बुधाः ।

---

## आशीर्वचनम्

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥

# सुभाषितरत्नभाण्डागारस्थपद्यानां सस्थाननिर्देशमनुक्रमकोशः



१ अत्रोपयुक्तसांकेतिकचिह्नानां विवरणं 'सांकेतिकचिह्नपरिचय'तोऽवसेयम्।

### आ

इच्छेचेद्विपुलां मै १५८।२२७
इच्छेयस्तु सुखं १५२।४१५
इतः पौरस्त्यायां क ३२४।३९
इतः शुक्ला चन्द्रद्यु ३२४।३७
इतः स्वपिति (भर्तृ.सं.२०) २१६।२५
इतरकर्मफलानि (भा.३.१११) ४०।४७
इतरदेव बहिर्मुख ५९।२१८
इतश्चेतश्चाद्भिर्विघ १३२।१९
इतस्ततो वात (कुमार.१४.४६) १२८।४७
इतस्त्रसद्विद्रुतवै (नैषध.१२.२६) १३१।९
इतो न किंचित्प (शा.प.४१२७)३६७।३१
इतो विद्युत्पुञ्ज (शा.प.३४५७) २९२।२०
इतो विद्युद्वल्लीवि (भर्तृ.१.४४) २७६।३६
इत्थं तल्पतलाधि ३१८।१९
इदं कृष्णं कृष्णं (अमरु.९४) ३०९।७
इदं तल्लेहसर्वस्वं (मृच्छ.१०.२३) ८९।१
इदं तावच्चित्रं यदव ३६३।१९
इदं दूर्वाकाण्डद्युति ३०६।४३
इदं नभसि (शा.प.३६०५) २९७।२७
इदं नृपप्रा (नैषध.१२.९०) १०४।१७
इदं परमसुन्दरं तनु २५६।३७
इदं मघोनः कुलि(शा.प.४०६८) ३६५।१
इदं युगसहस्र(शा.प.४१३२) ३७२।१५५
इदं वक्त्रं साक्ष्याद्वि २७१।४१
इदं हि माहात्म्य ४९।१८६
इदमनुचितमक्रम (भर्तृ.१.२८) २०५।७
इदमपटु कपाटं(शा.प.८७८) २२७।८९
इदमयुक्तमहो म(शिशु.६.५६) ३४६।१७
इदमशिशिरैर (अ.शा.३.३.१०)२७९।७३
इदमाभाति गग (सा.द.१०.९९) २९९।८
इदमिदमिति भू (शिशु.७.५०)३३४।११४
इदमीदृग्गुणोपेतं (किरात.११.४१) ८५।६
इदमेव नरेन्द्राणां १४६।१८०
इदानीं तीव्राभि (शा.प.३४३६)२८४।२५
इन्दीवरं लोचनयो २६०।७९
इन्दीवरदलश्याममि २२।९९
इन्दीवराक्ष्या स्फुट १९०।७२
इन्दीवरेण नयनं मु (शृंगार.३) ३०६।२५
इन्दुं कैरविणीव (शा.प.१५५७) २९१।४
इन्दुं निन्दति च(शा.प.१२३८)१३६।४०
इन्दुं निन्दति (शा.प.१२३८) १३६।४१
इन्दुं निन्दति १७९।१०३६
इन्दुं निन्दतु नाम २११।३९
इन्दुः किं (का.प्र.१०.४१९) ३१२।२२
इन्दुः प्रयास्यति (शा.प.८९७)२२९।२३७
इन्दुप्रभारसविदं (शा.प.१८१) ३५।१२
इन्दुरिन्दुरिति किं दु २९९।२४
इन्दुर्यत्र न नि (शा.प.३७८२) ३५३।४९
इन्दुर्यद्युदयाद्रिमूर्ध्नि २११।४७
इन्दुर्लिप्त इवा (बाल.रा.१.४२) २७२।७७
इन्दुस्त्वद्यशसा १०७।१९१
इन्दोरस्य त्रियामा ३०३।१३७
इन्दोरेककला (शा.प.३६३७)३०३।१४२
इन्दोर्लक्ष्म त्रिपुर (कुव.१३८) १३५।३२
इन्द्रः प्रक्षुब्धचित्तो १२६।२६
इन्द्रस्याशुचिशू (शा.श.२.७) ३७६।२६०
इन्द्रात्प्रभुत्वं ज्वल १४२।१४
इन्द्राद्या लोकपाला १८४।७७
इन्द्रो यमोऽसि वरु २४८।९२
इमे तारुण्यश्रीन (भर्तृ.१.८५) २५५।३०
इयं चिद्रूपापि प्रकट ९।१२४
इयं तावल्लीला यदधि २४५।३
इयं पल्ली भिल्लैर (शा.प.शु.७) २२७।१९२
इयं प्रीतिर्वल्ली हृद १७७।९८८
इयं बाला वल्ली मृदु २३६।१७
इयं भुजगिनीश्रिता २७४।२३
इयं मुखाम्भोरुहसं २५७।१३
इयं यशांसि द्विषतः १३५।१४
इयं व्याधायते बा(शृंगारति.१३) २५३।१३
इयं सुनय (का.प्र.१०.४६५) २६२।१६८
इयं सुरतरङ्गिणी न ३५४।८१
इयं सुस्तनी मस्तकन्य २७३।१९
इयं सृष्टा चञ्चत्क २६८।३६३
इयती जगती कियती १२३।१५
इयत्यप्येतस्मिन्नि (भर्तृ.सं.४१२)७०।३८
इयत्यां संपत्तावति २१९।१७
इयत्यामपि सामग्र्यां ९५।७
इयत्येतस्मिन्वा (भर्तृ.सं.४१२) २४८।९६
इयमसौ तरलायत (अमरु.१२७) २७३।८
इयमियं मयदानवन ३६२।२०
इयमुदरदरी दुरन्तपू(भर्तृ.सं.४१४)९६।६
इयमुन्नतसत्त्व (शा.प.२२०) ४९।१५७
इषुत्रयेणैव जग (नैषध.७.२७) २५९।८०
इह किं कुरङ्गशाव (शा.प.९३९)२३३।९९
इह जगति रतीशप्र ३५६।२३
इह तुरगशतैः प्रया(शा.प.१९८) ३९।२३
इह नगरे प्रतिरथ्यं ३५२।१३
इह निचुलनिकु (शा.प.३९१८)३४५।५८
इह पुरोऽनि (सा.द.१०.३९) १८६।१३
इह मधुपवधूनां ३३३।८६
इह रूपमात्रसारे २२३।५४
इह लोकेऽपि (सु.३१६०) ६५।३
इह वटवृक्षे यक्षः (शा.प.३७७२)३५२।५
इह समदशकु (महावीर.५.४०) १४०।४
इह सरसि (शा.प.८३६) २२४।८९
इह सर्वस्वफलिनः (मृच्छ. )३५५।३
इह स्फुटं तिष्ठति (शा.प.३५८२)३१०।२
इह हि नववसन्ते ३३३।८८
इहानेके सन्तः ५२।२४२
इहाविशयेन (नैषध.७.६२) २६०।१२८
इहोद्याने संप्रत्यहह २३६।१५

**ई**

ईदृशस्य भवतः (शिशु.१०.७७)३१९।२०
ईर्ष्या घृणी (भा.५.१०५६) १५९।२९५
ईशः करस्थीकृतकाञ्च ९२।५१
ईश्वराः पिशुना १६८।६७५
ईषत्कम्प ३२०।४८
ईषन्मीलित (गीत.१२.२४.६) ३१९।४१
ईषल्लब्धप्रवेशोऽपि ५५।६४

**उ**

उग्रग्राहमुदन्वतो (सु.२५५४) १८४।६९
उग्ररूपं कुचद्वन्द्वं ३१८।२
उचितं गोपनमन ३१३।२७
उचितं नाम (शा.प.१०५७) २४३।१८८
उचितमनुचितं वा १७६।९७३
उचित्य प्रथम(शा.प.३८०१)३३४।१०७
उच्चैःस्थान (शा.प.७६४) २१०।३७
उच्चैः कल्याणवाही ११३।२८९
उच्चैरध्ययनं पुरातन (सु.२३७८) ९६।४
उच्चैरुच्चरतु चिरं(शा.प.१११४)२१८।७५
उच्चैरुत्ताल (शा.प.६६) १०१।५८
उच्चैरुत्तालगण्डस्थल ३।३२
उच्चैरेष तरुः (भर्तृ.सं.४१७) २४१।१४०
उच्चैर्ब्रह्माण्ड (शा.प.५८) २।२७
उच्चैस्तरादम्बरशैल २९६।१
उच्छिष्टं शिवनिर्मा (शा.प.५१७)१८४।४
उच्छ्वसन्मण्डल २६५।२६६
उज्जृम्भते कुमुदिनी ३०१।७१
उज्जृम्भानन (शा.प.३४१७) २८६।२२
उज्झती शुच (किरात.९.१८) ३००।३५
उज्झित्वा दिशमम्बरं ७।८५
उडुगणपरिवारो नायको (सु.५७६)९६।४

## ऊ

## ऐ



## ओ



## औ



## क

## ख

## द

दूरेऽपि श्रुत्वा भव १३५।१०
दूरे मार्गा (नीतिप्रदीप.१०) २४१।१५२
दूरोत्क्षिप्तक्षिप्र (शिशु.१८.४५) १३०।८१
दूर्वाङ्कुरतृणाहारा (शा.प.९३७) ८०।२२
दूर्वाया भूषणं पत्रं (चा.२४) ३८७।४१८
दृक्पातः कमलासने (शा.प.७५) १५।२५
दृगन्तव्यापारप्रबल २८०।८४
दृग्भङ्गभङ्गिम (शा.प.३७७७) ३५२।२८
दृग्भ्यां यस्य विलोक १८।२१
दृढः प्रेमा भग्नः १७७।९८७
दृढतरगलकनि (शा.प.११९७) २४८।७०
दृढतरनिबद्धमुष्टेः को (कुव.५७) ७२।३५
दृप्यद्दैत्यनितम्बिनी (शा.प.१२५) १८।३३
दृशः पृथुतरीकृ (सूक्ति.५०.८) २५३।२८
दृशा किंचि (शा.प.३७६४) ३५२।३३
दृशा दग्धं मनसिजं (विद्ध.१.२) २५०।१
दृशा विदधिरे दृशः ३४२।७६
दृशा सपदि मीलि(सु.२०९७) ३१९।३६
दृशोः सीमावादः(सूक्ति.५२.१)२५५।२४
दृशौ किमस्या (नैषध.७.३४) २५९।८७
दृशौ तव मदा (गीत.१०.७) ३१३।६६
दृश्यं दृशां सह (शा.प.३२७३) २५४।५
दृश्यते पानगोष्ठीषु (सूक्ति.७३.७)३१४।१
दृश्यन्ते भुवि भूरिनि ५३।२६०
दृश्यन्ते मानसोत्तं २६९।४०७
दृष्टं दुर्जनचेष्टितं (सु.३१९३) ६८।८१
दृष्टः कातरनेत्रया (अमरु.८५) ३२९।१६
दृष्टः क्वापि स के (सु.१००) २५।१८७
दृष्टः सप्रेम देव्या कि(वेणी.१.३)८।१०८
दृष्टः साक्षादसुरवि १०७।१७८
दृष्टदुर्जनदौरात्म्यः (सु.२९८) ४६।६२
दृष्टस्य यस्य हरिणा रण (सु.४९) १६।४६
दृष्टाः संकष्टदाहाः ९।१३३
दृष्टा दृष्टिम (नागानंद.३.३५) ३१८।१४
दृष्टान्तो न तवा १०९।२१९
दृष्टिं देहि पुनर्बाले (शृंगारति.?) ३१२।६
दृष्टिं सालसतां बिभ २५४।४७
दृष्टिं हे प्रति (शा.प.३७६९) ३५३।४३
दृष्टिः कापि सुरा २७२।७२
दृष्टिः शैशवमण्ड (सूक्ति.५१.६)२५६।५२
दृष्टिस्तृणीकृत (सूक्ति.१०९.६)३६०।२७
दृष्टे चन्द्रमसि प्रल्ल(सु.१९८७) २८९।६८
दृष्टे लोचनव (अमरु.१६०) ३११।२१
दृष्टो वा सुकृतशतो ६०।२३१

दृष्ट्या केशव (सूक्ति.२.९३) २४।१५९
दृष्ट्वाडम्बरमम्बरे ३४२।७१
दृष्ट्वा दर्पणमण्डले नि ३५९।९४
दृष्ट्वापि दृश्यते दृश्यं (सु.२२८) ४६।७८
दृष्ट्वा मण्डलम १०८।२१०
दृष्ट्वा वेद्यं परमथ ३६९।७१
दृष्ट्वा शाखावकीर्णं २२८।२०२
दृष्ट्वा स्फीतोऽभवद (भ्रमरश.६) २२३।९२
दृष्ट्वैकासनसंस्थिते (अमरु.१९) ३११।१६
दृष्ट्वैव विकृतं (शा.प.४१४५) ३७१।१२०
दृष्ट्वैवाङ्कुशमुद्रया १११।२६४
देयं भो ह्यधने (वृ.चा.११.१८) ६९।२८
देयमार्तस्य शय(भा.३.१०१)३८६।३७४
देवः पायात्पयसि २३१।३३
देवः पायादपा(सा.द.१०.९८) २२।१००
देव क्षीरसमुद्रसान्द्र १३७।६३
देव त्वं जय (शा.प.१२२३) १०८।१९३
देव त्वं मल (सूक्ति.९७.३३) १०७।१८७
देव त्वत्करनीरदे १०७।१८४
देव त्वत्करपद्मकोश १२५।१४
देव त्वत्तरुणप्रतापत १३३।१४
देव त्वत्तरुणप्रतापशि ११५।४९
देव त्वद्गजवाजिप १२५।१५
देव त्वद्दानपाथो १०२।४४
देव त्वद्भुजद (सु.२६४०) १३४।१६
देव त्वद्भुजदण्ड १३४।२५
देव त्वद्यशसा सदा १३६।४४
देव त्वद्यशसि (शा.प.१२२६) १३६।३९
देव त्वद्विजयप्र(शा.प.१२४५) १२५।१०
देव त्वद्विजयोद्यमे १२५।१२
देव त्वमेव पा(का.प्र.९.१२०) १०३।६०
देव त्वामसमानदान १०७।१८५
देव ब्रह्माण्डभाण्डे १४८।८४
देवराजो मया दृष्टो १८८।३१
देव श्रीनृप रामचन्द्र १२०।१४८
देवस्याम्बु (सूक्ति.१०५.२) ३८३।३६३
देवस्त्रैगुण्यभेदात्स १०।१५९
देवा दिक्पतयः (शा.प.१०८) १०।१५०
देवाधिपो वा भुज १०४।१०५
देवानामिदमाम (सूक्ति.१०९.७२) ३२।२
देवीं वाचमुपासते हि (कुव.५२) ३६।४०
देवी श्रीर्जे ३८३।२६४
देवे तीर्थे द्विजे (धर्मवि.१८) १६८।६६८
देवे दिग्विजयोद्यते १२५।११

देवेऽर्पितवरणस्रजि बहु १६।३
देवे वर्षत्यश (सूक्ति.६१.२२) ३४१।५९
देवैर्यद्यपि तक्व २१६।३३
देवो राजा ३८७।४२१
देवो हरिर्विहतु व (शा.प.७४०) २०९।८
देव्याः प्राक्परिरम्भणे ६।६७
देशः सोऽयमराति (वेणी.३.३३) ३६६।७
देशकालविहीनानि (र.६.६३)३८७।३९७
देशाटनं पण्डि १७३।८६४
देशानामुपरि (पंच.१.१६६) १४९।२८५
देशानुत्सृज्य ग १६७।६३९
देशे देशे कलत्राणि ३६१।६
देशे देशे किमपि कुतुका ९८।४
देशे देशे जडिमकु ३३५।५
देशे देशे दुराशा ३७५।२३०
देशैरन्तरिता शतै (अमरु.९९) २०८।३३
देहं हेमद्युति परि २६६।३२२
देहार्धानिबद्धकान्ता ८।११४
देहि देहीति ज (शा.प.२६९) ३८३।२६१
देहि मत्कन्दुकं राधे (कुव.६९) २२।१०४
देहीति वक्तुकाम (शा.प.३९२) ७३।१३
देहीति वचनं श्रु(भर्तृ.सं.५३५)३८३।२६१
देहे दुर्ललितस्य देव ३५३।५५
देहे पातिनि का (भोज.५३) ३५१।३५८
दैत्यानामधिपे न (शा.प.८४) १९।५४
दैत्यानां मनसि दया १८१।२६
दैत्यारातिरसौ वरा २०३।१०८
दैत्यास्थिपञ्जरविदारण (सु.५२) १९।४६
दैन्यं क्वचित्क्वच(शा.प.४१०७)३६८।३३
दैवं पुरुष (मत्स्य.अ.२२१) ८२।१०
दैवं फलति सर्वत्र ९१।१०
दैवं फलति सर्वत्र ९१।११
दैवमुल्लङ्घ्य यत्कार्यं ९०।१
दैववशादुत्पन्ने (पंच.१.३) ७१।३१
दैवात्पश्येर्जगति (माल्ती.९.२६) २९।११
दैवादप्युत्तमाना (हनु.१३.१४) ६२।२८१
दैवादहमत्र (रुद्रट.७.२९) २७८।२१
दैवाद्यद्यपि २०९।२
दैवीर्गिरः केऽपि (सु. १९४) ३८।३३
दैवेन प्रभुणा (भर्तृ. २.९०) ९५।१२३
दैवे पराग्वदन (भामिनी.क.१) ३६२।२७
दैवे विमुखतां याते ९१।७
दैवे समर्प्य (शान्तिश. ३.२०) ९२।७६
द्रोःसंदेहवशंवद ९४।१२१

## न

पाकश्चेन्न शु (राजत.३.३०३) ६२।२७४
पाटलया वन (शा.प.१०१४) २३९।९७
पाटीर तव प (भामिनी.अ.११) २३७।४३
पाठीनः कमठः (शा.प.१३३) १७।३
पाणिः पात्रं प (शान्ति.४.७) ३७१।११३
पाणिग्रहे पर्वतराज ४।२८
पाणिग्रहे पुलकितं वपु ४।१६
पाणिग्राहस्य सा (म.५.१५६) ३५१।१७
पाणिपल्लवविधून(किरात.९.५०)३१८।१०
पाणिरोधमविरो(शिशु.१०.६९)३१८।१२
पाणिर्नीरवकङ्कणः स्तन २९१।९५
पाणौ कङ्कणमुत्फणं (शृं.ति.३.२) ७।८९
पाणौ गृहीतापि पुर ३५२।२२
पाणौ ताम्रघटी (सूक्ति.८९.७) ३६५।४९
पाणौ पद्म (सूक्ति.६५.४०) ३३४।११९
पाणौ मा कुरु (सु.१३१३) २८२।१३८
पाण्डित्यस्य विभूष (सु.३०५४) ८४।२३
पाण्डु क्षामं वदनं(काव्यप्र.७.१५)२८५।२
पातः पूष्णो (भल्लट. १०) २०९।१३
पातकानां समस्ता १४७।१९७
पातं जले विष्णुपदापगा ४२।५
पातयति हृदयदेशे २७५।८
पातालतः किमु (शा.प.४०८०) ३६६।२
पातालमिव ते नाभिः ३१२।१०
पातालाद्भुवनावलो २७४।२४
पातालान्न विमो (शा.प.२५७) ८०।४४
पाताले मज्जु मूलं १२९।१६१
पातितोऽपि करा (भर्तृ.२.८३) ४५।३०
पातुं त्रीणि जग (शा.प.४०१७) १८।३१
पातुं न प्रथमं व्यव (अ.शा.४.८) ३६३।३९
पातुं श्रोत्ररसायनं (सूक्ति.४.९९) ३६।४३
पातुमाहितर (किरात.९.५१) ३१५।४३
पातु वः कपटकेरलके १८।२७
पातु वः शिति १०।१४४
पातु वो निकषग्रावा ३।४
पातु वो (मृच्छ.१.२) १०।१४२
पातु वो मेदिनी (सु.३०) १८।२४
पातु श्रीस्तनपत्र १८।३२
पात्रं न तापयति ९०।१३
पात्रं पवित्रयति (सु.३२४) ५१।२१६
पात्रमपात्री (शा.प.३७०) ८८।९
पात्रविशेषे (भा.१३.१७७) ८६।७
पात्रापात्र (सु.२९७५) १५७।२०३
पात्रे त्यागी गुणे (प्रसंगा.४) १४२।१२

पाथोदजालजटिलं ३४४।६
पादन्यासं (सु. ५६१) २१०।३३
पादपानां (सं.पाठो.५४) १६२।४१४
पादसंवाहने वज्री २५१।१७
पादस्याविर्भवन्ती (मुद्रा.१.२.) १०।१५४
पादाः कन्दुकवत्स्थि १४३।५७
पादाग्रस्थितया (सूक्ति.२.३८) १२।३८
पादाघातविघूर्णिता (सु.६३५) २३२।८६
पादाङ्गुष्ठेन (अमरु.परि.१३६) २८१।३२१
पादासक्ते (अमरु.६८) ३०७।५२
पादास्त एव ३१३।५४
पादाहतं यदुत्थाय (शिशु.२.४६) ७९।५
पादाहतोऽपि (शा.प.३६१) ६०।२३७
पादेन क्रम्यते १५९।२७१
पादे मूर्धनि (शा.प.३५६९) ३१०।७
पादौ संस्तम्भयन्ती ९६।१८
पानं दुर्जनसंसर्गः (म.९.१३)१६६।५७६
पानं स्त्री (भा.१२.५२७२) १४८।२३८
पानधौतनवया (शिशु.१०.२६)३१५।२९
पानमक्षा (शा.प.१३८९) १४६।१६४
पानायाधरतोऽमृतं २७२।६२
पानीयं (भा.१२.४११४) १६३।४५६
पानीयं (शा.प.३८०७) ३३५।१३५
पानीयं पातु (शा.प.५३०) १८६।२
पानीयमानीय २१२।२८
पान्तु वो (शा.प.११३) २२।१०१
पान्थ मन्दमते २५४।६८
पान्थाधार इति (शा.प.९८३) २३६।२१
पान्थानां प्रमदा ३३७।५६
पापं समाचरति (सु.२७२) ५०।२१०
पापं कर्तुमृणं कर्तुं ९८।२
पापान्निवारयति (भर्तृ.२.६४) ८८।१८
पामारागाभि (सूक्ति.९८.१) १९४।१७
पायं पायं पिब (शा.प.११५१) २२०।३
पायात्पयोधिदुहितुः (शा.प.१३४) १६।२
पायात्स वः (सु.४८) १६।४५
पायादायासखे १०।१५७
पायाद्गजेन्द्रवदनः (सु.८०) २।२३
पायाद्वः करणोऽरणो २०६।१८
पायाद्वो जमदग्निवंश २०।७२
पायान्मायामृगेन्द्रो १९।५८
पारिजाततरुं यावन्न २३७।३८
पारीन्द्रशावक न २३०।३०
पारीन्द्रस्य (धर्मवि.८) १८३।५९

पारीन्द्राणां धुरीणैरवनि १२६।३१
पार्वतीमोषधीमेकमपर्णां १।१२
पार्श्वस्थपृथ्वीधरराजकन्या ४।२९
पार्श्वाभ्यां (शा.प.३५०५) २९३।१
पार्श्वास्फाला (शा.प.५८७) २०७।१९
पाशक्षुण्णखुरस्य २३४।२३
पाश्चात्यभागमिह (शिशु.४.२२)३६३।१८
पाश्चात्याम्बुधिदृष्टपूर्वे २९५।६४
पाश्चात्यैर्म (शा.प.१८३१) ३३६।२७
पाषाणखण्डे (शा.प.४०९९) ३६७।२३
पाषाणाः पयसि १८३।६२
पाषाणो भिद्यते ५५।४५
पास्यन्ति कस्य कुसुमे २४१।१३४
पिकस्तावत्कृष्णः ८५।१२
पिकाली वाचालीभवति २८५।२६
पिण्डे पिण्डे १५९।२६५
पिता (गरुड.पू.अ.११५) १६६।५७५
पिता रत्नाकरो यस्य(वृ.चा.१७.५)९१।२०
पिता रत्नाधारः शुचिसह ९३।९५
पिता वा (पंच.१.४५७) १४७।२२१
पितुरधिपुरं त्यक्ताः ३२९।१२
पित्रोः पादाब्जसे १०।१४७
पित्रोर्नित्यं प्रियं १६७।६१८
पित्रोर्नैव वचः शृणोति ९०।१२
पिदधति (शा.प.३६०१) २९७।१३
पिदधानमन्वगुपग (शिशु.९.७६)३१०।८
पिनष्टीव तरंगाग्रैः (कुव.३५) २९९।४
पिनाकफणिभालेन्दुभस्म (शा.प.६३) ३।६
पिपासाक्षामकण्ठेन २२६।१४९
पिपासुरिव चञ्चलं २६०।१११
पिपि प्रिय (शा.प.३६५१) ३१६।६७
पिपीलिकार्जितं धान्यं १५५।१०१
पिबतस्ते (शा.प.५३८) १९५।४२
पिबन्ति नद्यः ४९।१७०
पिबन्ति मधु (सु.६९०) ९१।८
पिब पयः (शा.प.१२११) २३५।१५६
पिब स्तन्यं (भामिनी.अ.५८) २३०।३६
पिशुनः खलु ५८।१६२
पिशुनत्वमेव विद्या ५७।१५२
पीठाः कच्छपवत्तरन्ति ६८।७८
पीठीप्रक्षाल (शा.प.४०२८) ३६५।५५
पीठे पीठनिषण्णबालक २४।१५७
पीडिते पुर (शिशु.१०.४६) ३१६।६
पीतं येन पुरा पुरन्दरपुरे २२२।३७

